शरदिन्दुरपि तमोध्वान्तं विनाश्य सर्वान् वस्तूनि प्रकाशयतीत्युपमा। वाङ्मयाधिकृतत्वख्यापनाय गिरां देवीत्यनेन सरस्वत्या उपन्यासः। अथवा देवी दुर्गा मम गिरामर्थान् चेतसि व्युत्पित्सूनां हृदि प्रकाशयतु। सा कीदृशी शरदिन्दुसुन्दरः शिवस्तत्र रुचिरभिलाषो यस्याः सा तथा। अन्यत्समानम्। एतत्पक्षे वाङ्मयाधिकृततयेति कर्तृविशेषणम्। वाङ्मयाधिकृतो ग्रन्थकृदितितदर्थः। अवागदेवताया इति गोपनीयदेवताया इत्यर्थः। इष्टदेवताया गोपनीयत्वमागमेषु प्रसिद्धम्। अत्र चेत्यनेन सरस्वत्याः श्रवणं चेतसि वर्त्तमानेत्यनेन मननं ध्यानञ्च लभ्यत इति त्रिविधं सरस्वत्याराधनमत्र फलितम्। तस्य विघ्नध्वंसद्वारा प्रारिप्सित परिसमाप्तिः फलं स्वतःसिद्धविघ्नविरहस्य प्रारिप्सितपरिसमाप्तिरेव-फलं न तु विशिष्टं यथा निष्पापस्य ब्रह्मलोकप्राप्तिरेव सन्ध्योपासनस्य फलं न तु पापक्षयपूर्वकब्रह्मलोकप्राप्तिः तदुक्तं। सन्ध्यामुपासते ये तु सततं संशितव्रताः विधूतपापास्ते यान्ति ब्रह्मलोकमनामयमिति। यद्वा निर्विघ्नेनेति विघ्नाभावद्वारा इत्यर्थः अभावश्च यथायथं अत्यन्ताभावो ध्वंसश्च ग्राह्यः अत्यन्ताभावपक्षे अन्वयव्यतिरेकानुविधायित्वरूपं जन्यत्वमादाय व्यापारत्वनिर्वाहः एतन्मते सर्वत्रैव विशिष्टफलसम्भवः इति सर्वं समञ्जसम्। (तस्य विघ्नाभावद्वारा प्रारिप्सितपरिसमाप्तिः फलम् अभावश्चात्रध्वंसः प्रागभावश्च विवक्षणीयो योग्यत्वात् अत्यन्ताभावस्य ध्वंसप्रागभावाभ्यां सह विरोधेन विघ्नात्यन्ताभावस्य जन्तुमात्रेऽसम्भवात् सदातनसंसर्गाभावरूपस्य तस्य व्यापारत्वाभावाच्च। न च प्रागभावस्य जन्यत्वाभावात् कथं व्यापारत्वमङ्गीकृतमितिवाच्यम्। कार्य्यनाश्यस्य तस्य कालान्तरसम्बन्धस्येष्टसाधनत्वेन* व्यापारत्वाङ्गीकारात् कालान्तरसम्बन्धस्य जन्यत्वस्य सम्भवात्। अन्यथा विघ्नरूपकार्य्येण तत्प्रागभावस्य नाशे इष्टसमाप्तिर्नस्यादिति पाठान्तरम्)।

---

* प्रागभावः कालान्तरसम्बन्धजन्यः सन् स्वजनकीभूतकालान्तरसम्बन्धजन्यां ग्रन्थसमाप्तिं जनयतीति।

अस्य ग्रन्थस्य काव्याङ्गतया काव्यफलैरेव फलवत्त्वमिति (ग) ॥
काव्यफलान्याह ।

**चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि ।**
**काव्यादेव यतस्तेन तत्स्वरूपं निरूप्यते ॥**

चतुर्वर्गफलप्राप्तिर्हि काव्यतो रामादिवत् प्रवर्त्तितव्यं न रावणादिवदित्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशद्वारेण सुप्रतीतैव (घ)। उक्तञ्च ।

---

(ग) प्रवृत्त्यङ्गं प्रयोजनवत्त्वं दर्शयति अस्येति। प्रकाश्य-मानस्येत्यर्थः। काव्याङ्गतया काव्यफलसाधनेऽप्रधानकारणतया काव्य-फलैरिति धान्येन धनवानितिवदभेदे तृतीया काव्यफलाभिन्नफल-वत्त्वमित्यर्थः। यथा दर्शपौर्णमासाङ्गानां प्रयाजादीनां दर्शपौर्णमास-फलेनैवफलवत्त्वं तथास्यापीति भाव्यम्। ननु प्रयाजादीनामङ्गापूर्व्व-जननद्वारा परमापूर्व्वं प्रत्युपकारः सम्भवतीति तत्र तथास्तु प्रकृते तु शास्त्रस्य काव्यगुणदोषादिज्ञापनोपक्षीणत्वेन चतुर्वर्गं प्रत्युपकारासम्भ-वात् कथं तत्साधनत्वमिति चेन्न काव्यं हि स्वरूपस्य कारणम् किन्तु ज्ञातिज्ञप्त्यन्यतरविषयतया तत्रास्योपकारः सम्भवतीति न कापि विप्रतिपत्तिः। नन्वस्य चतुर्वर्गातिरिक्तकाव्यगुणादिज्ञानरूपफलसत्त्वात् कथमेवकारार्थान्वय इति चेन्न फलवत्त्वमित्यत्र मतोः प्रशस्तार्थत्वेनोत्-कृष्टफलपरत्वात्। एवञ्च चतुर्वर्गसाधनत्वज्ञानेनाल्पलोकानां साभि-निवेशप्रवृत्तिर्भविष्यतीतिभावः।

(घ) काव्यफलदर्शनपुरःसरं काव्यस्वरूपनिरूपणं प्रतिजानीते चतु-र्वर्गेति। चतुर्वर्गो धर्मार्थकाममोक्षा एव फलं सुखादनायासात् अल्पधियां सुकुमारमतीनाम् अपिना परि[illegible]वृद्धीनाञ्च एवकारेण वेदशास्त्रव्यव-च्छेदः। यत इति काव्यादित्यस्य विशेष[illegible]। एवञ्च प्राचीनसम्मतं नीरस-

धर्म्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च।
करोति कीर्त्तिं प्रीतिञ्च साधुकाव्यनिषेवणमिति॥

किञ्च। काव्याद्धर्म्मप्राप्तिर्भगवन्नारायणचरणारविन्दस्तवादिना। "एकः शब्दः सुप्रयुक्तः सम्यग्ज्ञातः स्वर्गे लोके कामधुग्भवति" इत्यादिवेदवाक्येभ्यश्च सुप्रसिद्धैव। अर्थप्राप्तिश्च प्रत्यक्षसिद्धा। कामप्राप्तिश्चार्थद्वारैव। मोक्षप्राप्तिश्चैतज्जन्यधर्म्मफलाननुसन्धानात्। मोक्षोपयोगिवाक्ये व्युत्पत्त्याधायकत्वाच्च। चतुर्वर्गफलप्राप्तिर्हि वेदशास्त्रेभ्यो नीरसतया दुःखादेव परिणतबुद्धीनामेव जायते। परमा-

काव्यं चतुर्वर्गसाधनत्वाच्च निरूपणीयमिति फलितम्। तेनायासं विना चतुर्वर्गसाधनत्वेन। तस्य काव्यस्य स्वरूपमिति स्वमसाधारणं रूपमितरव्यावर्त्तको धर्मो लक्षणमित्यर्थः। निरूप्यते ज्ञाप्यते। काव्यस्य चतुर्वर्गसाधनत्वमुपपादयति चतुर्वर्गफलप्राप्तिर्हीति रामादिवत् रामादिनेव चतुर्वर्गकामेन पित्राज्ञापरिपालनादौ प्रवर्त्तितव्यं न रावणादिवदिति रावणादिनेव परदारहरणादौ न प्रवर्त्तितव्यमित्यर्थः। कृत्यं विहितं कर्म अकृत्यं निषिद्धं कर्म तयोः प्रवृत्तिनिवृत्ती यतविशेषौ तयोरुपदेशस्तज्जनकज्ञानं स एव द्वारं व्यापारस्तेन तथा हि काव्याद्विहितकर्मणि कर्त्तव्यताज्ञानं ततस्तत्र प्रवृत्तिस्ततस्तदनुष्ठानं ततो धर्मस्तस्मादर्थकामौ "धर्मादर्थश्च कामश्चेति" स्मरणात् विहितकर्मफलत्यागाच्चित्तशुद्धानुष्ठानाच्च मोक्षः "युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीमिति" स्मरणात्। व्यापारेण व्यापारिणो नान्यथासिद्धिरिति न्यायेन काव्यस्य धर्मादिजनकत्वमितिभावः।

(ङ) अत्र प्राचीनानां सम्वादमाह उक्तञ्चेति। धर्मार्थकाममोक्षेषु तदुपायेषु वैचक्षण्यं विशिष्टज्ञानं कलासु नृत्यगीतादिचतुःषष्टिप्रकारासु

**नन्दसन्दोहजनकतया सुखादेव सुकुमारबुद्धीनामपि पुनः काव्यादेव ॥ (ङ)**

---

साधुकाव्यस्य निषेवणं करणं ज्ञानञ्च । ननु काव्यं कर्त्तव्यत्वाकर्त्तव्यत्वज्ञानद्वारा कृत्याकृत्यप्रवृत्तिनिवृत्ती प्रति कारणमास्तां धर्मादिं प्रति त्वन्यथासिद्धमेवेत्यत आह किञ्चेति । काव्यादिति प्राथम्यन्तपदचतुष्टयेऽन्वेति स्तवोगुणज्ञापनम् आदिना विष्णुजन्मादिज्ञापणं तद्द्वारेत्यर्थः । एवञ्च काव्यान्तरमफलमत आह एक इति एकोऽपीत्यर्थः सुप्रयुक्तः रसवत्तया रचितः सम्यक् तद्रूपेण ज्ञातः अत्र वाकारोबोध्यः । इत्यादिवाक्येभ्य इत्यादि स्मृत्यादिभ्यः । सत्काव्यकृतिज्ञप्त्योरन्यतरस्य धर्मसाधनत्वं श्रौतमितिभावः । प्रत्यक्षसिद्धेति धनिस्तवादिना कवीनां धनप्राप्तिर्लोकप्रसिद्धैवेत्यर्थः । कामप्राप्तिश्चेति कामयते कामो विषयभोगः । "धर्मादर्थस्ततः कामः कामात् सुखसमुन्नतिरिति" स्मरणात् । एतज्जन्येति काव्यजन्येत्यर्थः । धर्मफलस्यानुसन्धानादेव तदधीनोत्पत्तिकयोरर्थकामयोरुपस्थितिसम्भावनैव नास्तीति तयोरनुपादानं यद्वा धर्मप्रधानं फलं धर्मफलं तेनार्थकामयोरपि संग्रहः अननुसन्धानादपारमार्थिकत्वेन साध्यत्वानिर्द्धारणात् । मोक्षोपयोगिवाक्यमुपनिषदादिस्तत्र व्युत्पत्त्याधायकत्वात् दृढ़तरज्ञानजनकत्वात् । ननु काव्यादुपनिषदादिव्युत्पत्तिस्ततस्तदर्थानुष्ठानं ततो मोक्षप्राप्तिरित्यन्यथासिद्धितादवस्थ्यमेवेति चेत् सत्यम् उपनिषदादिज्ञानादपि मोक्षप्राप्तिरित्यभिप्रायेणास्य उत्थापनात् । काव्यादेवेत्येवकारव्यवच्छेद्यं दर्शयति चतुर्वर्गेति । वेदा ऋग्यजुःसामाथर्वाख्याः शास्त्राणि मीमांसादीनि दुःखादेवेति सुखव्यवच्छेदः परिणतबुद्धीनां वेदादिभ्यो धर्मादिप्राप्तिः सुखान्न भवति सुकुमारमतीनान्तु दुःखादपि न भवतीतिभावः । परमानन्दसन्दोहो रसास्वादसुखपरम्परा अपिना परिणतबुद्धिसमुच्चयः । तथा च रसास्वादार्थमपि प्रवर्त्तमानस्य कृत्याकृत्योपदेशपर्य्यवसन्नं सत् काव्यं चतुर्वर्गमपि जनयतीतिभावः ।

ननु तर्हि परिणतबुद्धिभिः सत्सु वेदशास्त्रेषु काव्येषु किमिति यत्नः करणीय इत्यपि न वक्तव्यम् । कटुकौषधोपशमनीयस्य रोगस्य सितशर्करोपशमनीयत्वे कस्य वा रोगिणः सितशर्कराप्रवृत्तिः साधीयसी न स्यात् ॥ किञ्च । काव्यस्योपादेयत्वमाग्नेयपुराणेऽप्युक्तम् ।

'नरत्वं दुर्लभं लोके विद्या तत्र सुदुर्लभा ।
कवित्वं दुर्लभं तत्र शक्तिस्तत्र सुदुर्लभेति'' ॥

"त्रिवर्गसाधनं नाट्यमिति च विष्णुपुराणे" ।

"काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च ।
शब्दमूर्त्तिधरस्यैते विष्णोरंशा महात्मन इति" ॥

तेन हेतुना तस्य काव्यस्य स्वरूपं निरूप्यते एतेनाभिधेयञ्च प्रदर्शितम् (च) ॥

---

(च) ननु चतुर्वर्गार्थं प्रेक्षावन्तो वेदादीननादृत्य किमित्यनाप्तवाक्ये काव्ये प्रवर्त्तन्तामित्यभिप्रायेणाशङ्कते नन्विति । तर्हि काव्यस्य चतुर्वर्गसाधनत्व स्वीकारेऽपि यत्नः चतुर्वर्गार्थिस्यत्नः । काव्यात्तावद्रसास्वादो दुःखं विना धर्मादिप्राप्तिश्च भवति वेदादिभ्यस्तु दुःखेनैव धर्मादिप्राप्तिरेवेति वेदाद्यपेक्षया काव्ये समादर इति समाधानं लौकिकदृष्टान्तेनाह कटुकौषधेति । कटुकेति तिक्ताद्युपलक्षणं सितशर्करा अतिशुभ्रगुड़विकारविशेषः । तथा च काव्यस्यानाप्तवाक्यत्वेऽपि स्मृतिसदाचारवद्वेदानुमापकत्वेन प्रामाण्यमितिभावः । काव्यस्य युक्तिसिद्धमुपादेयत्वमुपपाद्य वाचनिकं तदुपपादयति किञ्चेति । तत्र नरजन्मनि शक्तिः काव्यकृतिस्मृत्यन्यतरजनकः संस्कारविशेष । त्रिवर्गो धर्मार्थकामाः । नाट्यमभिनय प्रधानं नाटकादि । काव्यालापा रसव्यञ्जकशब्दार्थाः । कारिकास्थं तेन इत्यादि व्याख्यायते तेनेत्यादि । एतेन द्वितीयश्लोकेन चकारात् प्रयोजनसम्बन्धयोर्लाभः । सम्बन्धश्चात्र प्रयोजनाभिधेययोः कार्यकारणत्वरूपः ।

तत् किंस्वरूपं तावत्काव्यमित्यपेक्षायां कश्चित "तददोषौ शब्दार्थौ सगुणावनलङ्कृती पुनः क्वापीति" एतच्चिन्त्यम्। तथाहि यदि दोषरहितस्यैव काव्यत्वाङ्गीकारस्तदा।

"न्यक्कारो ह्ययमेव मे यदरयस्तत्राप्यसौ तापसः
सोऽप्यत्रैव निहन्ति राक्षसकुलं जीवत्यहो रावणः।
धिक् धिक् शक्रजितं प्रबोधितवता किं कुम्भकर्णेन वा
स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः" ॥

अस्य श्लोकस्य विधेयाविमर्षदोषदुष्टतया काव्यत्वं न स्यात् प्रत्युत ध्वनित्वेनोत्तमकाव्यतास्याङ्गीकृता तस्मादव्याप्तिर्लक्षणदोषः (क)।

---

(क) कश्चिदिति काव्यप्रकाशकारिकाकार इत्यर्थः तदिति काव्यमित्यर्थ। शब्दार्थाविति विनिगमनाविरहेण उपस्थापकत्वसम्बन्धेनार्थविशिष्टः शब्दः उपस्थाप्यत्वसम्बन्धेन शब्दविशिष्टश्चार्थः काव्यमित्यर्थः अत्र शब्दार्थयोर्व्विशेषणविशेष्यभावे व्यञ्जकत्वाव्यञ्जकत्वाभ्यां वैचित्र्यविशेषरूपालङ्कारप्रयोजकत्वाप्रयोजकत्वाभ्यां वा प्रधानाप्रधानभावो-नियामकः। न च यत्रोभयोर्व्यञ्जकत्वं वैचित्र्यविशेषाधायकत्वं वा तत्र का गतिरिति वाच्यं। बाहुल्येन व्यञ्जकत्वेन चमत्काराातिशयाधायकत्वेन वा तत्र व्यवहारोपपत्तेः। न च तथापि यत्र व्यञ्जकयोर्वैचित्र्यविशेषप्रयोजकयोर्वा तुल्यत्वम् तत्र व्यवहारानुपपत्तिरिति वाच्यम्। प्रथमोपस्थितिविषयत्वेन शब्दस्यैव प्राधान्यात् विशेष्यत्वोपगमात् काव्यत्वं शब्दार्थोभयपर्य्याप्तमिति कश्चित्तन्न तथासति शब्दमात्रप्रत्यक्षे काव्यं शृणोमीति प्रतीतिसाक्षिकं काव्यत्वप्रत्यक्षं न स्यात्। व्यासज्यवृत्तिधर्मस्य लौकिकप्रत्यक्षे यावदाश्रयसन्निकर्षस्य कारणत्वात्। सगुणौ माधुर्य्यौजःप्रसादाख्यगुणविशिष्टौ। अनलङ्कृती इति ईषदर्थे नञ्

अस्फुटालङ्काराविल्यर्थः। क्वापीति प्रायेण स्फुटालङ्कारसद्भावे काव्यत्वं क्वचिदस्फुटालङ्कारसत्वेऽपि। एतेन सर्वत्रैव अलङ्कारसद्भावः सूचितः अलङ्काराश्च यमकोपमादयः। चिन्त्यमिति दूष्य मित्यर्थः। दोषमुपपादयति तथाहीति। काव्यत्वमङ्गीकरोषीति शेषः क्वचित् पुस्तके काव्यत्वाङ्गीकारे इत्येव पाठः।

न्यक्कार इति। श्रीरामे राक्षसान्नाशयति सति रावणस्य स्वकीयभर्त्सनमिदं मम यदरयोऽयमेव न्यक्कारः। विनाशितप्रभूतारेररिसत्वस्यैवानादरातिशयप्रतिपादनाय न्यक्कारत्वेनारोपणम्। तत्रापि तेषु सत्स्वपि असौ राम एकस्तापसः तपस्विभयकस्य ममारिरयमपि न्यक्कारः। द्वेषातिशयाद्रामस्यादःपदेनैव निर्देशो न तु नाम्ना। सोऽपि तथाविधोऽपि अत्रैव लङ्कायामेव न तु दूरे। राक्षसकुलं निहन्ति न तु लुक्कायितः क्वापि तिष्ठति द्विविराक्षसहनने कदाचित् क्षमः स्यात्तच्च कुलं समूहम्। प्रबोधितवता प्रबुद्धेन बुधिरबोधन इत्यस्य भौवादिकस्य रूपं न तु बुध अवगमन इत्यस्य दैवादिकस्य तस्याणिङ्त्वात्। यद्वा प्रबोधितं प्रबोधनं तद्वता जागरितेनेत्यर्थः। एतादृशपराभवे रावणो जीवतीत्याश्चर्यम्। अत्यन्तशत्रुपराभवकारित्वसूचनाय रावण इत्यनेनात्मन उत्कीर्त्तनम्। धिगमटिका क्षुद्रग्रामः तस्या विलुण्ठनेन वृथोच्छूनैर्व्यर्थमुद्रिक्तविक्रमैः। अत्र विधेयस्य वृथात्वस्य समासे गुणीभावो विधेयाविमर्षः * अत्रेष्टापत्तौ दोषमाह प्रत्युतेति अयं निपातनसमुदायोविपरीतार्थकः। ध्वनिसत्त्वेन ईर्ष्याजन्यस्वावमाननरूपनिर्वेदाख्यभावध्वनिसम्भवेन अस्य न्यक्कार इत्यादिवाक्यसमुदायस्याङ्गीकृतेति इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद्ध्वनिर्बुधैः कथितः इति वदता स्वयमेव स्वीकृतेत्यर्थः। तस्मादुक्तदोषसत्वेऽपि काव्यत्वाङ्गीकारात् लक्षणस्य निरुक्तकाव्यलक्षणस्य दोष इतरभेदानुमानेऽसाधकत्वप्रयोजिका।

---

* विधेयस्य झटित्यनवबोधः।

ननु कश्चिदेवांशोऽत्र दुष्टो न पुनः सर्वोऽपीति चेत् तर्हि यत्रांशे दोषः सोऽकाव्यत्वप्रयोजको यत्र ध्वनिः स उत्तमकाव्यत्वप्रयोजक इत्यंशाभ्यामुभयत आकृष्यमाणं काव्यमकाव्यं वा किमपि न स्यात्। न च किञ्चिदेवांशं काव्यस्य दूषयन्तः श्रुतिदुष्टादयो दोषाः किं तर्हि सर्वमेव काव्यम्।

---

(ज) ननु विधेयाविमर्षदोषस्तावदांशिकस्तेन सर्वं वाक्यं न दुष्टं निर्दोषांशस्यैव गुणालङ्कारसद्भावे काव्यत्वमित्यभिप्रायेण शङ्कते नन्वित्यादि। अत्र न्यक्कार इत्यादिवाक्ये सर्वोऽपीति समुदायोऽपीत्यर्थः। यत्र ध्वनिरिति यद्यपि निरुक्तध्वनेः समुदायवाक्यार्थव्यङ्ग्यत्वेनांशिकत्वं न सम्भवति तथापि ध्वनिप्रकरणे वक्ष्यमाणानां तत्परिपोषकाणां पदांशध्वनीनामांशिकत्वाभिप्रायेणेदम्। नन्वयमेव न्यक्कार इति न्यक्कारस्य विधेयत्वं विवक्षितं तच्च शब्दरचनावैपरीत्येन गुणीभूतं रचना च पदद्वयस्यापि विपरीतेति वाक्यदोष इति वक्ष्यमाणानुसारेणाविमर्षविधेयान्तरस्य वाक्यदोषस्यात्र सत्वाद्यत्रांशे दोष इत्यसङ्गतमिति चेन्न। वाक्यसमुदायस्यास्य एकवाक्यस्य दुष्टत्वेऽपि निर्द्दोषवाक्यान्तरसम्भवात् अंशाभ्यां दुष्टादुष्टभागाभ्याम् उभयत काव्यत्वाकाव्यत्वाभ्यामाकृष्यमाणं व्यावर्त्त्यमानम् इदं न्यक्कार इत्यादिवाक्यं किमपि एकतरत्। अत्रापदा ईर्षया वा उद्दीपितं जीवत्यहो रावण इत्यादिना व्यज्यमानेनस्वानौजस्य रूपैर्दैन्येनानुभावेन सवलितं स्वावमाननं निर्वेदाख्यभावरूपोऽसंलक्ष्यक्रमव्यङ्ग्यध्वनिः वक्ष्यमाणाः पदांशव्यङ्ग्यास्तस्यैव परिपोषका इतत्रबधेयं न्यक्कार इत्यादेः काव्यत्वव्यवस्थापनव्यग्रधीराह न चेति श्रुतिकट्वादय इत्यादिपदाद्विधेयाविमर्षादेः परिग्रहः सर्वदूषकत्वेनैव तेषां दोषत्वमित्यभिप्रायः। अपसिद्धान्तविलसितमिदमनादृत्य सोल्लुण्ठनं पृच्छति किन्तर्हीति।

तथाहि काव्यात्मभूतस्य रसस्यानपकर्षकत्वे तेषां दोषत्वमपि नाङ्गीक्रियते। अन्यथा नित्यदोषानित्यदोषत्वव्यवस्थापि न स्यात्। यदुक्तं ध्वनिकृता।

---

तदा किमुपपन्नमित्यर्थः उत्तरमाह सर्वमिति न्यक्कार इत्यादिवाक्यं निर्दोषत्वात् सर्वमेव काव्यं इत्तं नत्वेक देश इति। एतन्मतं दूषयति तथाहीति तथासतीत्यर्थः। यद्वा वादिनो मतं दूषयितुं तद्भावार्थं विवृणोति किन्तर्हीति किमिति प्रश्ने तर्हि दुःश्रवत्वादीनां प्रादेशिकत्वेन दोषत्वानङ्गीकारे सर्वं काव्यं दूषयन्तः श्रुतिकट्वादयो दोषा इत्यर्थः। अप्रतिषिद्धं परवचनं सम्मतमिति न्यायेनाखिलार्थे वादिनः सम्मतिमुन्नीय तन्मतं दूषयति तथाहीति। काव्यात्मभूतस्येति तेषां श्रुतिकट्वादीनां नाङ्गीक्रियते भवतेतिशेषः रसव्यञ्जकशब्दार्थसमुदायस्य काव्यत्वमवश्यं वाच्यं श्रुतिकट्वादीनां शब्दमात्रदूषकत्वेन रसव्यञ्जकशब्दार्थसमुदायादूषकत्वमित्यभिप्रायः। यद्वा नन्वदोषावित्यनेनांशिकदोषातिरिक्तदोषाभाववन्ताविति विवक्षणीयमित्याह न चेति। यद्येवं तर्हि किं दूषयन्तो दोषाः स्युरत्याह सर्वमिति परम्परया रसदूषकत्वेनैव तेषां सर्वदूषकत्वमव्याहतमेवेत्यभिप्रायः। श्रुतिकट्वादीनां परम्परया रसदूषकत्वमङ्गीकारयन् आंशिकत्वाभावमुपपादयति तथाहीति। अनपकर्षकत्वे अनपकर्षकत्वाङ्गीकारे तेषां श्रुतिकट्वादीनां नाङ्गीक्रियते युष्माभिरितिशेषः। रसापकर्षका दोषा इति दोषसामान्यलक्षणायोगादितिभावः। अनिष्टापत्तौ दोषमाह अन्यथेति विपरीतमतस्वीकारे इत्यर्थः। स्वमते प्राचीनसंवादमाह यदुक्तमिति। अनित्या इति तेषां क्वचिद्दोषत्वात् क्वचिद्गुणत्वाच्च अनित्यदोषत्वं तच्च दोषपरिच्छेदे व्यक्तीभविष्यति। ध्वनिर्व्यञ्जकः शब्दोव्यज्यमानो वा अर्थ आत्मा शरीरं यस्य तस्मिन्। यद्वा ध्वनिस्वरूपे इत्यर्थः हेया वर्जनीयाः एवञ्च दुःश्रवत्वादीनां शृङ्गारमात्रे व्यङ्ग्ये दोषत्वं न तु कोपादिमिश्रिते शृङ्गारे तत्र दुःश्रवत्वादेर्गुणत्वादिति।

"श्रुतिदुष्टादयो दोषा अनित्या ये च दर्शिताः ।
ध्वन्यात्मन्येव शृङ्गारे ते हेया इत्युदाहृताः" ॥

किञ्चैवं काव्यं प्रविरलविषयं निर्विषयं वा स्यात् । सर्वथा निर्दोषस्यैकान्तमसम्भवात् ( ज ) ।

ननु ईषदर्थे नञः प्रयोग इति चेत् तर्हि ईषद्दोष शब्दार्थौ काव्यमित्युक्ते निर्दोषयोः काव्यत्वं न स्यात् । सति सम्भवे ईषद्दोषाविति चेत् एतदपि काव्यलक्षणे न वाच्यम् । रत्नादिलक्षणे कीटानुवेधादिपरिहारवत् ( झ ) ।

न हि कीटानुवेधादयो रत्नस्य रत्नत्वं व्याहन्तुमीशाः

---

ननु सदोषवाक्यानां ध्वनिसत्त्वेऽपि काव्यत्वं नाङ्गीकरणीयमिति कथमुक्ताव्याप्त्यवसर इत्यत आह किञ्चेति । एवं सदोषवाक्यानां ध्वनिसत्त्वेऽपि काव्यत्वानङ्गीकारे भवदुक्तकाव्यलक्षणं प्रविरलविषयं स्वल्पलक्ष्यं सर्वत्रैवापत्तावाह निर्विषयमिति निर्लक्ष्यमित्यर्थः एकान्तमत्यन्तम् ।

( झ ) ननु यदि सर्वत्रैव दोषः सम्भवति तदा ईषद्दोषौ शब्दार्थौ काव्यमिति विवक्षणीयमित्यभिप्रायेणाह नन्वीषदर्थे नञ इति । अदोषाविव्यत्र इत्यादौ पूरणीयम् । यदि निपुणतरकविना निर्दोषं काव्यं रचयितुं शक्यते तदा तत्राव्याप्तिं दर्शयंस्तद्दूषयति तर्हीति । नञ ईषदर्थत्व स्वीकारे इत्यर्थः । सति सम्भवे इति दोषस्येत्यादि एवञ्च सदोषाणां मध्ये ईषद्दोषावेव शब्दार्थौ काव्यमित्यर्थकरणे बलवद्दोषरहिताविव्यर्थः सम्पद्यते । एतद् दूषयति एतदपीति बलवद्दोषरहितत्वमपीत्यर्थः । रत्नादीत्यादिपदेन सुवर्णादेर्ग्रहणं कीटानुवेधादित्यादिपदेन मलिनत्वादि परिग्रहः परिहारो रहितत्वम् ।

(ञ) दृष्टान्तं विघटयन् प्रकृतमुपपादयति न हीति । रत्नस्य रत्नादेः रत्नत्वं रत्नादित्वं व्याहन्तुं व्यावर्त्तयितुं स्वव्यापकाभावप्रतियोगी-

किन्तु उपादेयतारतम्यमेव कर्त्तुं तद्वदत्रापि श्रुतिदुष्टा-दयोऽपि काव्यस्य । उक्तञ्च

"कीटानुविद्धरत्नादिसाधारण्येन काव्यता ।
दुष्टेष्वपि मता यत्र रसाद्यनुगमः स्फुट इति ॥ (ज)

---

कर्त्तुमिति यावत् । ईशाः समर्थाः उपादेयतातारतम्यमुत्कृष्टाद्वैलक्षण्य-मपकर्षमिति यावत् । अत्रापि काव्ये वर्त्तमाना अपि काव्यस्य काव्यत्वं व्याहन्तुं नेशाः किन्तूपादेयतातारतम्यमेव कर्त्तुमित्यनेनान्वयः । साधारण्येन साम्येन । ननु कन्ये कामयमानं मां न त्वं कामयसे कथमि-त्यादेरपि काव्यत्वं स्यादित्यत आह यत्रेति । रसाद्यनुगमो रसाद्युप-लम्भः स्फुटः बलवद्दोषजन्यवैरस्यातिशयानभिभूतः तथा च उक्तस्थले ग्राम्यत्वादिरूपबलवद्दोषजन्यवैरस्यातिशयग्रस्तत्वाद्रसोपलम्भस्य न काव्य-त्वमिति भावः । अन्यत्रेतिपाठे अदुष्टेष्वित्यर्थः रसाद्यनुगमोरसाद्युप-लम्भः स्फूट इति दुष्टेषु यथा दोषोपलब्धिजन्य दुःखसम्बलितः तथा नेत्यर्थः तथाचोक्ताव्याप्तिताद्वस्थ्यमेवात्रदोष इतिभावः । केचित्तु अदोषाविति च्युतसंस्कृत्य * भवन्मतयो गक्लिष्टत्वादयो ये शाब्दबोध-विघटका ये च प्रतिकूलत्वादयो रसबोधवि घटका दोषास्तत् सामान्या-भाववन्तावित्यर्थः । एते रसबोधप्रतिबन्धकाः । दोषान्तरन्तु काव्याप-कर्षकमित्याहुस्तन्न व्यतिरेकध्वनेरुदाहरणे धन्यासि या कथयसीत्यादौ शपामीति च्युतसंस्कारदोषस्य सत्त्वात् । निःशेषच्युतचन्दनं स्तनतटं निर्म्मिष्टरागोऽधरो नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनु-रित्रादावञ्जनस्यातत्रत्यासत्त्वबोधाभिप्रायेण प्रयुक्तस्य दूरमित्यस्य

---

* गाण्डीवीकनकशिलानिभमित्यत्र च्युतसंस्कारः । ज्योत्स्नाचयः पयः पुरः तारकाः कैरवाणि च । राजति व्योमकासार राजहंसः सुधाकर इत्यत्र अभवन्मतयोगः ।

किञ्च । शब्दार्थयोः सगुणत्वविशेषणमनुपपन्नम् । गुणानां रसैकधर्म्मत्वस्य "ये रसस्याङ्गिनो धर्म्माः शौर्य्यादय इवात्मन" इत्यादिना तेनैव प्रतिपादितत्वात् ॥ रसाभिव्यञ्जकत्वेन उपचारत उपपद्यत इति चेत् तथाप्ययुक्तम् । तथाहि । तयोः काव्यस्वरूपत्वेनाभिमतयोः शब्दार्थयो रसोऽस्ति न वा नास्ति चेद् गुणवत्त्वमपि नास्ति । गुणानां तदन्वयव्यतिरेकानुविधायित्वात् (ट) ।

---

समासे गुणीभूतेन नञर्थेन सहान्वयेनाभवन्मतयोगत्वदोष सत्वाच्चाव्याप्तेः । अध्याहार्य्यक्रियान्वयेन तदुपपत्तावपि अभिमतान्वयाभावेन तद्दोषतादवस्थ्यात् काव्यप्रकाशकारेणैवानयोरुत्तमकाव्यत्वस्वीकारात् । अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता । नादृष्टेन न दृष्टेन भवता लभ्यते सुखमित्यस्फुटाख्यगुणीभूतव्यङ्ग्योदाहरणे पूर्वार्द्धे भवच्छब्दार्थान्वयासम्भवरूपाभवन्मतयोगसत्वाच्चाव्याप्तेः । नादृष्टे च न दृष्टे च भवति प्राप्यते सुखमिति पाठो युक्तः ।

(ट) ननु अदोषाविति काव्यप्रशंसार्थमुक्तं न तु तल्लक्षणघटकमिति कथमुक्ताव्याप्तेरवसर इत्यतः दोषान्तरमाह किञ्चेति । तेनैव तद्दोषाविति लक्षणकृतैव रसाभिव्यञ्जकत्वेन स्वाश्रयरसाभिव्यञ्जकत्वेन उपचारतः परम्परासम्बन्धेन । केचित् तु इदञ्च अन्यकृतारोपवीजानवधानादेव उक्तं तथाहि परम्परासम्बन्धघटकस्य मध्यभूतसम्बन्धिनो वहिरिन्द्रियप्रत्यक्षे सत्येव नैवमारोपः । यत्र तु परम्पराघटकमध्यभूतसम्बन्धीनवहिरिन्द्रिय प्रत्यक्षस्तत्र त्वेवमारोपो दृश्यत एव । यथा शीतो वायुरुष्णं जलं सुगन्धिर्वायुरित्यत्र परम्परासम्बन्धघटकानां मध्यभूतजलाग्निपुष्पावयवानां सूक्ष्मत्वेनाप्रत्यक्षत्वात् तादृशारोपः प्रकृते तु वहिरिन्द्रियप्रत्यक्षस्य रसादेः परम्परासम्बन्धघटकत्वात् न सम्भवत्येव गुणवत्त्वारोपः शब्दार्थयो-

रिति अतएव उच्चैः शब्दत्ववत् । तारत्ववदाकाशं इति नारोपः तत्र परम्परासम्बन्धघटकस्य शब्दस्य वहिरिन्द्रियप्रत्यच्चत्वात् न चैवं ज्ञानत्ववानात्मा इत्यारोपापत्तिः तत्र परम्पराघटकस्य मध्यभूतस्य ज्ञानस्य वहिरिन्द्रियाप्रत्यक्षत्वात् इति वाच्यं यदि च तादृशारोपो नास्ति तदा कारणान्तराभावस्यैव तत्र कल्पनीयत्वात् अतएव उदयनाचार्य्येणोक्तम् आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोपः यत्तु यवाकुसुमस्य वहिरिन्द्रियप्रत्यक्षत्वेऽपि लोहितः स्फटिक इत्यारोपस्तत्र यवाकुसुमं नेदृशपरम्पराघटकं यवाकुसुमस्य स्फाटिकावृत्तित्वात् किन्तु यवाकुसुमस्य स्वच्छद्रव्यसान्निध्यमेव तद्वृत्तिं पृथगेवारोपनिमित्तमिति सुधीभिरवधेयमित्याहुस्तच्च स्थूलजलसंयोगेन शीतो वायुः अर्कोपलसंयोगेन उष्णं जलमित्यादौ स्थूलजलार्कोपलसंयोगघटितयोः परम्परयोर्मध्यपदार्थयोः स्थूलजलार्कोपलयोर्वहिरिन्द्रियप्रत्यक्षत्वेऽपि विशिष्टधीनियामकत्वेन सम्बन्धत्वाङ्गीकारात् । चिदानन्दचमत्कारमयस्य रसस्य वहिरिन्द्रियप्रत्यक्षाविषयत्वेन तद्घटितपरम्परायाः सम्बन्धत्वाङ्गीकारे बाधाभावाच्च वस्तुतस्तु यत्र परम्परायां विशिष्टधीनियामकत्वं तत्रैव तस्याः सम्बन्धत्वं कल्प्यते यत्र तु विशिष्टधीनियामकत्वं नास्ति तत्र तु सम्बन्धत्वं न कल्प्यत एव तेन ज्ञानत्ववानात्मा इत्यादौ स्वसमवायिसमवायस्य न सम्बन्धत्वमिति । रसोऽस्तीति रसोऽवश्यमस्तीत्यर्थः । गुणवत्त्वमपि नास्तीति तथाच यत्र रसो नास्ति तत्राव्याप्तिरितिभावः * । तदन्वयेति रसान्वयेत्यर्थः । रसे सति गुणस्य रसाभावे सति गुणाभावस्यावश्यं सत्वादित्यर्थः ।

---

* तथा च भवदुक्तं शब्दचित्रं वाच्यचित्रमव्यङ्ग्यन्त्ववरं स्मृतमिति तृतीयकाव्यावरेऽव्याप्तिः नन्वत्रालङ्कारसत्वेनैव काव्यत्वमिति चेत् तर्हि सालङ्कारावित्येव वक्तुं युक्तं किमव्याप्तिघटकेन सगुणावित्यनेनेति भावः ।

अस्ति चेत् कथं नोक्तं रसवन्ताविति विशेषणम्। गुणवत्त्वान्यथानुपपत्त्या एतल्लभ्यत इति चेत् तर्हि सरसाविव्येव वक्तुं युक्तं न सगुणाविति। न हि प्राणिमन्तो देशा इति वक्तव्ये शौर्य्यादिमन्तो देशा इति केनाप्युच्यते॥ ननु शब्दार्थौ सगुणावित्यनेन गुणाभिव्यञ्जकौ शब्दार्थौ काव्ये प्रयोज्यावित्यभिप्राय इति चेत् न गुणाभिव्यञ्जकशब्दार्थवत्त्वस्यापि काव्ये उत्कर्षमात्राधायकत्वं न तु स्वरूपाधायकत्वम्। उक्तं हि "काव्यस्य शब्दार्थौ शरीरं रसादिश्चात्मा गुणाः शौर्य्यादय इव

---

(ठ) शब्दार्थचित्रयोः काव्यत्वास्वीकारे त्वाह अस्ति चेदिति कथमिति ननु रसगुणयोः समनियतत्वादेकतरोक्तौ प्रकृतनिर्वाहो भवतीति को दोष इति चेन्न माधुर्य्यादित्रितयसाधारणस्य गुणत्वस्यैकस्याभावात् * अननुगमस्य सम्भवात् रसवन्तावित्युक्तौ भावादिसाधारणस्याखण्डस्यास्वादविषयता विशेषस्य रसत्वस्वीकाराच्चाननुगम इति-भावः। ननु गुणपदेन लक्षणया रसोपस्थितिरित्यभिप्रायेणाह गुणवत्त्वेति। एतच्च शक्यसम्बन्धज्ञापनाय एतल्लभ्यते रसवन्ताविति विशेषणं लभ्यते रूढ़िप्रयोजनाभावात् लक्षणात न सम्भवतीत्यभिप्रायेण दूषयति तर्हीति। ननु दृष्टान्ते रूढ़िप्रयोजनाभावाल्लक्षणा न सम्भवतु प्रकृते तु काव्ये गुणाभिव्यञ्जकशब्दार्थप्रयोगोपदेश एव प्रयोजनमस्तीति कथं लक्षणाया असम्भवः इत्यभिप्रायेण शङ्कते नन्विति। न तु स्वरूपाधायकत्वं तद्व्यतिरेकेणापि काव्यत्वसम्भवादिति शेषः। तदेवोपपादयति उक्तं

---

* एतच्चिन्त्यं स्वयमेव गुणपरिच्छेदे काव्यव्यवहारप्रयोजकत्वे सति रसधर्मत्वं गुणत्वमुक्तम्।

अलङ्काराश्च कटककुण्डलादिवत् रीतयोऽवयवसंस्थानविशेषवत् दोषाः काणत्वादिवदिति एतेन अनलङ्कृती पुनः क्वापीति' यदुक्तं तदपि परास्तम्। अस्यार्थः "सर्वत्र सालङ्कारौ क्वचित्त्वस्फुटालङ्कारावपि शब्दार्थौ काव्यमिति"। तत्र सालङ्कारशब्दार्थयोरपि काव्ये उत्कर्षमात्राधायकत्वात्। एतेन "वक्रोक्तिः काव्यजीवितमिति "वक्रोक्तिजीवितकारोक्तमपि परास्तम्। वक्रोक्तेरलङ्काररूपत्वात्। यच्च क्वचिदस्फुटालङ्कारत्वे उदाहृतम् (ठ)।

"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपास्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः।

---

हीति शब्दार्थाविति सामान्यत एवोक्तं न तु गुणाभिव्यञ्जकशब्दार्थाविति रसादिरि त्यादिपदेन रसाभास भाव तदाभास भावशान्ति भावोदय भावसन्धि भावशबलत्वादीनां ग्रहणं। गुणा वक्ष्यमाणाः माधुर्यौजः प्रसादाः दोषाः श्रुतिदुष्टत्वापुष्टार्थत्वादयः। रीतयो वैदर्भी गौड़ी पाञ्चाली नाद्यः। अलङ्काराः अनुप्रासोपमादयः। एतेन वक्ष्यमाणहेतुना यथाश्रुते दूषणं न सम्भवतीति तदर्थं परिष्करोति अस्यार्थ इति अत्र भवदुक्तकाव्यलक्षणे सप्तम्यर्थो घटकत्वं भवदुक्तकाव्यलक्षणघटकयोः सालङ्कारशब्दार्थयोः उत्कर्षाधायकत्वात् उत्कर्षमात्राधायकत्वान्न स्वरूपाधायकत्वमित्यर्थः एतेन उक्तहेतुना वक्रा विचित्रा उक्तिः वक्रोक्तिः। वैचित्र्यमलङ्कार इति सामान्य लक्षणमित्यभिप्रायः।

(ठ) यः कौमारेति। रेवातीरे वेतसीतले कृतक्रीड़ायास्तत्क्रीड़ास्थानं प्रत्युत्सुकतावर्णनमिदम्। विवाहेन कौमारं अनूढ़ात्वं हरत्यपनयति कौमारहरः पतिः वरोऽभिमतः एतेन स्नेहतः सुरत-

सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते" ॥

एतच्चिन्त्यम्। अत्र हि विभावनाविशेषोक्तिमूलस्य सन्देहसङ्करालङ्कारस्य स्फुटत्वम्। एतेन (ङ)।

---

चतुरस्य पत्युः सत्त्वं प्रतिपादितं तदुक्तं "श्रीमान् सुरतदक्षश्च योषितां सम्मतः पुमानिति" एकार्थयोरेव हि शब्दयोरुपादानमुपपतेरत्यन्ता-सम्भवित्वसूचनाय एतेन उपपत्यसन्निधानस्य सोत्कण्ठाकारणत्वं वारितं अत्रापि तत्तद्रतिकारणमस्तीत्याह ता एवेति यासु तत्र क्रीड़नं कृतम् तत्सजातीया एवेत्यर्थः। मालती वासन्तिकी जाती प्रगल्भमूढ़ं गमनं येषां ते प्रौढ़ाः अनुकूलो वहन् वायुरित्यादौ वहधातोर्गमनार्थता प्रसिद्धा वायुगमनस्य प्रागल्भ्यमत्र मान्द्यम्। प्रौढ़वायोः खरोद्दीपकत्वाभावात् यथाश्रुतार्थत्यागः अथवा यथा महापण्डितः सत्कविरित्यादौ महत्त्वसत्त्वा-दिकं पाण्डित्य कवित्वादावन्वेति तथात्र प्रौढ़त्वं सौरभेऽन्वेति तच्चोत्क-टत्वं यद्वा प्रौढ़ा इति सखीनां सम्बोधनं सुरतचतुरा इति तदर्थः। कदम्बा-निलाः धूलिकदम्बवायवः चैत्रे तस्यैव सम्भवात्। केचित्तु कदम्बानिलाः कदम्बवनानिलाः वनानिलानां प्रौढ़त्वे वनवह्निभूतानां मान्द्योपलम्भात् उद्दीपकत्वेनाह प्रौढ़ा इति व्याचक्रुस्तन्न तथात्वे कदम्बपर्य्यन्तानुधावनस्य निष्प्रयोजनत्वात् अरण्यानिला इत्यनेनैव तदर्थलाभात्। नच मालती-सम्बन्धेनैवानिलानां सौगन्ध्यलाभात् कदम्बसम्बन्धदर्शनं व्यर्थमिति वाच्यं विलक्षण सौगन्ध्यलाभाय तस्य सार्थकत्वात्। यथा रमणीकमनीयकपोल-तले परिपीतपटीरवसैरलसः। अयमञ्चति पञ्चशरानुचरो नवनीपवनी-भुवनः पवनः। नवेति नवपुष्पितेत्यर्थः। अत्र चन्दनसम्बन्धेन सौगन्ध्य-लाभेऽपि विलक्षणसौगन्ध्यलाभाय कदम्बसम्बन्धदर्शनम्। सा चैव तद-वस्थैव। तथापि तादृशसुरतसामग्रीसत्त्वेऽपि। सुरतव्यापारलीलाविधौ सुरतव्यापारलीलाविधाननिमित्तम्। विभावना विशेषोक्तिमूलस्य विभा-

"अदोषं गुणवत् काव्यमलङ्कारैरलङ्कृतम्।
रसान्वितं कविः कुर्वन् कीर्त्तिं प्रीतिञ्च विन्दति"॥

इत्यादीनामपि काव्यलक्षणत्वमपास्तम्॥ यत्तु ध्वनिकारेणोक्तं "काव्यस्यात्मा ध्वनिरिति" तत् किं वस्त्वलङ्काररसादिलक्षणस्त्रिरूपो ध्वनिः काव्यस्यात्मा उत रसादिरूपमात्रो वा। तत्र नाद्यः। प्रहेलिकादावतिव्याप्तेः।

---

वना विशेषोक्तिनिरूपितस्य सन्देहेन सन्देहविषयत्वेन सङ्करो मेलकः। उत्कण्ठायाः पत्याद्यभावरूपकारणं विना उत्कण्ठारूपकार्य्यकथनमितीयं विभावना किं वा उत्कण्ठाभावस्य कारणसत्त्वे तस्याः कथनमिति विशेषोक्तिरिति सन्देहात् सन्देहसङ्करालङ्कारोऽयम्। विभावनायां कारणविरुद्धसद्भावमुखेन कारणाभावः विशेषोक्तौ कार्य्यविरुद्धसद्भावमुखेनैव कार्य्याभावः प्रतीयते नत्वभावबोधकनञेति तयोरस्फुटत्वम्। तदुभयकोटिकत्वेन सन्देहस्य सुतरां अस्फुटत्वमिति चेत् सुरतव्यापारलीलाविधौ रेवारोधसि वेतसीतरुतले इत्यत्र रेफानुप्रासस्य स्फुटत्वं प्रतीहि रणौ लघु इत्यनेन तस्य माधुर्य्यव्यञ्जकत्वमुपपादितम् तेन च रसोपकारतया तस्यालङ्कारत्वमव्याहतमेव लघू इत्यस्य असंयुक्तावित्यर्थः इति व्याख्यातव्यम्। केचित् तु रेवातीरेवेतसीतले कृतसङ्केताया नायिकाया इच्छे स्वयं परामर्शोऽयं यः कौमार इति स एव हि वरः स वर एव विलक्षणरतिसमर्थ एव एवञ्च रसस्य प्रधानत्वान्नालङ्कारत्वमिति काव्यप्रकाशोक्तौ रसस्य रसाभासस्येत्यर्थः। रतेरुपपतिगोचरत्वेन रसाभासस्यैव सम्भवादित्याहुस्तन्न व्यञ्जकाभावादुपपतेरलाभात् वक्तृवैशिष्टमेवात्र व्यञ्जकमिति चेन्न वक्तस्तादृशवैशिष्टेर मानाभावात् प्रत्युत स एव हि वर इत्यनेन उपपतिरतेरत्यन्तासम्भवित्वमुक्तम्। एतेन उक्तदोषसमूहेन।

(ढ) अदोषमित्यादि निर्दोषस्य सगुणालङ्कारस्य सरसस्य काव्यस्य

द्वितीयश्चेदोमिति ब्रूमः॥ ननु यदि रसादिमात्ररूप एव ध्वनिः काव्यस्यात्मा तदा।

"अत्ता एत्थ णिमज्जइ एत्थ अहं मह दिअस अं पलोएहि। मा पहिअ रत्तिअंधअ सेज्जाइ णिमज्जहिसि"॥ (१)

इत्यादौ वस्तुमात्रव्यङ्ग्यत्वे कथं काव्यव्यवहार इति चेन्न अत्रापि रसाभासवत्तयैव ब्रूमः। अन्यथा "देवदत्तो ग्रामं यातीति" वाक्ये तद्भृत्यस्य तदवसरणरूपव्यङ्ग्यावगतेरपि काव्यत्वं स्यात्। अस्त्विति चेन्न। रसवत एव काव्यत्वाङ्गीकारात् (ढ)।

---

प्रशंसापरमितिभावः। यच्चिति त्रिरूपश्चिप्रकारः प्रहेलिकादाविति। तरुण्यालिङ्गितः कण्ठे नितम्बस्थलमाश्रितः। गुरूणां सन्निधानेऽपि कः कूजति मुहुर्मुहुरित्यादाविव्यर्थः। अत्र किञ्चिदूनजलकलसरूपं वस्तु व्यङ्ग्यम्। ओमिति स्वीकरोमि। अत्ता इत्यादि अत्ता अत्र निमज्जति अत्राहं दिवस एव प्रलोकय। मा पथिक रात्र्यन्धक शय्यायामावयोर्निमङ्क्ष्यसीति संस्कृतम्। रात्र्यन्धकत्वेन कथितात्मानं पथिकं प्रति स्वयं दूत्या उक्तिरियम्। अत्ता श्वश्रूः। निमज्जति निमग्ना मृतप्राया तिष्ठति। वस्तुमात्रस्य स्वशय्यामात्रप्रवेशरूपवस्तुन एव रतेरुपपतिविषयत्वादत्र शृङ्गाराभासः। वस्त्वलङ्कारध्वन्योः काव्यात्माभावेऽपि काव्यप्रभेदकथनप्रकरणे तयोरुपादानं रसादेरुत्कर्षकत्वेन काव्यभेदकत्वात् इत्यवधेयम्। अन्यथा वस्तुमात्रस्य व्यङ्ग्यत्वेऽपि काव्यत्वस्वीकारे।

---

(१) संस्कृतार्थः श्वश्रूरत्र निमज्जति अत्राहं दिवस एव प्रलोकय। मा पथिक रात्र्यन्धक शय्यायां मम निमंक्ष्यसि।

काव्यस्य प्रयोजनं हि रसास्वादरूपसुखपिण्डदानद्वारेण वेदशास्त्रविमुखानां सुकुमारमतीनां राजपुत्रप्रभृतीनां विनेयानां रामादिवत् प्रवर्त्तितव्यं न रावणादिवदित्यादिकृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेश इति चिरन्तनैरप्युक्तत्वात्। तथा चाग्नेयपुराणेऽप्युक्तम्।
"वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितमिति"॥

व्यक्तिविवेककारेणाप्युक्तं "काव्यस्यात्मनि सङ्गिनि रसादिरूपे न कस्यचिद्विमतिरिति"। ध्वनिकारेणाप्युक्तम्। "न हि कवेरितिवृत्तमात्रनिर्व्वाहेणात्मलाभ इतिहासा-

---

(ख) नीरसस्य काव्यत्वास्वीकारे हेतुमाह काव्यस्य प्रयोजनं हीति रसास्वादसुखपिण्डदानद्वारेति पाठे पिण्डं समूहः रसास्वादसुखसन्तानद्वारेत्यर्थः। सुखेति पवर्गपञ्चमादिपाठे सुखपिण्डं अर्थप्रधानेषु लोभ्यद्रव्यं विनेयानां कृत्याकृत्यज्ञापनीयानां तथा च शब्दप्रधानेषु वेदेषु अर्थप्रधानेषु पुराणेतिहासादिषु चायासबहुलेषु विमुखानां सुकुमारमतीनां हि गुणीभूतशब्दार्थेषु रसास्वादप्रधानेषु प्रथमं तावद्रसास्वादसुखोद्देशेन प्रवृत्तिस्ततः काव्यार्थानां कृत्याकृत्यप्रवृत्तिनिवृत्त्युपदेशपरतावधारणमितिभावः। तदुक्तम्। स्वादुकाव्यरसोन्मिश्रं वाक्यार्थमुपभुञ्जते। प्रथमालीढमधवः पिबन्ति कटुभेषजमिति। वाक्यार्थं काव्यस्य परमतात्पर्य्यार्थम् उपभुञ्जते आस्वादयन्ति। वाग्वैदग्ध्येति वाचो वैदग्ध्यं वैचित्र्यं प्रधानं यत्र तस्मिन् एव कारेनालङ्कारादिव्यवच्छेदः अत्र काव्ये जीवितं जीवनाधायकम्। संगिनि अवश्यं स्थायिनि विमतिरस्वरसः। इति वृत्तं नीरसवाक्यप्रबन्धः आत्मपदलाभः स्ववाचककाव्यशब्दप्राप्तिः कविसम्बन्धिप्रबन्धत्वेनैव काव्यशब्दप्रयोगो नास्तीति भावः। इतिहासादेर्भारतादेः आदिना

देरेव तत्सिद्धेरित्यादि"। ननु तर्हि प्रबन्धान्तर्व्वर्त्तिनां केषामपि नीरसानां पद्यानां काव्यत्वं न स्यादिति चेत् न। रसवत्पद्यान्तर्गतनीरसपदानामिव पद्यरसेन प्रबन्धरसेनैव तेषां रसवत्ताङ्गीकारात्। यत्तु नीरसेष्वपि गुणाभिव्यञ्जकशब्दार्थसद्भावाद्दोषाभावादलङ्कारसद्भावाच्च काव्यव्यवहारः स रसादिमत्काव्यबन्धसाम्याद्गौण एव। यच्च वामनेनोक्तं "रीतिरात्मा काव्यस्येति" तन्न रीतेः सङ्घटनाविशेषत्वात् (ण)।

सङ्घटनायाश्च अवयवसंस्थानरूपत्वात्। आत्मनश्च तद्भिन्नत्वात्। यच्च ध्वनिकारेणोक्तम्।

---

रघुवंशादिपरिग्रहः। तत्सिद्धेः काव्यपदप्राप्तिसिद्धेः वीरादिरसप्रधानानां भारतादीनां सुतरां काव्यसंज्ञालाभ इतिभावः तर्हि रसवत एव काव्यत्वस्वीकारे पद्यानामिति गद्यानामुपलक्षणं गद्यं पद्यञ्च मिश्रञ्च तत्त्रिधैवव्यवस्थितमित्यनेन गद्यस्यापि काव्यत्वस्वीकारात् तेषां नीरसपद्यानां स्वव्यञ्जक * प्रतिपाद्य प्रतिपादकत्वसम्बन्धेन रसवत्त्वमितिभावः यदित्यव्ययं य इत्यर्थे नीरसेषु चन्द्रे शरन्निशोत्तंसे कुन्दस्तवकविभ्रमे इन्द्रनीलनिभं लक्ष्म सन्दधात्वनिलः श्रियमित्यादिषु सङ्घटना विशेषत्वात् गुणाभिव्यञ्जकशब्दविन्यासरूपत्वात्।

(ण) ननु रीतेः सङ्घटनाविशेष रूपत्वेऽपि काव्यात्मत्वस्वीकारे कोदोष इत्यत आह सङ्घटनायाश्चेति काव्यशरीरस्य वाक्यस्यावयवाः पदानि तेषां संस्थानं समुचितस्थाने निवेशस्तद्रूपत्वादित्यर्थः तद्भिन्न-

---

* स्वस्य रसस्य व्यञ्जकं श्लोकं तत्प्रतिपाद्यं महावाक्यं तत्प्रतिपादकं नीरसं पद्यम्।

"अर्थः सहृदयश्लाघ्यः काव्यात्मा यो व्यवस्थितः।
वाच्यप्रतीयमानाख्यौ तस्य भेदावुभौ स्मृताविति" ॥

अत्र वाच्यस्यात्मत्वं "काव्यस्यात्मा ध्वनिरिति" स्ववचनविरोधादेवापास्तम्। तत् किं पुन: काव्यमित्युच्यते।

३, वाक्यं रसात्मकं काव्यं

रसस्वरूपं निरूपयिष्यामः। रस एवात्मा साररूपतया जीवनाधायको यस्य तेन विना तस्य काव्यत्वानङ्गीकारात्। रस्यत इति रस इतिव्युत्पत्तियोगाद्भावतदाभासादयोऽपि गृह्यन्ते (त)।

---

त्वात् अवयवसंस्थानभिन्नत्वात् सहृदयश्लाघ्यः सभ्यानां हृदयङ्गम-प्रतीयमानो लक्ष्यः व्यङ्ग्यश्च तदिति उक्त लक्षणस्य दूषित-त्वादित्यर्थः किमिति किं स्वरूपमित्यर्थः वाक्यमिति रसात्मकं वाक्यं काव्यमित्यन्वयः ननु को रस इत्यत आह रसस्वरूपमिति विवृणोति रस एवेति एवकारेण ध्वनिकाराद्युक्तस्य वाच्यार्थस्य वस्त्वलङ्कारमात्र-व्यङ्ग्यस्य च व्यवच्छेदसाररूपतया आनन्दसान्द्रत्वेन श्रेष्ठस्वभावतया जीवनाधायक उपादेयता प्रयोजकः तेन रसेन तस्य वाक्यस्य प्रतिपादि-तत्वादिति देवदत्तो ग्रामं यातीत्यादिग्रन्थेनेति बोध्यं। ननु शृङ्गारादि भेदेन नवप्रकारो रसस्तदभावात् यथालीयतेत्यादि वाक्यानां कथं काव्यत्व मत आह रस्यत इति आस्वाद्यत इत्यर्थः भावादीनामप्यास्वादविषयत्व-मव्याहतमेव विषयत्वमप्यखण्डमतिरिक्तं बोध्यं तेन नाननुगम इति भावः अत्र न्यक्कारो ह्ययमेव इत्यादौ विधेयाविमर्षदोषदुष्टतया उद्देश्य विधेयभावबोधकानुपूर्व्वीविरहेण आकाङ्क्षाविरहात् वाक्यत्वस्यैवाभावः काव्यज्ञानं विना रसपदार्थस्य दुर्निरूप्यत्वात् अन्योऽन्याश्रयः रसघटक विभावादीनां काव्यघटितत्वात् इति दूषणद्वयं कश्चित् पण्डितं मन्य

तत्र रसो यथा ।

"शून्यं वासगृहं विलोक्य शयनादुत्थाय किञ्चिच्छने-
निंद्राव्याजमुपागतस्य सुचिरं निर्व्वर्ण्य पत्युर्मुखम् ।

---

उपन्यस्यति तदतीवमन्दं आनुपूर्व्वीविशेषरूपाया आकाङ्क्षाया विरहेऽपि श्रोतृजिज्ञासारूपायास्तस्या विद्यमानत्वात् वाक्यत्वाच्चतेः तादृशाकाङ्क्षाया एव वाक्यघटकत्वेन ग्रन्थकृतैवाङ्गीकारात् यद्वा सङ्कीर्णत्वगर्भितत्व दोषदुष्टयोः पदसमुदाययोः आसत्तिकल्पनेन वाक्यत्वं कल्प्यते अन्यथा काव्यदोषत्वमेव न स्यात् तथात्वापि कल्पितानुपूर्व्वीयोगात् अस्य वाक्यत्वाङ्गीकारात् अखण्डास्वादविशेष विषयत्वरूपस्य भावादिसाधारणस्य रसत्वस्य ग्रन्थकृतैव निरुक्तत्वाच्च । अखण्डास्वाद विशेषत्वञ्च आनन्दसम्वलितज्ञानविषयत्वमेवात्र भावादिसाधारणं वाच्यं न च ब्राह्मण पुत्रस्तेजात इत्यादिवाक्ये आनन्दसम्वलित ज्ञानजनकेऽतिव्याप्तिस्तद्वारणाय काव्यजन्यत्वं विशेषणमुपादेयं तथा सत्यन्योन्याश्रयदोष इतिवाच्यं अत्र हि शब्दबोधानन्तरमेवानन्दो-जायते तयोः पौर्व्वापर्य्यक्रमस्थितोऽपि काललाघवात् उत्पलपत्रशत-व्यतिभेदनवत् स न लक्ष्यते काव्ये तु शब्दबोधानन्तरं अलौकिकस्वादना-ख्यव्यापारादिबलात् एकमेवानन्दसम्वलितमलौकिकं ज्ञानं तदेवास्वा-दीरसपदेनोच्यत इति आनन्दसम्वलितत्वमिह तादात्म्यसम्बन्धेनैवा-नन्दविशिष्टत्वं न तु जनकतासम्बन्धेन विजातीययोर्ज्ञानानन्दयो-स्तादात्म्याङ्गीकारोऽलौकिकेन दोष इति सर्व्वमवदातम् । तदाभासेति रसाभासभावाभासेत्यर्थः आदिना भावसान्त्यादीनां ग्रहणम् ।

(घ) शून्यमिति सख्यादिहीनमित्यर्थः शयनात् शय्यायाः किञ्चिदु-त्थानं प्रियजागरणे झटिति सम्वरणार्थम् उत्थाने शनैस्त्वं जागरणहेतु शब्दानुत्पत्तये निद्राव्याजं छलनिद्रां सुचिरनिर्व्वर्णनञ्च निद्रा निश्चयाय तेन विश्रब्धं विश्वस्तं यथास्यात् तथा परिचुम्ब्य गण्डस्थलीमिति पत्यु-

विस्रब्धं परिचुम्ब्य जातपुलकामालोक्य गण्डस्थलीम्
लज्जानम्रमुखी प्रियेण हसता बाला चिरं चुम्बिता" ।

अत्र हि सम्भोगशृङ्गाराख्यो रसः ॥ भावो यथा महापात्रराघवानन्दसान्धिविग्रहिकाणाम् ।

यस्यालीयत शल्कसीम्नि जलधिः पृष्ठे जगन्मण्डलं
दंष्ट्रायां धरणी नखे दितिसुताधीशः पदे रोदसी ।
क्रोधे क्षत्रगणः शरे दशमुखः पाणौ प्रलम्बासुरो
ध्याने विश्वमसावधार्मिककुलं कस्मैचिदस्मै नमः ॥

अत्र भगवद्विषया रतिर्भावः। रसाभासो यथा।

मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्त्तमानः ।
शृङ्गेण च स्पर्शनिमीलिताक्षीं मृगीमकण्डूयत कृष्णसारः ॥

अत्र हि सम्भोगशृङ्गारस्य तिर्य्यग्विषयत्वाद्रसाभासः। एवमन्यत्। (ष)

---

रित्यनुषज्यते लज्जानम्रमुखी सतीतिशेषः। केचित् तु लज्जत इति लज्जा क्रिया तत्रैवालोचनानन्तर्य्यस्यान्वय इत्याहुः तन्न क्तप्रत्ययानामभिधाननियम्यतया लज्जापदस्य लज्जाश्रयबोधे सामर्थ्याभावात् तस्मात् स्थितादिपदाध्याहरेणैव एककर्तृकत्वमवधेयम्। बाला नववधूः चिरचुम्बनञ्चाधिकर्षपरिशोभनार्थं वीरादिरसानामुदाहरणावसरे दास्यति। यस्येति अलीयतेति च दशसु वाक्येष्वन्वेति शल्को मत्स्यत्वक् तस्य सीम्नि एकदेशे दितिसुताधीशो हिरण्यकशिपुः रोदसी द्यावापृथिव्यौ अत्रालीयतामिति वचनविपरिणामः कस्मैचित् अनिर्वचनीयमहिम्ने अत्र दशभिर्वाक्यैः दशावतारा दर्शिता ते यथा "मत्स्यः कूर्मो वराहश्च नरसिंहोऽथ वामनः। रामो रामश्च रामश्च बौद्धः कल्की च ते दश।" अनुवर्त्तमानः सेवमानः अन्यद्भावाभासादि।

**४, दोषास्तस्यापकर्षकाः ।**

दोषाः पुनः काव्ये किं स्वरूपा इत्युच्यन्ते श्रुतिदुष्टापुष्टार्थत्वादयः काणत्वखञ्जत्वादय इव देहद्वारेणेव शब्दार्थद्वारेण व्यभिचारिभावादेः स्वशब्दवाच्यत्वादयो मूर्खतादय इव साक्षात् काव्यस्यात्मभूतं रसमपकर्षयन्तः काव्यस्यापकर्षका इत्युच्यन्ते एषां विशेषोदाहरणानि वक्ष्यामः। गुणादयः किं स्वरूपा इत्युच्यन्ते ।

**५, उत्कर्षहेतवः प्रोक्ता गुणालङ्काररीतयः ॥**

गुणाः शौर्य्यादिवत् । अलङ्काराः कटककुण्डलादिवत् । रीतयोऽवयवसंस्थानविशेषवत् । देहद्वारेणेव शब्दार्थद्वारेण तमेव काव्यस्यात्मभूतरसमुत्कर्षयन्तः काव्यस्योत्कर्षका उच्यन्ते । इह यद्यपि गुणानां रसधर्मत्वं तथापि गुणशब्दोऽत्र गुणाभिव्यञ्जकशब्दार्थयोरुपचर्य्यते । अतश्च

---

(द) ननु दोषादीनां काव्यलक्षणाघटकत्वान्निराकाङ्क्षतया तन्निरूपणमसङ्गतमित्यत आकाङ्क्षामुत्थापयति दोषाः पुनरिति तस्य काव्यस्य। गुणा इति गुणानां शब्दार्थोत्कर्षद्वारा यथा रसोत्कर्षकत्वं तथा गुणपरिच्छेदे दर्शयिष्यते शौर्य्यादीनामौपचारिकदेहधर्मत्वाभिप्रायेणायं दृष्टान्तः । ननु निरलङ्कारकाव्यापेक्षयालङ्काराणामिव निर्गुणकाव्यापेक्षया गुणानां काव्योत्कर्षकत्वं नोपपद्यते निर्गुणत्वस्य नीरसत्वसमनियततया नीरसस्य काव्यत्वानङ्गीकारेणैव निर्गुणस्य काव्यत्वानङ्गीकारात् इत्यभिप्रायेण शङ्कते इह यद्यपीति इह नवीनालङ्कारिकसम्प्रदायमते । रसधर्मत्वमिति काव्ये गुणानामव्यभिचारित्वज्ञापनाय प्रसादगुणप्रकरणे प्राचीनैरुक्तं यथा स च सर्वरसव्यापी काव्यजीवातुरिष्यत इति । तथापीति ध्वन्यानन्दोक्तकारिकायां शब्दानां गुणाभि-

गुणाभिव्यञ्जकाः शब्दा रसस्योत्कर्षका इत्युक्तं भवतीति प्रागेवोक्तम्। एषामपि विशेषोदाहरणानि वक्ष्यामः । (द)

इति श्रीमन्नारायणचरणारविन्दमधुव्रतसाहित्यार्णवकर्णधारध्वनिप्रस्थापनपरमाचार्य्यकविसूक्तिरत्नाकराष्टादशभाषावारविलासिनीभुजङ्गसान्धिविग्रहिकमहापात्रश्री विश्वनाथकविराजकृतौ साहित्यदर्पणे काव्यस्वरूपनिरूपणो नाम प्रथमः परिच्छेदः ॥ १ ॥

---

व्यञ्जकत्वं गुणपरिच्छेदे व्यक्तीभविष्यति । अर्थानान्तु उद्धतानुद्धततया ओजोमाधुर्य्यव्यञ्जकत्वं झटिति प्रतिपाद्यत्वेन प्रसादव्यञ्जकत्वमवगन्तव्यम् उपचर्य्यन्ते लक्षणया प्रयुज्यन्ते अतश्च गुणशब्दस्यौपचारिकत्वस्वीकाराच्च शब्दाः शब्दार्थाः एवञ्च गुणाभिव्यञ्जकशब्दार्थहीनमपि काव्यं सम्भवति तदपेक्षया गुणाभिव्यञ्जकशब्दार्थयोः काव्योत्कर्षकत्वमुपपन्नमितिभावः । ननु गुणाभिव्यञ्जकपदविन्यासस्य रीतित्वेन निरूपणीयतया रीतेरर्थेनैव संग्रहे पृथक् तदुपादानमनर्थकमिति तदेतच्चिन्त्यम् ।

इति श्रीरामचरण तर्कवागीशभट्टाचार्य्यविरचितायां साहित्यदर्पणविवृतौ प्रथमः प्रकाशः ।

---

# द्वितीयपरिच्छेदः ।

वाक्यस्वरूपमाह ।

१, वाक्यं स्याद्योग्यताकाङ्क्षासत्तियुक्तः पदोच्चयः

योग्यता पदार्थानां परस्परसम्बन्धे बाधाभावः । पदोच्चयस्यैतदभावेऽपि वाक्यत्वे वह्निना सिञ्चतीत्यपि वाक्यं स्यात् । आकाङ्क्षा प्रतीतिपर्य्यवसानविरहः । स च श्रोतुर्जिज्ञासास्वरूपः । निराकाङ्क्षस्य वाक्यत्वे गौरश्वः पुरुषो हस्तीत्यादीनामपि वाक्यत्वं स्यात् (क) ।

---

(क) उपोद्घातसङ्गत्या वाक्यं निरूपयति वाक्यमिति । प्रकृतसिद्ध्यनुकूलचिन्ताविषयत्वमुपोद्घातः काव्यलक्षणञ्चात्र प्रकृतम् । योग्यतामाह पदार्थानामिति । परस्परसम्बन्धे परस्परान्वयबोधे हेतुरितिशेषः न तत्र करुणाहेतुरितिवत् षष्ठ्यर्थे सप्तमी बाधो विपरीतबुद्धिः तथाचान्वयबोधहेतुभूतबाधाभावो योग्यता इत्यर्थः । प्रत्यक्षादिकारणीभूतबाधाभाववारणाय भूतान्तं विशेषणं पयसा सिञ्चतीत्यादौ श्रोतुः सेकः पयःकरणकत्वाभाववानित्यादि विपरीतबुद्धेरभावः सा चात्र प्रमा रूपा ग्राह्या अन्यथा तादृशभ्रमभाजिश्रोतरि सति पयसा सिञ्चतीति वाक्यं न स्यात् ननु तादृशप्रमाया अप्रसिद्धा तद्विरहस्याप्रसिद्धिरिति निरुक्तयोग्यता शशवल्लीकेति चेत् तर्हि एवं व्याख्येयं परस्परसम्बन्ध इति सप्तम्यर्थो निरूपकत्वं परस्परसम्बन्धनिरूपकाणां पदार्थानामित्यर्थः । तात्पर्यविषयीभूतपरस्परसम्बन्धे सतीत्यर्थः । बाधाभावः सद्भावः एवञ्च तात्पर्यविषयीभूतसम्बन्धेन तन्निरूपकाणाम् पदार्थानामेकतरस्मिन्नपरपदार्थसद्भावो योग्यतेति फलितम् । पाकादौ विद्यमानस्य वह्निकरणकत्वस्य

आसत्तिर्बुद्ध्यविच्छेदः बुद्धिविच्छेदेऽपि वाक्यत्वे इदानी-मुच्चरितस्य देवदत्तशब्दस्य दिनान्तरोच्चारितेन गच्छ-

---

सेकादौ येन केनचित् परम्परादिसम्बन्धेन सद्भावे वह्निना सिञ्चती-त्यादेः वाक्यत्वप्रसक्तौ तद्वारणाय तात्पर्य्यविषयीभूतेति सम्बन्धविशे-षणं अस्ति च पयसा सिञ्चतीत्यादौ पयःकरणकत्वस्य स्वरूपसम्बन्धेन सेके सद्भावः । योग्यताया व्यावृत्तिमाह पदोऽन्वयस्येति एतदभावे निरुक्तयोग्यताया विरहे । वह्निनेत्यादि अत्रकारणस्य कार्य्यनिरूपितत्व नियमात् कार्यव्यतिरेकेणानुपपत्त्या सेकरूपे कार्य्ये भवत्येवाकाङ्क्षा इति ध्येयम् । आकाङ्क्षामाह आकाङ्क्षेति । प्रतीतेः पदार्थोपस्थितेः पर्य्यव-सानमन्वयबोधजनकत्वेनेच्छाविरहः तस्य विरहोऽभाव इत्यर्थः । नन्वेवं आकाङ्क्षापदस्याभावबोधकत्वे लक्षणापत्तिरित्यत आह स चेति प्रतीतिपर्य्यवसानविरहस्येत्यर्थः अभावाभावः प्रतियोगिस्वरूप एव न त्वतिरिक्तः कल्प्यत इति भावः । अस्ति च पयसा सिञ्चतीत्यादौ पयसेति पदार्थस्य सिञ्चतीति पदार्थेनान्वयबोधजनने श्रोतुरिच्छा प्रतीति पर्य्यवसानञ्च क्वचित् स्वाभाविकं क्वचिच्च जनितान्वयबोधत्वेन तत्राद्य-माह गौरिति अत्र गवादिप्रथमान्तपदोपस्थापितानां पदार्थानां अभेदातिरिक्तसम्बन्धेनान्वयबोधोऽव्युत्पन्न इति भवति । पदार्थोपस्थिते-रन्वयबोधजनने श्रोतुरिच्छाविरहः । अत्राभेदातिरिक्तसम्बन्धेन-बाधसत्वेऽपि सत्वादिसम्बन्धेन बाधविरहरूपयोग्यतास्तीति ध्येयम् । द्वितीयं यथा विमलं जलं नद्याः कच्छे महिषश्चरतीत्यत्र नद्या इति पदार्थोपस्थितेर्जलमिति पदार्थेनान्वयबोधे सति सिद्धे इच्छाविरहा-दितिन्यायेन कच्छ इत्यनेन श्रोतुरन्वयबोधे इच्छाविरहः । यदि-पुनरुभयान्वयेच्छया प्रयुज्यते तदा नद्या इत्यस्य काकाक्षिगोलकन्याया-दनुषङ्गाद्वा कच्छ इत्यनेन सम्बन्धाद्गृहीतवक्तृतात्पर्य्यस्य श्रोतुरुभया-न्वयबोधेच्छा सम्भवतीति ध्येयम् ।

( ख ) आसत्तिमाह आसत्तिरिति । बुद्धेः पदार्थोपस्थितेः अवि-

तीतिपदेन सङ्गतिः स्यात् । अत्राकाङ्क्षायोग्यतयोरात्मार्थधर्म्मत्वेऽपि पदोच्चयधर्म्मत्वमुपचारात् योग्यताकाङ्क्षासत्तियुक्त एव (ख) ॥

---

छेदोऽव्यवधानं अव्यवहितपदार्थोपस्थितिरिति तात्पर्य्यार्थः व्यवधानञ्च कालबाहुल्येन प्रकृतानुपयोगिपदार्थोपस्थित्या च सम्भवति तत्राद्यमाह बुद्धीति वाक्यत्वे वाक्यत्वस्वीकारे दिनान्तरेऽत्यन्तव्यवधानदर्शनाय प्रहरादिव्यवधानेऽप्यनासन्नत्वं बोध्यं सङ्गतिर्वाक्यव्यवहारोपयोगिमेलकः द्वितीयं यथा गिरिर्भुक्तम् अग्निमान् देवदत्तेन इत्यत्र गिरिरग्निमान् भुक्तं देवदत्तेनेति वाक्यार्थबोधद्वयं प्रकृतं तत्र प्रथमानुपयोगिन्या भुक्तमिति पदार्थोपस्थित्या द्वितीयानुपयोगिन्या अग्निमानिति पदार्थोपस्थित्या व्यवधानं प्रकृतोपयोगिपदार्थोपस्थित्या व्यवधाने त्वासत्तिरस्त्येव तेनाश्वेन ग्रामं गच्छतीत्यादौ ग्रामपदार्थोपस्थितिव्यवधानेऽपि अश्वपदस्य गच्छतीत्यनेनासत्तिरव्याहतैव । स्वार्थबोधसमाप्तत्वमिति पदोच्चयविशेषणं बोध्यं तेन शून्यं वासगृहं विलोक्येत्यादि भागस्य न वाक्यत्वम् । योग्यताकाङ्क्षयोः पदोच्चयधर्मत्वमुपपादयति आकाङ्क्षा इति आकाङ्क्षाया इच्छारूपत्वात् * आत्मवृत्तित्वमेव एकपदार्थेऽपरपदार्थसद्भावरूपयोग्यताया अर्थधर्मत्वमेव उपचारात् स्वजन्यजनकत्वरूप परम्परासम्बन्धात् स्वाश्रयोपस्थापकसम्बन्धाच्च पदोच्चयधर्मत्वमवगन्तव्यं निरुक्तासत्तेरप्यात्मधर्मत्वात् अत्राप्येवैव रीतिरनुसर्त्तव्या । यदि पुनः समभि-

---

* विपरीतबुद्ध्याभावरूपयोग्यतायास्त्वात्मनिष्ठतयान्वयबोधहेतुत्वादात्मवृत्तित्वमेव उपचारात् स्वजन्यजनकत्वरूपपरम्परासम्बन्धात् एकपदार्थीयापरपदार्थसद्भावरूपयोग्यतायास्तु पदार्थधर्मत्वेऽपि स्वाश्रयोपस्थापकत्वसम्बन्धेन पदोच्चयधर्मत्वमेव गन्तव्यमिति कुत्रचित् पुस्तके पाठान्तरं वर्त्तते ।

**७, वाक्योच्चयो महावाक्यमित्थं वाक्यं द्विधा मतम्।**

इत्थमिति वाक्यत्वेन महावाक्यत्वेन च॥ उक्तञ्च।

"स्वार्थबोधसमाप्तानामङ्गाङ्गित्वव्यपेक्षया।

वाक्यानामेकवाक्यत्वं पुनः संहत्य जायत इति"॥

तत्र वाक्यं यथा। "शून्यं वासगृहमित्यादि"

महावाक्यं यथा। रामायणमहाभारतरघुवंशादि (ग)॥४॥

पदोच्चयो वाक्यमित्युक्तं तत् किं पदलक्षणमित्यत आह।

**८, वर्णाः पदं प्रयोगार्हानन्वितैकार्थबोधकाः॥**

---

व्याहारविशेष आकाङ्क्षाव्यवधानोच्चरितत्वमासत्तिस्तदानयोः साक्षादेव पदसमुच्चयधर्मत्वमित्यास्तां विस्तरः।

(ग) महावाक्यमाह वाक्योच्चय इति। योगयताद्यभावे महावाक्यत्वस्वीकारे चक्षुषा गृह्यतां गगणं वर्त्तते इत्येतयोः भिक्षुरूपवसति गृही भुङ्क्ते इत्येतयोः भिन्नदिनोच्चरितयोश्चक्षुषा गृह्यतां घटो वर्त्तते इत्येतयोरपि महावाक्यत्वं स्यात्। अत प्राचां सम्वादमाह स्वार्थेति स्वार्थबोधेन निराकाङ्क्षाणां पुनरङ्गाङ्गित्वव्यपेक्षया गुणप्रधान* भावेनाकाङ्क्षया संहत्य एकार्थप्रतिपादकत्वेन मिलित्वा वाक्यानामेकवाक्यत्वं जायत इत्यर्थः। वाक्यार्थानां गुणप्रधानभावेन वैशिष्ट्यादेकत्वं तत्प्रतिपादकत्वेन वाक्यानामप्येकवाक्यत्वमितिभावः।

(घ) पदनिरूपणे प्रसङ्गसङ्गतिमुपपादयति पदोच्चय इति वाक्यनिरूपणे स्मृतस्य पदस्यानुपेक्षणीयत्वमिह प्रसङ्ग इतिभावः। वर्णाः स्वरव्यञ्जनरूपाः प्रयोगार्हाश्च ते अनन्वितैकार्थबोधकाश्चेति विग्रहः। सुराख्यातान्यतरान्तत्वेन क्वचित्तदनुगतत्वेन च प्रयोगार्हत्वम्।

---

* देवदत्तो हस्तिनं पश्य इत्यादौ।

यथा घटः। प्रयोगार्हं इति प्रातिपदिकस्य व्यवच्छेदः।
अनन्वितेति वाक्यमहावाक्ययोः।

एकेति साकाङ्क्षानेकपदवाक्यानाम्। अर्थबोधका इति
कचटतपानाम्। वर्णा इति बहुवचनमविवक्षितम् (घ)॥५॥

---

प्रातिपदिकस्य विभक्तिरहितनाम्नः केवलस्याप्रयोगित्वात् एतदुप-लक्षणं धातोरित्यपि बोध्यं तस्यापि केवलाप्रयोगित्वात्। वाक्य महावाक्ययोर्व्यवच्छेद इत्यनेनान्वयः एवमग्रेऽपि तयोरन्वितार्थबोधकत्वात् विशिष्टवाक्यार्थस्य विशेषणविशेष्यातिरिक्तत्वेनैकत्वमित्यभिप्रायेनेदं लक्षणं अन्यथैकार्थबोधका इत्यनेनैव वाक्यवारणे सिद्धे अनन्वितेत्युपादानं व्यर्थं स्यात्। साकाङ्क्षेति। साकाङ्क्षानां अन्वयबोधाजनकानां अनेकानां पदानां वाक्यानाञ्च समुदायस्य व्यवच्छेद इत्यर्थः तथा चायो-ग्यानां अनाकाङ्क्षाणामनासन्नानां च समुदायस्यानन्वितार्थबोधकत्वे-ऽपि न पदत्वमितिभावः। आकाङ्क्षामात्रविशिष्टानामयोग्यानाम-नासन्नानाञ्चानेकपदानामनेकवाक्यानाञ्चेत्यर्थः। एषामनन्वितार्थबोधक-त्वेन पदत्वप्रसक्तौ तद्वारणाय एकेतीतिभावः। नन्वेकवर्णं द्विवर्णं पद-योर्वर्णबहुत्वाभावात् अव्याप्तिरत आह वर्णा इतीति। ननु प्रकृत्यर्था-न्वितस्वार्थबोधकत्वं प्रत्ययानामिति नियमात् घटीयं कर्मत्वमित्याद्य-न्वितार्थबोधकस्य घटमित्यादेः कथं पदत्वं न च शक्तिमत्पदमिति मतानु-सारेण घटेत्येकं पदम् अम् इत्यपरं पदमनयोः प्रत्येकपदार्थोपस्थाप-कत्वेनानन्वितार्थबोधकत्वमक्षतमिति वाच्यं तथा सति घटमित्यादेः पदसमुदायस्य वाक्यत्वं स्यात् नचेष्टापत्तिः एवं सति शून्यं वासगृह-मित्यादि यद्वाक्योदाहरणं दत्तं तदसङ्गतं स्यात् तस्य तथाविध-वाक्यस्य महावाक्यतयैवोदाहर्त्तुमुचितत्वात् न च प्रत्ययार्थातिरिक्ता-नन्वितार्थबोधकत्वं विवक्षणीयमिति वाच्यं तथाप्यभेदसम्बन्धेन नीलाद्यन्वितोत्पलादिबोधकेषु नीलोत्पलमित्यादिपदेषु मुख्यार्थान्वितार्थ-

६, अर्थो वाच्यश्च लक्ष्यश्च व्यङ्ग्यश्चेति त्रिधा मतः

तत्र एषां स्वरूपमाह ।

---

बोधकेषु लाक्षणिकश्वेतादिपदेषु चाव्याप्तेरनुद्धारात् समस्तस्य पदत्वास्वीकारे "क्षीरोदजा वसति जन्मभुवः प्रसन्ना इत्यादि" पदगतक्लिष्टत्वदोषोदाहरणमसङ्गतं स्यात् नचेतरपदार्थनिरपेक्षं यदन्वितं तद्भिन्नमनन्वितमिह विवक्षणीयमिति वाच्यं तथात्वे ग्रामं गच्छ इत्यादिसमुदायस्य त्वमिति कर्तृपदार्थे सापेक्षान्वितार्थबोधकस्य पदत्वापात्तेः। एवमेकेति न सङ्गच्छते घटौ घटा इत्यादिद्विवचनान्तबहुवचनान्तपदेष्वनेकार्थबोधकेष्वव्याप्तेः न चैकेत्येकजातीयेत्यर्थ इति वाच्यं धवखदिरपलाशा इत्यादौ युगपच्चन्द्रसूर्य्योपस्थापके पुष्पवन्ताविति पदे चाव्याप्तितादवस्थ्यात् अपि च पदघटकानां यावतां वर्णानामनन्वितैकार्थबोधकत्वमुत केषाञ्चिद्वा तत्र नाद्यः सुन्दरस्य देवदत्तस्य धनमित्यादौ विशेषणविभक्तेरनर्थकत्वात् सुन्दरस्येत्यादिपदेऽव्याप्तेः नापि द्वितीयः वह्निना सिञ्चतीत्यादौ सर्व्वेषामनन्वितैकार्थबोधकत्वाभावेऽपि प्रत्येकं तथात्वसद्भावात् अव्याप्तेः। यद्वा द्वौ घटौ इति समुदायस्य सम्भेदेनान्यतरवैयर्थ्यमिति न्यायात् द्वाविति भागस्यानर्थकत्वेऽपि घटाविति भागस्यानन्वितैकार्थबोधकत्वात्तत्रातिव्याप्तेः एवञ्च पदलक्षणमेवं वाच्यम् असमासाङ्ग * सुप्तिङन्तत्वोपयुक्प्रकृतिः पदम्। युगन्तेन केवलप्रकृतेरसमासाङ्गेत्यनेन "पितुः स्वसा जहिजो ह इत्यादौ" पूर्वावयवस्य राजदन्तेत्यादौ उभयोरपि प्रकृतिरित्यनेन वाक्यमहावाक्ययोर्व्यवच्छेदः समासावयवस्य पदत्वाङ्गीकारे नीलोत्पलमित्यादिपदस्य वाक्यत्वं स्यात्।

(ङ) योगरताक्षणघटकपदार्थानाह अर्थ इति पदप्रतिपाद्य इत्यर्थः एषां वाच्यादीनां। अभिधया बोध्य इति अभिधाजन्यबोधविषय

---

* पचतितरामित्यत्र पचति भागेऽतिव्याप्ति वारणं चिन्त्यम्।

**१०, वाच्योऽर्थोऽभिधया बोध्यो**
**लक्ष्यो लक्षणया मतः ।**
**व्यङ्ग्यो व्यञ्जनया ताः**
**स्युस्तिस्रः शब्दस्य शक्तयः ॥६॥**

ता अभिधाद्याः (ङ) ॥ ६ ॥

**११, तत्र सङ्केतितार्थस्य बोधनादग्रिमाभिधा ।**

उत्तमवृद्धेन मध्यमवृद्धमुद्दिश्य "गामानय" इत्युक्ते तं गवानयनप्रवृत्तमुपलभ्य बालोऽस्य वाक्यस्य "सास्नादिमत्पिण्डानयनमर्थः" इति प्रथमं प्रतिपद्यते । अनन्त-

---

इत्यर्थः । अर्थबोधे शब्दस्य वृत्तीनाञ्च कारणत्वमिह विषयविषयिणोरभेदोपचाराद्बोध्यम् । वास्तवकारणन्तु शब्दतद्वृत्तिज्ञानमेव शब्दस्य प्रकृतेः प्रत्ययस्य च शक्तयोऽर्थबोधे सहकारिण्यो वृत्तयः ।

(च) अभिधादिशक्तिराह तत्रेति अभिधादिषु मध्ये इत्यर्थः शङ्केतितार्थस्येति शङ्केतग्रहविषयार्थस्येति तु नार्थः शङ्केतस्य अभिधाया अभिन्नत्वेनात्माश्रयापत्तेः किन्तु कोषव्याकरणादिप्रसिद्धार्थस्य मुख्यार्थस्येत्यर्थः मुख्यत्वञ्च लक्ष्यव्यङ्ग्यापेक्षया प्रथमोपस्थितिविषयत्वं बोधनात् स्वज्ञानेन शाब्दबोधजननात् सङ्केतग्रहोपायान् व्यवहारादीना दर्शयति उत्तमेति वृद्धेन शङ्केतग्रहवता प्रयोजकप्रयोज्यभावसम्पादनाय उत्तमत्वमध्यमत्वाभ्यां वृद्धयोरुपन्यासः तं मध्यमवृद्धं गवानयनप्रवृत्तं गवानयनगोचरयत्नवन्तं उपलभ्य गवानयनक्रियाया अनुमाय बालः शङ्केताग्रहवान् अस्य गामानयेत्यस्य प्रथमं शक्तिग्रहात् पूर्वं प्रतिपद्यत इति अनुमितेन यत्नेन मध्यमवृद्धस्य गवानयनगोचरं ज्ञानमनुमिनोति तद्गोचरप्रवृत्तिं प्रति तद्गोचरज्ञानस्य हेतुत्वात् ततस्तस्य ज्ञानस्य

रत्र "गां बधान अश्वमानय" इत्यादावावापोद्वाराभ्यां गोशब्दस्य "सास्नादिमानर्थः" आनयनशब्दस्य चाहरण-मर्थः" इति सङ्केतमवधारयति। (च)

क्वचिच्च प्रसिद्धपदसमभिव्याहारात्। यथा। "इह प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति" इत्यत्र। क्वचिदाप्तोपदेशात्। यथा "अयमश्वशब्दवाच्य" इत्यत्र।

---

को हेतुरित्याकाङ्क्षाया मुपस्थितत्वाद्गामानयेति वाक्यस्यैव तादृशज्ञानहेतुतां कल्पयति इतिभावः। अश्वमानयेत्यादाविति उक्तो इतिशेषः। आवापो-द्वाराभ्यां अन्वयव्यतिरेकाभ्यां गां बधानेत्यत्र गोपदसत्वे सास्नादि-मत्पदार्थबोधः आनयपदव्यतिरेकेणाहरणपदार्थबोधाभावः अश्व-मानयेत्यत्र गोपदव्यतिरेकेण सास्नादिमत् पदार्थबोधाभावः आनय-पदसत्वे आहरणपदार्थबोधः इत्येवं रूपावन्वयव्यतिरेकौ शङ्कितमभि-धानामशक्तिं सा चातिरिक्तैव नत्वस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छा ईश्वरं दूषयतां मासरादीनामपि शब्दबोधोदयादतिप्रसङ्गाच्च अतएवा-धुनिकशङ्कितानां चैत्रादिपदानामपि शक्तिः सङ्गच्छते न चायौचव्यप-गमे पिता नामधेयं कुर्य्यादिति सामान्यतस्चैत्रादिपदानामपि ईश्वर-शङ्कितत्वमिति वाच्यं तत्र तथा गतिसम्भवेऽपि याद्दच्छिकशङ्किति-तडित्यादिपदानां शङ्कितासङ्गतिप्रसङ्गात् तस्माच्च पदार्थेषु वैशिष्ट्य नाम सम्बन्धः कल्प्यते अयं घटपदाभिधेय इत्यादिप्रतीतिबलादिति साम्प्रदायिकाः।

(छ) क्वचिदिति प्रसिद्धेति प्रसिद्धस्य गृहीतशङ्कितस्य पदस्य सम-भिव्याहारात् साहचर्य्यात् समीपोच्चरितत्वादित्यर्थः। प्रेक्षावद्भिः प्रायेण योगत्र्यपदार्थोपस्थापकं पदं समीपे प्रयुज्यते इत्यादिसम्मतः प्रसिद्धपदार्था-न्वययोगत्र्यपदार्थविशेषोक्तिग्रहो भवतीतिभावः। एवञ्च शक्यार्थे योगत्र्यता-सत्वेऽपि वक्तृतात्पर्य्यविशेषस्यात्र हेतुत्वकल्पनात् तत्र न शक्तिग्रहः

**तत्र सङ्केतितमर्थं बोधयन्ती शब्दस्य शक्त्यन्तरानन्तरिता शक्तिरभिधा नाम ।**

---

शङ्केतमवधारयतीत्यनुषङ्ग * एवमग्रेऽपि प्रभिन्नेति प्रफुल्लेत्यर्थः अत्र कमले मधुपिबतीतिपदानामन्वययोग्यतार्थकत्वज्ञानेन मधुकरपदस्य भ्रमर एव शक्तिग्रहः मक्षिकादौ तादृशयोग्यतासत्त्वेऽपि वक्तृतात्पर्य्यविशेषज्ञानाभावान्न शक्तिग्रहः कमलाभ्यन्तरे भ्रमर एव मधु पिबतीति जानता जनेन कमलपदसमभिव्याहारान्मधुकरपदस्य भ्रमरे शङ्केतो गृह्यते आप्तोपदेशात् प्रामाणिकवचनात् एतदुपलक्षणं व्याकरणादयोऽपि शक्तिग्रहोपाया द्रष्टव्याः तदुक्तं "शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः इति" दाक्ष्यादिशब्दानां दक्षाद्यपत्येषु शक्तिग्रहो व्याकरणात् गोसदृशपिण्डदर्शनात् गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणे अयं गवयपदवाच्य इत्युपमानात् विनायको विघ्नराजद्वैमातुरगणाधिपा इत्यादौ कोशात्कोशाप्तवाक्यादित्ययमुदाहृतं स्वयमेव ग्रन्थकृता वाक्यशेषात् शक्तिग्रहो यथा यवमयश्चरुर्भवति वाराही चोपानत् वैतसे कटे प्राजापत्यं चिनोति इत्यत्र यववराहवेतसशब्दानां किं म्लेच्छप्रयोगात् कङ्गुवायसजम्बूनां वाचकाः उत आर्य्यप्रयोगात् दीर्घशूकशूकरवञ्जुलानामिति विप्रतिपत्तौ वसन्ते सर्वशस्यानां जायते पत्रशातनम् । मोदमानास्तु तिष्ठन्ति यवाः कणिश † शालिनः । वराहं गावोऽनुधावन्ति अप्सुजो वेतस इति वाक्यशेषरूपवेदविरोधिनी म्लेच्छप्रतीतिः स्मृतिरिव वेदविरुद्धा हेयेत्यार्यप्रयोगादेव दीर्घशूकादौ शक्तिग्रह इति शक्तिः कवित्वबीजरूपसंस्कारविशेष इत्यादौ विवृतेः । ज्ञानस्य

---

* अन्वितार्थस्यान्वयार्थं पुनरुपस्थितिरनुषङ्गः ।

† कणिशं शस्यमञ्जरीतिकोशः ।

१२, सङ्केतो गृह्यते जातौ गुणद्रव्यक्रियासु च॥७॥

जातिर्गोपिण्डादिषु गोत्वादिका। गुणो विशेषाधानहेतुः सिद्धो वस्तुधर्म्मः।

(छ) शुक्लादयो हि गवादिकं सजातीयेभ्यः कृष्णगवादिभ्यो व्यावर्त्तयन्ति। द्रव्यशब्दा एकव्यक्तिवाचिनो हरिहरडित्थडवित्थादयः। क्रियाः साध्यरूपा वस्तुधर्म्माः पाकादयः। एषु हि अधिश्रयणाधःश्रयणाद्यन्तादिपूर्वापरीभूतव्यापारकलापः पाकादिशब्दवाच्यः। एष्वेव हि व्यक्तेरुपाधिषु सङ्केतो गृह्यते न व्यक्तौ आनन्त्यव्यभिचारदोषापातात्॥ ७॥ (ज)

---

व्यभिचारदोषप्रसङ्गशङ्कया व्यक्तिशक्तिवादमपहाय उपाधिशक्तिवादमाह शङ्केत इति द्रव्यं संज्ञाविषयः संज्ञा च द्विविधा चिरन्तनी आधुनिकी च तत्राद्या हरिहरादिः द्वितीया डित्थडवित्थादिः। जात्यादिपदार्थमाह जातिरिति। गोपिण्डादिषु गोव्यक्त्यादिषु सिद्धो नित्यः एतन्मते गुणानामपि नित्यत्वं आविर्भावतिरोभावावेव उत्पत्तिविनाशविषयौ वस्तुधर्मौ द्रव्यमात्रवृत्तिः।

(ज) विशेषाधानहेतुत्वमुपपादयति शुक्लादयो हीति साध्यरूपा जन्यस्वभावा एषु साध्यरूपवस्तुधर्मेषु अधिश्रयणेति अधिश्रयणादीत्यर्थः अधिश्रयणं चुल्ल्यां स्थाल्या आरोपणं आदिः आद्यावयवो यस्य अधश्रयणं चुल्ल्याः स्थाल्याः अवरोपणं अन्तो अन्तावयवो यस्य तयोः कर्मधारयः आदिशब्देन व्हहनिर्गमनादिप्यामान्तरप्रवेशान्तप्रभृतीनां ग्रहणं पाकादीत्यादिना गमनादिग्रहणं एष्वेव हीति जात्यादिषु चतुर्षु मध्ये ये व्यक्तेरुपाधयो धर्माः जातिगुणक्रिया

स्वरूपास्तेष्वेवेत्यर्थः । संज्ञाशब्दानान्तु व्यक्तावेव शक्तिग्रहः द्रव्यस्य शक्तिव्यतिरिक्तत्वाभावेनोपाधित्वाभावान्नानात्वाभावेनोक्तदोषद्वयाभावाच्च अतएवोक्तं द्रव्यशब्दा एकव्यक्तिवाचिन इति । केचित्तु संज्ञाशब्दानां संज्ञायामेव शक्तिग्रहः उपस्थाप्योपस्थापकभावेनाविनाभावात् व्यक्त्याक्षेप इत्याहुः तन्न संज्ञायाः शब्दानतिरिक्तत्वेन तस्य चोच्चारणभेदेन भिन्नतया निरुक्तदोषद्वयप्रसङ्गात् । एवञ्च डित्थादिकं व्यक्तिस्वरूपमेव न तु पदार्थान्तरं इत्यवधेयं । आनन्त्येति नानाव्यक्तिषु नानाशक्तिकल्पनागौरवमित्यभिप्रायः । ईश्वरेच्छापक्षे तद्विषयत्वस्य नानात्वकल्पनमेव गौरवमित्यवगन्तव्यम् । ननु नानन्तव्यक्तिषु शक्तिग्रहः किन्तु दृष्टव्यक्तावेवेति कुतो गौरवमित्यत आह व्यभिचारेति शक्तिग्रहकालादृष्टव्यक्तावपि शाब्दबोधस्य कार्य्यस्य सत्वाद्व्यक्तिशक्तिग्रहरूपकारणस्य सिद्धत्वाद्व्यभिचारः इति भावः । ननु गुणद्रव्यक्रियाणां प्रतिव्यक्तिभिन्नत्वेनानन्त्यव्यभिचाराभ्यां कथं शक्तिग्रह इति चेन्न तन्मते गुणादीनामपि जातिवदेकत्वमेव भेदप्रतीतिस्तु आश्रयभेदादौपचारिकी । एतदसहमाना अन्ये जातावेव शक्तिरिति वदन्ति । यथा काव्यप्रकाशे "शक्तितच्चतुर्भेदो जात्यादिर्जातिरेव वा इति" एतन्मते गवादौ गोत्वादिरिव शुक्लादौ शुक्लत्वादिः पाकादौ पाकत्वादिः डित्थादौ डित्थादिर्जातिरस्ति डित्थादीनां प्रतिव्यवस्थाकालभिन्नत्वेन भिन्नत्वाङ्गीकारात् तद्वृत्तिडित्थत्वादिजातिस्वीकारात् एवञ्च शुक्लत्वादिजात्याश्रयस्य शुक्लादिगुणस्यैवाक्षेपः पटादिपरत्वे तु लक्षणैवेति मन्तव्यम् । ननूपाधौ शक्तिग्रहाङ्गीकारे विशेष्यं नाभिधा गच्छेत् क्षीणशक्तिर्विशेषणे इति न्यायात् गामानयेत्यादौ गोपदादिना कथं गवादेर्ग्रह इति चेन्न गवादेराक्षेपेण लाभात् तदुक्तं व्यक्त्यविनाभावात्तु जात्या व्यक्तिराक्षिप्यते यथा क्रियते इत्यादौ कर्त्ता कुर्वित्यत्र कर्मेत्यादि आक्षेपो नानुमानं व्याप्त्यादिज्ञानव्यतिरेकेणापि व्यक्त्युद्भावात् किन्तु स्मरणमेव गोत्वादिप्रकारकगवादिस्मरणाभावे गोत्वादिविशिष्टशाब्दबोधानुपपत्तेः अतएव उक्तं जातिशक्तं पदं व्यक्तिमेवानुभावयति स्मारयति चेति जातिशक्त्युपाधिशक्तमित्यर्थः ।

। अथ लक्षणा ।

१३, मुख्यार्थबाधे तद्युक्तो ययाऽन्योऽर्थः प्रतीयते रूढेः प्रयोजनाद्वासौ लक्षणा शक्तिरर्पिता ॥८॥

"कलिङ्गः साहसिकः" इत्यादौ कलिङ्गादिशब्दो देशविशेषादिरूपे स्वार्थेऽसम्भवन् यया शब्दस्य शक्त्या

---

(क) अथ लक्षणेति । अभिधानिरूपणानन्तरं लक्षणा निरूप्यते इत्यर्थः । मुख्यार्थस्य अभिधेयार्थस्य बाधे अन्वयानुपपत्तिग्रहे अत्र मुख्यार्थसम्बन्धग्रह इत्यपि बोध्यं तेन विना लक्षणया अग्राहकत्वात् उक्तञ्च "सम्बन्धानुपपत्तिभ्यां शब्दलक्षणा इति" तद्युक्त इति मुख्यार्थसम्बन्धीत्यर्थः मुख्यार्थासम्बन्धिनि लक्षणा नास्तीति सूचनायैतत् अन्यो मुख्यार्थतावच्छेदकातिरिक्तधर्मावच्छिन्नः मुख्यार्थभिन्न इत्यर्थस्तु न मनोरमः प्रयोजनाभावात् स्वार्थस्यापि बोधिकायामुपादानलक्षणायां रामोऽस्मि सर्वं सहे इति वक्ष्यमाणायां स्वार्थस्यैव दुःखसहिष्णुत्वेन बोधिकायां रामशब्दलक्षणायामव्याप्तग्राधायकत्वाच्च अतएव कदली कदलीत्यादि अर्थान्तरसंक्रमितवाच्यलक्षणामूलध्वनेरुदाहरणमपि सङ्गच्छते तत्र द्वितीयकदल्यादिपदानां पौनरुक्त्या कदलीत्वादिना अन्वयमलभमानानां शीतत्वादिना कदल्यादिरूपमुख्यार्थस्यैव बोधकत्वेन लक्षणास्वीकारात् । एवं पण्डितः कवयः कवयोऽन्ये कवयस्तु केवलं कपय इत्यत्र द्वितीयकविपदस्य काव्यजन्यलाभपूजाख्यातिभागित्वेन कवेरेवोपस्थानेऽपि लक्षणा एवञ्च सामान्यशब्दस्य विशेषपरत्वेऽपि लक्षणा सम्भवति शक्यतावच्छेदकघटितविशिष्टधर्मस्यापि शक्यतावच्छेदकातिरिक्तत्वस्वीकारात् यथा त्वामस्मि वच्मीत्यादौ रूढिः प्रसिद्धिः सा च भूरिप्रयोगरूपा तस्याज्ञानात् अवाचकशब्दप्रयोगः अप्रयोजनक इति सामान्यतः प्रयोजनज्ञानाद्वा प्रयोजनस्य विशेषज्ञानान्तु लक्षणाजन्य-

स्वसंयुक्तान् पुरुषादीन् प्रत्याययति। यथा च "गङ्गायां घोष" इत्यादौ गङ्गादिशब्दो जलमयादिरूपार्थवाचकत्वात् प्रकृतेऽसम्भवन् स्वस्य सामीप्यादिसम्बन्धसम्बन्धिनं तटादिं बोधयति सा शब्दस्यार्पिता स्वाभाविकेतरा ईश्वरानुद्भाविता वा शक्तिर्लक्षणा नाम। पूर्वत्र हेतू रूढिः

---

बोधानन्तरमेव सम्भवतीति न तस्य हेतुत्वमनुपपन्नं प्रयोजनादित्युद्देश्ये पञ्चमीत्यन्ये अत्र प्रागुक्तयोर्मुख्यावाधतद्युक्तयोर्दण्डचक्रादिन्यायेन मिलितयोरेव कारणत्वं चरमयोस्तु तृणारणिमणिन्यायेन प्रत्येकमेवेति विशेषज्ञापनाय भिन्नविभक्त्या व्यवधानेन च तेषां निर्देशः वक्तृतात्पर्यं हि लक्षणा तच्चास्माच्छब्दान्मुख्यार्थसम्बन्धीबोद्धव्य इति वक्तुरिच्छाविषयत्वम् निरूढहेतवस्तु तथा एव बोधकाः एवञ्च निरूढहेतुत्वयजन्यज्ञानविषयीभूतलक्षणया मुख्यार्थसम्बन्धी प्रत्याय्यत इति भावः मुख्यार्थसम्बन्धबोधिनी या व्यञ्जना तत्रैतादृशज्ञानविषयत्वाभावान्नातिव्याप्तिः। रूढ़िहेतुकायाः प्रयोजनहेतुकायाश्च लक्षणायाः प्रसिद्धलक्षयोर्लक्ष्यं सङ्गमयन् कारिकां विवृणोति कलिङ्ग इति साहसं चेतनधर्मः तस्याचेतने देशविशेषेऽन्वयानुपपत्तिं दर्शयति कलिङ्गादिशब्द इति देशविशेषे स्वार्थे वर्त्तमानः कलिङ्गादिशब्दः असम्भवन् साहसिकाद्यन्वययोगत्रमर्थमभिधया बोधयितुमशक्नुवन्नित्यर्थः। स्वसंयुक्तान् स्वार्थसम्बन्धान् प्रकृते घोषवसनाद्यन्वययोग्ये ऽसम्भवन् अभिधया वर्त्तितुमशक्नुवन् केचिदभिधां स्वाभाविकं शब्दव्यापारं वदन्ति तन्मते लक्षणायां वैलक्षण्यमाहुः स्वाभाविकेतरेति अन्ये तु ईश्वरेच्छाविषयत्वरूपामाहुः। तन्मतेनाहुः ईश्वरेति अनुद्भाविता अनुत्थापिता इदानीन्तनवक्तृभिरुत्थापितेति यावत्। पूर्वत्र कलिङ्ग इत्यादौ उत्तरत्र गङ्गायामित्यादौ गङ्गातट इति प्रतिपादयतीति प्रतिपादनं वाक्यं तदलभ्यस्य मुख्यशब्दघटितवाक्येनाप्रतिपाद्यस्य इत्यर्थः तीरस्य विप्रकर्षं स्वगतशीतत्वाद्य-

प्रसिद्धिरेव । उत्तरत्र "गङ्गातटे घोषः" इति प्रतिपादनादलभ्यस्य शीतत्वपावनत्वातिशयस्य बोधनरूपं प्रयोजनम् हेतुं विनापि यस्य कस्यचित् सम्बन्धिनो लक्षणेऽतिप्रसङ्गः स्यादित्यत उक्तम् । "रूढेः प्रयोजनाद्वापीति" ॥ केचित्तु "कर्म्मणि कुशलः" इति रूढावुदाहरन्ति । तेषामयमभिप्रायः । "कुशं लाति" इति व्युत्पत्तिलभ्यः कुशग्राहिरूपो मुख्योऽर्थः प्रकृतेऽसम्भवन् विवेचकत्वसाधर्म्म्यसम्बन्धसम्बन्धिनं दक्षरूपमर्थं बोधयति । तदन्ये न मन्यन्ते । कुशग्राहिरूपार्थस्य व्युत्पत्तिलभ्यत्वेऽपि दक्षरूपस्यैव मुख्यार्थत्वात् । (क)

---

पेक्षया सन्निकर्षात् स्वगतशीतत्वादेराधिक्यमत्वातिशयः एवञ्चातिशीते अतिपावने तीरे घोष इति व्यञ्जनाजन्यबोधो लाक्षणिकशब्दप्रयोगस्य प्रयोजनमिति भावः । केचिन्नैव त्वशक्तित इति लक्षणाया निषेध उक्तः अशक्तितो रूढिप्रयोजनविरहात् यथा "कमले चरणाघातं मुखं सुमुखितेऽकरोत्" अत्र निर्जितत्वं लक्ष्यते एषा नेयार्थलक्षणा दोषतया वक्ष्यते सा च कविप्रयोगानर्हत्वात् प्रकृतलक्षणस्य लक्ष्या न भवतीति तत्रातिव्याप्तिवारणाय चरमहेतुद्वयमुपन्यस्तं तदेव दर्शयति हेतुमिति रूढिप्रयोजनयोरन्यतरमित्यर्थः । सम्बन्धिनो मुख्यार्थसम्बन्धिनः लक्षणे लक्षणायां उदाहरन्ति काव्यप्रकाशकारादय इति शेषः । लाति गृह्णाति व्युत्पत्तिः प्रकृतिप्रत्ययविभागपरिकल्पना तल्लभ्यस्तत्प्रतिपाद्यः प्रकृते लौकिकधर्म्मान्वये असम्भवन् योगग्रतामलभमानः पदार्थस्यान्वयानुपपत्तिप्रतिसन्धानद्वारा लक्षणायामुपयोगित्वमित्यभिप्रायेणाह अन्ये इति स्वपक्षाभिप्रायेण दक्षरूपस्यैवेत्येवकारेण कुशग्राहिव्यवच्छेदः ।

अन्यद्धि शब्दानां व्युत्पत्तिनिमित्तमन्यच्च प्रवृत्तिनिमित्तम् । व्युत्पत्तिलभ्यस्य मुख्यार्थत्वे "गौः शेते" इत्यत्रापि लक्षणा स्यात् । "गमेर्डोस्" इति गमधातोर्डोस्प्रत्ययेन व्युत्पादितस्य गोशब्दस्य शयनकालेऽपि प्रयोगात् ॥ ८ ॥ (ज)

तद्भेदानाह ।

---

(ज) अत्र हेतुमाह अन्यद्धीति व्युत्पत्तिलभ्यार्थप्रतीतौ प्रकारीभूतो धर्मो प्रवृत्तिनिमित्तं यथा गोशब्दस्य गमनकर्तृत्वं शक्यतावच्छेदकप्रकारीभूतो धर्मः प्रवृत्तिनिमित्तं यथा गोत्वजातिः शब्दानां व्युत्पत्तिनिमित्तमेव प्रवृत्तिनिमित्तमिति न नियमः पाचकादिशब्दस्य द्वयोरैक्यसत्त्वेऽपि गवादिशब्दस्य व्यभिचारात् प्रकृते तु कुशग्राहित्वरूपव्युत्पत्तिनिमित्तस्यानेकपदार्थघटितत्वेन गुरुत्वात्तदपेक्ष्य लघुना दक्षत्वरूपाखण्डोपाधिनैव कुशलशब्दस्य शक्यतेति भावः । ननु रूढिवद्व्युत्पत्तिरपि पदार्थोपस्थापिकेति रूढिविषयस्यैव व्युत्पत्तिविषयस्यापि मुख्यार्थत्वमास्तामिति चेन्न रूढ्या प्रतिरुद्धायाः व्युत्पत्तेः पदार्थोपस्थापकत्वाभावात् तदुक्तं भट्टपादैः "लब्धात्मिका सती रूढिर्भवेद्योगापहारिणी । कल्पनीया तु लभते नात्मानं योगबाधतः इति" लब्धात्मिका जनितपदार्थोपस्थितिका कोशपरम्पराप्रसिद्धा सती अनादिसिद्धा योगापहारिणी व्युत्पत्तिलभ्यार्थप्रतीतिप्रतिबन्धिका कल्पनीया लाघवप्रतिसन्धानादिभिरिदानीन्तनैरुद्भावनीया आत्मानं पदार्थोपस्थितिं न लभते न जनयति योगबाधतो योगेन बाधनात् रूढेस्तस्याः पदार्थोपस्थापकत्वस्य च कल्पनामपेक्ष्य कॢप्तप्रयोगस्यैव पदार्थोपस्थापकत्वमात्रं कल्प्यत इति भावः । यदि पुनरुणादिप्रत्ययानां व्युत्पत्तेः प्रायिकत्वमुपगम्यते तदा निषङ्गे सायकाः सन्तीत्यत्र लक्षणापत्तिर्दोषो द्रष्टव्यः षोऽन्तकर्मणीत्यस्मात् षकप्रत्ययनिष्पन्नस्य सायकशब्दस्य विनाशाभावकालेऽपि प्रयोगात् इति ।

१४, मुख्यार्थस्येतराक्षेपो वाक्यार्थेऽन्वयसिद्धये ।
स्यादात्मनोऽप्युपादानादेषोपादानलक्षणा ॥ ९ ॥

---

(ट) लक्षणायाः सामान्यलक्षणमुक्त्वा विशेषलक्षणमाह मुख्यार्थस्येति अत्रापि ययेत्यध्याहार्य्यं तृतीयार्थे षष्ठी वाक्यार्थ इति सप्तम्यर्थो घटकत्वं तथा च मुख्यार्थस्य वाक्यार्थघटकान्वयबोधाय यया वृत्त्या वाक्यार्थे समभिव्याहृतपदार्थे आत्मनोऽपिकारादन्यस्यापि अन्वयसिद्धये अन्वयबोधाय मुख्यार्थेन इतरस्य शक्यतावच्छेदकातिरिक्तधर्मावच्छिन्नस्य आक्षेपः प्रत्यायनं एषोपादान लक्षणा स्यादित्यर्थः । संज्ञावीजमाह आत्मनोऽपीति मुख्यार्थस्यापीत्यर्थः उपादानात् प्रत्यायनात् मुख्यार्थविषयिनी प्रतीतिरुपादानं तद्धेतुर्लक्षणा उपादानलक्षणा यद्वा उपादीयते स्वार्थो गृह्यतेऽनेनेति उपादानं तन्नाम्नी लक्षणा उपादानलक्षणा *

---

पाठान्तरं * उपादानलक्षणेत्युक्ता शुद्धैव सा द्विधा इति काव्यप्रकाशे तन्नाम । अत्र वाक्यार्थ इत्यनेन तात्पर्य्यविषयो वाक्यार्थो ग्राह्यः अन्यथेदमनर्थकं तेन छत्रिणो यान्तीत्यत्र छत्रिगमनकर्त्तृत्वरूपवाक्यार्थे छत्र्यन्वयबोधस्य मुख्यार्थाक्षेपं विनापि सम्भवेन नाव्याप्तिः । तात्पर्य्यविषयस्य छत्रिछत्रिभिन्नोभयनिष्ठकगमनकर्त्तृत्वरूपवाक्यार्थस्य घटकोभयान्वयबोधाय मुख्यार्थस्याक्षेपो युज्यते कदली कदलीत्यादावुपादानलक्षणासंग्रहाय शक्यतावच्छेदकातिरिक्तेति अत्र कचिन्मुख्यार्थएव धर्मान्तरेण प्रतीयते यथा कदली कदलीत्यादौ अत्र द्वितीयकदलीपदं शैत्यरूपधर्मान्तरेण कदलीमेव बोधयति कचिन्मुख्यार्थस्तद्भिन्नश्च धर्मान्तरेण प्रतीयते यथा काकेभ्यो रक्षतामन्नमित्यत्र काकपदेनान्नोपघातकत्वेन काककुक्कुरमार्जाराः लक्ष्यन्ते अत्र प्रयोजनाभावाद्रूढ़िः छत्रिणो यान्तीत्यादौ छत्रिसार्थवाहित्वेन छत्रिणस्तद्भिन्नाश्च प्रतीयन्ते छत्रिणां वाहुल्यमतिरत्र प्रयोजनं कचिन्मुख्यार्थविशिष्टः प्रतीयते ।

रूढ़ावुपादानलक्षणा यथा "श्वेतो धावति"। प्रयोजने यथा "कुन्ताः प्रविशन्ति"। (ट)

---

उपादानं लक्षणञ्चेति काव्यप्रकाशे नाम व्यक्तं अत्र लक्ष्यार्थः क्वचिन्मुख्यार्थ एव धर्मान्तरेण प्रतीयते क्वचिन्मुख्यार्थविशिष्टो मुख्यार्थभिन्न एव क्वचिन्मुख्यार्थस्तद्भिन्नश्चेत्युभयं आद्यो यथा कदली कदलीत्यादि द्वितीयो यथा कुन्ताः प्रविशन्तीति तृतीयो यथा एते राजकुमारा गच्छन्तीति अभिधाजन्यमुख्यार्थोपस्थितेरन्वयानुपपत्तिग्रहाद्युप्रक्षीणत्वेन तदुपस्थितये पुनर्लक्षणापेक्षेत्यवगन्तव्यम्। ननु छत्रिणो यान्तीत्यादावुपादानलक्षणायामन्वयानुपपत्तिग्रहविरहात् कथं सामान्यलक्षणगमनं न चात्र लक्षणैव नास्ति किन्तु देवदत्तो यातीत्यादिवाक्ये तद्भृत्यानुसरणमिव वक्त्रादिवैशिष्ट्यसचिवया व्यञ्जनयैव छत्रिभिन्नगमनादिप्रतीयते इति वाच्यं तथा सति राजकुमारेषु तत्सदृशेषु च गच्छत्सु राजकुमारा गच्छन्तीति गौणोपादानलक्षणोदाहरणमसङ्गतं स्यात् उद्दीच्यबोधे अनुभवसिद्धं मुख्यार्थविषयत्वञ्च न स्यात्। अत्र केचित् मुख्यार्थबाधस्य तात्पर्य्यविषयस्यान्वयस्य मुख्यतावच्छेदकरूपेणानिर्वाह

---

यथा श्वेतो धावति कुन्ताः प्रविशन्तीति। ननु काकेभ्यो रक्षतामन्नमित्यादौ अन्वयानुपपत्तिरेव नास्ति कथं लक्षणेति चेन्न तात्पर्य्यविषयस्यान्वयस्य मुख्यार्थतावच्छेदकरूपेणानिर्वाहोऽन्वयानुपपत्तिरिति विवक्षणात् काकेभ्यो रक्षतामन्नमित्यादौ काककुक्कुरमार्जारादीनामन्नरक्षणान्वयस्य काकत्वरूपशक्यतावच्छेदकेनानिर्वाहः स्फुट एवमन्यत्रापि अनयोर्हीति एतत् सिद्धये स्वस्य प्रकारतया अन्वयसिद्धये आक्षिप्यन्ते स्वसम्बन्धिपदैः प्रत्याय्यन्ते मुख्यार्थस्य उपयोगित्वान्वयानुपपत्तिज्ञानेन स्वसम्बन्धित्वज्ञानेन च सम्भवति अत्रेदमवधेयम्। श्वेतो धावतीत्यादौ इतराक्षेपेऽपि श्वेतस्य गुणतया क्रियावैशिष्ट्यरूपकर्त्तृत्वस्यापि बाध इति तस्योपलक्षणरूपप्रकारः तथैव बोधः। यष्टयः प्रविशन्तीत्यादौ यष्टीनां क्रियासम्भवात्

एव गङ्गायां घोष इत्यादौ तात्पर्य्यविषयस्य तीरादौ घोषाद्यन्वयस्य सुखग्राह्यतावच्छेदकप्रवाहत्वादिना रूढिणो यान्तीत्यादौ तात्पर्य्यविषयस्य छत्रच्छत्रीणां गमनाद्यन्वयस्य सुखग्राह्यतावच्छेदकछत्रित्यादिना चा निर्वाहादित्याशङ्कस्तत्र तात्पर्य्यस्य प्रथमसुपस्थापकाभावेनानुपस्थितौ तद्घटितान्वयानुपपत्तेरप्यनुपस्थितेः न च प्रकरणादिना तदुपस्थितिः कथं अन्यथानुपस्थिते तीरादौ सुखग्राह्यसम्बन्धग्रह इति वाच्यं तथा सत्यलमन्वयानुपपत्तिप्रतिसन्धानादिना वक्तृतात्पर्य्यलक्षणायाः प्रकरणादिना एव उपस्थितिसम्भवात् अन्वयव्यतिरेकाभ्यामन्वयानुपपत्तिग्रहादेरपि कारणत्वमवगम्यते प्रकरणादिना विशिष्यज्ञातायामनेकार्थशब्दाभिधायामतिव्याप्तिवारणाय तस्योपादानं सार्थकमितिचेदन्वयानुपपत्तिरेवास्तां किमपरेण सुखग्राह्यसम्बन्धग्रहमन्तरेण यस्य कस्यचिदुपस्थापिकायां नेयार्थलक्षणायामतिव्याप्तिवारणाय तदिति चेत्तदेवास्तु किमाद्येन तेनैव नानार्थशब्दाभिधावारणसम्भवात् एवञ्च रूढिणो यान्तीत्यादौ व्यभिचारात् व्यावृत्त्यभावाच्च अन्वयानुपपत्तिज्ञानमनुपादेयमेव, तस्य लक्षणाविशेषज्ञापकत्वं लक्षणासामान्यज्ञापकन्तु सुखग्राह्यसम्बन्धज्ञानमेव अतएवोक्तं "अभिधेयाविनाभूतप्रतीतिलक्षणोच्यते । लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता इति" अभिधेयस्याविनाभूतं अविनाभावः सम्बन्धमात्रं तस्मात्तद्ग्रहात् प्रतीतिर्यस्या वृत्तेः सा लक्षणेत्यर्थः अन्यच्च

---

विशेषणतया बोधः छत्रिमत्वरूपकर्त्तृत्वपक्षे तूभयत्रैव तद्भावात् द्वयोरेवोपलक्षणत्वेन प्रकारत्वमिति प्रयोजनीभूतज्ञानविषयः एवमन्यत्रापि । अस्याः संज्ञान्तरमाह इयमेवेति । अजहत् अत्यजन् स्वार्थो याम् । गां बध्नीयादित्यादौ नोपादानलक्षणोदाहर्त्तव्या रूढिप्रयोजनाभावात् किन्त्वाक्षेपादेव तत्र व्यक्तेर्लाभः न चात्र प्रयोगप्राचुर्य्यरूपा रूढिरस्तीति वाच्यं लक्ष्यार्थविनिर्मोकेन शक्यार्थे प्रयोगार्हस्य शब्दस्य लक्ष्यार्थे प्रयोगप्राचुर्य्यं रूढिरिति विवक्षणात् अन्यथा जात्या व्यक्तिराक्षिप्यते इति प्राचीनप्रवादविरोधः स्यात् ।

अनयोर्हि श्वेतादिभिः कुन्तादिभिश्च अचेतनतया केवल-धावनप्रवेशनक्रिययोः कर्त्तृतयाऽन्वयमलभमानैरेतत्सिद्धये आत्मसम्बन्धिनोऽश्वादयः पुरुषादयश्चाक्षिप्यन्ते। पूर्वत्र प्रयोजनाभावाद्रूढिः। उत्तरत्र कुन्तादीनामतिगहनत्वं प्रयोजनम्। अत्र च मुख्यार्थस्यात्मनोऽप्युपादानम्। लक्षणलक्षणायान्तु परस्यैवोपलक्षणमित्यनयोर्भेदः। इयमेव "अजहत्स्वार्था" इत्युच्यते॥ ९॥ (ठ)

---

शक्यादशक्योपस्थितिर्लक्षणेति शक्यात् शक्यसम्बन्धज्ञानात् उपस्थीयतेऽनयेत्युपस्थितिः शक्यसम्बन्धज्ञानज्ञाताशक्यतावच्छेदकभिन्नधर्मावच्छिन्नोपस्थितेरुपाया लक्षणेत्यर्थः अनयोर्यथाश्रुतार्थस्तु न सम्यक् वक्तृतात्पर्य-विशेषरूपाया लक्षणायाः स्वकार्योपस्थितिरूपत्वभावात् एवञ्च छत्रिणो यान्तीत्यादावेकसार्थवाहित्वादिरूपशक्यसम्बन्धज्ञानादेव ज्ञातया लक्षणया छत्रिसार्थवाहित्वेन छत्र्यच्छत्रिण उपस्थाप्यन्ते नतत्रान्वयानुपपत्ति-प्रतिसन्धानापेक्षापीति।

(ठ) उक्तोदाहरणयोर्लक्षणं योजयति अनयोर्हीति एतत्सिद्धये धावनप्रवेशनकर्त्तृत्वान्वयबोधाय आत्मसम्बन्धिन इति यथायथं स्वसमवायिनः स्वसंयोगिनश्चेत्यर्थः आक्षिप्यन्ते प्रत्याय्यन्ते प्रयोजनं प्रयोजनीभूतज्ञानविषयः एवमन्यत्रापि अस्याः संज्ञान्तरमाह इयमेवेति अजहत्त्यजन् स्वार्थौ मुख्यार्थौ यामिति विग्रहः अत्र श्वेतोधावतीत्युदाहरणं चिन्त्यं धावनानुकूलकृतिरूपस्य धावनकर्त्तृत्वस्याश्वसम्बन्धेनापि श्वेतगुणेऽन्वयाभावात् न च कुन्ताः प्रविशन्तीत्यादौ यथा कुन्तस्याचेतनस्यापि पुरुषसम्बन्धेन प्रवेशकर्त्तृत्वमुपचर्य्यते तथात्रापि अचेतनस्यापि धावनकर्त्तृत्वमौपचारिकमितिवाच्यं कुन्तस्य पुरुषसम्बन्धोत्पन्नक्रियासम्बन्धेनैव कर्त्तृत्वोपचारात् प्रकृते तु श्वेतगुणस्याश्वसम्बन्धेनापि क्रियासम्बन्धाभावात् तस्माल्लक्षणलक्षणाया एवैतदुदाहरणं एवञ्च श्वेतः शोभते श्वेतं

**१५, अर्पणं स्वस्य वाक्यार्थे परस्यान्वयसिद्धये।**
**उपलक्षणहेतुत्वादेषा लक्षणलक्षणा॥ १०॥**

रूढ़िप्रयोजनयोर्लक्षणलक्षणा यथा। "कलिङ्गः

---

पश्यतीत्याद्येतदुदाहरणं बोध्यं अत्र ग्रैतगुणविशिष्टास्वस्य शोभादर्शन-योरन्वयस्तात्पर्य्यविषयः यत्र शक्यस्योपाधेर्व्यक्तिव्यतिरिक्तप्रयोगरूपा रूढिरस्ति तत्र लक्षणयैवाविनाभूताया अपि व्यक्तेरुपस्थितिः नत्वाक्षे-पेण गवादिपदानान्तु तादृशरूढेः प्रयोजनस्य चाभावाल्लक्षणाया असम्भवादाक्षेपेणैव व्यक्तेरुपस्थापकत्वमित्यभिप्रायेणेदमुदाहरणमुपन्यस्तं "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति इति" विशिष्टशक्तिवादिनां मते लक्षणात्र नास्तीत्यवधेयम्।

( ङ ) लक्षणलक्षणामाह अर्पणमिति * अत्रापि यथेत्यनुषज्यते समभिव्याहृतपदार्थे मुख्यार्थभिन्नस्यैवान्वयबोधाय यया वृत्त्या शब्देनैव आत्मनोऽर्पणं स्वस्वार्थभिन्नबोधेनोपयोगीकरणं एषा लक्षणलक्षणा स्यादिति सम्बन्धः संज्ञाबीजमाह उपलक्षणहेतुत्वादिति वाक्यार्थान्वयिनो मुख्यार्थस्येतरव्यावृत्तिबोध उपलक्षणं कलिङ्गः साहसिक इत्यादौ वाक्यार्थे साहसादावनन्वयिनो मुख्यार्थस्य देशविशेषादेः पाञ्चालप्रभृते-र्व्यावृत्तिबोधो लक्षणयैव जायत इत्यन्ये तच्च उपदिशति कामिनीना-

---

लक्षणलक्षणामाह अर्पणमिति। *वाक्यार्थे परस्यैव मुख्यार्थभिन्नस्यैवान्वयबोधाय स्वस्य स्वार्थत्वस्य परत्रार्पणं यया एषा लक्षणलक्षणा संज्ञाबीजमाह उपलक्षणेति मुख्यार्थविषयिणी प्रतीतिरुपलक्षणं तद्धेतुत्वादित्यर्थः कलिङ्ग इति। ननु देशान्तरनद्यन्तरव्यावर्त्तकतया कलिङ्गगङ्गयोरुपादाने उपादानलक्षणैवेति चेन्न तयोरुपलक्षणविषयोवृत्तकत्वोपगमात् शक्यसम्बन्धज्ञाने तयोरुपस्थितत्वात् आत्मानं स्वार्थत्वं मुरूषतद्योरर्पयतः।

साहसिकः" "गङ्गायां घोषः" इति च । अनयोर्हि पुरुषतटयोर्वाक्यार्थेऽन्वयसिद्धये कलिङ्गगङ्गाशब्दावात्मानमर्पयतः ॥ यथा वा । (ड)

उपकृतं बहु तत्र किमुच्यते
सुजनता प्रथिता भवता परम् ।
विदधदीदृशमेव सदा सखे
सुखितमास्स्व ततः शरदां शतम् ॥

मित्यादौ मुख्यार्थस्येतरव्यावृत्तिबोधाभावे नाव्याप्त्यापत्तेः एवञ्च वाक्यार्थान्वयिमुख्यार्थामिश्रितमुख्यार्थान्यपदार्थोपस्थितिरुपलक्षणमित्यवगन्तव्यं उपदिशतीत्यादौ शिक्षावचनरूपोपदेशेनामिश्रित एवाविष्कारः प्रतीयते कलिङ्गः साहसिक इत्यत्र तु देशविशेषरूपमुख्यार्थेन मिश्रितस्य पुरुषस्य प्रतीतिरस्ति किन्तु तस्य वाक्यार्थान्वयित्वासम्भवेन विशिष्टमुख्यार्थामिश्रणं सम्भवत्येवं कुन्ताः प्रविशन्तीत्यादावुपादानवारणायामिश्रितान्तं विशेषणं कलिङ्गः साहसिक इत्यादिसंग्रहाय वाक्यार्थान्वयीति मुख्यार्थविशेषणं । उपलक्ष्यतेऽनेनेत्युपलक्षणं तन्नाम्नी लक्षणा उपलक्षणलक्षणा पूर्वत्रात्मनोऽप्युपादानादित्युपादानपदं अत्रोपलक्षणहेतुत्वादित्युपलक्षणपदञ्च भावप्रधानमित्यवगन्तव्यम् । क्रमेणोदाहरति रूढिप्रयोजनयोरिति अर्पयतः यथायथं पुरुषतटबोधेनोपयोगीकुरुतः ।

(ढ) उपकृतमिति * यत्र भवता बहूपकृतं तत्र किमुच्यते

उदाहरणान्तरमाह उपकृतमिति । * तत्र प्रस्तुते कर्मणि आस्स्व ततः उपकाराचरणसुजनताप्रथनाभ्यां शरदां वत्सराणां उपकृतादय इत्यादिपदात् सुजनता सुखितयोर्ग्रहणम् अनुपकारादीनामित्यादिपदेन दुर्जनतादुःखितयोर्ग्रहणम् । वैपरित्यं विरोधः । अस्याः

अत्रापकारादीनां वाक्यार्थेऽन्वयसिद्धये उपकृतादयः शब्दा आत्मानमर्पयन्ति। अत्रापकारिणं प्रत्युपकारादिप्रतिपादनान्मुख्यार्थबाधः। वैपरीत्यलक्षणः सम्बन्धः। फलमप्यपकारातिशयः। इयमेव "जहत्स्वार्था" इत्युच्यते ॥ १० ॥ (ढ)

---

इत्यर्थः तत्रेत्येव कुत्रचित् पुस्तके पाठः परमुत्कृष्टं यथास्यात्तथा सुजनता प्रथिता प्रकटीकृता यद्वा परमिति मान्तमव्ययमेवकारार्थकं सुजनता प्रथितैवेत्यर्थः सुखितं यथास्यात्तथा आस्स्व तिष्ठ ततो बहूपकरणसुजनताभ्यां शरदां संवत्सराणां शतमिति अविच्छेदे द्वितीया अनुपकारादीनामित्यादिपदादसुजनत्वासुखितयोर्ग्रहणं उपकृतादय इत्यादिपदात् सुजनतासुखितयोर्ग्रहणम्। संज्ञान्तरमाह इयमेवेति लक्षणलक्षणैवेत्यर्थः जहत् त्यजन् स्वार्थौ यामिति विग्रहः।

---

संज्ञान्तरमाह इयमेवेति। लक्षणाभेदावेतौ शुद्धावुपचाराविमिश्रणात् उपचारश्च शक्यलक्ष्ययोराहार्य्यस्तादात्म्यारोपः स च समानविभक्तिकपदद्वयसामर्थ्याल्लक्षणाजन्यबोधानन्तरमेव जायते। एवञ्च वक्ष्यमाणयोः सारोपाध्यवसानयोरेतौ भेदौ ग्रन्थकृदन्तर्भावयति तद्वयं नावधारयामः उपचारं विना सारोपासाध्यवसानयोरसम्भवात् एतयोश्चोपचारसत्वेऽसम्भवात्। अत एव काव्यप्रकाशे "सारोपान्या तु यत्रोक्तौ विषयीविषयस्तथा" इत्युक्तं अन्या उपादानलक्षणलक्षणाभिन्ना आयुर्घृतमित्यादि यत्सारोपाया लक्षणलक्षणाया उदाहरणं दत्तं तदपि न सङ्गतम् आयुर्जनकं घृतमिति मुख्यार्थविषयकबोधजनकत्वात् लक्षणाया अयोगात् न चात्रोपादानलक्षणा स्यात् मुख्यार्थविषयकबोधजनकत्वादिति वाच्यम्। उपादानलक्षणालक्षणे उपचारामिश्रितत्वविशेषणस्य विवक्षणीयत्वात्। गङ्गायां घोष इति उपकृतं बहु तत्रेत्यादि च यत् साध्य-

१६, आरोपाध्यवसानाभ्यां प्रत्येकं ता अपि द्विधा ।

ताः पूर्व्वोक्ताश्चतुर्भेदलक्षणाः ।

१७, विषयस्यानिगीर्णस्यान्यतादात्म्यप्रतीतिकृत् ।
सारोपा स्यान्निगीर्णस्य मता साध्यवसानिका ॥११॥

रूढ़ावुपादानलक्षणा सारोपा यथा । "अश्वः श्वेतो धावति" । अत्र हि श्वेतगुणवानश्वोऽनिगीर्णस्वरूपः स्वसमवेतश्वेतगुणतादात्म्येन प्रतीयते ॥ प्रयोजने यथा ।

---

(ख) पुनरपि लक्षणाया द्वैविध्यमाह आरोपाध्यवसानाभ्यामिति अत्र-विशेषणे तृतीया * तेन सारोपाः साध्यवसानाश्चेति अश्वः श्वेत इत्यादौ निराकाङ्क्षपदद्वयेन धारावाहिकभेदप्रतीतिरेव जायते न तु लक्षणाजन्यप्रतीतिरिति तत्प्रतिबन्धकः पदयोः समानविभक्तिकत्वबलेन शक्यलक्ष्ययोरभेदारोपः कल्पनीय इति भावः । ननु भेदप्रतीत्यनन्तरमभेदारोप आहार्य्य एव सम्भवति तस्य प्रतिबन्धकत्वं केनापि नाङ्गीक्रियत इति चेन्न लाक्षणिकबोधानुरोधेन शुक्लगुणविशिष्टबोधाभिप्रायबोधसहकृतस्याहार्य्यस्याभेदारोपस्य प्रतिबन्धकत्वकल्पनात् । न च सहकार्य्येव प्रतिबन्धकोऽस्तु किमाहार्य्यस्य प्रतिबन्धकत्वकल्पनेन इति वाच्यं धाराभावानवगाहि-

---

सानावाधुदाहरिष्यति तदपि न समीचीनं समानविभक्तिकपदाभावे आन्यतादात्म्येन प्रतीत्यभावात् निगीर्णविषयस्यान्यतादात्म्यप्रतीतिजनिकाया एव लक्षणायाः साध्यवसानात्वस्य वक्ष्यमाणत्वात् इति ।

पाठान्तरं * जनकतासम्बन्धेन आरोपाध्यवसानाभ्यां विशिष्टेत्यर्थः । लक्षणाजन्यबोधोत्तरं हि वाक्यस्य समानाधिकरणपदघटितत्वरूपवैशिष्ट्यसचिवयार्थ्या व्यञ्जनया शक्यलक्ष्ययोराहार्य्याभेदप्रतीतिरूपारोपाध्यवसाने जन्येते केचित्तु पदयोः समानविभक्तिकत्वबलेन लक्षणा-

"एते कुन्ताः प्रविशन्ति"। अत्र सर्वनाम्ना कुन्तधारिपुरुषनिर्देशात् सारोपात्वम् ॥ रूढौ लक्षणलक्षणा सारोपा यथा। "कलिङ्गः पुरुषो युध्यति"। अत्र पुरुषकलिङ्गयोराधार्य्याधारसम्बन्धः ॥ प्रयोजने यथा।

---

त्वेन तस्य प्रतिबन्धकत्वकल्पनाया अन्याय्यत्वात् वस्तुतस्तु आहार्य्यस्य तस्य सत्प्रतिबन्धकत्वस्य कल्पनामपेक्ष्यावश्याङ्गीकरणीयस्य सहकारिण एव प्रतिबन्धकत्वकल्पने लाघवमस्ति तथापि प्राचीनमतानुसारादेवं व्याख्यातमिति। प्रतीयमानेन लक्ष्यार्थेन सह शक्यार्थस्याहार्य्याभेदप्रतीतिरध्यवसानं लक्षणाजन्यपदार्थोपस्थितेः प्राक्काले तादृशारोपाध्यवसानयोः सत्वाल्लक्षणायास्तद्वैशिष्टमवगन्तव्यं फलं परिचेयम्। तयोः स्वरूपमाह विषयस्येति निरुक्तारोपविशेष्यस्येत्यर्थः अनिगीर्णस्य प्रयुक्तशब्दप्रतिपादितस्य अन्यतादात्म्यप्रतीतिकृत् स्वजन्यपदार्थोपस्थितिद्वारा शक्यतावच्छेदकातिरिक्तधर्मावच्छिन्नस्याभेदप्रतीतिकृत् या लक्षणा सा सारोपास्यादित्यर्थः। अश्वः श्वेतो धावतीत्यत्रापि धावतीत्यत्र शोभत इति द्रष्टव्यं अन्यथा उपादानलक्षणा न स्यादिति प्रागेव दर्शितं। अत्र

---

जन्यबोधात् प्रागेव शक्यलक्ष्ययोरभेदारोपो भवतीत्याहुस्तन्न रूपकालङ्कारवदाहार्य्याभेदप्रतीतिरूपशाब्दबोधजनने वाक्यस्य निराकाङ्क्षतया पुनर्लक्षणया वाक्यार्थजनकत्वासम्भवात्। अतएव काव्यप्रकाशकारेण गौर्वाहीक इत्यत्राहार्य्याभेदप्रतीतिर्लक्षणा प्रयोजनत्वेनाङ्गीकृता गौणीमूलकस्याभेदारोपस्य रूपकत्वमङ्गीकृतञ्च आरोपाध्यवसानयोर्विशेषयन्नाह-ार्थं निरुक्तलक्षणयोः स्वरूपमाह विषयस्येति विषयस्य लक्षणाजन्यबोधविशेष्यस्यानिगीर्णस्य उच्चरितशब्दप्रतिपादितस्य अन्यतादात्म्यप्रतीतिकृत् शक्यार्थाभेदप्रतीतिजनिका लक्षणाजन्यवाक्यार्थबोधानन्तरं जायमानस्य तादृशाभेदारोपस्य लक्षणाजन्यत्वाङ्गीकारात्।

"आयुर्घृतम्" । आयुष्कारणमपि घृतं कार्य्यकारणभावसम्बन्धसम्बन्ध्यायुस्तादात्म्येन प्रतीयते अन्यवैलक्षण्येनाव्यभिचारेणायुष्करत्वं प्रयोजनम् ॥९१॥(ण)

यथा वा । राजकीये पुरुषे गच्छति "राजासौ गच्छति" इति । अत्र स्वस्वामिभावलक्षणः सम्बन्धः ॥ यथा वा अग्रमात्रे हस्तावयवे भागे "हस्तोऽयम्" । अत्रावयवावयविभावलक्षणः सम्बन्धः ॥ ब्राह्मणेऽपि "तक्षासौ" ।

---

निरूक्तारोपमुपपादयति अत्र हीति लक्षणाजन्यपदार्थोपस्थितेः प्राक्काल इति शेषः अनिगीर्णस्वरूपः प्रयुक्तशब्देन प्रतिपाद्यः एते कुन्ता इति विषयस्य सामान्यवाचिना सर्वनाम्ना निर्देशेऽपि विशेषरूपेणानुपस्थितौ साध्यवसाना लक्षणैव इति काव्यप्रकाशकारमतं तद्वद्भूतलमिति प्रतीतिसत्त्वे घटाभाववद्भूतलमितिप्रतीत्यनुदयात् सर्वनाम्नोऽपि विशेषरूपेणोपस्थापकत्वं कल्पत इत्यभिप्रायेण पूर्वमतमनङ्गीकृत्य अत्रापि सारोपालक्षणेति दर्शयति अत्र सर्वनाम्नेति आयुर्घृतमिति अत्र शक्यसम्बन्धमारोपञ्च दर्शयति आयुष्कारणमपीति अन्यवैलक्षण्येनाव्यभिचारेणेत्यत्र वाकारो बोध्यः ।

(त) लक्षणाबीजं विविधं शक्यसम्बन्धं दर्शयन् बहूदाहरणान्याह राजकीय इति अत्र राजकर्म्मातिशयः परिच्छदातिशयो राजवदलङ्घ्यशासनत्वं वा प्रयोजनं अवयवे भागे इत्यत्र भागशब्दः स्वरूपार्थः अत्र प्रयोजनाभावात् रूढिरेव हस्तवत् कार्य्यकारित्वं प्रयोजनमित्यन्ये । ब्राह्मणेऽपीत्यपि कारात् क्षत्रियादिपरिग्रहः तक्षा जातिविशेषः समस्ततक्षकर्मणि नैपुण्यमत्र प्रयोजनम् । इन्द्रार्थास्विति इन्द्रपूजार्थं कल्पितास्वित्यर्थः स्थूणासु स्तम्भेषु इन्द्रवत् पूज्यमानत्वमत्र प्रयोजनं एतदुदाहरणचतुष्टयमपि सारोपाया एव निगीर्णस्य

अत्र तात्कर्म्यलक्षणः सम्बन्धः ॥ इन्द्रार्थासु स्थूणासु "अमी इन्द्राः„ अत्र तादर्थ्यलक्षणः सम्बन्धः । एवमन्यत्रापि । निगीर्णस्य विषयस्यान्यतादात्म्यप्रतीतिकृत् साध्यवसाना । अस्याश्चतुर्षु भेदेषु पूर्वोदाहरणान्येव ॥ (त)

---

मता साध्यवसानिकेति कारिकाद्धलं व्याकरोति निगीर्णस्य शब्दं विनैवाक्षेपादिना प्रतीयमानस्य विषयस्य निरूढाध्यवसानविशेषस्य पूर्वोदाहरणान्येवेति श्वेतो धावति कुन्ताः प्रविशन्ति कलिङ्गः साहसिकः गङ्गायां घोषः प्रतिवसतीत्येतानीत्यर्थः * एवञ्चादीनां विशेष्याणां शब्दं विनैव प्रतीयमानत्वात् गङ्गायामित्यादौ तीरं विशेष्यं तच्च शब्दं विनैव प्रतीयते ।

---

पाठान्तरं * एषु यथायथमेतदादिपदमध्याहार्यम् । एतेन लक्षणात्वावच्छेदेन सारोपात्वसाध्यवसानात्वान्यतरधर्मयोगित्वं यन्यक्तः सम्मतं वस्तुतस्तु त्वामस्मि वच्मि विदुषां समवायोऽत्र तिष्ठतीत्यादौ उपदिशति कामिनीनामित्यत्र च अध्याहारेणापि समानविभक्तिकपदासम्भवात् कदली कदली करभः करभ इत्यादौ रामोऽस्मि सर्वं सहे इत्यादौ च शक्यलक्ष्ययोर्भेदाभावात् निरूढारोपाध्यवसानासम्भवात् तादृशनियमस्य व्यभिचारः अतएव काव्यप्रकाशकारेण "सारोपान्या तु यत्रोक्तौ विषयोविषयस्तथा । विषयान्तःकृतेऽन्यस्मिन् सास्यात् साध्यवसानिकेति" लक्षणं कृतं अन्योपादानत्वनिरूढत्वप्रकारद्वयातिरिक्तप्रकारावच्छिन्ना लक्षणात्वान्यतरव्याप्यलक्षणाविभाजकधर्मान्तरावच्छिन्ना इत्यर्थः । एतेन लक्षणाविशेषस्यैव सारोपात्वसाध्यवसानात्वान्यतरधर्मयोगित्वं प्रतीयते न तु यावतीनां लक्षणानां एवञ्च गङ्गायां घोष इत्यादाविदमादिपदाध्याहारं विनापि लक्षणा सङ्गच्छते ।

**१८, सादृश्येतरसम्बन्धाः शुद्धास्ताः सकला अपि**
**सादृश्यात् तु मता गौण्यस्तेन षोड़शभेदिताः॥१२॥**

ताः पूर्वोक्ता अष्टभेदा लक्षणाः। सादृश्येतरसम्बन्धाः कार्य्यकारणभावादयः। अत्र शुद्धानां पूर्वोदाहरणान्येव। रूढ़ावुपादानलक्षणा सारोपा गौणी यथा। "एतानि तैलानि हेमन्ते सुखानि"। अत्र तैलशब्दस्तिलभव-स्नेहरूपं मुख्यार्थमुपादायैव सार्षपादिस्नेहेषु वर्त्तते। प्रयोजने यथा। राजकुमारेषु तत् सदृशेषु च गच्छत्सु "एते राजकुमारा गच्छन्ति"॥ रूढ़ावुपादानलक्षणा साध्यव-

---

(य) पुनरपि लक्षणाया द्वैविध्यमाह सादृश्येतरेति। सादृश्यादितरे सम्बन्धा हेतवो यस्य इति समासः सादृश्यात् सम्बन्धादिति शेषः सादृश्य-सम्बन्धहेतुका लक्षणा गौण्य इत्यर्थः तेन निरुक्तद्वैविध्येन पूर्वोदाहरणा-न्येवेति अश्वः श्वेतो धावतीत्यादीन्येवेत्यर्थः एतानीति हेमन्ते हि तैलाद्य-भावादत्यन्तं दुःखमुत्पद्यते तन्निराकरणेन तैलानामत्युपकारित्वमिति सूचनाय हेमन्त इत्युक्तं उपादायैव अपरित्यज्यैव सार्षपादिस्नेहेषु वर्त्तते इति विलक्षणद्रवत्वरूपैकधर्मसम्बन्धेन सर्षपादिस्नेहान् प्रतिपादयती-त्यर्थः। छत्रिणो यान्तीतिवत् तिलस्नेहस्यापि सुखजननेऽन्वयोऽस्तीति भाव्यम्। नन्वेवं कथमत्र मुख्यार्थबाध इति चेत् सर्षपादिस्नेहादीनां तिलभवत्वबाधात् सामानाधिकरण्येनान्वयानुपपत्तेरेवात्र मुख्यार्थ-बाधत्वाङ्गीकारात् न चैतत् पदार्थैकदेशस्य तिलस्नेहस्य तिलभवत्वस्या-वात् कथमन्वयानुपपत्तिरिति वाच्यं तादृशान्वयस्याव्युत्पन्नत्वेनानङ्गीका-रात्। न हि पिकहरिणमातङ्गा विहङ्गमाः इत्यन्वयः केनाप्यप्रमत्तेना-ङ्गीक्रियते एवञ्च तैलानि सुखानीत्यत्र प्रतीयमानैतत्पदार्थेन तैलपदार्थ-स्यान्वयानुपपत्तिरिव मुख्यार्थबाधः नचैवं गङ्गायां घोष इत्यादौ

साना गौणी यथा। "तैलानि हेमन्ते सुखानि"॥ प्रयोजने यथा। राजकुमारा गच्छन्ति"॥ रूढौ लक्षणलक्षणा सारोपा गौणी यथा। "राजा गौडेन्द्रं कण्टकं शोधयति"॥ प्रयोजने यथा "गौर्वाहीकः"॥ रूढौ लक्षणलक्षणा साध्यवसाना गौणी यथा। "राजा कण्टकं शोधयति"॥ प्रयोजने यथा। "गौर्जल्पति"। ( घ )

अत्र केचिदाहुः "गोसहचारिणो गुणा जाड्यमान्द्यादयो लक्ष्यन्ते। ते च गोशब्दस्य वाहीकार्थाभिधाने निमित्तीभवन्ति"। तदयुक्तम्। गोशब्दस्यागृहीतसङ्केतं

---

सर्वत्रैव तादृशसुखपदार्थबाधसम्भवे किमिति ग्रन्थकारैर्सुखपदार्थबाधान्तरं दर्शितमिति वाच्यं विस्पष्टस्य सुखपदार्थबाधस्य प्रतिसन्धानेनैवोपपत्तौ क्लिष्टस्य तस्य प्रतिसन्धानानुसन्धानस्यान्याय्यत्वात्। एते राजकुमारा इति अत्र विलक्षणपरिच्छेदकत्वरूपैकधर्मलक्षणसादृश्यसम्बन्धेन राजकुमारास्तत्सदृशास्य प्रतीयन्ते सदृशानामपि राजकुमारवदादरणीयत्वं प्रयोजनम्। राजा गौड़ेन्द्रमिति शोधयति दमनेन निर्वैरं करोति तीक्ष्णाग्रदुःखाङ्कविशेषः कण्टकपदस्य सुखपदार्थः तस्य शोधनासम्भवात् दुःखदत्त्वेन तत् सदृशे शत्रौ लक्षणा क्षुद्रशत्रौ तु कण्टक इति कोषस्तु निरूढ़लक्षणाया एव ग्राहको नत्वभिधाया इति भाव्यम्। गौर्वाहीक इति वाहीको हलवाहकः। गौर्जल्पतीति जल्पनं व्यक्तवचनं तच्च गोर्न सम्भवतीति अन्वयानुपपत्तिः।

( ङ ) गौर्वाहीक इत्यत्र शाब्दबोधप्रकारं दर्शयन् परमतं निराकरोति अत्र केचिदाहुरिति गोसहचारिणो गोवृत्तयो गोत्वसमानाधिकरणा वा जाड्यमन्दत्वं मान्द्यं विदग्धकर्माक्षमत्वं आदिना दुःखसहिष्णुत्वादिपरिग्रहः वाहिकार्थाभिधाने वाहिकरूपस्यार्थस्याभिधया बोधने निमित्ती भवन्ति प्रवृत्तिनिमित्ततामुपयान्ति। ननु गोत्वे गृहीता

वाहीकार्थमभिधातुमसामर्थ्यात् गोशब्दार्थमात्रबोधनाच्च। अभिधाया विरतत्वाद्विरतायाश्च पुनरुत्थानाभावात्। अन्ये च पुनर्गोशब्देन "वाहीकार्थो नाभिधीयते किन्तु स्वार्थ-सहचारिगुणसाजात्येन वाहीकगता गुणा एव लक्ष्यन्ते"। तदप्यन्ये न मन्यन्ते। तथा ह्यत्र

गोशब्दाद्वाहीकार्थः प्रतीयते न वा। आद्ये गोशब्दा

---

शक्तिर्व्यक्तिमिव तत्सदृशमपि बोधयतु इत्यत आह गोशब्दार्थमात्रबोधनाच्चेति विरतत्वात् प्रतीतियोग्यताविरहेण नष्टप्रायत्वात् सकृदुच्चरित शब्दस्याभिधया सकृदर्थबोधकत्वनियमादित्यभिप्रायः नन्वस्य नियमस्य श्लेषादौ व्यभिचारदर्शनात् फलबलेन पुनरपि प्रतीतियोग्यता कल्पनीयेत्यत आह विरतायाः इति उत्थानाभावात् प्रतीतिजननोन्मुखीभावविरहात् श्लेषादौ धर्मान्तरे गृहीतं शक्त्यन्तरमर्थान्तरं बोधयतु प्रकृते तु गोत्वे गृहीतशक्तिर्गोत्वाश्रयं बोधयित्वा यदि तत्सदृशमपि बोधयेत्तदाभिधयैव लक्ष्यार्थबोधनसम्भवेन लक्षणैव नाङ्गीक्रियते इति भावः। स्वार्थेति स्वार्थो गोत्वं तत्समानाधिकरणेत्यर्थः। गुणसाजात्येनेति लक्ष्यगतगुणानां शक्यार्थसहचरितत्वासम्भव इति भावः। आद्ये प्रतीतिपक्षे प्रथमः न गोशब्दजन्यप्रत्ययपक्षः अशङ्कितत्वात् गोशब्दशङ्कितविषयत्वाभावात् न द्वितीयः नाविनाभावजन्यप्रत्ययपक्षः शाब्देऽन्वयेऽसम्भवात् शाब्दबोधविषयत्वासम्भवात् अत्र हेतुमाह शाब्देति एतच्च शब्दाध्याहारवादिनां मतमाश्रित्योक्तं अर्थाध्याहारवादिनां मीमांसकानां मते तु अविनाभावलभ्यस्याप्यर्थस्य शाब्दबोधविषयत्वाङ्गीकाराच्चैतद्दूषणं अन्वयोपाधिशक्तिवादिनां मते व्यक्तेः शाब्दबोधविषयत्वं न स्यात् न च लक्षणयैव तत्र व्यक्तेरुपस्थितिरिति वाच्यं रूढिप्रयोजनाभावात् तत्र लक्षणया असम्भवात् न च गवादिपदानां व्यक्तौ रूढिरस्तीति वाच्यं लक्ष्यार्थस्यातिरिक्तशक्यार्थप्रयोगशालिनः शब्दस्य

देव वा तल्लक्षितादा गुणादविनाभावद्वारा तत्र न प्रथमः वाहीकार्थेऽस्याशक्तेतितत्वात्। न द्वितीयः। अविनाभावलभ्यस्यार्थस्य शाब्दे ऽन्वये प्रवेशासम्भवात्। शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यते। न द्वितीयः यदि हि गोशब्दाद्वाहीकार्थो न प्रतीयते तदास्य वाहीकशब्दस्य सामानाधिकरण्यमसमञ्जसं स्यात्। (द)

तस्मादत्र गोशब्दोमुख्यया वृत्त्या वाहीकशब्देन सहान्वयमलभमानोऽज्ञत्वादिसाधर्म्यसम्बन्धाद्वाहीकार्थं लक्षति। वाहीकस्याज्ञत्वाद्यतिशयबोधनं प्रयोजनम्। इयञ्च

---

लक्ष्यार्थे भूरिप्रयोगरूपाया रूढेर्लक्षणाहेतुत्वाङ्गीकारात् गवादिपदानान्तु व्यक्तिसंहृतत एव गोत्वादौ प्रयोगः लक्ष्यार्थे प्रयोगमात्रस्यैव लक्षणाहेतुत्वाङ्गीकारे उपाधिशक्तिवादिमते सर्वत्रैव लक्षणया व्यक्तिबोधसम्भवात् ऐन्द्र्या ऋचा गार्हपत्यमुपतिष्ठतेत्यादौ द्वितीयान्तपदरूपायाः श्रुतेर्लिङ्गापेक्षया झटित्यर्थोपस्थापकत्वरूपबलवत्त्वं श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षादिति जैमिनिसूत्रोक्तं न स्यात् आक्षेपापेक्षया लक्षणाया मुख्यार्थबाधादिप्रतिसन्धानसापेक्षत्वेन विलम्बार्थोपस्थापकत्वात् समवाये विरोधे अर्थविप्रकर्षात् विलम्बार्थोपस्थापकत्वात्। "श्रुतिर्द्वितीया क्षमता च लिङ्गं वाक्यं पदान्येव तु संहतानि सा प्रक्रियाया कथमित्यपेक्षा स्थानं क्रमो योगबलं समाख्या इति" कारिकया सूत्रार्थव्याख्या न द्वितीयो न प्रतीतिरित्यभावपक्षः अस्य गोशब्दस्य वाहीकशब्दस्येत्यनन्तरं चकारो बोध्यः सामानाधिकरण्यमेकार्थप्रतिपादकत्वम्।

(ध) स्वमतमाह तस्मादत्रेति तस्मात् उपदर्शितमतद्वये दोषसम्भवात् अन्वयमिति अभेदसम्बन्धेत्यादि अज्ञत्वादिति व्यक्तिभेदेऽपि गुणक्रिययोरैक्यमित्यभिप्रायेदं निर्वचनमन्यथा शक्यलक्ष्ययोरेकधर्मवत्त्वरूपसम्बन्धो

गुणयोगाद् "गौणी" इत्युच्यते। पूर्वा तु उपचारामिश्रणात् शुद्धा। उपचारो हि नामात्यन्तं विशकलितयोः सादृश्यातिशयमहिम्ना भेदप्रतीतिस्थगनमात्रम्। यथा अग्निमाणवकयोः शुक्लपटयोस्तु नात्यन्तं भेदप्रतीतिः। तस्मादेवमादिषु शुद्धैव लक्षणा॥ १२॥

**१६, व्यङ्गस्य गूढागूढत्वाद्**

**द्विधा स्युः फललक्षणाः॥ १३॥**

प्रयोजने या अष्टभेदा लक्षणा दर्शितास्ताः प्रयोजन-

---

न सम्भवति प्रयोजनमिति अत्राहार्य्यभेदप्रतीतिः प्रयोजनमिति काव्यप्रकाशकारः इयञ्चेति गुणस्य साधारणधर्मस्य योगात् स्वविषयकज्ञानजनकत्वसम्बन्धात् तदुक्तं "लक्ष्यमाणगुणैर्योगाद्वृत्तेरिष्टा तु गौणता इति" लक्ष्यमाणस्य गुणैः साधारणधर्मैः योगात् उपदर्शितसम्बन्धात् वृत्तेर्लक्षणायाः पूर्वा सादृश्यातिरिक्तसम्बन्धनिबन्धना शक्यलक्षणयोरभेदारोपमेव केचिदुपचारमाहुः तथा सति शुक्लः पट इत्यादावपि सारोपाया उपचारमिश्रणात् शुद्धत्वं न स्यादितः प्रकारान्तरेणोपचारं निर्वक्ति अत्यन्तमिति व्युत्पत्तिवैचित्र्यात् समासैकदेशे भेदप्रतीतावभेदसम्बन्धेनान्वेति विशकलितयोर्निराकाङ्क्षयोः सादृश्यातिशयमहिम्ना सादृश्यातिशयबोधसामर्थ्यात् भेदासम्भितसाधर्म्यमेव सादृश्यातिशयः न च साधर्म्यातिशय एव सादृश्यातिशय इति वाच्यं तथात्वे गौण्यां रूढ़िलक्षणायां साधर्म्यातिशयप्रतीतेरभावात् उपचाराभावप्रसङ्गात् भेदप्रतीतेरात्यन्तिकत्वञ्च शक्यलक्ष्ययोः सम्बन्धविशेषानवगाहितया यथा शुक्लः पट इत्यत्र शुक्लगुणवान् पटः शुक्लगुणाभिन्न इति शक्यलक्ष्ययोः समवायो भासते न तथा अग्निर्माणवक इत्यत्र लक्षणाजन्यबोधात् प्राक् शक्यलक्ष्ययोः सादृश्यसम्बन्धो भासते किन्तु सादृश्यबोधाधिगमायबोधानन्तरमेवात्यन्तिकभेदप्रतीतिः सम्भवति

रूपव्यङ्ग्यस्य गूढ़ागूढ़तया प्रत्येकं द्विधा भूत्वा षोड़श-भेदाः। अत्र गूढ़ः काव्यार्थभावनापरिपक्वबुद्धिविभवमात्रवेद्यः। यथा। "उपकृतं बहु तत्रेति"। अगूढ़ोऽतिस्पष्टतया सर्वजनसंवेद्यः। यथा

"उपदिशति कामिनीनां यौवनमद एव ललितानि"।

अत्र "उपदिशति" इत्यनेन "आविष्करोति" इति लक्ष्यते। आविष्कारातिशयश्चाभिधेयवत् स्फुटं प्रतीयते ॥१३॥ (ध)

---

तस्याश्च सादृश्यातिशयबोधाभिप्रायबोधसहकृतेनाभेदारोपेण स्यगणस्तुल्यत्तिरेणोपचारो न त्वभेदारोप इत्यर्थः। अत्यन्तपदव्यावृत्तिमाह शुक्लपटयोरिति नात्यन्तं भेदप्रतीतिरिति अत्र कृदभिहितभावस्यापि विशेषणस्यात्यन्तमित्यस्य कर्मत्वक्लीवत्वे अपृथग्रूपक्रियायाः विशेषणस्य कर्मत्वं क्लीवत्वञ्चेति सूत्रस्यस्याष्टथग्रूप इत्यादेर्नञयुक्तमनित्यमितिन्यायेन व्यभिचारात् अत्र भेदप्रतीतेः समवायाख्यशक्यसम्बन्धावगाहनान्नात्यन्तिकत्वमित्यभिप्रायः। ननु गौणलक्षणातो रूपकालङ्कारस्य कोभेदः रूपकालङ्कारेऽप्यभेदारोपानन्तरं सादृश्यबोधस्यानुभवसिद्धत्वात् इति चेत् रूपके ह्यभेदारोपात् प्रागपि सादृश्यप्रतीतिः सम्भवति गौणलक्षणायान्तु पश्चादेव सादृश्यप्रतीत्याः कारणवैलक्षण्यादपि वैलक्षण्यं सम्भवति आरोप्यमाणस्य प्राङ्निर्देशे हि गौणलक्षणाप्रयोगवाक्यं पश्चान्निर्देशे रूपकप्रयोगवाक्यमिति नियम इति केचित्। गौड़ेन्द्रं कण्टकं शोधयतीति गौणलक्षणोदाहरणं "राजति व्योमकासारे राजहंसः सुधाकर इति" रूपकोदाहरणं ददतो ग्रन्थकृतः तन्नाभिमतिमन्तव्यम्। प्रयोजनलक्षणाद्वैविध्यमाह व्यङ्ग्यस्येति बुद्धेर्विभवः सूक्ष्मविषयग्राहित्वं उपकृतमिति अत्र वक्तृतात्पर्य्यरूपाया लक्षणायाः सूक्ष्ममतिमात्रवेद्यत्वेन तन्मूलकव्यञ्जनाजन्यबोधविषयो गूढ़ इति भावः। उपदिशतीति स्वोपदिष्टचर्याज्जडा अपि भवन्त्यभिज्ञा विदग्धचरितानामिति

२०, धर्मिधर्मगतत्वेन फलस्यैता अपि द्विधा।

एता अनन्तरोक्ताः षोड़शभेदा लक्षणाः फलस्य धर्मिगतत्वेन धर्मगतत्वेन च प्रत्येकं द्विधा भूत्वा द्वात्रिंशद्भेदाः॥

क्रमेणोदाहरति।

"स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाः कलाः।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वं सहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव"॥ १॥

---

पूर्वार्द्धस्य ललितानि हेलालीलादीनि आविष्करोति प्रकाशयति पर-प्रवर्त्तकवाक्यरूपस्य उपदेशस्य चेतनधर्मतया यौवनमदे बाधात् आविष्कारे लक्षणा स्फुटत्वं सर्वजनवेद्यत्वादिति भावः।

(न) पुनरपि तस्या द्वैविध्यमाह धर्मीति धर्मी लक्ष्यस्तद्वृत्ति-पदार्थो धर्मः। स्निग्धश्यामलेति विरहिणः श्रीरामस्योक्तिरियं लिप्तेति व्याप्तेत्यर्थः। वेल्लद्बलाकाः सञ्चरद्बकविशेषाः पयोदसुहृदां मयूराणां आनन्दजनिका आनन्दजनिता वा केकाध्वनयः कला मधुराः हहाशब्दो हाशब्दश्च कष्टवचनः कष्टातिशयद्योतकत्वात् न पौनरुक्त्यं अत्रन्नेति * व्यङ्ग्यार्थवैशिष्टाभिप्रायेणोक्तं दुःखसहिष्णुरूप इत्यव-

---

पाठान्तरं * बहुतरदुःखसत्वेऽप्यनुद्विग्नचित्तत्वं अत्यन्तदुःखसहिष्णुत्वं तस्यैव रामस्यैवातिशय उत्कर्षो धीरत्वादिरूपः अत्र वक्तृत्वादेव रामस्य लाभे पुनरुक्तमिति लक्षणा बीजमत्रावधेयम्। केचित्तु तस्य दुःखसहिष्णो रामस्यातिशयविप्रलम्भरूपः न चात्र दुःखसहिष्णुत्वस्याप्यतिशयः प्रतीयत एव तत्कथमिदं धर्मिगतस्योदाहरणमिति वाच्यं विवक्षितविवेकेन तस्यापि धर्मगतत्वादेव तथा हि दुःखसहिष्णुत्वं दुःखद्वेषाभावः तस्यातिशयान्तराभावात् सामान्याभावत्वमेवातिशयः

अत्रात्यन्तदुःखसहिष्णुरूपे रामे धर्मिणि लक्ष्ये तस्यैवातिशयः फलम्। "गङ्गायां घोषः" इत्यत्र तटादिषु लक्ष्येषु शीतत्वपावनत्वादिरूपधर्मस्यातिशयः फलम्।

२१, तदेवं लक्षणाभेदाश्चत्वारिंशन्मता बुधैः ॥१४॥

रूढ़ावष्टौ फले द्वात्रिंशदिति चत्वारिंशल्लक्षणा भेदाः ॥ १४ ॥ किञ्च।

---

गन्तव्यं तस्यैव दुःखसहिष्णोरेव ननु अत्यन्तदुःखसहिष्णुरित्यत्रात्यन्तत्वं यदि क्रियाविशेषणं तदा धर्मगतत्वमेव यदि पुरुषविशेषणं तथापि महापण्डित इत्यादौ महत्वादेरिव धर्मिणि तात्पर्य्याभावात् दुःखासहनाभाव एव पर्य्यवस्यतीति चेत् उपदिशतीत्याद्ये तदुदाहरणं बोध्यं कठोरहृदयत्वस्य सर्वं सहत्वस्य चोपपत्तये राम इत्युक्तं अन्यथा रामस्य वक्तृत्वादस्मीत्यनेनैव तल्लाभात् पौनरुक्त्यं स्यात् रामत्वेनोपस्थितस्य तदुभयमनुपपन्नमतो लक्षणया दुःखसहिष्णुत्वेन सुखत्रार्थ

---

स च नातिरिक्तः किन्त्वभावरूप एव तस्य रामरूपधर्मिगतत्वादेवेत्याहुस्तन्न अस्यार्थव्यञ्जनागम्यविप्रलम्भस्य लक्षणामूलव्यञ्जनागम्यत्वाभावाल्लक्षणाप्रयोजनत्वासम्भवात् दुःखसहिष्णुत्वातिशयस्य धर्मगतत्वेऽपि विप्रलम्भस्य धर्मिगतत्वेनैव धर्मिगतोदाहरणत्वाच्चतेः अत्यन्तदुःखसहिष्णुरूपे इति वदता ग्रन्थकृता दुःखसहिष्णुत्वातिशयपर्य्यवसितस्यात्यन्तदुःखसहिष्णुत्वस्य लक्ष्यतावच्छेदकत्वाङ्गीकारात् प्रयोजनत्वासम्भवात् निरुक्तदुःखसहिष्णुत्वस्य प्राणिमात्रेऽसम्भवाच्च कस्यापि कुत्रापि दुःखे द्वेषसत्वात्। न च रामस्येश्वरत्वेन द्वेषसामान्याभावसत्वेन दुःखद्वेषसामान्याभावः सिध्यतीति वाच्यम्। ईश्वरस्यापि रामादिशरीरे जन्यदुःखादिवत् परदुःखानुभवजन्यदुःखद्वेषस्याङ्गीकारात्। तस्यैव हहाशब्देन हाशब्देन च व्यञ्जितत्वादन्यथा तयोरनर्थकत्वापत्तेः। न च दुःखद्वेषाभावो दुःखसहिष्णुत्वं तस्य सामान्यधर्मावच्छिन्नप्रतियोगिता-

**२२, पदवाक्यगतत्वेन प्रत्येकं ता अपि द्विधा ॥१५॥**

ता अनन्तरोक्ताः । तत्र पदगतत्वेन यथा । "गङ्गायां घोषः" । वाक्यगतत्वेन यथा । "उपकृतं बहुतत्रेति" । एवमशीतिप्रकारा लक्षणाः ॥ ८० ॥ (न)

अथ व्यञ्जना ।

**२३, विरतास्वभिधाद्यासु ययाऽर्थो बोध्यतेऽपरः**
**सा वृत्तिर्व्यञ्जना नाम शब्दस्यार्थादिकस्य च ॥१६॥**

---

एवोपस्थाप्यते एवञ्च कठोरहृदयत्वात् दुःखसहिष्णुत्वं ततः सर्वं सङ्गत्वमुपपन्नम् । पुनरपि लक्षणाया द्वैविध्यमाह पदेति ननु यद्यपि अभिधावल्लक्षणायाः अपि पदधर्मत्वमेवेति कथं वाक्यगतत्वं तस्या इति चेत् यत्र वाक्ये वाक्यसमुदाये वा बहुपदेषु लक्षणा तत्रैव तस्या वाक्यगतत्वोपचारात् ।

(प) क्रमप्राप्तां व्यञ्जनां व्यवस्थापयितुमाह अथेति । विरतासु वृत्तिषु अन्यो मुख्यलक्ष्यतात्पर्यार्थभिन्नः अर्थादिकस्येत्यादिपदं विवृणोति प्रकृतीति आदिपदादुपसर्गादिग्रहणं नियन्त्रिते नियम्य प्रतिपादिते अन्यस्य अर्थान्तरस्य धीहेतुर्बोधोपायः यत्र तु प्रकरणादिनियमो नास्ति तत्र यावदर्थबोधे वक्तृतात्पर्यं तावन्त एवार्था वाच्या यथा "व्यथां द्वयेषामपि मेदिनीभृतामिति" अत्र राजपर्वतयोरन्यतरस्य व्यङ्ग्यत्वे द्वयेषा-

---

कत्वमतिशयस्तस्य लक्ष्यतावच्छेदककुक्षिनिक्षिप्तस्यापि प्रयोजनत्वाङ्गीकारे को दोष इति वाच्यम् । प्रयोजनेन लक्षणीयं न युज्यत इतिवदङ्गिरालङ्कारिकैर्लक्षणाजन्यबोधविषयस्य प्रयोजनत्वाङ्गीकारात् यद्यप्यत्र लिङ्गपदस्य व्याप्तेर्लक्षणा व्याप्तेरतिशयः फलमिति धर्मगतफललक्षणाया उदाहरणमत्रैव सम्भवति तथापि गङ्गायामिति प्रसिद्धोदाहरणमुपन्यस्तम् ।

शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभाव इति नयेनाभिधालक्षणातात्पर्य्याख्यासु तिसृषु वृत्तिषु स्वं स्वमर्थं बोधयित्वा उपक्षीणासु ययान्योऽर्थो बोध्यते सा शब्दस्यार्थस्य प्रकृतिप्रत्ययादेश्च वृत्तिर्व्यञ्जनध्वननगमनप्रत्यायनादिव्यपदेशविषया व्यञ्जना नाम ॥ १ ॥

**२४, अभिधालक्षणामूला शब्दस्य व्यञ्जना द्विधा ॥**

तत्र अभिधामूलामाह ।

**२५, अनेकार्थस्य शब्दस्य संयोगाद्यैर्नियन्त्रिते**
**एकत्रार्थेऽन्यधीहेतुर्व्यञ्जना साभिधाश्रया ॥ १७ ॥**

आद्यशब्दाद्विप्रयोगादयः । उक्तं हि । (प)

---

भिव्यनन्वितं स्यात् अभिधाश्रया अभिधामूला प्राकरणिकमर्थं बोधयित्वा अभिधायां विरतायां अप्राकरणिकार्थबोधे व्यञ्जना अभिधान्तरमपेक्ष्यते इत्यभिधा मूलत्वमस्याः नन्वभिधान्तरस्य संयोगादिना प्रतिरुद्धत्वेन कथं व्यञ्जनाजन्यबोधे सहकारित्वमिति चेन्न अभिधायाः स्वातन्त्र्ये णार्थान्तरोपस्थापने संयोगादेः प्रतिबन्धकत्वकल्पनात् । नन्वभिधयैवार्थान्तरमुपस्थाप्यतां किं व्यञ्जनायाः संयोगादेः प्रतिबन्धकत्वकल्पनेनेति चेन्न अप्राकरणिकद्वितीयार्थबोधाद्विच्छम्यप्रवृत्त्याभावेन तस्यास्वादविशेषजनकत्वेन वैजात्यस्य तत्रावश्यं वाच्यत्वेन तस्य च कारणविशेषाधीनसिद्धिकत्वेन च व्यञ्जनासिद्धेरभिधया द्वितीयार्थस्य प्रथममुपस्थापने संयोगादेः प्रतिबन्धकत्वकल्पनस्यावश्यकत्वाच्च । विप्रयोगस्त्यागः साहचर्यं सहकारित्वेन कार्यकारित्वं विरोधिता वैरं एतच्चतुष्टयं समभिव्याहृतपदार्थान्तरेण सहेति बोध्यं । अर्थः प्रयोजनं लिङ्गं चिह्नं सम्भवद्विशेषणमिति यावत् अन्यस्य तुल्यविभक्तिकस्य सामर्थ्यं निर्दिष्टजननशक्तिः औचिती प्रकृतोपयोगित्वं तच्च यदुपस्थितौ श्रोतुर्जिज्ञासा निवर्त्तते तत्त्वं केचित्तु

"संयोगो विप्रयोगश्च साहचर्य्यं विरोधिता ।
अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः ॥ १ ॥
सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः ।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः" ॥ २ ॥ इति

"सशङ्खचक्रो हरिः" इत्यत्र शङ्खचक्रसंयोगेन हरिशब्दो विष्णुमेवाभिधत्ते । "अशङ्खचक्रो हरिः" इति तद्वियोगेन तमेव । "भीमार्ज्जुनौ" इति अर्ज्जुनः पार्थः । "कर्णार्ज्जुनौ"

---

अर्थद्वयेऽन्वयसम्भवेऽप्येकार्थ एव तात्पर्य्यमौचितीत्याङ्गस्तच्च तात्पर्य्यं विशेषस्य प्रतिबन्धकत्वकल्पनेन सर्वत्रैव तत्सम्भवे संयोगादेः प्रतिबन्धकत्वकल्पनानौचित्यात्तद्ग्राहकस्य प्रकृतोपयोगित्वस्य प्रथमोपस्थितत्वेन तस्यैव प्रतिबन्धकत्वकल्पनौचित्याच्च । ननु भवन्मतेऽपि औचित्या एव सर्वत्र नियामकत्वमस्तु किमन्येषां तत्कल्पनेन इति चेन्न नियन्त्रकान्तरासन्निधान एव तस्या नियन्त्रकत्वकल्पनात् । देशः समभिव्याहृतप्रदेशः कालः समभिव्याहृतदिनरात्र्यादिः । व्यक्तिः शब्दस्य स्त्रीत्वादिलिङ्गं स्वरः उदात्तादिः अनवच्छेदेन अनेकत्वेन प्रतिपत्त्यनियमे विशेषस्य एकतरस्य स्मृतौ पदार्थोपस्थितिरूपायां हेतव इत्यर्थः । एतच्च मीमांसकनये नैयायिकनये तु सर्वेषामेव पदार्थानामुपस्थितिर्नियन्त्रणवशादेकस्यैवार्थस्य शाब्दोऽनुभव इति एकत्रैव संयोगादीनां द्विताणां यथा स्फूर्त्तिनियन्त्रकत्वं बोध्यं ।

(क) क्रमेण संयोगादीनां नियन्त्रणमुदाहरति सशङ्ख इति तद्वियोगेन शङ्खचक्रविरहेण तमेव विष्णुमेव अभिधत्ते इति पूर्वेणान्वयः शङ्खचक्रवति विष्णौ तद्विरहः कालविशेषे सम्भवति पार्थो धनञ्जयः स्याणुमिति अत्र भवच्छिदे इति चरमांशो बोध्यः अन्यथा भवच्छेदरूपस्य प्रयोजनस्यानुपस्थितौ तस्य नियामकत्वं न स्यात् भवानित्यनेन प्रकान्तराजरूपार्थ एव दर्शितो न तु युष्मत्वेन तत्र शक्तिरित्यपरे कुपित

इति कर्णः सूतपुत्रः । "स्थाणुं वन्दे" इति स्थाणुः शिवः । "सर्वं जानाति देवः" इति देवो भवान् । "कुपितो मकरध्वजः" इति मकरध्वजः कामः । "देवः पुरारिः" इति देवः शिवः । "मधुना मत्तः पिकः" इति मधुर्वसन्तः । "यातु वो दयिता मुखम्" इति मुखं साम्मुख्यम् । "विभाति गगने चन्द्रः" इति चन्द्रः शशी । "निशि चित्रभानुः" इति चित्रभानुर्वह्निः । "भाति रथाङ्गम्" इति नपुंसकव्यक्त्या रथाङ्गं चक्रम् । (फ)

---

इति मकरध्वजपदं कर्मधारयबहुव्रीहिसमासाभ्यामनेकार्थकं । कोपस्य मकराकारे ध्वजेऽसम्भवात् कामस्यैव बोधकं । केचित्तु मकरध्वजपदं कामसमुद्रानेकार्थकं कोपस्तु कामस्यैव चिह्नं समुद्राधिष्ठातुः कोपसम्भवेऽपि विरहिविषयकोपोऽत्र बोध्य इत्याहुः तन्न "संप्राप्तं मकरध्वजेन मथनमि"त्यादिप्रयोगबलान्मकरध्वजपदस्य समुद्रे शक्तिकल्पनेऽपि तदधिष्ठातृदेवताबोधस्तु लक्षणयैव इति तत्र कोपसम्भवस्याकिञ्चित्करत्वात् कोपविशेषप्रतिसन्धानस्य मकरध्वजपदार्थविशेषप्रतिसन्धानहेतुकतया तस्य प्रथममनुपस्थितौ नियन्त्रकायोगाच्च । देवः पुरारिरिति पुरं देहेऽपि दृश्यते इति हारावलीदर्शनात् पुरशब्दस्य देहवाचकत्वं पुरस्यारिरिति व्युत्पत्त्या पुरारिपदं योगाद्दिवाचकमपि इत्यनेकार्थकं तुल्यविभक्तिकस्य देवपदस्य सान्निध्याच्छिवमात्रबोधकम् । केचित्तु पुरारिपदसान्निध्याद्देवपदं शिवमात्रबोधकमित्याहुस्तन्न पुरारिः शिव इति ग्रन्थविरोधात् राजादेर्व्यावर्त्तकत्वेन सुरमात्रबोधकमित्यस्यैव वक्तुं युक्तत्वाच्च देवपदस्य शिवत्वेन शक्त्यभावात् सामान्यशब्दस्य विशेषपरत्वाङ्गीकारेऽपि पौनरुक्त्यापातात् मधुपदं दैत्यविशेषाद्यनेकार्थकं कोकिलमादने वसन्तस्यैव सामर्थ्यं । यातु व इति मुखपदमाननाद्यनेकार्थकं दयितायाः प्रादशे साम्मुख्यस्यैवोचितेति पातु व इति क्वचित् पाठः प्रियायाः सुरतप्राति-

स्वरस्तु वेद एव विशेषप्रतीतिकृन्न काव्य इति तस्य विषये नोदाहृतम् । इदञ्च केऽप्यसहमाना आहुः । "स्वरोऽपि काक्वादिरूपः काव्ये विशेषप्रतीतिकृदेव उदात्तादिरूपोऽपि मुनेः पाठोक्तदिशा शृङ्गारादिरसविशेषप्रतीतिकृदेवेन्येतद्विषय उदाहरणमुचितमेवेति" । तन्न । तथा हि स्वराः काक्वादय उदात्तादयो वा व्यङ्ग्यरूपमेव विशेषं प्रत्याययन्ति न खलु प्रकृतोक्तमनेकार्थशब्दस्यैकार्थे नियन्त्रणरूपं विशेषम् । किञ्च यदि यत्र क्वचिदनेकार्थशब्दानां प्रकरणादिनियमाभावादनियन्त्रितयोरप्यर्थयोरनुरूपस्वरवशेनैकत्र नियमनं वाच्यं तदा तथाविधस्थले श्लेषानङ्गीकारप्रसङ्गः । न च तथा अत एवाहुः श्लेषनिरूपणप्रस्तावे "काव्यमार्गे स्वरो न गण्यते" इति च नयः इत्यलमुपजीव्यानां मान्यानां व्याख्यानेषु कटाक्षनिक्षेपेण । आदिशब्दात् "एतावन्मात्रस्तनी" इत्यादौ हस्तादिचेष्टादिभिः स्तनादीनां कमलको-

---

कूल्ये जनितखेदं प्रति सख्या उक्तिरियं प्रियाया मुखं साम्मुख्यं सुरतानुकूलत्वं वो युष्मान् पातु सुरत प्रातिकूल्ये जनितखेदाद्रक्षतु इत्यर्थः । अत्र साम्मुख्यस्यैव प्रकृतोपयोगित्वं नत्वाननमादेः । चन्द्रपदं कर्पूराद्यनेकार्थकं चित्रभानुपदं वह्निसूर्याद्यनेकार्थकं । रथाङ्गमिति चक्रवाकपरत्वे पुंस्त्वं स्यात् ।

( ब ) वेद इति इन्द्रशत्रुरित्यादौ बहुव्रीहि तत्पुरुषयोः स्वरभेदः वेद एव विशेषप्रतीतिकृन्न तु काव्यादावित्यर्थः । मुनेः पाठोक्तदिशेति भरतेन मुनिना शृङ्गारादौ स्वरविशेष उक्तः तदनुसारेणेत्यर्थः । यथा हास्यशृङ्गारयोः स्वरितोदात्तं वीररौद्राद्भुतेषु उदात्तस्वरितं करुणाबीभत्सभयानकेषु अनुदात्तस्वरितमुपपादयेदिति उच्च उदात्तः नीचो-

दकाद्याकारत्वम् । एवमेकस्मिन्नर्थे अभिधया नियन्त्रिते या शब्दस्यान्यार्थबुद्धिहेतुः शक्तिः सा अभिधामूला व्यञ्जना ॥ यथा मम तातपादानां महापात्रचतुर्दशभाषाविलासिनी-भुजङ्गमहाकवीश्वरश्रीचन्द्रशेखरसान्धिविग्रहिकाणाम् ।(ब)

"दुर्गालङ्घितविग्रहो मनसिजं सम्मीलयंस्तेजसा
प्रोद्यद्राजकलो गृहीतगरिमा विष्वग्वृतो भोगिभिः ॥
नक्षत्रेशकृतेक्षणो गिरिगुरौ गाढां रुचिं धारयन्
गामाक्रम्य विभूतिभूषिततनूराजत्युमावल्लभः" ।२॥

---

ऽनुदात्तः समाहृतः स्वरितः स च मध्यम एव आदौ स्वरितः पश्चादुदात्तः स्वरितोदात्तः एवमन्यत्रापि न च तथेति स्वरभेदसत्वेऽपि महाकविभिः श्लेषाङ्गीकारात् श्लेषानङ्गीकारो न कर्तव्य इत्यर्थः।

(भ) दुर्गेति। दुर्गैः परिखादिभिरलङ्घितः प्रतिरोद्धुमपारितो विग्रहः संग्रामो यस्य सः दुर्गं भित्त्वापि रिपुभिः सह विग्रहः क्रियत इति भावः यद्वा दुर्गैरलङ्घितोऽव्यवहितो विग्रहो यस्य दुर्ग-व्यवधानं विनैव युध्यत इत्यर्थः मनसिजं कामं तेजसा कान्त्या सम्मीलयन् पराभवन् प्रोद्यत् प्रकृष्टाभ्युदययुक्तं राजकं राजसमूहं लाति वश्यतया गृह्णाति स तथा गृहीतगरिमा प्राप्तगौरवः भोगि-भिरुपभोगयुक्तैः पुरुषैः विष्वक् सर्वतः वृतो व्याप्तः क्षत्रेशे क्षत्रियश्रेष्ठे कृतेक्षणो दत्तदृष्टिः न भवति तत्रापि तुच्छबुद्धिरिति भावः गिरि-र्हिमालयः गुरुः श्वशुरो यस्य स शिवः तत्र रुचिमभिलाषं धारयन् यद्वा गुरौ गभीरार्थायां गिरिवाचि गाढ़ामुत्कृष्टां रुचिं प्रकाशं धारयन् कुर्वन् गां पृथ्वीं आक्रम्य पराक्रमेण स्वीकृत्य विभूत्या धनसम्पदा भूषिता तनुर्यस्य स उमावल्लभो राजविशेषो राजति अय-मर्थः प्रथममभिधयैव प्रतिपाद्यते पश्चादस्य वाक्यस्यानेकार्थपदघटितत्वज्ञा-

अत्र प्रकरणेनाभिधया उमावल्लभशब्दस्योमानाम्नी महादेवी तद्वल्लभभानुदेवनृपतिरूपेऽर्थे नियन्त्रिते व्यञ्जनयैव गौरीवल्लभरूपोऽर्थो बोध्यते। एवमन्यत् ॥ (भ)

लक्षणामूलामाह !

२६, लक्षणोपास्यते यस्य कृते तत्तु प्रयोजनम् ।
यया प्रत्याय्यते सा स्याद् व्यञ्जना लक्षणाश्रया ॥१८॥

"गङ्गायां घोषः" इत्यादौ जलमयाद्यर्थबोधनादभिधायां विरतायां तटाद्यर्थबोधनाच्च लक्षणायां विरतायां यया शीतत्वपावनत्वाद्यतिशयादिर्बोध्यते सा लक्षणा मूला व्यञ्जना ॥ १८ ॥

---

नाज्जायमानं वक्तृतात्पर्यज्ञानं अभिधान्तरग्रहसहकृतमेवमर्थं बोधयति। दुर्गया पार्वत्या लङ्घितोऽर्द्धत्वेनाक्रान्तो विग्रहः शरीरं यस्य सः मनसिजं कामं तेजसा तृतीयनयनोत्थज्योतिषा सम्मीलयन् विनाशयन् प्रोद्यन्ती राजकला चन्द्रखण्डं यस्य सः गृहीतगरिमा प्राप्तशरीरगौरवः भोगिभिः सर्पैः न चतर्येन चन्द्रेण कृतशोभणं येन सः गिरिगुरौ हिमालये गां वृषं आक्रम्य आरुह्य विभूत्या भस्मना भूषितदेहः उमावल्लभः शिवः प्रकरणेनेति नियन्त्रिते इत्यग्रेणान्वेति अभिधेयेऽभिधयाप्रतिपाद्ये अभिधयेति पाठे प्रकरणेन सहाभिधया नियन्त्रिते इत्यर्थः ॥

(भ) लक्षणामूलामिति व्यञ्जनामित्यनेन प्रकरणलभ्येनान्वेति लक्षणाप्रयोजनवती उपास्यते शब्दशक्तित्वेनाङ्गीक्रियते यस्य कृते यस्य बोधनिमित्तं अभिधायामिति विरतायामित्यग्रेणान्वयः चकारात् तात्पर्य्यार्थबोधनात् तात्पर्य्याख्यायां वृत्तौ चेति लभ्यते। वक्त्रिति वक्त्रादिचेष्टादिपर्य्यन्तानां वैशिष्ट्याद्वैलक्षण्यज्ञानाज्जायमाना या शब्दशक्तिरन्यमर्थं बोधयति सा अर्थसम्भवा अर्थसम्बन्धा व्यञ्जना इत्यर्थः। विवक्षितार्थं यः

एवं शाब्दीं व्यञ्जनामुक्त्वार्थीं व्यञ्जनामाह ॥

२७, वक्तृबोद्धव्यवाक्यानामन्यसन्निधिवाच्ययोः।
प्रस्तावदेशकालानां काकोश्चेष्टादिकस्य च ॥१६॥
वैशिष्ट्यादन्यमर्थं या बोधयेत् सार्थसम्भवा।

व्यञ्जनेति सम्बध्यते। तत्र वक्तृवाक्यप्रस्तावदेशकाल-वैशिष्ट्ये यथा मम।

"कालो मधुः कुपित एष च पुष्पधन्वा
धीरा वहन्ति रतिखेदहराः समीराः।
केलीवनीयमपि वञ्जुलकुञ्जमञ्जु-
र्दूरे पतिः कथय किं करणीयमद्य" ॥१॥ (म)

अत्रैतं देशं प्रति शीघ्रम् "प्रच्छन्नकामुकस्त्वया प्रेष्य-ताम्" इति सखीं प्रति कयाचित् व्यज्यते ॥

---

प्रतिपाद्यते स बोद्धव्यः प्रस्तावः प्रकरणं काकुः स्वरविकारः तस्या वैल-क्षण्यं वक्तृशिरस्खालनं वाच्येति लक्ष्यव्यङ्ग्योपलक्षणं वञ्जुलोऽशोकः तस्य कुञ्जेन तन्मूलस्थलतादिमण्डपेन मञ्जुर्मनोज्ञः व्यङ्ग्यार्थमाह अत्रेति वक्त्र्याः कामुकत्वं वाक्यस्योद्दीपनविभावसमूहकामोद्रेकजनकतत्कालदत्य-लाभकर्त्तव्यानिश्चयविषयत्वं प्रस्तावस्य सुरतविषयत्वं कालदेशयोः कामो-द्रेकजनकत्वं वैशिष्टेऽप्येतदेवोदाहरणं वाच्यस्य पत्यसन्निधिकामोद्रेक-कालीनकर्त्तव्यप्रश्नस्य स्वरहस्यवेदिवयस्यासमाधानीयत्वं वैशिष्ट्यम्।

(य) निःशेषेति। उपनायकमानेतुं प्रेषितां तदुपभोगेन लुप्तचन्दना-दीन् स्नानव्याजेन गोपयन्तीं सखीं प्रति नायिकायाः सोल्लुण्ठनोक्तिरियं सत्त्वेष्या नायात इति मिथ्यावादिनि हे दूति बान्धवजनस्य मम ज्ञाता-तपीड़ागमे त्वमितो मत्सकाशात् स्नातुं वापीं गता न पुनस्तस्याधम-स्यान्तिकं निकटं गता यतस्ते स्तनतटं निःशेषच्युतचन्दनं अधरश्च निर्मृ-

बोद्धव्यवैशिष्ट्ये यथा ।

"निःशेषच्युतचन्दनं स्तनतटं निर्मृष्टरागोऽधरो
नेत्रे दूरमनञ्जने पुलकिता तन्वी तवेयं तनुः ।
मिथ्यावादिनि दूति बान्धवजनस्याज्ञातपीडागमे
वापीं स्नातुमितो गतासि न पुनस्तस्याधमस्यान्तिकम्" ॥ १ ॥

अत्र तदन्तिकमेव गतासीति विपरीतलक्षणया लक्ष्यम् ॥ तस्य च रन्तुमिति व्यङ्ग्यं प्रतिपाद्य दूतीवैशिष्ट्याद् बोध्यते । (य)

---

ष्टरागः नेत्रे दूरमत्यर्थमनञ्जने तन्वी कृशा तनुः पुलकिता स्नानकार्य्यमिदं सर्वमिति बोधयन्त्या आपाततो दुर्विदग्धानभिधया बोधयितुं विदग्धया नायिकया कया प्रयुक्तं पश्चादनुरणनरीत्या भमधम्मिअ इत्यादाविवात्र तदन्तिकमेव रन्तुं गतासीति व्यञ्जनया प्रतीयते एतदर्थस्याभिधया बोधने प्राम्यत्वदोषः स्यादिति केचिदाहुः एतद्व्याख्यानं प्राचां वाचस्पतिमिश्र-प्रभृतीनामसम्मतं तेषामयमभिप्रायः भमधम्मिअ इत्यादौ भ्रमणविघ्न-कारिणः शुनो विनाशात् भ्रमणं युक्तमिति प्रथममभिधयाऽन्वयबोधो जायते तदनन्तरमेव सिंहान्तिके भ्रमणमत्यन्तमयुक्तमिति भ्रमणबाधाव-तारो भवति प्रकृते तु पदार्थविशेषानुसन्धानचतुराणां झटिति तत्तत् पदार्थविशेषप्रतिसन्धानात् प्रथममेव बाधावतारः तथा हि तटपदमेक-देशपरं सम्भूयरतौ सम्यक्पीड़नाभावेन स्तनैकदेशस्यैव चन्दनच्यवनं स्नाने तु सर्वस्यैव स्तनस्य चन्दनच्यवनं स्यात् तटपदस्य स्वरूपार्थकत्वे स्तन एव लुप्तचन्दनो बलवङ्गान्तरं मुखमुत्तानीकृत्य चुम्बनेनाधरस्यैव राग-भंगो नतूत्तरौष्ठस्य मुखं नुम्रीकृत्य स्नानेनोभयोरेव रागभंगः स्यात् इयं इदानीन्तनी । इदानीमपि तत्प्रसङ्गेन पुलको भवति स्नानीयपुलकस्य प्रथिम्नमादिना नाशसम्भवात् । अधमस्य प्रागपि ज्ञातनिकृष्टप्रतिग्रहस्य

एवञ्च निरुक्तं सुरतचिह्नत्रयस्य तत्समीपगमनमन्तरेणासम्भवात् विना लक्षणामन्वयबोधो न सम्भवतीति नञ्पदस्य एवकारार्थे लक्षणा अन्ययोगव्यवच्छेदरूप एवकारार्थे नञर्थस्याभावस्य प्रतियोगित्वं सम्बन्धः एवञ्च वापीं स्नातुमित्यत्रापि विपरीतलक्षणया गमनाभाव एव प्रतीयते तथा च त्वमितो वापीं स्नातुं न गता तस्याधमस्यान्तिकं तु गतैवेत्यन्वयबोधः । रन्तुमिति प्रयोजनं व्यञ्जनया प्रतीयते यत्रान्वयबोधात् प्राग्बाधावतारः तत्र लक्षणा यत्र तु पश्चात्तत्र व्यञ्जना अन्यथा उपकृतमित्यादावपि लक्षणा न स्यात् तदुक्तं "क्वचिद्बाध्यतया ख्यातिः क्वचित् ख्यातस्य बाधनम् । पूर्वत्र लक्षणैव स्यात् अन्यत्र व्यञ्जनैव तु इति" क्वचिदुत्तरत्राभिधैव तु इति चतुर्थचरणे पाठः । अत्र वक्त्रादिवैशिष्ट्यात् व्यङ्ग्यान्तरमपि दूत्यकर्मात्यन्तहीनायामपि त्वयि सापराधायां तस्मिन्नधमे मम नासूया किन्त्वेवमकृतज्ञायां त्वयि यद्वाऽऽप्तबुद्ध्या विश्वसिमि या च तस्मिन्नेवंविधे हरिद्रारागिणि दुर्विदग्धे मन्दभागिनी दृढमनुरक्तास्मि तदेवं विप्रवञ्चनासहस्रजनितप्रौढपरितापपुटपाकपात्रत्वं मम युक्तमेवेति विप्रलम्भप्रभेदेर्ष्यामानव्यभिचारिनिर्वेदध्वनिरिति । अत्र फलस्य लक्ष्यतज्जन्यतरवृत्तित्वनियमेन रमणस्य तदन्यतरवृत्तित्वाल्लक्षणामूलव्यञ्जनाया असम्भवात् । प्रतिपाद्यवैशिष्ट्येनैव रमणस्य प्रतीतिरित्यभिप्रायेण ग्रन्थकृदाह तदन्तिकमेवेति विपरीतेति तत्समीपगमनाभावाभावबोधनादिति भावः निरुक्तसुरतचिह्नत्रयमेव दूतीवैशिष्ट्यं । केचित्तु तदन्तिकं न गतासीत्यस्य वाक्यत्वाल्लक्षणायाश्च शब्दमात्रवृत्तित्वात् अत्र लक्षणा न सम्भवतीत्याहुः तन्न उक्तक्रमेण नञ्पद एव लक्षणास्वीकारात् वापीं स्नातुं न गतासि तदन्तिकमेव गतासीति योजनया तदन्तिकगमनं वाच्यमेव तस्यैव रन्तुमिति व्यङ्ग्यमित्यपरे तदपि न सम्यक् त्वर्थपुनःशब्देन नञर्थस्य पूर्वान्वयव्यवच्छेदात् । केचित्तु स्नानेन चन्दनाधररागयोः क्षालनमेव न च्युतिनिर्मार्जने तयोः सम्भोगवर्णनादेरसम्भवादत आह स्नुतनिर्मृष्टपादेऽपि तद्व्यञ्जके इत्याहुः तन्न तयोः स्नानकार्यत्वानङ्गीकारे स्वमतसिद्धप्राथमिकबोधानुदयप्रसङ्गात् ।

अन्यसन्निधिवैशिष्ट्ये यथा।

"उअ णिच्चलणिप्फन्दा भिसिणीपत्तम्मि रेहइ वलाआ।
णिम्मलमरगअभाअणपरिठ्ठिआ सङ्खसुत्तिव्व" *॥१॥

अत्र वलाकाया निःस्पन्दत्वेन विश्वस्तत्वं तेनास्य देशस्य विजनत्वमतः सङ्केतस्थानमेतदिति कयापि सन्निहितप्रच्छन्नकामुकं प्रत्युच्यते। अत्रैव स्थाननिर्जनत्वरूपव्यङ्ग्यार्थवैशिष्ट्यं प्रयोजकम्॥

**२८, भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते॥२०॥**

इत्युक्तप्रकारायाः काकोर्भेदा आकारादिभ्यो ज्ञातव्याः॥

एतद्वैशिष्ट्ये यथा।

"गुरुपरतन्त्रतया बत दूरतरं देशमुद्यतो गन्तुम्।

---

(१) अन्यसन्निधिवैशिष्ट्ये व्यङ्ग्यार्थव्यञ्जनामाह उअ निश्चलेति जह निश्चलनिष्पन्दा विसिनीपत्रे राजते वलाका। निर्मलमरकतभाजनपरिस्थिता शङ्खशुक्तिरिवेति सम्। जह पश्य निश्चलेति सम्बोधनं सङ्केतस्थानचेष्टाशून्येति तदर्थः निश्चला पृथिवी सेव निष्पन्देति केचित् अतिनिश्चलेत्यपरे शङ्खशुक्तिः शङ्खकपालं अन्यस्य सन्निधिः सामानाधिकरण्यं तस्य प्रच्छन्नकामुकनिरूपितत्वं वैशिष्ट्यमुच्यते व्यज्यते अत्रैव अस्मिन्नुदाहरण एव निर्जनत्वस्य अतिशयो वैशिष्ट्यं प्रयोजनं तृतीयव्यञ्जनायाः कारणं। भिन्नेति शोकहर्षभयादिविकृतेत्यर्थः। आकरेभ्य उपजीव्यभरतादिग्रन्थेभ्यः सुरभिसमये वसन्तकालेऽपि तर्हीति अपित्वित्यर्थः शङ्केतेति विटमुपपतिं हसत् प्रफुल्लं नेत्राभ्यामर्पितमाकूतमात्माभिप्रायो यत्र तद्दृयथास्यात्तथा निमीलितमित्यर्थः यद्वा हसदिति नेत्रविशेषणं एतदेव पद्मनिमीलनस्य नेत्रार्पिताकूतत्वं वैशिष्ट्यं। चेष्टादिकस्येत्यादिपदाच्चेष्टाविरहादिपरिग्रहः तद्वै-

अलिकुलकोकिलललिते नैष्यति सखि सुरभिसमयेऽसौ"॥६

अत्र नैष्यति अपि तर्हि एष्यत्येवेति काक्वा व्यज्यते ॥

चेष्टावैशिष्ट्ये यथा ।

"सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्" ॥ १०॥

अत्र सन्ध्यासङ्केतकाल इति पद्मनिमीलनादिचेष्टया कयाचित् द्योत्यते । एवं वक्त्रादीनां व्यस्तसमस्तानां वैशिष्ट्ये बोद्धव्यम् (र) ॥ २०॥

## २६, त्रैविध्यादियमर्थानां प्रत्येकं त्रिविधा मता ।

अर्थानां वाच्यलक्ष्यव्यङ्ग्यत्वेन त्रिरूपतया सर्वा अप्यनन्तरोक्ता व्यञ्जनास्त्रिविधाः ॥ तत्र वाच्यार्थस्य व्यञ्जना यथा । "कालो मधुः" इत्यादि ॥ लक्ष्यार्थस्य यथा । "निःशेषच्युतचन्दनम्" इत्यादि ॥ व्यङ्ग्यार्थस्य यथा । "उअ णिच्चलेत्यादि" । प्रकृतिप्रत्ययादिव्यञ्जकत्वन्तु प्रपञ्चयिष्यते ।

## ३०, शब्दबोध्यो व्यनक्त्यर्थः शब्दोऽप्यर्थान्तराश्रय ।

---

शिष्ट्ये यथा "नादत्ते भूषणं दत्तं नाहृता चिरमृच्छति । मृगाक्षी न क्षिपत्यक्षि सादरं मयि पश्यति" । अत्र चेष्टाविशेषेण कोपो व्यज्यते । तस्य च कान्तापराधकालीनत्वं वैशिष्ट्यं व्यस्तानां प्रत्येकं समस्तानां द्वित्रादिसङ्कीर्णानां ।

( ल ) त्रैविध्यादिति इयं व्यञ्जना प्रपञ्चयिष्यते असंलक्ष्यक्रमव्यङ्ग्यध्वन्युदाहरणे इति शेषः । ननु शाब्दत्वं व्यञ्जनायामर्थस्यार्थ्या-

**एकस्य व्यञ्जकत्वे तदन्यस्य सहकारिता ॥१२॥**

यतः शब्दो व्यञ्जकत्वेऽर्थान्तरमपेक्षते अर्थोऽपि शब्दम्। तदेकस्य व्यञ्जकत्वे अन्यस्य सहकारिताऽवश्यमङ्गीकार्य्या(ल)

**२१, अभिधादित्रयोपाधिवैशिष्ट्यात्त्रिविधो मतः।**
**शब्दोऽपि वाचकस्तद्वल्लक्षको व्यञ्जकस्तथा ॥२२॥**

अभिधोपाधिको वाचकः। लक्षणोपाधिको लक्षकः। व्यञ्जनोपाधिको व्यञ्जकः ॥२२॥ किञ्च।

**३२, तात्पर्य्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने**
**तात्पर्य्यार्थं तदर्थञ्च वाक्यं तद्बोधकं परे ॥२३॥**

---

यदि शब्दस्योपयोगित्वमस्त्येव तत् कीदृशमनयोर्भेदकारणमित्यत आह शब्दबोध्य इति अर्थान्तराश्रयः अर्थान्तरोपस्थापकः व्यनक्तीत्यनुपज्यते इत्यनुपपत्तिदर्शनानन्तरमुपपत्तिमाह एकस्येति सहकारिता अप्रधानकारणत्वं अप्रधानत्वञ्च व्यवहितोपकारकत्वेन एवञ्च यत्र यस्याव्यवहितोपकारकत्वेन प्रधानत्वं तत्र तत् सम्बन्धित्वेनैव तस्यां व्यवहार-इति भावः। ननु नाटकादौ वेशाभिनयादेरपि व्यञ्जकत्वसम्भवेन कथं व्यञ्जकद्वैविध्यमात्रमुक्तमिति चेन्न तत्रापि शब्दोपहितार्थस्यैव व्यञ्जकत्वाङ्गीकारात् वेशाभिनयादेस्तु चेष्टादिवैशिष्ट्यरूपसहकारित्वोपगमात् तत्र शब्दसत्त्वेऽपि वेशाभिनयदर्शनस्य प्राधान्येनैव दृश्यत्वव्यवहारः अतएव वक्ष्यति "श्रवणैः पेयमनेकैर्दृश्यं दीर्घैश्च लोचनैर्बहुभिः। भवदर्थमिव निबद्धं नाट्यं सीतास्वयम्बरणमिति"।

(ल) अभिधादिव्यापारत्रयं निरूप्य तत्प्रयुक्तं शब्दस्यापि त्रैवि-

अभिधाया एकैकपदार्थबोधनविरमाद्वाक्यार्थरूपस्य पदार्थान्वयस्य बोधिका तात्पर्य्यं नामवृत्तिस्तदर्थञ्च तात्पर्य्यार्थं तद्बोधकञ्च वाक्यमित्यभिहितान्वयवादिनां मतम्।(व)

इति साहित्यदर्पणे वाक्यस्वरूपनिरूपणो नाम
द्वितीयः परिच्छेदः॥ २॥

---

ध्यमाह अभिधेति उपाधिर्व्यापारः अभिधया लक्षणया वा शब्दैः प्रत्येकमुपस्थापितानां पदार्थानां संसर्गो वाक्यार्थस्तमानस्तात्पर्य्याख्यां वृत्तिमपेक्षत इति प्राचीननैयायिकमतमाह किञ्चेति। मतान्तरसूचनाय आहुरिति परे इति परेणान्वयः इयमेवाधुनिकैः संसर्गमर्य्यादोच्यते अभिधाया इति लक्षणाया उपलक्षणं अभिहितानामभिधया लक्षणया वा पदोपस्थापितानामन्वयबोधवादिनां प्राचीननैयायिकानामित्यर्थः। अन्विताभिधानवादिनो मीमांसकगुरवस्तु क्रियाकारकयोः प्रथमत एवान्वयबोधो जायते ततः शक्तिग्रहः पदविशेषसमभिव्याहारात्तु विशेषस्फूर्तिरिति किं तात्पर्य्याख्यवृत्तिस्वीकारेणेत्याहुः।

इति श्रीरामचरणतर्कवागीश-भट्टाचार्य्य-विरचितायां
साहित्यदर्पणविवृतौ द्वितीयः प्रकाशः।

---

## तृतीयः परिच्छेदः ।

अथ कोऽयं रस इत्युच्यते ।

**विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा ।**
**रसतामेति रत्यादिः स्थायी भावः सचेतसाम् ॥**

विभावादयो वच्यन्ते । सात्त्विकाश्चानुभावरूपत्वात् न पृथगुक्ताः । व्यक्तो दध्यादिन्यायेन रूपान्तरपरिणतो व्यक्तीकृत एव रसो न तु दीपेन घट इव पूर्वसिद्धो

---

(क) काव्यलक्षणरूपैककार्य्यानुकूलत्वसङ्गत्या वाक्यनिरूपणानन्तरं रसं निरूपयितुमाह अथेति । वाक्यनिरूपणानन्तरं कोऽयमिति जिज्ञासाविषयो रसो निरूप्यते इत्यर्थः । अयं काव्यलक्षणविशिष्टो रसः । विभावेनेत्यादि सचेतसामिति नायकादिनिष्ठोऽपि रत्यादिर्ज्ञानसम्बन्धेन सामाजिकनिष्ठो रसो भवतीत्यभिप्रायः । ननु विभावा अनुभावाश्च सात्त्विका व्यभिचारिण इत्यादिना सात्त्विकभावानामपि रसघटकत्वमुक्तं भवता तत् किं नोच्यत इत्यत आह सात्त्विकाश्चेति सात्त्विकास्तम्भस्वेदादयः दध्यादीत्यादिना प्रपानकादिपरिग्रहः रूपान्तरं विभिन्नस्वरूपं परिणतः प्राप्तः यद्वा रूपान्तरं परिणतं निष्पन्नं यस्य स तथा अग्न्याहित इतिवत् क्तान्तस्य परनिपातः । पयो यथाम्लयोगेन रूपान्तरपरिणतं सत् दध्युच्यते यथा वा आमिचाकर्पूरखण्डमरिचादियोगेन रूपान्तरपरिणता प्रपानकमुच्यते तथा रत्यादिः स्थायीभावः काव्योपस्थापितविभावादियोगेन रूपान्तरपरिणतचिदानन्दचमत्कारस्वरूपं प्राप्तः विषयस्यैव

व्यज्यते। तदुक्तं लोचनकारैः। "रसाः प्रतीयन्त इति ओदनं पचतीतिवद्व्यवहारः" इति। अत्र च रत्यादि-पदोपादानादेव प्राप्ते स्थायित्वे पुनः स्थायिपदोपादानं रत्यादीनामपि रसान्तरेष्वस्थायित्वप्रतिपादनार्थम्। ततश्च हासक्रोधादयः शृङ्गारवीरादौ व्यभिचारिण एव। तदुक्तम्। "रसावस्थः परभावः स्थायितां प्रतिपद्यते" इति (क)॥

---

ज्ञानत्वेन परिणाम इति परिणामवादिनां मतेनेदम्। ननु चिरवि-नष्टस्य रत्यादेः कथं रूपान्तरापत्तिरिति चेन्न रत्यादिपदेन रत्यादिता-दात्म्येनाध्यवसितायाः सामाजिकवासनाया लक्षणात्। तदुक्तं प्रकाशकृता "सामाजिकानां वासनात्मतया स्थितो रत्यादिको भाव इति" वासना-मनङ्गीकुर्वतां मतमाह व्यक्त इति व्यक्तीकृत एव ज्ञानविषयतामापन्न एव रत्यादीरसः एवकारेण वस्तुसत्त्वव्यवच्छेदः। चिरविनष्टस्यापि ज्ञानविषयत्वसम्भवादिति भावः। व्यक्तीकृत एवेत्यनन्तरं वाकारो बोद्धव्यः एतदङ्गीकरोति नत्विति रूपान्तरपरिणामे सदृष्टान्तप्राचीनसम्वादमाह तदुक्तमिति यथा पाकसम्बन्धेन ओदनरूपं प्राप्तः तण्डुलः ओदनत्वेन व्यवह्रियते तथा प्रतीतिसम्बन्धेन रसरूपं प्राप्ता सामाजिकवासना रसत्वेन व्यवह्रियत इति भावः। रसस्य प्रागनवस्थाङ्गीकारे प्राचीनसंवादमाह तदुक्तमिति ननु ओदनं पचतीत्यत्र पाकात् पूर्वमोदनस्यानवस्थाने क्रिया निमित्तत्वाभावेन कर्मत्वं न स्यादत ओदनपदस्य तण्डुललक्षणाऽवश्या-ङ्गीकरणीया इत्यसिद्धो दृष्टान्त इतिचेदुच्यते तदा कटं करोतीति दृष्टान्तो द्रष्टव्यः। क्रियानिमित्तं हि कारकमिति प्रवादस्य प्रायिकत्व-मिति भावः। यद्यपि रत्यादीनां नायकादिनिष्ठतया पूर्वसिद्धत्वमस्त्येव तथापि सामाजिकनिष्ठतया ज्ञानात् पूर्वमिहासत्त्वं विवक्षितं। ननु रतिर्हासश्चेति वक्ष्यमाणकारिकया रत्यादीनां स्थायित्वं प्रतिपादितं

अस्य स्वरूपकथनगर्भं आस्वादप्रकारः कथ्यते ॥

सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः ।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः ॥
लोकोत्तरचमत्कारप्राणः कैश्चित् प्रमातृभिः ।
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः ॥
रजस्तमोभ्यामस्पृष्टं मनः सत्त्वमिहोच्यते ।

इत्युक्तप्रकारो बाह्यमेयविमुखतापादकः कश्चनान्तरो धर्मः सत्त्वं तस्योद्रेकः रजस्तमसौ अभिभूयाविर्भावः । अत्र

---

तदत्र स्थायिपदं निरर्थकमित्याशङ्क्य समाधत्ते अत्र चेति रसलक्षणे चेत्यर्थः । रसान्तरेष्विति व्यभिचारितयेति शेषः । रसावस्थ इति परमिति मात्रमव्ययमेवकारार्थं रसेष्ववश्यमवस्थानात् स्थायी अनावश्यकत्वे व्यभिचारीत्यर्थः ।

( ख ) रत्यादिर्यत् स्वरूपं प्राप्य रसो भवति तद्गर्भयस्तत्रास्वाद एव प्रमाणमिति तन्निरूपणं प्रक्रमते अस्येति रसस्येत्यर्थः । स्वप्रकाशेति यथा ज्ञानान्तरं स्वगोचरं घटादिकं प्रकाशयति तथा रस आत्मानं प्रकाशयतीत्यर्थः । चिद्विभावादिसम्वित् वेद्यान्तरेति विषयान्तरसम्पर्केणानवच्छिन्नप्रवाहः ब्रह्मास्वादसहोदरः ब्रह्मसाक्षात्कारतुल्यः लोकोत्तरचमत्कारप्राणः लोकप्रधानचमत्कारसारः । स्वाकारवदिति यथा स्वस्वाङ्गिभ्नोऽपि स्वदेहोऽहं स्थूल इत्यादिभेदोल्लेखाभावेन प्रतीयते तथा रसोऽपि ज्ञातृज्ञानभेदोल्लेखाभावेनास्वाद्यत इत्यर्थः । घटादिज्ञाने जातेऽहं वेद्मीति यथा ज्ञातृज्ञानभेदः प्रतीयते तथात्र नेति भावः । यद्वा स्वाकारवत् स्वविषयवत् परिणामवादिभिर्ज्ञानतद्विषययोर्भेदानङ्गीकारादिति भावः । कामलोभादिवीजभूतौ मनोधर्मौ रजस्तमसी ताभ्यामस्पृष्टं स्वकार्य्यजननेऽसंस्पृष्टं मनो मनोधर्मः । विवृणोति इत्युक्त इति उक्तस्वरूप

च हेतुस्तथाविधालौकिककाव्यार्थपरिशीलनम्। अखण्ड-त्वेक एवायं विभावादिरत्यादिप्रकाशसुखचमत्कारात्मकः। अत्र हेतुर्वक्ष्यामः। स्वप्रकाशत्वाद्यपि वक्ष्यमाणरीत्या। चिन्मय इति स्वरूपार्थे मयट्। चमत्कारश्चित्तविस्ताररूपो विस्मयापरपर्य्यायः॥ तत्प्राणत्वञ्चास्मद्वृद्धप्रपितामहसहृदयगोष्ठीगरिष्ठकविपण्डितमुख्यश्रीमन्नारायणपादैरुक्तम् (ख)।

तदाह धर्म्मदत्तः स्वग्रन्थे।

"रसे सारश्चमत्कारः सर्वत्राप्यनुभूयते।

तच्चमत्कारसारत्वे सर्वत्राप्यद्भुतो रसः॥

तस्मादद्भुतमेवाह कृती नारायणो रसम्" इति॥

---

इत्यर्थः। वाह्यं वहिर्भवं लौकिकमिति यावत्। मेयवस्तुविमुखताज्ञानानुकूलव्यापाराभावः तत्सापादकः प्रयोजकः ज्ञानानुकूलव्यापारस्तात्त्वङ्मनोयोगः। अभिभूय स्वस्वकार्य्याचमने कृत्वा आभिर्भावः प्रतिबन्धकाभावेन स्वकार्य्यचमत्वेनावस्थानं कृत सत्त्वोद्रेके अलौकिको यः काव्यार्थो विभावादिः तस्य परिशीलनमत्यन्ताभिनिवेशः। प्रकाशः सम्बित् ननु मिलिता विभावादयो रसः तत्कथमस्याखण्डत्वमत आह अत्रेति अखण्डतायामित्यर्थः। हेतुमिति समूहालम्बनज्ञानतादात्म्यमेव हेतुर्वक्ष्यते स्वप्रकाशत्वाद्यपीत्यादिना सुखतादात्म्यादिपरिग्रहः। स्वरूपार्थे इति न त्वन्नमयो यज्ञ इतिवत् प्राचुर्य्यार्थे लोकातीतार्थाकलनेन किमेतदिति ज्ञानधाराजनने चित्तस्य दीर्घप्रायत्वं चित्तविस्तारः। इष्टहेतुभ्योऽसम्भवित्वज्ञानेन हेत्वनुसन्धाने मनोव्यापारमेव चित्तविस्तार इत्यपरे। विस्मयो विस्मयशब्दः अपरपर्य्यायो वाचकान्तरं यस्य सः। यद्वा अपरपर्य्यायोऽभिन्नः तत्प्राणत्वं चमत्कारसारत्वं सारः स्थिरांशः।

(ग) सर्वत्र शृङ्गारादौ चमत्कारसारत्वे चमत्कारस्थायिभावत्वे। तस्मात् सर्वत्राद्भुतरससम्भवात्। वस्तुतस्तु रत्यादंशस्यानुभूयमानत्वे

कैश्चिदिति प्राक्तनपुण्यशालिभिः ॥ यदुक्तम् । "पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससन्ततिम्" इति ॥ यद्यपि "स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः" इत्युक्तदिशा रसस्यास्वादानतिरिक्तत्वमुक्तं तथापि "रसः स्वाद्यते" इति काल्पनिकं भेदमुररीकृत्य कर्म्मकर्त्तरि वा प्रयोगः ॥ तदुक्तम् । "रस्यमानतामात्रसारत्वात् प्रकाशशरीरादनन्य एव हि रसः" इति ॥ एवमन्यत्राप्येवंविधस्थलेषूपचारेण प्रयोगा ज्ञेयाः । (ग)

---

यथायथं शृङ्गारादिव्यपदेशस्तस्यानुभावेऽङ्गत्वव्यपदेश इति मन्तव्यम् । प्राक्तनेति ऐहिकपुण्यस्यैतच्छरीरे सुखजननासम्भवादिति भावः । प्रमिण्वन्ति आस्वादयन्ति यद्यपीति काव्यार्थसम्भेदाद्विभावादिमेलकात् आत्मा बुद्धिः आनन्दः सुखं तयोः समुद्भवो विषयान्तरतिरोधानेनाविर्भावः । रसः स्वाद्यत इतीति प्रयोगइति वक्ष्यमाणेनान्वयः काल्पनिकमारोपितं उररीकृत्य अङ्गीकृत्य रसास्वादयोः कर्मक्रियाभावेनोल्लेखो भेदग्रहमन्तरेण न सम्भवतीति भावः । तत् प्रयोगस्य प्रामाण्योपपत्त्यर्थमाह कर्मकर्त्तरि वेति रसः स्वयमेव स्वाद्यते स्वाभिन्नस्वादविषय इत्यभिप्रायः । रसस्यास्वादरूपत्वे प्राचां सम्वादमाह रस्यमानतेति रस्यमानता आस्वादः तन्मात्रस्य न त्वतिरिक्तस्य सारत्वात् सामाजिकानामुपादेयत्वात् । प्रकाशशरीरात् सम्वित्स्वरूपात् ज्ञानरूपतापन्न एव रत्यादिः सामाजिकानामानन्दचमत्कारसम्वलनेनोपादेयत्वाद्रस इति भावः । ननु विभावादिमेलकाज्जायमानानन्दसम्वलितमिलितविभावादिसम्विद्रस इत्युक्तं भवति विभावादीनां मेलकश्च विभावादिविशिष्टवैशिष्ट्यावगाह्येकज्ञानविषयत्वमित्यवश्यं वाच्यं प्रकारान्तरेण तन्निरूपणस्याशक्यत्वात् तादृशज्ञानञ्च विभावादीनां प्रत्येकज्ञानादेव भवति ।

नन्वेतावता रसस्याज्ञेयत्वमुक्तं भवतीति व्यञ्जनायाश्च ज्ञानविशेषत्वाद्द्वयोरैक्यमापतितम्। ततश्च।

"स्वज्ञानेनान्यधीहेतुः सिद्धेऽर्थे व्यञ्जको मतः।
यथा दीपोऽन्यथाभावे को विशेषोऽस्य कारकात्"॥

इत्युक्तदिशा घटप्रदीपवत् व्यङ्ग्यव्यञ्जकयोः पार्थक्य-

---

(घ) एवञ्च तादृशज्ञानानन्तरं रसास्वादः कथं जायतां उपायाभावादित्यभिप्रायेण शङ्कते नन्विति * एतावता विभावादिसमुदायप्रकाशस्य रसत्वाङ्गीकारे नाज्ञेयत्वमिति उपायत्वाभावादित्यर्थः। स्वप्रकाशस्य स्वानुत्पत्त्यैवाज्ञेयत्वमिति भावः। ननु व्यञ्जनयैव रसास्वादो जायतामित्यत आह † व्यञ्जनायाश्चेति विभावादिसमुदायसामर्थ्यस्य चेत्यर्थः ज्ञानविशेषत्वात् विशिष्टवैशिष्ट्यज्ञानजनकत्वात् द्वयोर्व्यङ्ग्यव्यञ्जनयोः ततश्च द्वयोरैक्यापाताच्च अस्य हेतोः कथं रसस्य व्यङ्ग्यता इत्यत्रान्वयः द्वयोः पार्थक्य एव व्यङ्ग्यव्यञ्जकभावः सम्भवतीत्याह स्वज्ञानेनेति स्वं व्यञ्जकत्वेनाभिमतं तस्य ज्ञानेन अन्यधीहेतुर्व्यङ्ग्य-

---

* पाठान्तरं इदानीं स्वादनाख्यव्यापारेण सामाजिकानां स्ववासनासाक्षात्कार एव रस इत्यभिनवगुप्ताचार्य्यादीनां मतमुपन्यस्यति नन्वित्यादिना तादात्म्येन गोचरीकृत इत्यन्तेन।

† पाठान्तरं व्यञ्जनायाश्चेति व्यञ्जनाजन्यप्रतीतेश्चेत्यर्थः ज्ञानविशेषत्वात् आस्वादविलक्षणज्ञानरूपत्वात्। ननु सामाजिकादृष्टवशाद्विषयसौन्दर्य्याच्च व्यञ्जनाजन्यप्रतीतेरप्यास्वादरूपत्वमुपपद्यते इत्यत आह द्वयोरैक्यमापतितं ततश्चेति ततः विभावाद्यास्वादस्य रसत्वाङ्गीकारात्। द्वयोर्व्यङ्ग्यव्यञ्जकयोरैक्यमापतितञ्चेत्यर्थः। फलीभूतज्ञानकारणीभूतज्ञानविषयविभावाद्यतिरिक्तविषयत्वाभावात् इति भावः। विषयभेद एव व्यङ्ग्यव्यञ्जकभावः सम्भवतीति प्राचीनसंवादेनाह स्वज्ञानेनेति।

मेवेति कथं रसस्य व्यङ्ग्यतेति चेत् सत्यमुक्तम्। अतएवाहुः। "विलक्षण एवायं कृतिज्ञप्तिभेदेभ्यः स्वादनाख्यः कश्चिद्-

---

प्रतीतिकरः सिद्धेऽर्थे सतीत्यर्थः। अन्यथाभावेऽसिद्धार्थज्ञापकत्वे अस्य ज्ञापकस्य कारकाज्जनकात् जनको हि कार्य्यमुत्पाद्य प्रकाशयतीति भावः। अभिनवगुप्ताचार्य्यमतानुसारेण रसास्वादोपायमाह अतएवेति निरुक्तप्रदेशादेवेत्यर्थः आहुरिति अभिनवगुप्ताचार्य्यमतानुयायिन इति शेषः। भट्टलोलादयस्तु रसस्य व्यङ्ग्यत्वमेवाङ्गीकुर्वन्ति तथा हि रामादौ व्यञ्जनया प्रतीयमानो रत्यादिर्ज्ञानसम्बन्धेन सामाजिकवृत्ती रसः तच्च ज्ञानं रामः सीताविषयकरतिमानित्याकारकमेव यथा चिरविनष्टस्यापि यागादेः स्वजन्यापूर्वसत्त्वेनैव स्वर्गाद्यव्यवहितपूर्ववृत्तित्वं कल्प्यते तथा रत्यादेरतीतस्यापि स्वगोचरज्ञानसत्त्वेनैव सामाजिकवृत्तित्वं कल्प्यते इत्यवधेयं लाघवानुसन्धानपरेण ग्रन्थकृता अस्मिन्नेव मतेऽभिधादिविलक्षणेत्यादिना स्वरसं प्रकाशयिष्यते अयं रससाक्षात्कारानुकूलः कृतिरुत्पादनं ज्ञप्तिभेदेन ज्ञानानुकूलव्यापारविशेषाः व्यञ्जनादयः। कश्चित् सहृदयानुभवसिद्धः अतएव विलक्षणव्यापारस्वीकारादेव विलक्षणाः करणव्यञ्जनादिभिन्नाः व्यपदेशा व्यवहाराः एवञ्च यथा संयुक्तसमवायेन सुखादिसाक्षात्कारः तथास्वादनाख्यव्यापारेण वक्ष्यमाणस्ववासनासाक्षात्कारः इति भावः। यथा भूतलं रजतवदिति ज्ञानं शुक्त्यंशे लौकिकं रजतांशे त्वलौकिकं तथा रससाक्षात्कारोऽपि वासनांशे लौकिको रत्याद्यंशे उपनीतभानात्मकलौकिक इत्यवधेयं। ननु वासना तावदिच्छादिवद्गुणविशेष एवास्तु तथा सति संयुक्तसमवायेनैव तद्ग्रहो भविष्यति किं स्वादनाख्यव्यापार स्वीकारेणेति चेन्न तस्या गुणविशेषत्वे मानाभावात् न च लाघवमेव तत्र मानमिति वाच्यं तत्र सत्तागुणत्वसम्बन्धकल्पने गौरवात् न च तस्याहष्टरूपत्वमस्त्विति वाच्यं तथात्वे साक्षात्कारानुपपत्तेः नापि ज्ञानेच्छारूपत्वं प्राक्तनीत्यनेन स्थिरत्वलाभात् ज्ञानेच्छायास्तृतीयक्षणे नाशात् नापि संस्काररूपत्वं तस्यातीन्द्रिय

व्यापारः"। अतएव हि रसनास्वादनचमत्करणादयो-विलक्षणा एव व्यपदेशा इति अभिधादिविलक्षणव्यापार-

---

त्वेन प्रत्यक्षासम्भवात् रसस्य स्मृतित्वापत्तेश्च। ननु तथापि वासनावा-नहमिति ज्ञानाकारः स्यादिति चेन्न प्रथमं हि नाट्यकाव्यदर्शनश्रवणाभ्यां विभावानुभावयोरुपस्थितिरेवमाक्षेपेण झटित्येव व्यभिचारिस्थायिभावयो रुपस्थितिः क्वचिच्छब्देनापि तयोरुपस्थितिः सा च दोषतया वक्ष्यते। ततो वक्ष्यमाणसाधारणीकरणाख्यव्यापारबलेन सीतादयो मम रामस्य चेति विभावादिचतुष्टये प्रत्येकं साधारण्यप्रत्ययस्तदनन्तरं व्यञ्जनया रससमानाकारप्रत्ययः तदनु तत्सहकृतेन स्वादनाख्यव्यापारेण रामोऽहं सीताविषयकरतिमानित्याकारकः स्ववासनायां रत्याद्यभेदं स्वस्मिन्नायका-भेदमवगाहमानः साक्षात्कारः सम्पद्यते। भूतलं रजतवदिति भ्रमे शुक्तित्वादिकमिव वासनात्वादिकमत्र न भासते इति भावः। प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यत इति उल्लाहादिसमु-द्बोधः साधारण्याभिमानतः इति वक्ष्यमाणवचनबलादेवं व्यव-सीयते * अस्मिन्मते पदार्थान्तरस्य वासनायाः स्वादनादिव्यापारस्य च कल्पने गौरवमसहिष्णुराह अभिधादीति आदिना लक्षणातात्पर्य-योर्ग्रहणं अभिधादिविलक्षणव्यापारो व्यञ्जना तन्मात्रप्रसाधने यद्विहैः सयत्नैरस्माभिर्नवीनालङ्कारिकैः मात्रपदेन स्वादनादिव्यवच्छेदः व्यङ्ग्यत्वं

---

* पाठान्तरं ननु व्यञ्जनया रससमानाकारप्रतीत्यङ्गीकारे किं मानमिति चेन्न रसोद्बोधे रत्यादिसत्ताभानार्थं तदङ्गीकारात् न च प्राथमिकरत्यादिसत्ताज्ञानेनैव तज्ज्ञानमिति वाच्यं साधारणप्रतीत्यनन्तरं तस्य नाशात् न च विभावादिजीवितावधिरिति काव्यप्रकाशदर्शनेन तस्य क्षणचतुष्टयावस्थायित्वमिति वाच्यं तदनुज्ञापयतां प्रन्यकृतां तदनङ्गी-कारात् यदि च विनश्यदवस्थमेव विभावादिज्ञानं रसोद्बोधकमित्युच्यते

तात्र प्रसाधनग्रहिलैरस्माभी रसादीनां व्यङ्ग्यत्वमुक्तं भवतीति (घ)॥

ननु तर्हि करुणादीनां रसानां दुःखमयत्वाद्रसत्वं न स्यादित्युच्यते।

**करुणादावपि रसे जायते यत् परं सुखम्।**
**सचेतसामनुभवः प्रमाणं तत्र केवलम्॥**

---

व्यञ्जनाजन्यबोधविषयत्वं तच्च रसस्य स्वप्रकाशव्यञ्जनाजन्यविभावादिसम्वलितरत्यादिज्ञानरूपत्वाङ्गीकारेण सम्भवति तथा च निरुक्त साक्षात्कारे रत्यादेरूपनायकत्वेन रत्यादिव्यञ्जनं भवद्भिरवश्यमङ्गीकार्य्यं तदेवास्माभी रस उच्यते किमधिकेन वासनादिनानापदार्थकल्पनेनेति भावः। अतएव वक्ष्यति अङ्गीकार्य्या तूर्य्या वृत्तिर्बोधे रसादीनामिति। अतएव च रसादेः रसं लक्ष्यक्रमव्यङ्ग्यत्वमुपपद्यते। व्यञ्जनापक्षे द्वयोरैक्यमापतितमित्यादि यद्दूषणमुक्तं तदपि न सम्यक्* व्यञ्जनाया वक्तृतात्पर्य्यरूपज्ञानत्वेन निरूपितत्वात् अस्य च तद्भिन्नभावात्। यद्वा विभावादीनां प्रत्येकं ज्ञानं जनकं विशिष्टज्ञानं जन्यमिति भेदाङ्गीकारात्। न च साक्षात्कारस्यैवास्वादरूपत्वं न तु व्यञ्जनाजन्यबोधस्येति वाच्यं व्यङ्ग्यचारुत्वेनैव व्यञ्जनाजन्यबोधस्याप्यास्वादरूपत्वसम्भावात्। ननु वासनाया अनङ्गीकारे कथं श्रोत्रियजरन्मीमांसकादीनां रसाभिव्यक्तिर्नजायते इतिचेन्न रसास्वादसुखजनकपुण्याभावात् अतएव कैश्चित् प्रमातृभिरित्युक्तं।

---

तदा सामाजिकानां नायकाद्यभेदभानार्थं तदङ्गीकार इति मन्तव्यं यदि त्वभेदस्य संसर्गविषयाभानमङ्गीक्रियते तदा तदङ्गीकारं विनाप्युपपत्तिरिति ध्येयम्।

* पाठान्तरं एतन्मते विभावादिज्ञानसहकृतया व्यञ्जनया रसरूपरत्यादिज्ञानं जन्यते इति व्यङ्ग्यव्यञ्जकयोः पार्थक्यसम्भवात्।

आदिशब्दाद्वीभत्सभयानकादयः॥

तथाप्यसहृदयानां मुखमुद्रणाय पक्षान्तरमुच्यते।

**किञ्च तेषु यदा दुःखं न कोऽपि स्यात्तदुन्मुखः।**

न हि कश्चित् सचेता आत्मनो दुःखाय प्रवर्त्तते। करुणादिषु च सकलस्यापि साभिनिवेशप्रवृत्तिदर्शनात् सुखमयत्वमेव॥

अनुपपत्त्यन्तरमाह।

**तथा रामायणादीनां भविता दुःखहेतुता॥**

करुणरसस्य दुःखहेतुत्वे करुणरसप्रधानरामायणादिप्रबन्धानामपि दुःखहेतुत्वप्रसङ्गः स्यात्॥

ननु कथं दुःखकारणेभ्यः सुखोत्पत्तिरित्याह।

**हेतुत्वं शोकहर्षादेर्गतेभ्यो लोकसंश्रयात्।**
**शोकहर्षादयो लोके जायन्तां नाम लौकिकाः॥**
**अलौकिकविभावत्वं प्राप्तेभ्यः काव्यसंश्रयात्।**
**सुखं सञ्जायते तेभ्यः सर्वेभ्योऽपीति का क्षतिः॥(ङ)**

---

(ङ) तर्हि रसस्यानन्दमयत्वस्वीकारे। तदुन्मुखः करुणादिरसव्यञ्जककाव्यादिश्रवणादौ प्रवृत्तः सचेतनः सामाजिकः। अनुपपत्त्यन्तरं अनिष्टापत्त्यन्तरं। चराचरवस्तुजातं लोकस्तस्य संश्रयात् स्वभावात्। काव्यसंश्रयात् काव्यसम्बन्धात्। सुखं सुखमेव सर्वेभ्यो लौकिकशोकहर्षनिमित्तेभ्यः।

ये खलु रामवनवासादयो लोके "दुःखकारणानि इत्युच्यन्ते" त एव हि काव्यनाट्यसमर्पिता अलौकिकविभावनव्यापारवत्तया कारणशब्दवाच्यत्वं विहायालौकिकविभावशब्दवाच्यत्वं भजन्ते। तेभ्यश्च सुरते दन्तघातादिभ्य इव सुखमेव जायते। अतश्च "लौकिकशोकहर्षादिकारणेभ्यो लौकिकशोकहर्षादयो जायन्ते" इति लोक एव प्रतिनियमः काव्ये पुनः "सर्वेभ्योऽपि विभावादिभ्यः सुखमेव जायते" इति नियमान्न कश्चिद्दोषः॥

कथं तर्हि हरिश्चन्द्रादिचरितस्य काव्यनाट्ययोरपि दर्शनश्रवणाभ्यामश्रुपातादयो जायन्त इत्युच्यते।

**अश्रुपातादयस्तद्वद्द्रुतत्वाच्चेतसो मताः।**

तर्हि कथं काव्यतः सर्वेषामीदृशी रसाभिव्यक्तिर्न जायत इत्याह।

**न जायते तदास्वादो विना रत्यादिवासनाम्॥**

वासना चेदानीन्तनी प्राक्तनी च रसास्वादहेतुः। (च) तत्र यदि आद्या न स्याच्छ्रोत्रियजरन्मीमांसकादीनामपि

(च) तर्हि करुणादीनां सुखमयत्वस्वीकारे। अश्रुपातादय इत्यादिना निश्वासादिपरिग्रहः। द्रुतत्वात् हर्षेण गलितप्रायत्वात्। परमते वासनाया रसबोधहेतुत्वे अन्वयव्यतिरेकौ प्रमाणमाह न जायत इति तदास्वादो रसास्वादः रत्यादिवासनां रत्यादि तादात्म्येन प्रतीयमानां वासनाम्।

( छ ) मिलितयोरेव तयोः कारणत्वं दर्शयति तत्रेति श्रोत्रियो

सा स्यात् । यदि द्वितीया न स्यात् तदा यद्रागिणामपि केषाञ्चिद्रसोद्‌बोधो न दृश्यते तन्न स्यात् ॥

उक्तञ्च धर्म्मदत्तेन ।

"सवासनानां सभ्यानां रसस्यास्वादनं भवेत् ।
निर्वासनास्तु रङ्गान्तः काष्ठकुड्याश्मसन्निभाः" ॥ १ ॥ इति ॥

ननु कथं रामादिरत्याद्युद्‌बोधकारणैः सामाजिकरत्याद्युद्‌बोध इत्युच्यते (छ) ।

**व्यापारोऽस्ति विभावादेर्नाम्ना साधारणी कृतिः ।**
**तत्प्रभावेन यस्यासन् पाथोधिप्लवनादयः ।**
**प्रमाता तदभेदेन स्वात्मानं प्रतिपद्यते ॥**

---

वैदिकः स रसास्वादः तत् रत्युद्‌बोधादर्शणम् । ननु श्रोत्रियादीनां प्राक्तनवासनाभावत्वे किं प्रमाणमिति चेत् तदभावे प्रमाणासत्त्वेनैव तत्सिद्धेः न च फलाभाव एव तत्र मानमिति वाच्यं इदानीन्तनीवासनाव्यतिरेकस्यैव फलाभावप्रयोजकत्वोपगमेनोपपत्तौ तदभावस्य तत्प्रयोजकत्वकल्पनाया अन्याय्यत्वात् । वस्तुतस्तु इदानीन्तनवासनायां प्रमाणं नास्ति । न च रागाद्यन्यथानुपपत्तिरेव मानमिति वाच्यं तस्या रागादिं प्रत्यजनकत्वात् इष्टसाधनताज्ञानादिनैव तत्सिद्धेः । रङ्गान्तर्न्त्यशाला-मध्ये कुड्यं भित्तिः निर्वासनानां काष्ठादिवद्रसोद्‌बोधो न जायत इत्यर्थः । रसबोधे साधारण्याभिमानस्य कारणतां व्यवस्थापयितुमाशङ्कते ननु कथमिति रामादिरत्याद्युद्बोधकारणैरिति सीतादिभिरित्यर्थः । सामाजिकरत्याद्युद्बोधः सामाजिकरत्यादिवासनोद्बोधः तेषां तं प्रत्यसाधनत्वादिति भावः ।

(ज) सामाजिकानां सजातीयरत्यादिसाजात्येनापि नायकाद्यभेदावगाहिरसपद्धोपपत्तौ वक्ष्यमाणसमाधानमकिञ्चित्करमित्यतो

ननु कथं मनुष्यमात्रस्य समुद्रलङ्घनादावुत्साहोद्बोध-इत्युच्यते। (ज)

**उत्साहादिसमुद्बोधः साधारण्याभिमानतः।**
**नृणामपि समुद्रादिलङ्घनादौ न दुष्यति।**

---

मनुष्यसामाजिकानां सुदुर्जयप्रतिवीरालम्बनोत्साहोद्बोधोऽत्यन्तं न सम्भवतीति तदुपपादयितुं वीररसं प्रदर्शयन् समाधत्ते व्यापारोऽस्तीति स्वाश्रयं साधारणं नायकसामाजिकसम्बन्धिनं करोति उभयसम्बन्धित्वेन प्रतिपादयतीति साधारणी कृतिः तद्भावेन तज्जन्यसाधारण्याभिमानेन यस्य रामस्य पायोधिप्लवनादयः समुद्रनिग्रहादयः आदिना रावणनिग्रहादिग्रहणं प्रमाता सामाजिकः तदभेदेन रामाभेदेन स्वात्मानं स्वं यथा "तवोपवासादिभिरप्युदग्रैः स्वरूपमस्यानवलोकयंस्तम्। भ्रूभेदभीमाननविस्मयाब्धिं विव्याध बाणत्रितयेन रामः" अस्य श्रीरामस्य अत्र श्रीरामोत्साहस्य समुद्र आलम्बनविभावः स्वरूपानवलोकनमुद्दीपनविभावः समुद्रवेधनमनुभावः भ्रूभेदो व्यङ्ग्यः क्रोधो व्यभिचारिभावः। एवं साधारण्याभिमानात् मनुष्यसामाजिकानामपि रामोऽहं क्रुद्धः स्वरूपानवलोकनोद्दीपितसमुद्रवेधनानुकूलसमुद्रनिग्रहविषयकोत्साहवानिति प्रतिपत्तिरुपपद्यते। अत्र ग्रामोपनीतस्य श्रीरामोत्साहस्याभेदेन स्वादनाख्यव्यापारेण स्ववासनैव सामाजिकैरास्वाद्यते। न च यस्य हनूमतः पायोधिप्लवनादयः समुद्रतरणादय इति यथाश्रुतमेव सम्यगिति वाच्यं तादृशोत्साहस्य वीररसत्वाभावेन प्रकृतानु योगित्वात्। युद्धदानदयाधर्मोत्साहस्यैव वीररसत्वाङ्गीकारात्। नायकसामाजिकाभेदबोधमुपपाद्य वासनोत्साहाद्यभेदबोधमुपपादयितुमाह कथमिति मनुष्याणां तादृशोत्साहाद्यसम्भवेन साजात्येनाभेदप्रतीतिर्न भवतीति सूचनाय मनुष्यमात्रस्येति लङ्घनं निग्रहः।

(झ) साधारण्याभिमानत इति समुद्रनिग्रहोत्साहादिः मम रामादेश्चेति साधारण्यग्रहादित्यर्थः। न दुष्यति उपपद्यते ननु ज्ञान-

रत्यादयोऽपि साधारण्येन प्रतीयन्त इत्याह ।

**साधारण्येन रत्यादिरपि तद्वत् प्रतीयते ॥**

रत्यादेरपि ह्यात्मगतत्वेन प्रतीतौ सभ्यानां व्रीडा-तङ्कादिर्भवेत्परगतत्वेन त्वरस्यतापातः ॥ विभावादयोऽपि प्रथमतः साधारण्येन प्रतीयन्त इत्याह ।

**परस्य न परस्येति ममेति न ममेति च ।**
**तदास्वादे विभावादेः परिच्छेदो न विद्यते ॥ (ऋ)**

---

प्रत्यासत्त्या सन्निकृष्टस्योत्साहादेः साक्षादेव सामाजिके प्रकारत्वमस्तु किं वासनायाः प्रकारत्वाङ्गीकारेणेति चेन्न वासनांशे साक्षात्कारत्वप्रमात्वा-नुपपत्तेः लौकिकप्रत्यक्षस्यैव साक्षात्कारत्वाङ्गीकारात् "पुण्यवन्तः प्रमि-ण्वन्ति योगिवद्रससन्ततिमित्यादि" प्राचीनव्यवहारेण "धर्मिणि सर्वम-भ्रान्तं प्रकारे तु विपर्य्ययः" इत्युक्तदिशा रसबोधस्य वासनांशे प्रमात्वम-ङ्गीक्रियते एतदभिप्रायेणैव पूर्वकारिकायां प्रमातृपदोपन्यासः स्थायिभा-वानां साधारण्यप्रतीतौ प्रतिबन्धकाभावमुपपादयितुमाह रत्यादयोऽपीति आदिना उत्साहादिपरिग्रहः तद्वत् विभावादिवत् उपपादयति रत्यादेर पीति आत्मगतत्वेन आत्ममात्रसम्बन्धित्वेन आतङ्कः शङ्का परगतत्वेन नायकमात्र सम्बन्धित्वेन प्रतीतावित्यन्वयः । अरस्यतापातः निरुक्तसाक्षात् कारविषयत्वाभावापत्तिः । एवञ्च रत्यादिर्ममैवेति नायकस्यैवेति सम्बन्ध विशेषस्वीकाराध्यवसायस्य प्रतिबन्धकस्याभावः सूचितः । एतदुपलक्षणं नैव ममेति नैव नायकस्येति सम्बन्धविशेषपरित्यागाध्यवसायस्याप्यभावो बोध्यः ॥ विभावादौ साधारण्यप्रतीतिं प्रतिबन्धकाभावप्रदर्शनेनोपपादयति विभावा-दयोऽपीति आदिना अनुभावव्यभिचारिभावयोर्ग्रहणं । प्रथमतो रसबोधात् प्राक् परस्य नायकस्यैव न परस्य नैवनायकस्य ममेति ममैवेति न ममेति नैव ममेति तदास्वादे रसास्वादे भाविनि सति परिच्छेदः सम्बन्धविशेष-स्वीकारपरीग्रहाध्यवसायः । तथाच तादृशाध्यवसायस्य प्रतिबन्धकस्याभावे

ननु तथापि कथमेवमलौकिकत्वमेतेषां विभावादी-
नामित्युच्यते।

**विभावनादिव्यापारमलौकिकमुपेयुषाम्।**
**अलौकिकत्वमेतेषां भूषणं न तु दूषणम्॥**

आदिशब्दादनुभावनसञ्चारणे। तत्र विभावनं रत्या-
देर्विशेषेणास्वादाङ्कुरणयोग्यतानयनम्॥ अनुभावनमेव-
भूतस्य रत्यादेः समनन्तरमेव रसादिरूपतया भावनम्।
सञ्चारणं तथाभुतस्यैव तस्य सम्यक् चारणम्।

---

नोपहितः साधारणीकरणाख्यव्यापारः सामाजिकानां सीतादयो मम रामादेश्चेत्यसाधारणप्रत्ययमव्याहतमेव जनयतीतिभावः।

(ज) लौकिकानामपि विभावादीनामलौकिकत्वसाधारणोपायं साधयितुमाशङ्कते नन्विति तथापि साधारणीकरणाख्यव्यापारस्वीकारेऽपि। एवं रसोत्पत्त्यनुभवं एतेषां विभावादीनां। नन्वेषामलौकिकत्वं रसोत्पत्तेर्विगुणमेव न त्वनुगुणमलौकिकात् फलसिद्धेरदृष्टचरणात् अत आह भूषणमिति अलौकिकरससिद्धेरितिशेषः भूषणमनुगुणं दूषणं विगुणं तथा च अलौकिकालौकिकफलसिद्धिर्मास्तु विभावादीनां काव्य-निबन्धनादलौकिकत्वे सति तेभ्योऽलौकिकरसोत्पत्तिः सामाजिकाना-मनुभवसिद्धैवेति दुरपलप एवालौकिकयोः कार्य्यकारणभावः इति भावः। रसस्यालौकिकत्वमुपपादयिष्यते। विभावनादि पदव्युत्पत्ति-लभ्यमेव विभावनादिस्वरूपमाह तत्रेति विशेषेणेति विभावनपदघट-कस्य विशब्दस्यार्थः अतिशयेनेति तदर्थः अङ्कुरणमङ्कुरसदृशीभवनं सूक्ष्मरूपेणाविर्भावः एवञ्च रत्यादेः सूक्ष्मास्वादरूपेण य आवि-र्भावः तच्छक्ति प्रापणमिति समुदितार्थः। माधुर्यचौरादिकभूधातुना विभावनपदसिद्धिरवधेया। एवम्भूतस्य सूक्ष्मास्वादरूपेणाविर्भूतस्य सम-नन्तरमिति अनुभावनपदघटकस्यानुशब्दस्यार्थः रसादिरूपतया स्फुटा-

विभावादीनां यथासङ्ख्यं कारणकार्य्यसहकारित्वे कथं तयाणामेव रसोद्बोधे कारणत्वमित्युच्यते।

**कारणं कार्य्यसञ्चारि रूपा अपि हि लोकतः।**
**रसोद्बोधे विभावाद्याः कारणान्येव ते मताः॥(ज)**

---

रादिरूपतया यद्वा रत्यादिरित्यादिपदेन देवादिविषयरत्यादीनामपि-परिग्रहः रसादीत्यादिपदेन भावादिपरिग्रहः। एतेन विभावादीनामपि विभावादिजन्यत्वमुक्तं भवति भावनस्तुत्पादनं स्वस्वास्वादरूपेणाविर्भूतस्यापि तस्य रसव्यपदेशो नास्ति किन्त्वनुभावपरिपुष्टस्यैव। न त्वङ्कुरे वृक्ष इति व्यपदेशः किन्तु काण्डपल्लवोद्गम एव तथाभूतस्य रसादिरूपेणोत्पन्नस्य तस्य रत्यादेः सम्यगर्थं चारणसास्वादपात्रीकरणं व्यभिचारिभावेनात्यन्तपरिपुष्टस्यैव रत्यादेरत्यन्तास्वादनमितिभावः। एवञ्चास्वादपरिपोषातिपरिपोषजनकत्त्वेनैवानुभावसञ्चारिभावयोरास्वादजनकत्वमितिभावः। विभावाः कारणानि अनुभावाः कार्य्याः सञ्चारिणः सहकारिणः इतिक्रमः। ननु सहकारिपदं कारणविशेषपरं कथं रत्यादेः कार्य्यविशेषाणां निर्वेदादिसञ्चारिभावानां सहकारित्वमुपपद्यते उच्यते साधनस्यानुमानवादिमते स्वकारणकानुमितौ मनसः सहकारित्वेन लोके तथा व्यपदेशात्। ननु तथापि निर्वेदादीनां रत्यादिकार्य्यत्वेनानुभावत्वमेव युज्यते कथं सञ्चारित्वमिति चेन्न तेषां व्यापारवैलक्षण्येन फलवैलक्षण्यापदेशवैलक्षण्यस्यौचित्यात् सञ्चारिरूपाः सहकारिस्वरूपा लोकतो लोके कारणान्येवेति निरुक्तव्यापारत्रयबलाद्रत्यादेरास्वादरूपत्वेनोत्पादनादितिभावः। ननु विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति मुनिवचनाद्विभावादीनां समुदितानामेवकारणत्वंवाच्यं तथा सति कारणान्येवेति बहुवचनमनुपपन्नं तादृशस्थले एकवचनस्यैव युक्तत्वात् तृणारणिमणिन्यायेन प्रत्येकं कारणताप्रत्ययप्रसङ्गाच्च। अतएव काव्यप्रकाशे "शक्तिर्निपुणता लोककाव्यशास्त्राद्यवेक्ष-

ननु तर्हि कथं रसास्वादे तेषामेकः प्रतिभास इत्युच्यते ।

**प्रतीयमानः प्रथमं प्रत्येकं हेतुरुच्यते ।**
**ततः सम्वलितः सर्वो विभावादिः सचेतसाम् ।**
**प्रपाणकरसन्यायाच्चर्व्यमाणो रसो भवेत् ॥**

---

स्यात् । काव्यज्ञशिक्षयाभ्यास इति हेतुस्तदुद्भवे" इत्यत्र त्रयः समुदिता हेतुर्न तु हेतव इत्युक्तं । उच्यते कारणपदस्यैकधर्मावच्छिन्न-कार्य्यतानिरूपितकारणतापरत्वे ह्येकवचनं कारणतामात्रपरत्वे तु तादृश स्थलेऽपि बहुवचनं साधु । प्रकृते रत्यादेः कार्य्यभूतयोरप्यनुभावव्यभि-चारिभावयोः रसस्वरूपतोपपत्तौ कारणत्वमिति कारणतामात्रे तात्पर्य्यं न तु तादृशकारणतायां । काव्यप्रकाशनिर्वचनस्य तु कार्यकारणभाव-ग्राहकतया कार्य्यतावच्छेदकेऽपि तात्पर्य्यमिति ।

(ट) रसं प्रति विभावादीनां व्यञ्जनाजन्यज्ञानविषयत्वे सत्येव कारणत्वमित्युपपादयितुमाह ननु तर्हीति तेषां कारणीभूतविभा-वादीनां एकः प्रतिभासः एकरसस्वरूपतया परिणामः । विभिन्नकार-णानां विभिन्नकार्य्यरूपतया परिणामस्यैवोचितत्वात् इति भावः । विभावादेरतीतस्यापि रसास्वादकारणत्वकथनं तज्ज्ञानाभिप्रायेणेति ध्येयम् । प्रतीयमानः प्रत्येकमिति प्रत्येकं विभावादौ साधारण्यप्रती-तिरित्यभिप्रायेणेदं न त्वन्तराप्रत्येकं प्रतीत्यन्तरं कल्पनीयं प्रमा-णाभावात् । ततः प्रत्येकप्रत्ययानन्तरं सम्वलितव्यञ्जनया विशिष्ट-वैशिष्ट्यावगाह्यज्ञानरूपतां प्राप्तः । प्रपाणकरसन्यायात् प्रपाणकद्रव इव चर्व्यमाणः स्वाभिन्नाह्लादमयचर्वणाविषयः । प्रपाणकपक्षे विल-क्षणरसवत्तयोपलभ्यमानः रसश्चिदात्मकः कश्चिदेकः पदार्थः । उप-मानोपमेययोश्चर्व्यमाणत्वमुपपादयति यथेति खण्डमरिचादीनामित्यादि-पदेन आमिक्षाकर्पूरयोर्ग्रहणं । यथा खण्डमरिचादिचतुष्टयमेलकाज्जाय-माने प्रपाणकद्रवे माधुर्य्यादिविलक्षणो विशिष्य निर्देष्टुमशक्यः आस्वादो

यथा खण्डमरिचादीनां सम्मेलनादपूर्व इव कश्चिदास्वादः प्रपाणकरसे सञ्जायते विभावादिसम्मेलनादिहापि तथेत्यर्थः। (ट)

ननु यदि विभावानुभावव्यभिचारिभिर्मिलितैरेव रसस्तत् कथं तेषा मेकस्य द्वयोर्वा सद्भावेऽपि स स्यादित्युच्यते।

**सद्भावश्चेद्विभावादेर्द्वयोरेकस्य वा भवेत्।**
**झटित्यन्यसमाक्षेपे तदा दोषो न विद्यते॥**

अन्यसमाक्षेपश्च प्रकरणादिवशात्। यथा।

"दीर्घाक्षं शरदिन्दुकान्तिवदनं बाहू नतावंसयोः
सङ्क्षिप्तं निविडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव।

---

रसास्वगुणविशेष इव विभावादिचतुष्टयमेलकात्तथा जायमाने शृङ्गारादिरसेऽप्याह्लादः सञ्जायते इत्यन्वयः। "देवक्यां देवरूपिण्यां विष्णुः सर्वगुणाश्रयः। आविरासीद्यथा प्राच्यां दिशीन्दुरिव पुष्कल" इत्यादाविव सप्तम्यन्तप्रथमान्तपदार्थयोरुपमाद्वयमुपस्थापयतोर्यथेवशब्दयोर्न पौनरुक्त्यं। अतएव रसास्वादपदयोः श्लिष्टत्वादुपमानोपमेयभावः। स स्यात् रसः स्यात्। समाक्षेपे-व्यञ्जनया बोधे सति दोषो रसानुपपत्तिः प्रकरणादिवशात् प्रस्तावादिवैशिष्ट्यात्।

(ठ) दीर्घाक्षमिति। बाहू नताविति स्त्रीणां नतस्कन्धत्वं प्रशस्तमिति भावः। संक्षिप्तं अविस्तीर्णं स्त्रीणां अविस्तीर्णवक्षस्त्वं गुण इति भावः। प्रमृष्टे लिप्ते पार्श्वास्यामलक्ष्यत्वात् इयमुक्तिर्वा छन्दोऽभिप्रायः मनसो नर्त्तयितुश्चपलीकर्त्तुः कामस्य अस्या मालविकाया औचित्यात् आचार्य्यस्य विभावस्य वैशिष्ट्यात् एवमिति अन्याक्षेपे यथा "परिमृदितमृणालीम्लानमङ्गं प्रवृत्तिः कथमपि परिवारप्रार्थनाभिः क्रियासु। कलयति च हिमांशोर्निष्कलङ्कस्य लक्ष्मीमभिनवकरिदन्त-

मध्यः पाणिमितो नितम्बि जघनं पादावुदग्राङ्गुली
च्छन्दो नर्त्तयितुर्यथैव मनसः सृष्टं तथास्याः वपुः" ॥

अत्र मालविकामभिलषतोऽग्निमित्रस्य मालविकारूपविभावमात्रवर्णनेऽपि सञ्चारिणामौत्सुक्यादीनामनुभावानाञ्च नयनविस्फारादीनामौचित्यादेवाक्षेपः। एवमन्याक्षेपेऽप्यूह्यम्। "अनुकार्य्यगतो रसः" इति वदतः प्रत्याह।

**पारिमित्याल्लौकिकत्वात् सान्तरायतया तथा।**
**अनुकार्य्यस्य रत्यादेरुद्बोधो न रसो भवेत्॥**

सीतादिदर्शनादिजो रामादिरत्याद्युद्बोधो हि परिमितो लौकिको नाट्यकाव्यदर्शनादेः सान्तरायश्च।

---

(कुल्य) च्छेदकान्तः कपोलः" * अत्र विप्रलम्भशृङ्गारस्यानुभावमात्रस्याङ्गसौष्ठवादेः सत्त्वं तदालम्बनभावस्य तच्चेष्टादेरुद्दीपनविभावस्य व्यभिचारिभावस्य विषादादेश्च आक्षेपेणलाभः अनुकार्य्यो नायकः परिमित्यान्नायकमात्रगतत्वेनाल्पत्वात्। रसस्य तु नाना सामाजिकगतत्वेन-तदसम्भवादिति भावः। लौकिकत्वादिति रसस्यालौकिकत्वमलौकिकविभावादिजन्यत्वाद्वक्ष्यमाणप्रकारेण चावगन्तव्यं। सान्तरायतया नाट्यकाव्यदर्शनश्रवणप्रतिकूलतया। तस्मात् पारिमित्यादित्रयसम्बन्धात्। पारिमित्यादीनां रसभेदव्याप्यत्वमुपपादयति रसस्येति एतदिति पारिमित्यादीत्यर्थः। विलक्षणत्वञ्च तदभावव्याप्यत्वमेव। एवञ्च यद्धर्माभावव्याप्यो यद्वृत्तिधर्मस्तद्धर्मस्तद्भेदव्याप्य इति नियम उपपद्यते। यथा पटवृत्तिधर्मः पटत्वं घटत्वरूपधर्माभावव्याप्यो

---

* पाठान्तरं अत्र सम्भोगशृङ्गारालम्बनविभावस्य नायकस्य तच्चेष्टादेरुद्दीपनविभावस्य चाक्षेपेण लाभः।

तस्मात् कथं रसरूपतामियात् । रसस्यैतद्धर्म्मेति तद्यविलक्षणधर्म्मकत्वात् । (ठ)

अनुकर्त्तृगतत्वञ्चास्य निरस्यति ।

**शिक्षाभ्यासादिमात्रेण राघवादेः स्वरूपताम् ।**
**दर्शयन् नर्त्तको नैव रसस्यास्वादको भवेत् ॥**

किञ्च ।

**काव्यार्थभावनेनायमपि सभ्यपदास्पदम् ।**

---

भवति घटत्वधर्मोऽपि पटभेदव्याप्यो भवति । यथाश्रुतन्तु न सम्यक् तथा हि यद्धर्मो यद्वृत्तिधर्मभिन्नस्तद्धर्मस्तद्भेदव्याप्य इति नियमो नोपपद्यते घटत्वं घटवृत्तिधर्मान्तरविलक्षणं न तु घटभेदव्याप्यमिति व्यभिचारात् यदि तु यद्वृत्तित्वावच्छिन्नप्रतियोगिताकोभेदो विवक्ष्यते तदायं न दोष इत्यवधेयं ।

(ठ) अनुकर्त्तृगतत्वं नटवृत्तित्वं अस्य रसस्य । गुरुतो ग्रहणं शिक्षा शिक्षितार्थस्य मुहुरनुष्ठानेन संस्कारातिशयोऽभ्यासः । मात्रपदेन काव्यार्थभावनाव्यवच्छेदः । अयमपि नर्त्तकोऽपि सभ्यपदास्पदं सभ्यपदवाच्यः । रसस्य स्वप्रकाशत्वं पर्य्यवशाययितुं ज्ञानान्तरग्राह्यत्वं निरस्यति नायमिति अयं रसः ज्ञाप्यो जन्यज्ञानविषयः रसस्य जन्यत्वाभावो निरूपयिष्यते नातो बाधः ईश्वरज्ञानविषयत्वस्य केवलान्वयितया साध्याप्रसिद्धिरतो जन्येति । स्वसत्तायां स्वावस्थाने षष्ठ्यर्थे सप्तमी प्रतीतिं विना स्वावस्थानस्याभावादित्यर्थः। अत्र साध्यसाधनयोः पक्षमात्रवृत्तित्वेनान्वयः दृष्टान्ताभावात् अन्वयव्याप्तिग्रहो न सम्भवतीति व्यतिरेकव्याप्तिग्रहो भायं व्यतिरेकदृष्टान्तमाह यो हीति अत्र वीप्सा वेदितव्या सन्नपि अवस्थितेऽपि कदाचित् ज्ञानसामग्र्यभावदशायां तथा च यो यो ज्ञाप्यः स प्रतीतिं विना कदाचिदवतिष्ठते यथा घटादिरित्यभिप्रायः अत्र ज्ञाना-

यदि पुनर्नटोऽपि काव्यार्थभावनया रामादिरूपतामात्मनो दर्शयेत् तदा सोऽपि सभ्यमध्य एव गण्यते।

नायं ज्ञाप्यः स्वसत्तायां प्रतीत्यव्यभिचारतः॥

यो हि ज्ञाप्यो घटादिः स सन्नपि कदाचिदज्ञातो भवति। न ह्ययं तथा प्रतीतिमन्तरेणाभावात्।

यस्मादेष विभावादिसमूहालम्बनात्मकः।
तस्मान्नकार्य्यः। (ड)

यदि रसः कार्य्यः स्यात् तदा विभावादिज्ञानकारणक एव स्यात्। ततश्च रसप्रतीतिकाले विभावादयो न प्रतीयेरन्। कारणज्ञानतत्कार्य्यज्ञानयोर्युगपददर्शनात्।

---

भावकालीनावस्थानाभाव एव हेतुः पर्य्यवसन्नः। ज्ञानञ्चात्र स्वविषयकमीश्वरज्ञानातिरिक्तमवगन्तव्यं। नातो हेत्वप्रसिद्धिः ज्ञाप्यत्वाभावस्य साध्यस्य व्यतिरेको ज्ञाप्यत्वमेव निरुक्तहेतुव्यतिरेकश्च ज्ञानाभावकालीनावस्थानं तयोः सहचारग्रहेण साधने साध्यव्याप्तिं ग्राहयित्वा पक्षधर्मत्वं ग्राहयति न ह्ययमिति अयं रसः तथासन्नपि कदाचिदज्ञातः। अत्रापि हेतुमाह प्रतीतिमिति अन्तरेण विना। रसस्य कार्य्य सुखज्ञानान्तरवैलक्षण्यात्। कार्य्यत्वाभावं दर्शयति यस्मादिति एष रसः विभावादिसमूहालम्बनात्मकः यथासम्भवविशेषणविशेष्यभावापन्नविभावादिपदार्थसमूहविषयकः। रसः कार्य्यत्वाभाववान् सुखमयत्वे सति विभावादिसमूहविषयकत्वादित्यनुमानं। रससमानाकारे व्यञ्जनाजन्यज्ञाने व्यभिचारवारणाय सत्यन्तं हेतुविशेषणम्।

(ड)बाधोत्तारकं तर्कमाह यदीति रसप्रादुर्भावप्राक्क्षणे विभावादिज्ञानस्यैव सम्भवात्तत्कारणकत्वमेवोपपद्यते इत्येवकारेण। ननु कार्य्यत्वेऽपि घटादौ विभावादिज्ञानकारणत्वं नास्ति इति मूलग्रन्थस्यमिति

नहि चन्दनस्पर्शज्ञानं तज्जन्यसुखज्ञानञ्चैकदा सम्भवति। रसस्य च विभावादिसमूहालम्बनात्मकतयैव प्रतीतेर्न विभावादिज्ञानकारणकत्वमित्यभिप्रायः ॥ ( ढ )

नो नित्यः पूर्वसम्वेदनोज्झितः ।
असम्वेदनकाले हि न भावोऽप्यस्य विद्यते ।

चेन्न विभावादिविशिष्टवैशिष्ट्यावगाहिज्ञानत्वसमानाधिकरणकार्य्यत्वस्या-पाद्यस्य विवक्षणीयत्वात् । रससमानाकारे व्यञ्जनाजन्यज्ञानादावापाद्या-पादकयोर्व्याप्तिग्रहः । अनेष्टापत्तौ दोषमाह ततश्चेति रसस्य विभावादि-ज्ञानकारणकत्वाङ्गीकाराच्चेत्यर्थः । रसप्रतीतिकाले रसप्रतीतौ न प्रती-येरन् न विषयाः स्युः । ज्ञानेति ज्ञायमानकारणज्ञायमानतज्जन्यसुखयो-र्युगपद्दर्शनात् एकसम्विद्विषयत्वादर्शनात् । एतदेव दृष्टान्तेनोपपादयति न हीति चन्दनस्पर्शस्तज्जन्यसुखञ्च एकज्ञानविषयो न भवतीत्यर्थः । आपत्तेरननुगुणं बाधं दर्शयति रसस्य चेति आनन्दरूपस्य विभावादिस-मूहालम्बनात्मकप्रतीतिरूपस्येत्यर्थः । एवञ्च विभावादिज्ञानकारणकत्व-रूपस्यापाद्यस्याभावे सिद्धे तेनैव कार्य्यत्वरूपविशेष्याभावकृतो निरुक्ता-पादकस्य विशिष्टाभावः सिध्यतीति भावः । तदुक्तं काव्यप्रकाशटीकाकृता चण्डीदासेन कार्य्यं सुखं स्वकारणैः सह नैकस्यां संविद्यवभासमानं दृष्टं एतच्च सुखं विभावादिसम्वलितं भासते तस्मान्न कार्य्यमिति एवञ्च विभा-वादिज्ञानस्य रसं प्रति यत्कारणत्वमुक्तं तत् पूर्ववर्त्तित्वमात्रेणौपचारिक-मिति ध्येयम् ।

( ढ ) रसस्य नित्यत्वाभावमुपपादयति नो नित्य इति एव इत्य-नुषज्यते । *पूर्वसम्वेदनं विभावादिज्ञानात् प्राक्ज्ञानं तद्रहित इत्यर्थः ।

* पाठान्तरं पूर्वेति संवेदनात् पूर्वं प्राग्वृत्तिपूर्वसम्वेदनं धर्मपरनि-र्देशात् संवेदनप्राग्वृत्तित्वमित्यर्थः । नित्यानां संवेदनात् प्राग्वृत्तित्वस-

न खलु नित्यस्य वस्तुनोऽसंवेदनकालेऽसम्भवो नापि-भविष्यन् । साक्षादानन्दमयस्वप्रकाशरूपत्वात् । कार्य्य-ज्ञाप्यविलक्षणभावात् नो वर्त्तमानोऽपि ॥ (ण)

यदि रसो नित्यः स्यात्तदा विभावादिज्ञानात् प्रागपि ज्ञायते इति बाधोद्धारकस्तर्कः । ननु विभावादिज्ञानं तद्ग्राहकमिति प्राक्काले कथं रसः प्रतीयते इत्यतो दोषान्तरमाह असम्वेदनेति । अस्य रसस्य सम्वेदन-शरीरत्वात् असंवेदनकाले सुतरामसम्भवः इति भावः । साध्यसाधनयो-र्व्याप्तिग्राहकं साध्याभावसाधनाभावयोः सहचारं दर्शयति न खल्विति रसस्य भविष्यत्वाभावं साधयति नापीति एव इत्यनुषज्यते साक्षा-दिति साक्षात्कारविषयानन्दबहुलप्रकाशस्वरूपत्वादित्यर्थः । लौकिक-प्रत्यक्षे विषयस्य कारणत्वाङ्गीकारेण भविष्यतस्तदसम्भवः स्वोत्पत्तेः प्राक् तस्यासत्त्वनियमादिति भावः । रसस्य वर्त्तमानत्वाभावमपि साधयति ज्ञाप्येति ज्ञाप्यकार्य्येति प्रामादिकः पाठः आर्य्याघटकगण-भङ्गप्रसङ्गात् । कार्य्यज्ञाप्येत्येव पाठः सम्यक् एवं वर्त्तमान इत्यत्र न-शब्दः प्रामादिकः नो शब्दः सम्यक् । वर्त्तमानस्य वस्तुनः कार्य्यज्ञाप्यान्य-तरत्वनियमादिति भावः ।

---

स्येव रसस्य तद्विलक्षणैतद्धर्मयोगित्वात् नित्यत्वाभावः सिध्यतीतिभावः । ननु स्वप्रागवृत्ति यत् संवेदनं तद्रहित इत्यर्थः । रसस्योत्पत्तेः प्राक् अनुमित्यादिसम्भवे स्वप्राग्वृत्ति संवेदनविषयत्वाभावस्य हेतोः स्वरूपासिद्धेः नित्यानां प्राक्कालासम्भवेन निरुक्तहेतोस्तत्र सद्भावादव्यभिचाराच्च । नापि पूर्वमतीतं यत् संवेदनं तद्विषयत्वाभावो हेतुः रससंवेदनस्यापि अतीतत्वसम्भवेनातीतत्वसंवेदनविषयत्वस्य केवलान्वयितया तस्याप्रसिद्धेः । ननु रसस्य नागोचरमप्युपनीतभानादिसम्भवात् संवेदनप्रागवृत्तित्वा-भावस्य हेतोः स्वरूपासिद्धत्वमत आह असंवेदनेति ।

विभावादिपरामर्शविषयत्वात् सचेतसाम्
परानन्दमयत्वेन सम्वेद्यत्वादपि स्फुटम्।
न निर्विकल्पकं ज्ञानं तस्य ग्राहकमिष्यते॥ (त)
तथाभिलापसंसर्गयोग्यत्वविरहान्न च।
सविकल्पकसम्वेद्यः॥

सविकल्पकज्ञानसम्वेद्यानां हि वचनप्रयोगयोग्यता न तु रसस्य तथा।

साक्षात्कारतया न च॥

---

(त) रसग्रहस्य निर्विकल्पज्ञानस्वरूपाभावं साधयति विभावादिति परामर्शोऽत्र विशिष्टवैशिष्ट्यावगाही ग्रहः तद्विषयत्वात् तन्मात्रविषयत्वात्। परमानन्देति परमानन्दत्वप्रकारकसंवेदनविषयत्वादित्यर्थः। निर्विकल्पकं संसर्गानवगाहि भासमानसंसर्गप्रतियोगित्वस्वरूपप्रकारत्वस्यापि संसर्गग्रहमन्तरेणासम्भवादिति भावः। * तस्य रसस्य ग्राहकं विषयितानिरूपकं रसग्रहस्य निर्विकल्पज्ञानरूपत्वमपि न सिद्ध्यतीति ध्येयम्।

(थ) रसग्रहस्य सविकल्पकज्ञानस्वरूपत्वाभावमपि साधयति तथेति अभिलापो वचनं तस्य संसर्गः प्रयोगः तद्योग्यत्वाभावादित्यर्थः। स रसः सविकल्पकसंवेद्यसंसर्गावगाहिज्ञानविषयः। प्रागुक्तहेतुद्वयासङ्गते रसस्य सविकल्पकज्ञानविषयत्वमस्त्येव किन्तु सविकल्पकवेद्यान्तरादस्य वैलक्षण्य-

---

* पाठान्तरं एतेन स्वमात्रग्राह्यस्य रसस्य निर्विकल्पकज्ञानरूपत्वमपि सिध्यतीति ध्येयम्।

**परोक्षस्तत्प्रकाशो नापरोक्षः शब्दसम्भवात् ।**

तत् कथय कीदृगस्य तत्त्वम् ॥ एवमश्रुतादृष्टपूर्व्वनिरूपणप्रकारस्येत्याह ।

**तस्मादलौकिकः सत्यं वेद्यः सहृदयैरयम् ॥**

तत् किं पुनः प्रमाणं तस्य सद्भाव इत्याह ।

**प्रमाणं चर्वणैवात्र स्वाभिन्ने विदुषां मतम् ।**

चर्व्वणास्वादनम् । तच्च "स्वादः काव्यार्थसम्भेदादात्मानन्दसमुद्भवः" इत्युक्तप्रकारम् ॥

---

साधने तात्पर्य्यं वेदितव्यं । स्वप्रकाशकत्वेनापि ज्ञानान्तरग्राह्यात् सविकल्पकादस्य वैलक्षण्यं बोध्यं । गुरुनये तु सर्वसविकल्पकज्ञानानां स्वेनैव ग्रह इति नैतद्वैलक्षण्यं । साक्षात्कारतयेति स्वादनाख्यव्यापारस्य मनः—सन्निकर्षत्वाङ्गीकारेण तज्जन्यत्वादिति भावः । परोक्षः प्रत्यक्षविलक्षणः तत्प्रकाशो रसग्रहः नापरोक्षः नापि प्रत्यक्षरूपः शब्दसम्भवात् काव्यजन्यविभावादिज्ञानजन्यत्वनियमात् अनेन प्रत्यक्षान्तरवैलक्षण्यमेव साधितं न तु प्रत्यक्षभिन्नत्वं प्रागुक्तविरोधात् । अस्य रसस्य तत्त्वं याथार्थ्यं अश्रुतोऽदृष्टपूर्वस्य निरूपणप्रकारः इतरभेदानुमापको धर्मः स्वभावो यस्य तस्येत्यर्थः । तस्मादुपदर्शितलौकिकज्ञानानन्दवैलक्षण्यात् सत्यमित्येवकारार्थे अलौकिक एवेत्यर्थः । अन्यथाश्रवणदर्शनमलौकिकवस्तुसिद्धौ गुण एव न तु दोष इति भावः । तदुक्तं अलौकिकसिद्धेर्भूषणमेव न तु दूषणमिति विदुषां चर्वणेत्यन्वयः । अत्र रसे स्वाभिन्ने चर्वणस्वरूपे तदुक्तं चर्वणैव भगवती स्वसम्वलितस्वस्वरूपादभिन्ने तस्मिन् प्रमाणमिति ननु यदीति अत्रापि विप्रतिपत्तेः तस्मान्न कार्य्य इत्यनन्तरमेवोत्थापयितुमौचित्येऽपि सिद्धान्तस्य चर्वणापदसाध्यत्वाच्चर्वणानिरूपणानन्तरमे-

ननु यदि रसो न कार्य्यस्तत् कथम्महर्षिणा "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिः" इति लक्षणं कृतमित्युच्यते॥

**निष्पत्त्या चर्वणस्यास्य निष्पत्तिरुपचारतः॥**

यद्यपि रसाभिन्नतया चर्व्वणस्यापि न कार्य्यत्वम्। तथापि तस्य कादाचित्कतया उपचरितेन कार्य्यत्वेन कार्य्यत्वमुपचर्य्यते॥ (थ)

**अवाच्यत्वादिकं तस्य वक्ष्ये व्यञ्जनरूपणे।**

तस्य रसस्य। आदिशब्दादलक्ष्यत्वादि॥

ननु यदि मिलिता रत्यादयो रसस्तत् कथमस्य स्वप्रकाशत्वं कथं वाऽखण्डत्वमित्याह।

**रत्यादिज्ञानतादात्म्यादेव यस्माद्रसो भवेत्।**
**अतोऽस्य स्वप्रकाशत्वमखण्डत्वञ्च सिद्ध्यति॥**

---

बोध्यापनमुचितमेव महर्षिणा भरतेन अस्य रसस्य उपचारतः स्वाश्रय घाह्यत्वसम्बन्धेन प्रतीयते इतिशेषः। अस्य चर्वणस्य कादाचित्कतया आविर्भाव-तिरोभाववशेन कदाचिद्भवतया। अत्राभेदेन तृतीया। उपचरितेन लक्षणया प्रतीतेन कार्य्यत्वेन कार्य्यसादृश्येन हेतुना कार्य्यत्वं कार्य्यसादृश्यं उपचर्य्यते निरुक्तपरम्परासम्बन्धेन प्रयुज्यते।

(द) अवाच्यत्वमनभिधेयत्वं। व्यञ्जनानिरूपणे व्यञ्जनायाः प्रामाण्यनिरूपणे पञ्चमपरिच्छेदे। अलक्ष्यत्वादित्यादिना तात्पर्य्यत्वपरिग्रहः। रसस्य स्वप्रकाशत्वं अखण्डत्वञ्च उपपादयति ननु यदीति स्वप्रकाशत्वं स्वस्वरूपज्ञानविषयत्वं रत्यादीनां तदभावादितिभावः।

यदि रत्यादिकं प्रकाशशरीरादतिरिक्तं स्यात् तदैवास्य स्वप्रकाशत्वं न सिद्ध्येत्। न च तथा। तादात्म्याङ्गीकारात्। यदुक्तम्। "यद्यपि रसानन्यतया चर्व्वणापि न कार्य्या तथापि कादाचित्कतया कार्य्यत्वमुपकल्प्य तदेकात्मन्यनादिवासनापरिणतिरूपे रत्यादिभागेऽपि व्यवहारः" इति। (द)

सुखादितादात्म्याङ्गीकारे चास्माकीं सिद्धान्तशय्यामधिशय्य दिव्यं वर्षसहस्रं मोदनिद्रामुपेयाः इति च। "अभिन्नोऽपि स प्रमात्रा वासनोपनीतरत्यादितादात्म्येन गोचरीकृतः" इति च। ज्ञानस्य स्वप्रकाशत्वमनङ्गीकुर्व्वतामुपरि वेदान्तिभिरेव निपातनीयो दण्डः। तादा-

---

अखण्डत्वमेकरूपत्वं परिणामवादिमते सिद्धान्तमाह रत्यादिरिति अस्य रसस्य तथा प्रकाशशरीरातिरिक्तं। ननु रसस्य स्वप्रकाशचिन्मयत्वाङ्गीकारेण तद्ग्राहकस्य चर्वणस्यापि तद्रूपत्वमुपपन्नं। एवञ्च "निष्पत्त्या चर्वणस्यास्य निष्पत्तिरुपचारत इति" यदुक्तं तदसङ्गतमित्यत आह यद्यपीति उपकल्प्य लक्षणया व्यवहृत्य तदेकात्मनि चर्वणास्वरूपे अनादीति सामाजिकानां प्राक्तनी वासना तस्या परिणतिरूपे आविर्भूतज्ञानरूपे रसे इत्यर्थः। एतेन रसस्याकार्य्यत्वमुपपादितं। ननु चर्वनातोऽभिन्ने रसे लक्षणया साक्षादेव कार्य्यत्वं प्रतीयते कथं निरूढपरम्परया व्यवहर्त्तव्यमित्यत आह रत्यादीति रत्यादिविषयावच्छेद इत्यर्थः। विभावादिसंयोगाद्रत्यादौ रसो जायते इत्यत्र रसे साक्षात् रत्यादौ रसद्वारैव निष्पत्तिः प्रतीयते इतिभावः। व्यवहारनिरूढपरम्परया प्रयुक्तं।

(ध) ननु परिणामवादिमते रत्यादेर्ज्ञानतादात्म्यं स्वप्रकाशत्वञ्चोपपद्यतां स्वप्रकाशानन्दचिन्मय इत्यनेन रसस्यानन्दचिन्मयत्वं चमत्कार-

त्मादेवास्याखण्डत्वम्। रत्यादयो हि प्रथममेकैकशः प्रतीयमानाः सर्व्वेऽप्येकीभुताः स्फुरन्त एव रसतामापद्यन्ते।

तदुक्तं।

"विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः।
प्रतीयमानाः प्रथमं खण्डशो यान्त्यखण्डताम्"।

---

प्राण इत्यनेन चमत्कारमयत्वञ्चोक्तं तदसङ्गतं विजातीयानां चिदानन्दचमत्काराणामेकरूपत्वासम्भवात् अत आह सुखादीति आदिना चमत्कारपरिग्रहः आस्माकी आलङ्कारिकसम्प्रदायसम्बन्धिनी। तस्मादलौकिकः सत्यं वेद्यः सहृदयैरयमिति सिद्धान्त एव सुखसम्पादकत्वेन शय्या तामभिशय्य आश्रित्य। दिव्यमिति मनुष्याणां षष्ठ्यधिकत्रिशतसंख्यकवर्षे देवानामेकवत्सरो भवति। एवं वर्षसहस्रं प्रमोद एव नेत्रनिमीलनादिकारित्वेन निद्रा तामुपेयाः प्राप्नुहि। तथा चास्माकं सिद्धान्ताश्रयणेन चिरकालमपि चिन्तया वादिभिर्दोषोद्भावनं कर्त्तुं न शक्यमितिभावः। रसस्य स्वप्रकाशत्वमुपसंहरति अभिन्नोऽपीति स्वस्मादितिशेषः। स रसः प्रमातेति भावप्रधानो निर्द्देषः। तेन चर्वणारूपप्रमयेत्यर्थः। सम्पद्यते वासनयासुपनीतो ज्ञानप्रत्यासत्त्या अभेदेन प्रकारीकृतो यो रत्यादिस्तस्य तादात्म्येन विशिष्टः गोचरीकृतो विषयीकृतः। ननु ज्ञानस्यानुव्यवसायेनैव ग्रहो भवति कथं स्वप्रकाशत्वमिति वदतो नैयायिकानाक्षिपति ज्ञानस्येति उपरिमते दण्डो दोषः पातनीयः उपन्यसनीयः। ज्ञानस्यानुव्यवसायेनैव तस्यापि ज्ञानान्तरेण परिग्रह इत्यनवस्थारूपोऽत्र दोषो वेदितव्यः। रसस्याखण्डत्वेऽपि ज्ञानतादात्म्यमेव हेतुमनुषज्य दर्शयति तादात्म्यादेवेति ज्ञानतादात्म्यादेवेत्यर्थः। अस्य रसस्य ननु व्यस्तानां रत्यादिविभावादीनां कथमेक ज्ञानरूपत्वमत आह रत्यादयो हीति आदिना विभावादिपरिग्रहः। एतच्च शृङ्गारादिरसे वीरादौ तु उत्साहाद्यादयो ज्ञेयाः। एकीभूता

इति । "परमार्थतस्त्वखण्ड एवायं वेदान्तप्रसिद्धब्रह्मतत्त्ववद्वेदितव्यः" इति च ॥ (ध)

अथ के ते विभावानुभावव्यभिचारिण इत्यपेक्षायां विभावमाह ।

**रत्याद्युद्बोधका लोके विभावाः काव्यनाट्ययोः ।**

ये हि लोके रामादिगतरतिहासादीनामुद्बोधकारणानि सीतादयस्त एव काव्ये नाट्ये च निवेशिताः सन्तो- "विभाव्यन्ते आस्वादाङ्कुरप्रादुर्भावयोग्याः क्रियन्ते सामाजिकरत्यादिभावा एभिः" इति विभावा उच्यन्ते ॥

तदुक्तम्भर्तृहरिणा ।

"शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान् ।
प्रत्यक्षानिव कंसादीन् साधनत्वेन मन्यते" ॥ १ ॥ इति

---

व्यञ्जनाजन्यैकज्ञानविषयत्वेन एकरूपत्वं प्राप्ताः स्फुरन्तः चिद्रूपत्वं प्राप्नुवन्तः । सात्त्विकानुभावयोर्गोबलीवर्द्दन्यायेन पृथगुपादानं । खण्डशः प्रत्येकं । ननु ज्ञानतादात्म्याङ्गीकारेऽप्यखण्डत्वं न सम्भवति सुखचमत्काराभ्यामैक्यासम्भवादत आह परमार्थतस्त्विति वस्तुतस्त्वित्यर्थः अलौकिकस्वभावादिति यावत् । अलौकिकमेव दृष्टान्तमाह वेदान्तेति ब्रह्ममीमांसा वेदान्तस्तत्र यथा चिदानन्दरूपोऽयं पुरुष इत्यनेन चिदानन्दयोरेकब्रह्मरूपत्वमुपपादितं तथा चिदानन्दचमत्काराणामेकरसरूपत्वमिति भावः ।

(न) शब्दोपहितरूपान् काव्यप्रकाशितस्वरूपान् । बुद्धेर्व्यञ्जनाजन्यबोधस्य । कंसादीनिति वीररसाद्यालम्बविभावाभिप्रायेण । साधनत्वे-

तद्भेदावाह।

**आलम्बनोद्दीपनाख्यौ तस्य भेदावुभौ स्मृतौ।**

स्पष्टम्॥ तत्र।

**आलम्बनं नायकादिस्तमालम्ब्य रसोद्गमात्॥**

आदिशब्दान्नायिकाप्रतिनायकादयः। अत्र यो यस्य रसस्य विभावः स तत्स्वरूपवर्णने वक्ष्यते। तत्र नायकः।

**त्यागी कृती कुलीनः सुश्रीको रूपयौवनोत्साही।**
**दक्षोऽनुरक्तलोकस्तेजोवैदग्ध्यशीलवान् नेता।(न)**

दक्षः क्षिप्रकारी। शीलं सद्वृत्तम्। एवमादिगुणसम्पन्नो नेता नायको भवति तद्भेदानाह।

**धीरोदात्तो धीरोद्धतस्तथा धीरललितश्च।**
**धीरप्रशान्त इत्ययमुक्तः प्रथमश्चतुर्भेदः॥**

स्पष्टम् तत्र धीरोदात्तः।

---

नेति विशेषणे तृतीया। मन्यते सामाजिक इति शेषः। तद्भेदौ विभावप्रकारौ तस्य विभावस्य। नायकादिरिति नायका रतेर्नायक आलम्बनं तं नायकादिं आलम्ब्य विषयीकृत्य। त्यागी दाता कृती वीरः कुलीनः सत्कुलोद्भवः उत्साहः कर्मण्यध्यवसायस्तद्युक्तः निगूढ़ाभिप्रायत्वं वैदग्ध्यं शीलं सद्वृत्तं नेता नायकः।

(प) तद्भेदान् नायकप्रकारान् अतिगम्भीरो दुरवबोधाभिप्रायः। स्थेयान् कर्मणि स्थिरतरः चपलः कर्मण्यस्थिरः अहङ्कारो अहं महा-

अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।
स्थेयान् निगूढमानो धीरोदात्तो दृढव्रतः कथितः॥

अविकत्थनोऽनात्मश्लाघाकरः। महासत्त्वो हर्षशोकाद्यनभिभूतस्वभावः। निगूढमानो विनयच्छन्नगर्व्वः। दृढव्रतोऽङ्गीकृतनिर्वाहकः। यथा रामयुधिष्ठिरादिः॥

अथ धीरोद्धतः।

मायापरः प्रचण्डश्चपलोऽहङ्कारदर्पभूयिष्ठः।
आत्मश्लाघानिरतो धीरैर्धीरोद्धतः कथितः॥

यथा भीमसेनादिः॥

अथ धीरललितः।

निश्चिन्तो मृदुरनिशं कलापरो धीरललितः स्यात्।

कला नृत्यादिका। यथा रत्नावल्यादौ वत्सराजादिः॥

अथ धीरप्रशान्तः।

सामान्यगुणैर्भूयान्द्विजादिको धीरप्रशान्तः स्यात्॥

यथा मालतीमाधवादौ माधवादिः॥

---

एषाञ्च शृङ्गारादिरूपत्वे भेदानाह।

एभिर्दक्षिणधृष्टानुकूलशठरूपिभिस्तु षोडशधा।

तत्र तेषां धीरोदात्तादीनां प्रत्येकं दक्षिणधृष्टानुकूलशठत्वेन षोडशप्रकारो नायकः॥

---

निति ज्ञानविशेषः दर्पः शौर्य्य वीर्य्याद्यतिशयः मृदुरप्रचण्डचरितः सामान्यगुणैर्नायकसामान्यगुणैः। धीरोदात्तादित्रितयभिन्नो नायको

**एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः।**

द्वयोस्त्रिचतुःप्रभृतिषु नायिकासु तुल्यानुरागो दक्षिण-नायकः। यथा। (फ)

"स्नाता तिष्ठति कुन्तलेश्वरसुता वारोऽङ्गराजस्वसु-
र्द्यूतैर्रात्रिरियं जिता कमलया देवी प्रसाद्याद्य च।
इत्यन्तःपुरसुन्दरीः प्रति मया विज्ञाय विज्ञापिते
देवेनाऽप्रतिपत्तिमूढमनसा द्वित्राः स्थितं नाडिकाः" ॥ १ ॥*

**कृतागा अपि निःशङ्कस्तर्जितोऽपि न लज्जितः।**
**दृष्टदोषोऽपि मिथ्यावाक् कथितो धृष्टनायकः॥**

यथा मम।

"शोणं वीक्ष्य मुखं विचुम्बितुमहं यातः समीपं ततः
पादेन प्रहृतं तया सपदि तं धृत्वा सहासे मयि।
किञ्चित् तत्र विधातुमक्षमतया वाष्पं त्यजन्त्याः सखे
ध्यातश्चेतसि कौतुकं वितनुते कोपोऽपि वामभ्रुवः" ॥

धीरप्रशान्त इत्यभिप्रायः एषां धीरोदात्तादीनां। षोड़शेति शृङ्गारे षोड़शप्रकारो नायको भवति रसान्तरे तु चतुष्प्रकार इत्यवधेयं।

(फ) स्नाता ऋतुस्नाता वारः सुरतार्थं नियमितदिवसः जिता जयेनात्मसुरतार्थं प्राप्ता देवी कृताभिषेका राजपत्नी देवेन राज्ञा अप्रतिपत्त्या

* प्रसाद्या अनुनेया स्वयं कृतापराधत्वादिति भावः। इति इत्थं अन्तःपुरसुन्दरीः प्रति विज्ञाय यस्या यद्यद्वक्तव्यमिति विदित्वा विज्ञापिते निवेदिते सतीत्यर्थः। द्वित्रानाड़िकाः व्याप्यस्थितं तूष्णीमिति शेषः।

अनुकूल एकनिरतः ।

एकस्यामेव नायिकायामासक्तोऽनुकूलनायकः । यथा ।

"अस्माकं सखि वाससी न रुचिरे ग्रैवेयकं नोज्ज्वलं
नो वक्रा गतिरुद्धतं न हसितं नैवास्ति कश्चिन्मदः ।
किन्त्वन्येऽपि जना वदन्ति सुभगोऽप्यस्याः प्रिया नान्यतो-
दृष्टिं निक्षिपतीति विश्वमियता मन्यामहे दुःस्थितम्" ॥ *

शठोऽयमेकत्र बद्धभावो यः ।
दर्शितबहिरनुरागो विप्रियमन्यत्र गूढमाचरति ।

यः पुनरेकस्यामेव नायिकायां बद्धभावो द्वयोरपि नायिकयोर्बहिर्दर्शितानुरागोऽन्यस्यां नायिकां गूढं विप्रियमाचरति स शठनायकः । यथा । (फ)

---

कर्त्तव्यानिश्चयेन मूढं व्याकूलं अप्राप्तिनिश्चयशून्यं वा मनो यस्य तेन । कृतागाः कृतापराधः मिथ्यावाक् मयैतन्न कृतमित्ययथार्थवचनः तं पादं अत्र प्रथमपादेन कारिकायाः प्रथमपादोक्तं द्वितीयपादेन द्वितीय-पादोक्तं लक्षणं वेदितव्यं । अस्माकमिति कस्याश्चिन्नायिकाया उक्तिरियं ग्रैवेयकं कण्ठभूषणं वक्रा चिला उद्धतमुत्कटं सौभाग्ययौवनाद्यवलेपजो विकारो मदः । नायकवशीकरणकारणं मम किमपि नास्ति किन्तु तथापि अन्ये परकीया अपिना स्वकीया सुभगोऽपि नायिकान्तरप्रियोऽपि यद्वा मनोज्ञोऽपि । अन्यतो नायिकान्तरे इयता मिथ्यावादेन दुःस्थितं दुष्टचित्तं प्रतिकूलं वा । बद्धभावो निभृतानुरागः दर्शितो भूषणदानादि-साम्येन प्रकटितो बहिःसुरतातिरिक्तोऽनुरागो येन सः ।

---

*प्रवासे स्वस्वामिनं प्रति कस्यचिदुक्तिरियम् । वामभ्रुवः सुन्दर्या मत्प्रियाया इति शेषः ।

"शठोऽन्यस्याः काञ्चीमणिरणितमाकर्ण्य सहसा
यदाश्लिष्यन्नेव प्रशिथिलभुजग्रन्थिरभवः ।
तदेतत् क्वाचक्षे घृतमधुमयत्वद्बहुवचो-
विषेणाघूर्णन्ती किमपि न सखी मे गणयति" ॥*

एषाञ्च त्रैविध्यात् सर्व्वेषामुत्तमाधममध्यमत्वेन ।
उक्ता नायकभेदाश्चत्वारिंशत्तथाऽष्टौ च ॥

सर्वेषामुक्तषोडशभेदानाम् ॥

अथ प्रसङ्गादेतेषां सहायानाह ।

दूरानुवर्त्तिनि स्यात् तस्य प्रासङ्गिकेतिवृत्ते तु ।
किञ्चित्तद्गुणहीनः सहाय एवास्य पीठमर्द्दाख्यः ॥

तस्य नायकस्य बहुव्यापिनि प्रसङ्गसङ्गते इतिवृत्तेऽनन्तरोक्तैर्नायकसामान्यगुणैः किञ्चिदूनः पीठमर्द्दनामा सहायो भवति । यथा रामचन्द्रादीनां सुग्रीवादयः ॥

अथ शृङ्गारसहायाः ।

शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः स्युः ।
भक्ता नर्म्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः ॥

---

(ब) शठ इति हृत्वा वचनमिदं काचक्षे कुत्र कथयामि न कुत्रापीत्यर्थः । घृतमधुमयेति घृतमधुतुल्येत्यर्थः घृतमधु यथा आपाततः स्वादु पश्चाद्विषं तथा तव वचनमप्यापाततो रमणीयं पश्चादनिष्टाचरणेनायथा-

---

* घृतमधुमयेन घृतमधुतुल्येन तव बहुवचोरूपविषेण आघूर्णन्ती मे मम सखी किमपि न गणयति किं कर्त्तव्यमिति नावधारयतीत्यर्थः ।

आदिशब्दान्मालाकाररजकताम्बूलिकगान्धिकादयः॥

तत्र विटः। (ब)

सम्भोगहीनसम्पद्विटस्तु
धूर्त्तः कलैकदेशज्ञः।
वेशोपचारकुशलो वाग्मी
मधुरोऽथ बहुमतो गोष्ठ्यां॥

चेटः प्रसिद्ध एव।

कुसुमवसन्ताद्यभिधः कर्म्मवपुर्वेशभाषाद्यैः।
हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्म्मज्ञः॥

स्वकर्म भोजनादि॥

अर्थचिन्तने सहायमाह।

मन्त्री स्यादर्थचिन्तायामर्थास्तन्त्रावपादयः।

यत्त्वत्र सहायकथनप्रस्तावे "मन्त्री स्वञ्चोभयञ्चापि सखा

---

र्थ्यत्वे प्रतिभासाद्विप्रतुल्यमित्यर्थः। किमपि हितमहितं वा गणयति निश्चिनोति एतेषां नायकानां दुरानुवर्त्तिनीत्यस्यार्थमाह बहुव्यापिनीति इतिवृत्ते कर्त्तव्यकर्म्मणि भक्ता नायकानुरक्ताः नर्मसु परिहासेषु शुद्धाः परदारगमनादिदोषरहिताः।

(भ) सम्भोगहीना उपभोगरहिता सम्पद्यस्य सः यद्वा सम्भोगेन हीना अपकृष्टा सम्पद्यस्य सः। नृत्यादिकलानामेकदेशं जानाति न तु समुदायं। वेशस्य उपचारे करणे कुशलः यद्वा वेशस्य उपचारः प्रीतिजननानुकूलव्यापारस्तयोः कुशलः। विदूषकमाह कुसुमेति

तस्यार्थचिन्तने" इति केनचिल्लक्षणं कृतं तदपि शास्त्रोऽर्थ-चिन्तनोपायलक्षणप्रकरणे लक्षितव्यं न तु सहायकथन-प्रकरणे नायकस्य। "अर्थचिन्तने मन्त्री सहायः" इत्युक्ते-ऽपि नायकस्यार्थत एव सिद्धत्वात्। यदप्युक्तम्। "मन्त्रिणा ललितः शेषा मन्त्रिस्वायत्तसिद्धयः" इति तदपि स्वलक्षण-कथनेनैव लक्षितस्य धीरललितस्य मन्त्रिमात्रायत्तार्थ-चिन्तनोपपत्तेर्गतार्थम्। न चार्थचिन्तने तस्य मन्त्री सहायः किन्तु स्वयमेव निष्पादकः तस्यार्थचिन्तनाद्यभावात्॥ (भ)

अथान्तःपुरसहायाः।

तद्वदवरोधे।

वामनषण्डकिरातम्लेच्छाभीराः शकारकुब्जाद्याः

---

वपुरिति शरीरचेष्टाविशेष इत्यर्थः। मन्त्रीति अस्येति सहाय इति चानुषज्यते। चिन्तायामुपायनिरूपणे। स्वमण्डले क्रियमाणं कर्म तन्त्रं। परमण्डले क्रियमाणं कर्म आवापः। आदिना शत्रुनिग्रहादयः यस्त्विति स्वञ्चेति चकारो वार्थ उभयं मन्त्रिस्वद्वयं। तस्य नायकस्य। सहाय-कथनपरत्वे दोषमाह नायकस्येति एवञ्च स्वञ्चेत्यादिनिरर्थकं। तदनु-पादानेऽपि तल्लाभात्। स्वयं चिन्तापक्षे स्वस्य सहकारित्वरूपसहाय-त्वानुपपत्तेरुभयचिन्तायां कारणान्तरप्रसङ्गाच्चेति भावः। स्वशब्द-स्योपायार्थत्वं न तु सहायपरत्वं इत्यवगन्तव्यं। मन्त्रिणेति आयत्त-सिद्धिरित्यन्वयः। ललितो धीरललितः। शेषा धीरोदात्तादयः। स्वल-क्षणेति निश्चिन्त इति धीरललितलक्षण निविष्टेन तस्यार्थचिन्तनाद्य-भावः तेन च मन्त्रिमात्रायत्तार्थसिद्धिकत्वं प्रतीयते इति भावः। तस्य धीरललितस्य स्वयमेव निष्पादकः प्रधानकारणं।

(भ) तद्वदिति अवरोधेऽन्तःपुरे वामनादयो नायकस्य सहाया

मदमूर्खताभिमानी दुष्कुलतैश्वर्य्यसंयुक्तः ।
सोऽयमनूढाभ्राता राज्ञः श्यालः शकार इत्युक्तः ॥

आद्यशब्दान्मूकादयः । तत्र षण्डवामनकिरातकुब्जादयो यथा रत्नावल्याम् ।

"नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-
मन्तःकञ्चुकिकञ्चुकस्य विशति त्रासादयं वामनः ।
पर्य्यन्ताश्रयिभिर्निजस्य सदृशं नाम्नः किरातैः कृतं
कुब्जा नीचतयैव यान्ति शनकैरात्मेक्षणाशङ्किनः" ॥*

शकारो मृच्छकटिकादिषु प्रसिद्धः । अन्येऽपि यथा दर्शनं ज्ञातव्याः ॥

अथ दण्डसहायाः ।

दण्डे सुहृत्कुमाराटविकाः सामन्तसैनिकाद्याश्च ।

दुष्टनिग्रहो दण्डः स्पष्टम् ॥ (म)

---

इत्यर्थः । षण्डश्छिन्नोपस्थः क्लीबो वा । शकारसाह मदेति मदमूर्खताभ्यामभिमानी अहं महानिति ज्ञानवान् मदादित्रयवान् वा । नष्टमिति वानरवेगेनान्तःपुरप्रविष्टं विदूषकमालोक्य भयेनान्तःपुरस्थानां पलायनवर्णनमिदं नष्टमदर्शनतां प्राप्तं वर्षवरैः षण्डैः । सौविदल्लाः कञ्चुकिन इत्यमरः । किरं पर्य्यन्तदेशमततीति किरातः

---

* मनुष्यगणनाभावात् मनुष्येषु अगण्यत्वात् । त्रपां लज्जां । त्रासादिति सर्वत्र प्रयोज्यम् । कञ्चुकस्य अन्तरभ्यन्तरम् । पर्य्यन्ताश्रयिभिः नगरप्रान्तवर्त्तिभिः किरातैः व्याधैः ।

अथ धर्मसहायाः।

ऋत्विक् पुरोधसः स्युर्ब्रह्मविदस्तापसास्तथा धर्मे॥

ब्रह्मविदो वेदविद आत्मविदो वा। तत्र च।

उत्तमाः पीठमर्द्दाद्याः।

आद्यशब्दान्मन्त्रिपुरोहितादयः।

मध्यौ विटविदूषकौ।

तथा शकारचेटाद्या अधमाः परिकीर्त्तिताः॥

आद्यशब्दात्ताम्बूलिकगान्धिकादयः॥

अथ प्रसङ्गाद्दूतानां विभागगर्भलक्षणमाह।

निसृष्टार्थो मितार्थश्च तथा सन्देशहारकः।

कार्य्यप्रेष्यस्त्रिधा दूतो दूत्यश्चापि तथाविधाः॥

तत्र कार्य्यप्रेष्यो दूत इति लक्षणम्। तत्र।

उभयोर्भावमुन्नीय स्वयं वदति चोत्तरं।

सुश्लिष्टं कुरुते कार्य्यं निसृष्टार्थस्तु स स्मृतः॥

उभयोरिति येन प्रेषितो यदन्तिकं प्रेषितश्च॥

---

इति नाम्नः स्ववाचकशब्दस्य सदृशं योगं पर्य्यन्तदेशं प्राप्त इत्यर्थः। मृच्छकटिका नाटिकाविशेषः अन्ये म्लेच्छाभीरादयः आटविका वनचारिणः।

(य) ऋत्विगिति धर्मे धर्मकर्मणि नायकस्य सहाया इत्यर्थः। आत्मविदो योगिनः। सुश्लिष्टं सुमङ्गलं। मितार्थभाषी अल्पार्थ-

मितार्थभाषी कार्य्यस्य सिद्धिकारी मितार्थकः ।
यावद्भाषितसंदेशहारः संदेशहारकः ॥

अथ सात्त्विकनायकगुणाः ।

शोभा विलासो माधुर्य्यङ्गाम्भीर्य्यं धैर्य्यं तेजसी ।
ललितौदार्य्यमित्यष्टौ सत्त्वजाः पौरुषा गुणाः ॥

तत्र ।

शूरता दक्षता सत्यं महोत्साहोऽनुरागिता ।
नीचे घृणाऽधिके स्पर्द्धा यतः शोभेति तां विदुः ॥

तत्रानुरागिता यथा ।

"अहमेव मतो महीपतेरिति सर्वः प्रकृतिष्वचिन्तयत् ।
उदधेरिव निम्नगाशतेष्वभवन् नास्य विमानना क्वचित्" ॥*

एवमन्यदपि ॥

अथ विलासः ।

धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः । (य)

---

कथकः । स्वामिना यावदुक्तं तावदेव सन्देशस्तं हरति व्याहरतीति स तथा । सात्त्विकाः सत्वगुणाज्जाताः । स्तम्भादीनां सात्त्विकत्वेऽपि ते नायकस्य नायिकायाश्च भवन्ति एते पुनर्नायकस्यैवेति विशेषः । पौरुषा नायकसम्बन्धिनः । महानुत्साह उद्यमः । नीचे क्षुद्रे घृणा

---

* क्वचित् क्वापि जने इत्यर्थः ।

यथा

"दृष्टिस्तृणीकृतजगत्त्रयसत्त्वसारा
धीरोद्धता नमयतीव गतिर्धरित्रीम्।
कौमारकेऽपि गिरिवद्गुरुतान्दधानो-
वीरो रसः किमयमित्युत दर्प एषः" ॥ *

संक्षोभेष्वप्यनुद्वेगो माधुर्य्यं परिकीर्त्तितम् ॥

ऊह्यमुदाहरणम् ॥

भीशोकक्रोधहर्षाद्यैर्गाम्भीर्य्यं निर्विकारता ।

यथा ।

"आहूतस्याभिषेकाय विसृष्टस्य वनाय च ।
न मया लक्षितस्तस्य स्वल्पोऽप्याकारविभ्रमः" ॥

व्यवसायादचलनं धैर्य्यं विघ्ने महत्यपि ॥

---

दया। महीपतेरजस्य प्रकृतिषु मन्त्रिप्रभृतिषु। निम्नगाशतेषु नदीस-मूहेषु अस्य अजस्य। अन्यत् स्फुटतरादि।

(२) तृणीकृतौ तुच्छीकृतौ जगत्त्रयस्य सत्त्वमुत्साहः सारो बलञ्च यया सा धीरा मन्थरा उद्धता उद्भटा। एतेन गतेश्चित्रत्वं नैकरू-पत्वम्। अत्र नायकस्योत्साहदर्पयोरतिशयस्य सूचनाय वीररसत्वेन दर्पत्वेन च उल्लेखः। ऊह्यमुदाहरणमिति यथा मम रामविलासे "तच्चीपीय कटुकर्णपदव्याख्यं दमाप न मनागोऽपि रामः। शूलपाणिरिव घोर-

---

* रणाङ्गने कुशस्य उद्धतगमनं दृष्ट्वा रामस्य सविस्मयवचनमि-दम्। अयं कुशः।

यथा ।

"श्रुताप्सरोगीतिरपि क्षणेऽस्मिन्
हरः प्रसङ्ख्यानपरो बभूव ।
आत्मेश्वराणां न हि जातु विघ्नाः
समाधिभेदप्रभवो भवन्ति ॥*

**अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् ।**
**प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतम् ॥**
**वाग्वेशयोर्मधुरता तद्वच्छृङ्गारचेष्टितं ललितम् ।**
**दानं सप्रियभाषणमौदार्य्यं शत्रुमित्रयोः समता ॥**

एषामप्युदाहरणान्यूह्यानि ॥ (र)

---

सुदग्धं कालकूटपटलं किल पूर्वं । व्यवसायात्मारब्धकर्मणः अचलनमच्यवनं । प्रसंख्यानपरो योगनिष्ठः आत्मेश्वराणां मनोनिरोधक्षमाणां । तस्य श्रीरामस्य आकारो मुखनेत्रादिचेष्टादिस्तस्य विभ्रमो वैपरीत्यं येन हर्षशोकादयो लक्ष्यन्ते अधिक्षेपो भर्त्सनं अपमानः पराभवः आदिना अपकारादिः प्रयुक्तस्य कृतस्य परेण शत्रुणा उदाहरणं यथा रामविलासे "विष्फारस्फुरदोष्ठपल्लवमतिस्विन्नानिकान्तं क्रुधा किञ्चिल्लोहितलोचनभ्रुजयुगेनाकुञ्चितभ्रूलतं। युक्तं तस्य दुरुक्तमुत्तरयितुं तेजोभराद्युद्यतं नेत्रान्तेन निवार्य्य लक्ष्मणमसुं प्रोचे स्वयं राघवः" । विष्फारमत्यर्थं स्फुरत् ओष्ठपल्लवं यस्य तं तस्य भार्गवस्य असुं भार्गवम् । तद्वन्मधुरतायुक्तं ललितौदार्य्ययोरुदाहरणे मम । "वीक्ष्य तस्य रुचिरं कलेवरं

---

* अस्मिन् क्षणे वसन्ताविर्भावसमये । हि यतः विघ्नाः अन्तरायाः आत्मेश्वराणां जितेन्द्रियाणां समाधिभेदे योगभञ्जने न हि प्रभवो समर्था भवन्ति ।

यथा।

**अथ नायिका त्रिविधा स्वाऽन्या साधारणी स्त्रीति।**
**नायकसामन्यगुणैर्भवति यथासम्भवैर्युक्ता॥**

नायिका पुनर्नायकसामान्यगुणैस्त्यागादिभिर्यथासम्भवैर्युक्ता भवति। सा च स्वस्त्री अन्यस्त्री साधारणस्त्रीति त्रिविधा॥तत्र स्वस्त्री।

**विनयार्ज्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया।**

"लज्जापज्जत्तपसाहणाइं परभत्तिणिप्पिवासाइं।
अविणयदुम्मेहाइं धन्नानं घरे कलत्ताइं"॥

**सापि कथिता त्रिविधा मुग्धा मध्या प्रगल्भेति।**

तत्र।

**प्रथमावतीर्णयौवनमदनविकारा रतौ वामा।**
**कथिता मृदुश्च माने समधिकलज्जावती मुग्धा॥**

---

सन्निशम्य मधुरञ्च भाषितं स्मारं स्मारमुपलभ्य विभ्रमं दास्यमस्य कलयन्ति योषितः।" "दत्ते सहासवदनं सप्रियवचनञ्च भूपालः। रिपुरपि लभते मानं निरीतिभावं धरा तस्मात्।"

(ल) स्वा स्वकीया अन्या अन्यदीया साधारणा सर्वोपभोगयोग्या स्त्रीति सर्वत्रान्वेति यथासम्भवैरिति तेन दक्षते तृसाहतेजांसि नायिकानां न वर्णनीयानि अतएव दक्षतादयो नायकस्यैव सात्त्विका गुणा उक्ताः। लज्जेति लज्जापर्य्याप्तप्रसाधनानि परभर्तृनिष्पिपासानि। अविनयदुर्मेधानि धन्यानां गृहे कलत्राणि। इति सम्।

तत्र प्रथमावतीर्णयौवना यथा मम तातपादानाम् ।

"मध्यस्य प्रथिमानमेति जघनं वक्षोजयोर्मन्दतां
दूरं यात्युदरञ्च रोमलतिका नेत्रार्ज्जवं धावति ।
कन्दर्पं परिवीक्ष्य नूतनमनोराज्याभिषिक्तं क्षणा-
दङ्गानीव परस्परं विदधते निर्लुण्ठनं सुभ्रुवः" ॥*

तत्र प्रथमावतीर्णमदनविकारा यथा मम प्रभावती-परिणये । (ल)

"दत्ते सालसमन्थरं भुवि पदं निर्य्याति नान्तःपुरात्
नोद्दामं हसति क्षणात् कलयते ह्रीयन्त्रणां कामपि ।

लज्जायै पर्य्याप्तानि समर्थानि स्वीकृतानि प्रसाधनानि भूषणानि येषां तानि । अविनयदुर्मेधानि अविनयानभिज्ञानि । सापि स्वकीयापि अव तीर्णसत्पत्तम् । मध्यस्येति प्रथिमाणं स्थूलत्वं मन्दता कृशत्वं धावति प्राप्नोति नूतनं यथास्यात्तथा मनोराजेऽभिषिक्तं राज्ञः प्रथमाभिषेक-समये प्रजा हर्षेण परस्परं द्रव्यं लुण्ठन्तीति व्यवहारः ।

(ल) दत्त इति सालसं मन्थरञ्च यथास्यात्तथा दत्तेक्षणात्

* कन्दर्पं कामं नूतनमनोराज्याभिषिक्तं दृष्ट्वा क्षणात् क्षणमात्रेणैव । अङ्गानि परस्परं अन्योऽन्यं निर्लुण्ठनं विदधते । तथा हि जघनं मध्यदेशस्य प्रथिमानं विशालतां एति प्राप्नोति मध्यदेशे या विशालता आसीत् सा जघनेन लुण्ठिता जघनस्य या क्षीणता आसीत् सा मध्यदेशेनेति भावः । एवं उदरे या स्थूलतासीत् सा स्तनाभ्यां लुण्ठिता स्तनयोः क्षीणता च उदरेणेति भावः । नेत्रयोर्या सरलतासीत् सा रोमावलिभिर्लुण्ठिता रोमावल्याश्च या कुटीलतासीत् इदानीं सा नेत्राभ्यामिति तात्पर्य्यम् ।

किञ्चिद्भावगभीरवक्रिमलवस्पृष्टं मनाग्भाषते
सभ्रूभङ्गमुदीच्यते प्रियकथामुल्लासयन्तीं सखीम्" ।*

इतो वामा यथा ।

"दृष्टा दृष्टिमधो ददाति कुरुते नालापमाभाषिता
शय्यायां परिवृत्य तिष्ठति बलादालिङ्गिता वेपते ।
निर्यान्तीषु सखीषु वासभवनान्निर्गन्तुमेवेहते
जाता वामतयैव संप्रति मम प्रीत्यै नवोढा प्रिया" ॥*

मानि मृदुर्यथा ।

"सा पत्युः प्रथमापराधसमये सख्योपदेशं विना
नो जानाति सविभ्रमाङ्गवलनावक्रोक्तिसंसूचनम् ।
स्वच्छैरच्छकपोलमूलगलितैः पर्य्यस्तनेत्रोत्पला
बाला केवलमेव रोदिति लुठल्लोलालकैरश्रुभिः ॥"

समधिकलज्जावती यथा "दत्ते सालसमन्थरमित्यत्र श्लोके"॥

अत्र समधिकलज्जावतीत्वेनापि लब्धाया रतिवामताया विच्छित्तिविशेषवत्तया पुनः कथनम् ॥ अथ मध्या । (व)

---

प्रतिक्षणं कथयते भक्ते क्रिया यन्त्रणां व्याकुलभावं कामप्यनिर्वचनीयां भावेन निगूढाभिप्रायेण किञ्चिद्गभीरं दुरवबोधार्थं वक्रिम्णा लवं स्पृष्टञ्च यथास्यात्तथा भाषते उल्लासयन्तीं सादरं कथयन्तीं इच्छते चेष्टते । सापत्युरिति अपराधोऽन्यनायिकासङ्गमः प्राथमिकतज्ज्ञानसमये सख्या सख्येन वा य उपदेशस्तं विभ्रमः स्वरविकारः अङ्गस्य वलनं सम्वरणं ताभ्यां सहिता यदि विभ्रमो नस्यात्तदा पत्युरपराधे ईर्ष्यापि न स्यादितिभावः । वक्राया अपराधव्यञ्जिकायाः उक्तेः संसुचनं कथनम् । पर्य्यस्ते चपले व्याकुले वा नेत्रोत्पले यस्याः सा रोदित्येव न तु भ्रुकुटिबन्धादिकं करोति लुठन्तो लोलाश्चञ्चला अलका यत्र तैः नत्रु

मध्या विचित्रसुरता प्ररूढस्मरयौवना ।
ईषत्प्रगल्भवचना मध्यमव्रीडिता मता ॥

तत्र विचित्रसुरता यथा ।

"कान्ते तथा कथमपि प्रथितं मृगाक्ष्या
चातुर्यमुद्धतमनोभवया रतेषु ।
तत्कूजितान्यनुवदद्भिरनेकवारं-
शिष्यायितं गृहकपोतशतैर्यथास्याः" ॥

प्ररूढस्मरा यथाऽत्रैवोदाहरणे ॥ प्ररूढयौवना । यथा मम ।

"नेत्रे खञ्जनगञ्जने सरसिजप्रत्यर्थि पाणिद्वयं
वक्षोजौ करिकुम्भविभ्रमकरीमत्युन्नतिं गच्छतः ।
कान्तिः काञ्चनचम्पकप्रतिनिधिर्वाणी सुधास्यन्दिनी
स्मेरेन्दीवरदामसोदरवपुस्तस्याः कटाक्षच्छटा" ॥

एवमन्यत्रापि ।

अथ प्रगल्भा ॥

स्मरान्धा गाढतारुण्या समस्तरतकोविदा ।
भावोन्नता दरव्रीडा प्रगल्भाक्रान्तनायका ॥ (श)

---

समधिकलज्जावती तावद्रतौ प्रतिकूला भवति इति समधिकलज्जावतीत्यनेनैव तस्या ग्रहणे सिद्धे रतौ वामा इति पृथगुपादानं किमर्थमित्याह अत्रेति विच्छित्तिविशेषवत्तया वैचित्र्यविशेषसम्पादकत्वेन ।

(श) प्ररूढे अत्यर्थमुत्पन्ने स्मरयौवने यस्याः सा मध्यमं व्रीडितं लज्जा यस्याः सा तस्याः । कूजितानि अव्यक्तशब्दविशेषान् शिष्यायितं शिष्यवदाचरितं । नेत्रे इति खञ्जनानां गञ्जने पराभवकारिणी प्रत्यर्थिवैरिताभ्यां साद्दृश्यलाभः करिकुम्भयोर्विभ्रमं करोति या

स्मरान्धा यथा ।

"धन्यासि या कथयसि प्रियसङ्गमेऽपि
विस्रब्धचाटुकशतानि रतान्तरेषु ।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किञ्चिदपि स्मरामि" ॥

गाढतारुण्या यथा ।

"अत्युन्नतस्तनयुगा नयने सुदीर्घे
वक्रे भ्रुवावतितरां वचनं ततोऽपि ।
मध्योऽधिकं तनुरनूनगुरुर्नितम्बो
मन्दा गतिः किमपि चाद्भुतयौवनायाः" ॥

समस्तरतकोविदा यथा ।

---

तां स्मेरस्य प्रफुल्लस्य इन्दीवरदाम्नः सोदरं सदृशं वपुः स्वरूपं यस्याः सा छटा धारा । एवमिति एवं लक्षणानुसारेण अन्यत्र किञ्चित् प्रगल्भवचनामध्यमव्रीडितयोरुदाहरणमूह्यमित्यर्थः । यथा "सुभग कुरु-वकस्त्वं किं समालिङ्गनोत्कः किमु मुखमदिरेच्छुः केशरो नो हृदिस्थः ॥ त्वयि नियतमशोके युज्यते पादघातः प्रियमिति परिहासात् पेशलं काचिदूचे" । "किञ्चिदाकुञ्चयत्यास्यं मन्दहासातिसुन्दरम् । दर-मुद्रितनेत्रान्ता चुम्बतीशं नितम्बिनी" । भावैरनुभावैः उन्नता प्राप्ता-धिकरूपा ।

(च) धन्यासीति सखीनां मध्ये सुरतसमये बाह्यकथालापिनीं काञ्चिदुपहसन्त्याः कस्याश्चिदुक्तिरियं प्रियस्य सङ्गमेऽपि स्पर्शमात्रेऽपि या त्वं विस्रब्धेन विश्वासेन चाटुकशतानि प्रियोक्तिशतानि कथयसि सा त्वं धन्या किमुत रतान्तरेषु शपामि शपथं करोमि अत्र परस्मैपदमशिष्टं । ततोऽपि भ्रुवोरपि अतितरामत्यर्थं वक्रमित्यर्थः । अनूनगुरुः अतिस्थूलः ।

"क्वचित्ताम्बूलाक्तः क्वचिदगरुपङ्काङ्कमलिनः
क्वचिच्चूर्णोद्गारी क्वचिदपि च सालक्तकपदः।
वलीभङ्गाभोगैरलकपतितैः शीर्णकुसुमैः
स्त्रिया: सर्वावस्थं कथयति रतं प्रच्छदपटः" ॥ (ष)

आवोन्नता। यथा।

"मधुरवचनैः सभ्रूभङ्गैः कृताङ्गुलितर्ज्जनै-
रभसरचितैरङ्गन्यासैर्महोत्सवबन्धुभिः।
असकृदसकृत् स्फारस्फारैरपाङ्गविलोकितै-
स्त्रिभुवनजये सा पञ्चेषोः करोति सहायताम्" ॥ *

स्वल्पव्रीड़ा यथा। "धन्यासि या कथयसीत्यत्र"।

आक्रान्तनायका यथा।

---

किमप्यर्थं अङ्कुरयौवनाया उद्दामतारुण्यायाः। क्वचिदिति ताम्बूलाक्तः ताम्बूलजन्यरागमञ्चितः अगुरुः कालागुरुः अङ्कं चिह्नं चूर्णानि गन्धद्रव्यविशेषकणिका उद्गिरति निष्ठीवति यः सः पदं चिह्नं। वलीभिः त्रिवलीभिः कृता ये भङ्गा निम्नत्वानि तेषामाभोगैः परिपूर्णताभिः। अलकेभ्यः केशेभ्यः पतितैः स्खलितैः शीर्णकुसुमैः उपमर्द्दितपुष्पैश्चोपलक्षितः। सर्व्वावस्थं सर्वप्रकारं कथयति सूचयति प्रच्छदपटः शय्यावरणवस्त्रम्।

(स) मधुरेति कृतानि अङ्गुलितर्ज्जनानि यत्र तैः रभसरचितैः हर्षकृतैः महोत्सवस्य बन्धुभिर्ज्जनकैः स्फारस्फारैः अतिदीर्घैः।

---

* पञ्चेषोः कामस्य त्रिभुवनजये त्रिलोकजयाय सहायतां साहाय्यमानुकूल्यमित्यर्थः।

"स्वामिन् भङ्गुरयालकं सतिलकं भालं विलासिन् कुरु
प्राणेश ! त्रुटितं पयोधरतटे हारं पुनर्योजय ।
इत्युक्त्वा सुरतावसानसमये संपूर्णचन्द्रानना-
स्पृष्टा तेन तथैव जातपुलका प्राप्ता पुनर्मोहनम्"॥

मध्याप्रगल्भयोर्भेदान्तराण्याह ।

**ते धीरा चाप्यधीरा च धीराधीरेति षड्विधे ।**(व)

ते मध्याप्रगल्भे तत्र ।

**प्रियं सोत्प्रासवक्रोक्त्या मध्याधीरा वदेद्रुषा ।**
**धीराधीरा तु रुदितैरधीरा परुषोक्तिभिः ॥**

तत्र मध्याधीरा । यथा ।

"तदवितथमवादीर्यन्मम त्वं प्रियेति
प्रियजनपरिभुक्तं यद्दुकूलं दधानः ।
मदधिवसतिमागाः कामिनां मण्डनश्री-
र्व्रजति हि सफलत्वं वल्लभालोकनेन" ॥ (ह)

---

स्वामिन्निति भङ्गुरय भङ्गीयुक्तं कुरु त्रुटितं छिन्नं तेन स्वामिना मोहनं सुरतसुखादिज्ञानम् ।

(ह) मध्येति स्यानत्वेऽन्वेति सोत्प्रासवक्रोक्त्या सपरिहासश्लिष्टवचनेन दहेत् सन्तापयति रुषेति कर्त्तृविशेषणं । तदिति अवितथं सत्यं मण्डनेन भूषणेन कृता श्रीः शोभा वल्लभा प्रिया तत्कर्त्तृकालोकनेन । अत्र च अवितथमिति मिथ्या यद्वशात् मम तापाय प्रतिनायिकापरिहितवस्त्रं परिधाय मम गेहमागाः यद्यहं ते प्रिया स्यां तदा सन्तापजनकं कर्म न कुर्य्याः । एतत्तावत् सतां मण्डनं भवति

मध्यैव धीराधीरा । यथा ।

"बाले ! नाथ ! विमुञ्च मानिनि रुषं रोषान्मया किं कृतं
खेदोऽस्मासु न मेऽपराध्यति भवान् सर्वेऽपराधा मम ।
तत् किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते
नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते" ॥

इयमेवाधीरा । यथा ।

"सार्द्धं मनोरथशतैस्तव धूर्त्त ! कान्ता
सैव स्थिता मनसि कृत्रिमहावरम्या ।
अस्माकमस्ति न च कश्चिदिहावकाश-
स्तस्मात् कृतं चरणपातविड़म्बनाभिः" ॥ (च)

**प्रगल्भा यदि धीरा स्याच्छन्नकोपाकृतिस्तदा ।**
**उदास्ते सुरते तत्र दर्शयन्त्यादरान् बहिः ॥**

---

यदि तवैतन्मण्डनं तदा तज्जन्यशोभां या प्रिया भवति तामेवालोकय ममालोकनया किं प्रयोजनमिति श्लेष एवात्र वक्रोक्तिः ।

(च) बाले इति नायकस्य नायिकायाश्चोक्तिप्रत्युक्तिरूपः श्लोकोऽयं खेदोऽस्मासु कृत इत्यन्वयः । भवतस्तावदपराधो नास्ति । मम कृपा कथं खेद इत्यभिप्रायेणाह न मे इति यदि ममापराधो नास्ति तत्तदा कथं रोदिषि निःसम्बन्धस्य स्नेहाभावात्त्वदग्रे रोदनमफलमित्यभिप्रायेणाह का तवेति दयिता भार्य्या नास्मीति अहं न दयिता प्रेमपात्रमित्यर्थः । इयमेव मध्यैव सार्द्धमिति कृत्रिमेण स्वाभाविकेतरेण हावेन भावविशेषेण रम्या तव मनोरमा इह तव मनसि । कृतं व्यर्थं । चरणपातेन विड़म्बनाभिर्विद्रावैः ।

(क) प्रगल्भेति छन्ना संवृता कोपाकृतिः कोपसूचको मुखरागा-

तत्र प्रिये। यथा।

"एकत्रासनसंस्थितिः परिहृता प्रत्युद्गमाद्दूरतः
ताम्बूलानयनच्छलेन रभसात् श्लेषोऽपि संविघ्नितः।
आलापोऽपि न मिश्रितः परिजनं व्यापारयन्त्यान्तिके
कान्तं प्रत्युपचारतश्चतुरया कोपः कृतार्थीकृतः"॥

**धीराधीरा तु सोल्लुण्ठभाषितैः खेदयेदमुम्॥**

अमुं नायकम्। यथा मम।

"अनलङ्कृतोऽपि सुन्दर! हरसि मनो मे यतः प्रसभम्।
किं पुनरलङ्कृतस्त्वं संप्रति नखरक्षतस्तस्याः"॥

**तर्जयेत्ताडयेदन्या**

अन्या अधीरा। यथा "शोणं वीक्ष्य मुखम्" इत्यत्र।

अत्र च सर्वत्र रुषेत्यनुवर्त्तते।

**प्रत्येकं ता अपि द्विधा।**

**कनिष्ठज्येष्ठरूपत्वान्नायकप्रणयं प्रति॥ (क)**

---

दिर्यया। उदास्ते उदासीना अनुरागहीना भवति वहिर्व्रीडात् न त्वान्तरात्। तत्रेति विहृतोति प्रिये इति एकत्रेति एकस्मिन्नासने आसनसंस्थितिः उपवेशनसम्बन्धः रभसाच्छ्लेषो हर्षालिङ्गनं सम्बिघ्नितः सम्यक्प्रतिरुद्धः न मिश्रितः नोत्तरेण युक्तः कृतः व्यापारयन्त्या नायक-परिचर्यार्थं सव्यापारीकुर्वत्या अन्तिके इति विजनत्वाभावोपपत्तये उपचारतः प्रीतिहेतुव्यापारान् विधाय। कोप इति सम्भोगप्रतिरोधः कोपस्य फलं तेनैव कान्तो वशीकृत इति भावः। प्रियवद्धासमानर्मप्रयं सोल्लुण्ठं अनलंकृत इति किं पुनरिति किमुतेत्यर्थः। तस्याः प्रति-

ता अनन्तरोक्ताः षड्भेदा नायिकाः यथा ।

"दृष्ट्वैकासनसंस्थिते प्रियतमे पश्चादुपेत्यादरा-
देकस्या नयने पिधाय विहितक्रीडानुबन्धच्छलः ।
ईषद्वक्रिमकन्धरः सपुलकः प्रेमोल्लसन्मानसा-
मन्तर्हासलसत्कपोलफलकां धूर्त्तोऽपरां चुम्बति" ॥ *

**मध्याप्रगल्भयोर्भेदास्तस्माद्द्वादश कीर्त्तिताः ।**
**मुग्धा त्वेकैव तेन स्युः स्वीयाभेदास्त्रयोदश ॥**
**परकीया द्विधा प्रोक्ता परोढा कन्यका तथा ।**

तत्र ।

**यात्रादिनिरताऽन्योढ़ा कुलटा गलितत्रपा ॥**

यथा ।

"स्वामी निश्वसितेऽप्यसूयति मनोजिघ्रः सपत्नीजनः
श्वश्रूरिङ्गितदैवतं नयनयोरीहालिहो यातरः ।

---

नायिकाया घोणमित्यादि दृष्टनायकोदाहरणे उक्तं सर्वत्र लक्षणपञ्चके ।
(ख) दृष्ट्वेति प्रियतमे भार्य्ये एकस्याः स्वल्पप्रणयनायिकायाः क्रीड़ाया अनुबन्धः आरम्भः अपरामतिप्रणयिनीम् । तस्मादिति उपदर्शितलक्षणभेदादित्यर्थः । यात्रादीति उत्सवादीत्यर्थः । कुलटा परभर्तृगामिनी । स्वामीति निश्वसिते सतीत्यर्थः । निश्वसितेन प्रच्छन्न-कामुकप्राप्तिदुःखमनुमाय मत्सरमीर्ष्यतीति भावः । मनसो घ्राणजप्र-त्यक्षासम्भवेन अभिप्रायवेदने लक्षणा तस्या यथार्थं प्रयोजनं एवमय-

---

* अन्तर्हासेन आन्तरिकविकारेण लसन्तौ कपोलफलकौ यस्या-स्तादृशीम् ।

तद्दूरादयमञ्जलिः किमधुना दृग्भङ्गिभावेन ते
वैदग्धीमधुरप्रबन्धरसिक ! व्यर्थोऽयमत्र श्रमः" ॥ (ख)

अत्र हि मम परिणेताऽन्नाच्छादनादिदातृतया स्वाम्येव न तु वल्लभः। त्वन्तु वैदग्धीमधुरप्रबन्धरसिकतया मम वल्लभोऽसीत्यादिव्यङ्ग्यार्थवशादस्याः परनायकविषया रतिः प्रतीयते ॥

**कन्या त्वजातोपयमा सलज्जा नवयौवना।**

अस्याश्च पित्राद्यायत्तत्वात् परकीयात्वम्। यथा मालती। माधवादौ मालत्यादिः ॥

**धीरा कलाप्रगल्भा स्याद्वेश्या सामान्यनायिका ॥**
**निर्गुणानपि न द्वेष्टि न रज्यति गुणिष्वपि।**

---

योरपि इङ्गितं अभिप्रायसूचकचेष्टाविशेषः तद्वेत्तं तदभिज्ञा इहालिङ्गचेष्टाविशेषसूचनीयार्थाभिज्ञाः यातरः पतिभ्रातृः पत्नाः वैदग्ध्या मधुरो मनोहरः प्रबन्धः सुरतप्रयोगः तस्य रसयुक्तः यद्वा वैदग्ध्या मधुरा प्रबन्धो यस्य तत्सम्बोधने, तथा अत्र स्वाम्याद्याकीर्णे देशे श्रमो मत्प्राप्तिसाधनव्यापारः।

(ग) ननु स्वप्राप्तिसाधनव्यापारव्यर्थत्वकथनेनास्याः परनायकरत्यभावः प्रतीयते तेन च कुलटात्वाभाव इति। कथमस्याः परनायिकात्वमत आह अत्र हीति परिणेता विवाहकर्त्ता एतदुपलक्षणं अधुना अत्र पदाभ्यामपि कालान्तरे देशान्तरे च श्रमसार्थकत्वव्यञ्जनेनापि रतिः प्रतीयते इति अजातोपयमा अजातविवाहा उदाहरणान्तरन्तु नैषधीयचरिते यथा "अनैषधायैव जुहोति तातः किं मां कृशानौ न शरीरशेषाम्। ईष्टे तनूजन्मतनोः सनूनं मत्प्राणनाथस्तु नलस्तथापि"। अत्र

वित्तमात्रं समालोक्य सा रागं दर्शयेद्बहिः ॥
काममङ्गीकृतमपि परिक्षीणधनं नरम् ।
माता निष्कासयेदेषा पुनः सन्धानकाङ्क्षया ॥
तस्कराः पण्डका मूर्खाः सुखप्राप्तधनास्तथा । (ग)
लिङ्गिनश्छन्नकामाद्या आसां प्रायेण वल्लभाः ॥
एषापि मदनायत्ता क्वापि सत्यानुरागिणी ।
रक्तायां वा विरक्तायां रतमस्यां सुदुर्लभम् ॥

पण्डको वातरोगपण्डादिः । छन्नं प्रच्छन्नं ये कामयन्ते ते छन्नकामाः ॥ तत्र रागहीना यथा नटकमेलकादौ मदनमञ्जर्य्यादिः ॥ रक्ता यथा मृच्छकटिकादौ वसन्तसेनादिः ॥ पुनश्च ।

अवस्थाभिर्भवन्त्यष्टावेताः षोड़शभेदिताः ।
स्वाधीनभर्तृकातद्वत् खण्डिताऽथाभिसारिका ॥

---

विवाहात् पूर्वं दमयन्त्या नलानुरागः । साधारणस्त्रियमाह धीरेति सुरतपण्डितेत्यर्थः कला नृत्यगीतादयः अत्र प्रगल्भा अतिनिपुणाः बहिः कृत्रिमं काममत्यर्थं अङ्गीकृतं वल्लभत्वेन स्वीकृतं माता गृहोपकरणद्रव्याणि निःसारयेद्वाहयति सन्धानं सुरतार्थं सन्निधानं सुखेन अनायासेन प्राप्तं धनं यैस्ते ।

(ग) लिङ्गिनः तपस्विवेशधारिणः आसां वेश्यानां एषा वेश्यापि ईर्ष्याकषायिता ईर्ष्यया कलुषितमना ।

कलहान्तरिता विप्रलब्धा प्रोषितभर्तृका ।
अन्या वासकसज्जा स्याद्विरहोत्कण्ठिता तथा ॥

तत्र ।

कान्तो रतिगुणाकृष्टो न जहाति यदन्तिकं ।
विचित्रविभ्रमासक्ता सा स्यात् स्वाधीनभर्तृका ॥

यथा "अस्माकं सखि वाससी" इत्यादि ॥

पार्श्वमेति प्रियो यस्या अन्यसम्भोगचिह्नितः ।
सा खण्डितेति कथिता धीरैरीर्ष्याकषायिता ॥

यथा "तदवितथमवादीरित्यादि" ॥ (घ)

अभिसारयते कान्तं या मन्मथवशंवदा ।
स्वयं वाऽभिसरत्येषा धीरैरुक्ताऽभिसारिका

क्रमाद्यथा ।

"न च मेऽवगच्छति यथा लघुतां
करुणां यथा च कुरुते स मयि ।
निपुणं तथैनमभिगम्य वदे-
रभिदूति काचिदिति संदिदिशे" ॥

---

(ङ) अभिसारिकापदस्य व्युत्पत्तिलभ्यसर्थद्वयचरमलक्षणद्वय-
माह अभिसारयते इति न चेति स कान्तः अभिदूति अभिमुखगतां
दूतीं प्रति सन्दिदिशे वाचिकं न्यस्तवती । उत्तचिह्नं जर्ह्वं न्यस्तं
एतेन तयोः शब्दप्रतिरोधः प्रतिपादिता कृता तिमिरमेव अवगुण्ठ-
नपटः आच्छादनवस्त्रं तस्य क्षेपं निरासम् । प्रसङ्गादभिसरणक्रममाह

"उत्क्षिप्तं करकङ्कणद्वयमिदं बद्धा दृढं मेखला
यत्नेन प्रतिपादिता मुखरयोर्मञ्जीरयोर्मूकता ।
आरब्धे रभसान्मया प्रियसखि ! क्रीडाभिसारोत्सवे
चण्डालस्तिमिरावगुण्ठनपटक्षेपं विधत्ते विधुः" ॥

संलीना स्वेषु गात्रेषु मूकीकृतविभूषणा ।
अवगुण्ठनसंवीता कुलजाऽभिसरेद्यदि ॥
विचित्रोज्ज्वलवेशा तु रणन्नूपुरकङ्कणा
प्रमोदस्मेरवदना स्याद्वेश्याऽभिसरेद्यदि ॥
मदस्खलितसंलापा विभ्रमोत्फुल्ललोचना ।
आविद्धगतिसञ्चारा स्यात् प्रेष्याऽभिसरेद्यदि॥(ङ)

तत्राद्ये "उत्क्षिप्तमित्यादि" । अन्ययोरूह्यमुदाहरणम् ॥
प्रसङ्गादभिसारस्थानानि कथ्यन्ते ॥

---

संलीनेति गात्रेषु अङ्गेषु संकुचितसर्वाङ्गीत्यर्थः अवगुण्ठनेन आच्छादनपटेन सम्वीता संवृतदेहा एतदुपलक्षणं अनुलेपनादिनापि संवीता तत्रान्धकारे नीलवस्त्रकुसुमकस्तूरीसंवीता ज्योत्स्नायां शुक्लवस्त्रकुसुमचन्दनद्रवसंवीता क्रमेण यथा "सितं वसनमर्पितं वपुषि चेलभ्रमान्मया मृगमदाशयामलयजद्रवः सेवितः । करेण परिबोधितः स्वजनशङ्कया दुर्जनः परं परमपुण्यतः सखि न लङ्घिता देहली" । "मल्लिकामालभारिण्यः सर्वाङ्गीनार्द्रचन्दनाः । क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नायामभिसारिकाः" । आविद्धः उद्भावितः पत्युः सद्भावो यया आविद्धगतिसञ्चारेति पाठे आविद्धया उद्धतया गत्या सञ्चारः सङ्केतस्थानप्राप्तिर्यस्याः सा इत्यर्थः ।

(ङ) आद्ये कुलजाभिसरणप्रकारे अनयोर्वेश्याप्रेष्याभिसरणप्रका-

क्षेत्रं वाटी भग्नदेवालयो दूतीगृहं वनम्।
मालयञ्च श्मशानञ्च नद्यादीनां तटी तथा॥
एवं कृताभिसाराणां पुंश्चलीनां विनोदने।
स्थानान्यष्टौ तथा ध्वान्तच्छन्ने कुत्रचिदाश्रये॥
चाटुकारमपि प्राणनाथं रोषादपास्य या।
पश्चात्तापमवाप्नोति कलहान्तरिता तु सा॥

यथा मम तातपादानाम्।

"नो चाटुश्रवणं कृतं न च दृशा हारोऽन्तिके वीक्षितः
कान्तस्य प्रियहेतवो निजसखीवाचोऽपि दूरीकृताः।
पादान्ते विनिपत्य तत्क्षणमसौ गच्छन्मया मूढया
पाणिभ्यामवरुध्य हन्त सहसा कण्ठे कथं नार्पितः।

प्रियः कृत्वापि सङ्केतं यस्या नायाति सन्निधिम्।
विप्रलब्धा तु सा ज्ञेया नितान्तमवमानिता॥(च)

---

रयोः तत्र क्रमेणोदाहरणं यथा मम "कामेषुवेधविधुरं भुरिदत्तवित्तं सिञ्जानमञ्जुमणिनूपुरकिङ्किणीका। मन्दं बृहत्कुचनितम्बभरेण दूरादाश्वासयन्त्यभिसरत्युत कापि धन्यम्"। "कान्तं तमेकान्तगुणाभिराम मदीहिताधानविदग्धकामम्। प्राप्याप्रमोदं विदधे सखीति ब्रुवत्यभीष्टं प्रमदाभियाति"। अत्र सम्मोदमिति वक्तव्येऽप्रमोदं इति संज्ञापस्खलनम्। क्षेत्रं शस्योत्पत्तिस्थानं वाटी निर्जनवास्तु मालायञ्च पुष्पोद्यानम्। विनोदने इति सुरतोत्सवायेत्यर्थः कुत्रचिदाश्रये पुंश्चल्योऽभिसरन्तीति शेषः। आश्रय इति प्रथमान्तपाठे ध्वान्तच्छन्नं कुत्रचिद्देशे चाश्रयोऽधिष्ठानं पुंश्चलीनां विनोदने भवतीत्यर्थः। चाटु

यथा ।

"उत्तिष्ठ दूति ! यामो यातस्तथापि नायातः ।
याऽतः परमपि जीवेज्जीवितनाथो भवेत् तस्याः" ॥

**नानाकार्य्यवशाद्यस्या दूरदेशं गतः पतिः ।**
**सा मनोभवदुःखार्त्ता भवेत् प्रोषितभर्त्तृका ॥**

यथा ।

"तां जानीयाः परिमितकथां जीवितं मे द्वितीयं
दूरीभूते मयि सहचरे चक्रवाकीमिवैकाम् ।
गाढोत्कण्ठां गुरुषु दिवसेष्वेषु गच्छत्सु बालां
जातां मन्ये शिशिरमथितां पद्मिनीं वान्यरूपाम्" ॥

**कुरुते मण्डनं यस्याः सज्जिते वासवेश्मनि ।**
**सा तु वासकसज्जा स्याद्विदितप्रियसङ्गमा ॥(क)**

यथा राघवानन्दानां नाटके ।

"विदूरे केयूरे कुरु करयुगे रत्नवलयै-
रलं गुर्वी ग्रीवाभरणलतिकेयं किमनया ।

---

प्रियोक्तिं करोति चाटुकारत्वं । हारो नायकेन प्रसादाय दीयमानो मुक्ताकलापः ।

(क) यामः सङ्केतकालः । नानाकार्य्यवशादिति शापसम्भ्रमयोरप्युपलक्षणं तेनोक्तोदाहरणेनाव्याप्तिः । तामिति कुवेरशापात् प्रोषितस्य यक्षस्य मेघं प्रति उक्तिरियं पद्मिनीं वेति वा शब्द इवार्थः वा साहित्यलुप्तोपमयोरिति । उत्तरार्द्धे द्वितीयान्तपादेषु प्रथमान्तपाठः क्वचित् पुस्तकेषु दृश्यते तदापुनरिवशब्द एव । कुरुते इति सखीति शेषः सज्जिते शय्याप्रदीपादिभिः परिष्कृते ।

(ज) विदूरे इति मण्डयन्तीं सखीं प्रति कस्याश्चिदुक्तिरियं

नवामेकामेकावलिमयि मयि त्वं विरचये-
र्न ग्रथ्यं बहुतरमनङ्गोत्सवविधौ" ॥

**आगन्तुं कृतचित्तोऽपि दैवान्नायाति यत्प्रियः।**
**तदनागमदुःखार्त्ता विरहोत्कण्ठिता तु सा ॥**

यथा।

"किं रुद्धः प्रियया कयाचिदथवा सख्या ममोद्वेजितः
किं वा कारणगौरवं किमपि यन्नाद्यागतो वल्लभः।
इत्यालोच्य मृगीदृशा करतले विन्यस्य वक्त्राम्बुजं
दीर्घं निश्वसितं चिरं च रुदितं क्षिप्ताश्च पुष्पस्रजः" ॥*

**इति साष्टाविंशतिशतमुत्तम-**
**मध्यमाधमस्वरूपतः।**
**चतुरधिकाशीतियुतं शत-**
**त्रयं नायिकाभेदानां स्यात् ॥**

इह च "परस्त्रियौ कन्यकोढ़े सङ्केतात् पूर्वं विरहोत्कण्ठिते पश्चाद्विदूषकादिना सहाभिसरन्त्यावभिसारिके

---

नवां नवगुम्फितां अन्यथा परिरम्भनभरेण झटिति त्रुटिता स्यात् बह्वयष्टिकहारस्य परिरम्भातिविघ्नहेतुत्वादाह एकावलिमिति एकयष्टिकहारमित्यर्थः। यत्प्रिय इति यस्याः प्रिय इत्यर्थः। तदनाग-

---

* कारणगौरवं प्रयोजनविशेषः। वल्लभः प्रियः। पुष्पस्रजः कुसुममाल्यानि क्षिप्ताः परित्यक्ताः।

कुतोऽपि सङ्केतितस्थानमप्राप्ते नायके विप्रलब्धे इति वस्तु-स्थैवानयोरस्वाधीनप्रिययोरवस्थान्तरायोगादिति कश्चित्" ॥

**क्वचिदन्योऽन्यसाङ्कर्य्यमासां लक्ष्येषु दृश्यते ।(न)**

यथा ।

"न खलु वयममुष्य दानयोग्याः
पिबति च पाति च यासकौ रहस्त्वाम् ।
विट ! विटपममुं ददस्व तस्यै
भवति यतः सदृशोश्चिराययोगः ॥ *

ऽमेति प्रियानागमेत्यर्थः । किं कष्ट इति सङ्केतस्थाया नायिकायाः प्रियानागमने वितर्कोऽयं तत्रवस्था तयो भेदा अनयोः परस्त्रियोः । अवस्थान्तरायोगादिति प्रकारान्तरासम्भवादिति भावः । तथा हि पर-स्त्रियाः पार्श्वे नायकस्य सततमवस्थानायोगात् न स्वाधीनभर्त्तृकात्वं नायिकान्तरसम्भोगेन ईर्ष्याया असम्भवान्न खण्डितात्वं नायिकान्तरस-म्भोगदोषात् कान्तत्यागासम्भवेन न कलहान्तरितात्वं कान्तस्य दूरदेश-गमनेन मनोभवदुःखार्त्तत्वाभावाच्च प्रोषितभर्त्तृकात्वं परालोकनशङ्कया सज्जितयास्ववेश्मनि मण्डनासम्भवाच्च वासकसज्जात्वं तथा चानयोस्त्रैवि-ध्येन षड़ेव भेदाः न त्वष्टविधत्वेन षोड़शेति । तत्र चतुरशीत्यधिकश-तत्रयसंख्या नोपपद्येति भावः । अस्वाधीनप्रिययोरित्युपदर्शनमात्रं आसामुपदर्शितप्रकाराणां नायिकानां लक्ष्येषु महाकविप्रयोगेषु ।

(न) न खल्विति सपुष्पपल्लवां वृक्षशाखां प्रियायै यच्छन्तं नायकं प्रति नायिकाया उक्तिरियं अमुष्य विटपस्य पिबति चुम्बति पाति

* अमुष्य विटपस्य दानयोग्याः दानपात्राणि न खलु नैवेत्यर्थः । असकौ या कान्ता रहो विजने त्वां पिबति पाति च ।

तव कितव ! किमाहितैर्वृथा नः
क्षितिरुहपल्लवपुष्पकर्णपूरैः ।
ननु जनविदितैर्भवद्व्यलीकै-
श्चिरपरिपूरितमेव कर्णयुग्मम् ॥ *
इति गदितवती रुषा जघान
स्फुरितमनोरमपक्ष्मकेसरेण ।
श्रवणनियमितेन कान्तमन्या
सममसिताम्बुरुहेण चक्षुषा च" ॥ †

इयं हि वक्रोक्त्या परुषवचनेन कर्णोत्पलताड़नेन च

---

योऽपिदन्तरेभ्यो वारयति हे विट हे शिङ्ग कामुक विटपं सपुष्पपल्लवां शाखां सदृशोरिति विटं त्वां पिबति पाति वेति व्युत्पत्तिद्वयेन सैव विटपी अयमपि विटप इति तुल्ययोर्योगो योग्यो भवतीत्यर्थः । भवद्व्यलीकैर्भवतोऽप्रियवचनैः । स्फुरितो मनोहरः पक्ष्मवत् केशरो यस्य तेन चक्षुःपक्षे पक्ष्मैव केशरो यस्य तेन । वक्रोक्त्या इति विटपशब्दस्य

---

हे विट तस्यै कस्तु विटपं ददस्व यतो यस्मात् सदृशोः समानयोर्विटपी-विटपयोर्योगः चिराय भवति अतो मह्यं तत्प्रदानं विफलमित्यर्थः ।

* वृथा निरर्थकं आहितैर्दत्तैः क्षितिरुहपल्लवपुष्पकर्णपूरैर्वृक्ष-पल्लवपुष्परूपकर्णभूषणैः । भवद्व्यलीकै तवाप्रियवचनैः कर्णयुगलं ममेति शेषः । चिरं परिपूरितं अतः तद्ग्रहणस्थानाभावात् कर्णपूरार्थं पुष्प-पल्लवप्रदानं निरर्थकमिति भावः ।

† श्रवणनियमितेन आकर्णायतेन । असिताम्बुरुहेण नीलोत्पलेन चक्षुषा च समं सहकान्तं जघान आहतवती हस्तस्थितनीलोत्पलेन कटाक्षेण च ताड़यामासेत्यर्थः ।

धीरमध्यताऽधीरमध्यताऽधीरप्रगल्भताभिः सङ्कीर्णा । एवमन्यताप्यूह्यम् ।

**इतरा अप्यसङ्ख्यास्ता नोक्ता विस्तरशङ्कया ॥**

ता नायिकाः ॥ (झ)

अथासामलङ्काराः ।

**यौवने सत्त्वजास्तासामष्टाविंशतिसङ्ख्यकाः ।**
**अलङ्कारास्तत्र भावहावहेलास्त्रयोऽङ्गजाः ॥**
**शोभा कान्तिश्च दीप्तिश्च माधुर्य्यञ्च प्रगल्भता**
**औदार्य्यं धैर्य्यमित्येते सप्तैव स्युरयत्नजाः ॥**
**लीलाविलासौ विच्छित्तिर्विव्वोकः किलकिञ्चितम्**
**मोट्टायितं कुट्टमितं विभ्रमो ललितं मदः ॥**
**विकृतं तपनं मौग्ध्यं विक्षेपश्च कुतूहलम् ।**
**हसितं चकितं केलिरित्यष्टादशसङ्ख्यकाः ॥**
**स्वभावजाश्च भावाद्या दश पुंसां भवन्त्यपि ।**

पूर्वे भावादयो धैर्य्यान्ता दश पुंसां नायकानामपि सम्भवन्ति किन्तु सर्वेऽप्यमी नायिकाश्रिता एव विच्छित्तिविशेषं पुष्णन्ति । (ञ)

---

नानार्थकल्पनाविचित्रोक्तया इत्यर्थः ।। (झ) इतरा अपि पद्मिनी हस्तिनी प्रभृतयः ।

(ञ) नायिकां निरूप्य कार्य्यत्वसङ्गत्या तदलङ्कारं निरूपयति अथेति तासां नायिकानाम् । अलङ्काराणामङ्गजत्वायत्नजत्वस्वभावजत्वैस्त्रै

तत्र भावः।

**निर्विकारात्मके चित्ते भावः प्रथमविक्रिया॥**

जन्मतः प्रभृति निर्विकारे मनसि उद्बुद्धमात्रो विकारो भावः यथा।

"स एव सुरभिः कालः स एव मलयानिलः।
सैवेयमबला किन्तु मनोऽन्यदिव दृश्यते"॥

अथ हावः॥

**भ्रुनेत्रादिविकारैस्तु सम्भोगेच्छाप्रकाशकः।**
**भाव एवाल्पसंलक्ष्यविकारो हाव उच्यते॥**

यथा।

"विवृण्वती शैलसुताऽपि भावमङ्गैः स्फुरद्बालकदम्बकल्पैः।
साचीकृता चारुतरेण तस्थौ मुखेन पर्य्यस्तविलोचनेन"॥*

---

विध्यं दर्शयन्नुद्देशं करोति भावेति भवन्त्यपीत्यपिशब्दस्य योजनां दर्शयन् विवृणोति पूर्वेति विच्छित्तिविशेषं विलक्षणवैचित्यम्।

(ट) प्रथमविक्रिया सम्भोगेच्छायाः प्रथमः प्रकृतिविपर्य्यासः उद्बुद्धमात्रो न तु स्फुटं प्रतीयमानः एतेन हावहेलालक्षणातिव्याप्तिर्वारिता। कौमारे चाञ्चल्यादिरहितानां भ्रुनेत्रादीनां चाञ्चल्यादिरूपप्रकृति-

---

* स्फुरत् बालकदम्बकल्पैः विकसत्कोमलनीपसदृशैः पुलकितैरित्यर्थः। भावं रत्याख्यं विवृण्वती प्रकाशयन्ती चारुतरेण पर्य्यस्तविलोचनेन व्रीड़ाविभ्रान्तनेत्रेण मुखेन साचीकृता तिर्य्यक्कृता ह्रिया मुखं साचीकृत्य स्थितेत्यर्थः। न केवलं हरस्यैव देव्या अप्युदितो रतिः इति भावः। मल्लीनाथः।

अथ हेला ।

**हेलात्यन्तं समालक्ष्यविकारः स्यात् स एव च ।**

स एव भाव एव । (ट)

यथा ।

"तह से झत्ति पउत्ता वहुए सब्बङ्गविब्भमा सअला ।
संसइअ मुद्धभावा होइ चिरं जह सहीणम्पि" ॥

अथ शोभा ।

**रूपयौवनलालित्यभोगाद्यैरङ्गभूषणम् ॥**
**शोभा प्रोक्ता ।**

तत्र यौवनशोभा यथा ।

"असम्भृतं मण्डनमङ्गयष्टेरनासवाख्यं करणं मदस्य ।
कामस्य पुष्पव्यतिरिक्तमस्त्रं बाल्यात्परं साधु वयः प्रपेदे" ॥*

---

विपर्यासैः अल्पसंलक्ष्यविकारः ईषल्लक्ष्यस्वभावः एतेन हेलालक्षणाति-व्याप्तिर्वारिता विवृण्वती प्रकटयन्ती साचीकृता वक्रीकृता पर्यस्तविलो-चनेन शिवे परिच्छिन्ननेत्रेण बालकदम्बेत्यनेन पुलकस्याल्पत्वं तेन च भावस्याल्पलक्ष्यत्वं प्रतीयते ।

(ट) तह से इति तथा तस्या झटिति प्रवृत्ता बध्वाः सर्वाङ्ग-विभ्रमाः सकलाः संशयितमुग्धभावा भवन्ति चिरं यथा सखीनामपि

---

* असम्भृतं अयत्नसिद्धं मण्डनं प्रसाधनं अनासवाख्यं आस-वाख्यारहितं मदस्य मत्ततायाः करणं साधनं कामस्य कन्दर्पस्य पुष्प-व्यतिरिक्तमस्त्रं अस्त्रभूतं बाल्यात् शैशवात् परं अनन्तरभावि वयः

एवमन्यत्रापि ॥ अथ कान्तिः ।

**सैव कान्तिर्मन्मथाप्यायिता द्युतिः ।**

मन्मथोन्मेषेणातिविस्तीर्णा शोभैव कान्तिरुच्यते ।

यथा ।

"नेत्रे खञ्जनगञ्जने इत्यादि" ॥ अथ दीप्तिः ।

**कान्तिरेवातिविस्तीर्णा दीप्तिरित्यभिधीयते ।**

यथा मम चन्द्रकलानामनाटिकायां चन्द्रकलावर्णनम् ।

"तारुण्यस्य विलासः समधिकलावण्यसम्पदो हासः ।

धरणितलस्याभरणं युवजनमनसो वशीकरणम्" ॥

अथ माधुर्य्यम् ।

**सर्व्वावस्थाविशेषे तु माधुर्य्यं रमणीयता ।(ड)**

यथा ।

"सरसिजमनुविद्धं शैवलेनापि रम्यं

मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीन्तनोति ।

---

इति रम् । संशयितमुग्धभावा सन्दिग्धशैशवा । लालित्यमङ्गानां सुकुमारत्वं भोगः स्रक्चन्दनादिजनितसुखानुभवः आद्यशब्देन अलङ्कारादिग्रहणं तारुण्यस्येति अत्र तारुण्यविलासादीनामतिशयो लक्षणाप्रयोजनम् ।

(ड) सरसिजमिति शकुन्तलाया वल्कलधारणेऽपि शोभातिशयः

---

यौवनं प्रपेदे प्राप । यौवनेनैव हि युवतयः प्रशाध्यन्ते माद्यन्ते काम्यन्ते चेति भावः । मल्ली

* अनुविद्धं सम्पृक्तं सरसिजं कमलं रम्यं मनोज्ञं । लक्ष्म चिह्नं

इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्" ॥ *

अथ प्रगल्भा ।

## निःसाध्वसत्वं प्रागल्भ्यम् ।

यथा ।

"समाश्लिष्टाः समाश्लेषैश्चुम्बिताश्चुम्बनैरपि ।
दष्टाश्च दंशनैः कान्तं दासीकुर्व्वन्ति योषितः" ॥

अथौदार्य्यम् ।

## औदार्य्यं विनयः सदा ॥

"न ब्रूते परुषां गिरं वितनुते न भ्रूयुगं भङ्गुरं
नोत्तंसं क्षिपति क्षितौ श्रवणतः सा मे स्फुटेऽप्यागसि ।
कान्ता गर्भगृहे गवाक्षविवरव्यापारिताक्ष्या बहिः
सख्या वक्त्रमभिप्रयच्छति परं पर्य्यश्रुणी लोचने" ॥ *

---

मनुभवतो दुष्मन्तस्य स्वयं परामर्शोऽयं अनुविद्ध व्याप्त लक्ष्मीं शोभां इयं शकुन्तला । समाश्लिष्टा इति दन्तेनाधरादिखण्डनं दंशनं

---

लक्ष्मीं शोभाम् । अधिकमनोज्ञा अधिकमनोरमा भवतीति शेषः । हि यस्मात् मधुराणां सर्व्वजनप्रियाणामाकृतीनामवयवानां सम्बन्धे किं वस्तु मण्डनं विभूषणमिव न अपि तु सर्व्वमेव स्यादित्यर्थः । कृष्णः ।

* परुषां कर्कशाम् । भङ्गुरं कुटिलम् । श्रवणतः कर्णाभ्यां क्षितौ धरण्यां गर्भगृहे गृहाभ्यन्तरे स्थिता इति शेषः ।

अथ धैर्य्यम्।

**मुक्तात्मश्लाघना धैर्य्यं मनोवृत्तिरचञ्चला। (ड)**

यथा।

"ज्वलतु गगने रात्रौ रात्रावखण्डकलः शशी
दहतु मदनः किं वा मृत्योः परेण विधास्यति।
मम तु दयितः श्लाघ्यस्तातो जनन्यमलान्वया
कुलममलिनं न त्वेवायं जनो न च जीवितम्" ॥*

अथ लीला।

**अङ्गैर्वेशैरलङ्कारैः प्रेमभिर्वचनैरपि।
प्रीतिप्रयोजितैर्लीलां प्रियस्यानुकृतिं विदुः॥**

---

उत्तंसं कर्णभूषणं गर्भगृहे वासगृहाभ्यन्तरे गवाक्षविवरेण व्यापारितं सञ्चारितमक्षि यया तथा अभि लक्षीकृत्य प्रयच्छति अर्पयति पर्य्युत्सुकी अत्युत्सुका।

(ढ) ज्वलत्विति ज्वलतु सन्तापकः ननु दीयतां परेणेत्यव्ययं अधिकार्ये। श्लाघ्य इति काकाक्षिगोलकन्यायेन उभयत्रान्वेति यद्वा अमला-

---

* अखण्डकलः सम्पूर्ण इत्यर्थः। मदनः कामः दहतु भस्मीकरोतु मृत्योः परेण किम्वा विधास्यति करिष्यति मृत्युपर्य्यन्तजननमेव अस्य चरमसीमेति भावः। मम तु दयितः प्रियः तातः पिता च श्लाघ्यः जननी माता च अमलान्वया परिशुद्धवंशोद्भवा। कुलं स्वामिकुलं अमलिनं निष्कलङ्कम्। अयं जनः अहमित्यर्थः। न त्वेव न स्थिरः जीवितं च न स्थिरम् अतः अस्थिरस्य देहस्य कृते पितृमातृभर्त्तृकुलानि न कलङ्कयिष्यामीति भावः।

यथा ।

"मृणालव्यालवलया वेणीबन्धकपर्द्दिनी ।
हरानुकारिणी पातु लीलया पार्व्वती जगत्" ॥

अथ विलासः ।

**यानस्थानासनादीनां मुखनेत्रादिकर्म्मणाम् ।
विशेषस्तु विलासः स्यादिष्टसन्दर्शनादिना ॥**

यथा ।

"अत्रान्तरे किमपि वाग्विभवातिवृत्त-
वैचित्र्यमुल्लसितविभ्रममायताक्ष्याः ।
तद्भूरिसात्त्विकविकारमपास्तधैर्य्य-
माचार्य्यकं विजयि मान्मथमाविरासीत्" ॥ *

अथ विच्छित्तिः ।

**स्तोकाऽप्याकल्परचना-
विच्छित्तिः कान्तिपोषकृत् । (ढ)**

यथा ।

"स्वच्छाम्भः स्नपनविधौतमङ्गमोष्ठ-
स्ताम्बूलद्युतिविशदो विलासिनीनाम् ।

---

न्वया इति लिङ्गव्यत्ययेनान्वयः न त्वेवायं जनः स्थिर इति शेषः । मृणालमेव व्यालः सर्पो वलयं यस्याः वेणीबन्ध एव कपर्द्दो जटाजूटो यस्या अस्ति । अत्रान्तरे नायकदर्शनादिसमये वाग्विभवमतिवृत्तमति-क्रम्य स्थितं वैचित्र्यगमनादिचातुरी यस्मात् तत् ते प्रसिद्धा भूरि सा-त्त्विकविकारास्तम्भादयो यस्मात् तत् आचार्य्यकमुपाध्यायकर्म उपदेश इत्यर्थः । स्तोका अल्पा आकल्परचना वेशविन्यासः ।

वासस्तु प्रतनु विविक्तमस्त्वितीयान्
आकल्पो यदि कुसुमेषुणा न शून्यः" ॥ *

अथ विव्वोकः।

**विव्वोकस्त्वतिगर्व्वेण वस्तुनीष्टेऽप्यनादरः।**

यथा।

"यासां सत्यपि सद्गुणानुसरणे दोषानुवृत्तिः परा
याः प्राणान् वरमर्पयन्ति न पुनः संपूर्णदृष्टिं प्रिये।
अत्यन्ताभिमतेऽपि वस्तुनि विधिर्यासां निषेधात्मक-
स्तास्त्रैलोक्यविलचणप्रकृतयो वामाः प्रसीदन्तु ते" ॥

अथ किलकिञ्चितम्।

**स्मितशुष्करुदितहसित
त्रासक्रोधश्रमादीनाम्।
सांकर्य्यं किलकिञ्चितमभी-
ष्टतमसङ्गमादिजाद्धर्षात्॥**

---

(ख) प्रतनु अतिसूक्ष्मं विविक्तं अतिविमलं। यासामिति कश्चिद् कामिनं प्रति सख्युराशीर्वचनमिदं सद्गुणानामनुसरणे परैरुद्भावने दोषाणामनुवृत्तिः। स्वयं पुनः पुनरुद्भावनं साङ्कर्य्यं मेलनं। पाणि-

---

* इतीयान् एवं प्राय इत्यर्थः। आकल्पो भूषणमस्तु भवतु नाधिकमिति भावः। यदि कुसुमेषुणा कामेन शून्यः रहितो न स्यात् आकल्प इति भावः यत्किञ्चिदाभरणमस्तु किन्तु तत् मदनव्यञ्जकं भवितुमर्हतीति भावः।

यथा।

"पाणिरोधमविरोधितवाञ्छं भर्त्सनाश्च मधुरस्मितगर्भाः।
कामिनः स्म कुरुते करभोरूर्हारि शुष्करुदितञ्च सुखेऽपि"॥

अथ मोट्टायितम्।

**तद्भावभाविते चित्ते वल्लभस्य कथादिषु।**
**मोट्टायितमिति प्राहुः कर्णकण्डूयनादिकम्॥**

यथा।

"सुभग! त्वत्कथारम्भे कर्णकण्डूतिलालसा।
उज्जृम्भवदनाम्भोजा भिनत्त्यङ्गानि साङ्गना"॥

अथ कुट्टमितम्।

**केशस्तनाधरादीनां ग्रहे हर्षेऽपि संभ्रमात्।**
**प्राहुः कुट्टमितं नाम शिरःकरविधूननम्॥(व)**

यथा।

"पल्लवोपमितिसाम्यसपक्षं दष्टवत्यधरविम्बमभीष्टे।
पर्य्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण"॥

---

रोधं वस्त्रक्षेपणादिप्रवृत्तनायककरप्रतिबन्धं। हारि मनोहरं कारणं विना रुदितं शुष्करुदितं सुखेऽपि सुखसमयेऽपि। तद्भावेन कान्तसद्भावेन भाविते व्याप्ते चित्ते सति कथादिषु सत्सु कर्णकण्डूयनादिभिरिति पाठेऽभेदे तृतीया आदिना जृम्भाङ्गभङ्गादि। कर्णकण्डूतिलालसा कर्णकण्डूयन तत्परा।

(व) पल्लवोपमित्या यत् साम्यं तेन सपक्षं सहायं अभीष्टे नायके पर्य्यकूजि महाशब्दः कृतः शब्दोपयोगित्वं दर्शयति तारेति

अथ विभ्रमः।

त्वरया हर्षरागादेर्दयितागमनादिषु।
अस्थाने भूषणादीनां विन्यासो विभ्रमो मतः॥

यथा।

"श्रुत्वाऽऽयान्तं बहिः कान्तमसमाप्तविभूषया।
भालेऽञ्जनं दृशोर्लाक्षा कपोले तिलकः कृतः"॥

अथ ललितम्।

सुकुमारतयाऽङ्गानां विन्यासो ललितं भवेत्।

यथा।

"गुरुतरकलनूपुरानुनादं सललितनर्त्तितवामपादपद्मा।
इतरदनतिलोलमादधाना पदमथ मन्मथमन्थरं जगाम"॥

अथ मदः।

मदो विकारः सौभाग्ययौवनाद्यवलेपजः॥ (त)

---

तारमतिशयं लोलं चञ्चलं कङ्कणं यत्र तेन सख्युर्दंशने व्यथा भवतीति भावः। त्वरयेति हर्षादिजन्यत्वरयेत्यर्थः। तत्र प्रथमेनादिपदेन उत्सवादेः द्वितीयादिपदेन दयिताभिसरणादेस्तृतीयेन लाक्षादेर्ग्रहणं असमाप्तविभूषया कान्तया विन्यासोऽप्रचण्डविक्षेपः। गुरुतरेति प्रथमः पादः क्रियाविशेषणार्थकः इतरद्दक्षिणं अनतिलोलं अनतिचञ्चलं। यौवनादीत्यादिपदेनालङ्कारादेर्ग्रहणम्।

यथा।

"मा गर्वमुद्वह कपोलतले चकास्ति
कान्तस्वहस्तलिखिता मम मञ्जरीति।
अन्याऽपि किं न खलु भाजनमीदृशीनां
वैरी न चेद्भवति वेपथुरन्तरायः" ॥ *

अथ विहृतम्।

**वक्तव्यकालेऽप्यवचो व्रीडया विहृतं मतम्।**

यथा।

"दूरागतेन कुशलं पृष्टा नोवाच सा मया किञ्चित्।
पर्यश्रुणी तु नयने तस्याः कथयाम्बभूवतुः सर्वम्" ॥

अथ तपनम्।

**तपनं प्रियविच्छेदे स्मरावेगोत्थचेष्टितम्॥ (थ)**

---

(थ) मागर्वमिति मम कपोलतले इत्यन्वयः। ईदृशीनां मञ्जरीणां वैरी यत्नुरिव तव तावत्कपोलतले एकैवमञ्जरी यदृच्छयापि भवितुमर्हति तेन सौभाग्यातिशयो न नियमतः प्रतीयत इति गर्वो नोचित एव। ईदृशीनामिति बहुवचनेन सौभाग्यातिशयः सूचितः। सर्वमिति मम प्रवासे दुःखातिशयमागमने सुखञ्चेत्यर्थः। स्मरावेगोत्थेति कामोद्वेगजनितेत्यर्थः।

---

* चेत् यदि वेपथुः कम्पः कान्तस्पर्शजनितसात्त्विक भाव विशेषः इत्यर्थः। वैरी शत्रुवत् अन्तरायः मञ्जरीरचनाप्रतिबन्धको न भवति तदा अन्या अपरापि ईदृशीनां प्रियस्वहस्तलिखितमञ्जरीणां बह्वनामिति

यथा मम।

"श्वासान्मुञ्चति भूतले विलुठति त्वन्मार्गमालोकते
दीर्घं रोदिति विक्षिपत्यत इतः क्षामां भुजावल्लरीम्।
किञ्च प्राणसमान! काङ्क्षितवती स्वप्नेऽपि ते सङ्गमं
निद्रां वाञ्छति न प्रयच्छति पुनर्दग्धो विधिस्तामपि" ॥*

अथ मौग्ध्यम।

अज्ञानादिव या पृच्छा प्रतीतस्यापि वस्तुनः।
वल्लभस्य पुरः प्रोक्तं मौग्ध्यं तत्तत्त्ववेदिभिः॥

यथा।

"के द्रुमास्ते क्व वा ग्रामे सन्ति केन प्ररोपिताः।
नाथ! मत्कङ्कणन्यस्तं येषां मुक्ताफलं फलम्" ॥

अथ विक्षेपः।

भूषाणामर्द्धरचना वृथा विष्वगवेक्षणम्।
रहस्याख्यानमीषच्च विक्षेपो दयितान्तिके। (२)

---

(२) श्वासानिति प्रवासिनं प्रति सख्युः उक्तिरियं हे प्राणसमान दग्धो निर्दयः तां निद्रां। येषां द्रुमाणां फलमित्यन्वयः। वृथा निष्कारणं विष्वक् सर्वतः रहस्याख्यानं गुह्यभाषणम्।

---

शेषः। भाजनम् पात्रं न भवति किम् भवत्येवेत्यर्थः। अतस्तव कान्तकर्णैकमात्रमञ्जरीधारणेन सौभाग्यातिशयबोधात् गर्वो नोचित इति भावः।

* सा तव कान्तेत्यवाध्याहार्य्यं अत इतः इतस्ततः इत्यर्थः क्षामां तव विरहेण क्षीणां इत्यर्थः भुजावल्लरीं भुजलतिकां।

यथा ।

"धम्मिल्लमर्द्धमुक्तं कलयति तिलकं तथाऽसकलम् ।
किञ्चिद्वदति रहस्यं चकितं विष्वगवलोकते तन्वी" ॥

अथ कुतूहलम् ।

**रम्यवस्तु समालोके लोलता स्यात् कुतूहलम् ।**

यथा ।

"प्रसाधिकालम्बितमग्रपादमाक्षिप्य काचिद्द्रवरागमेव ।
उत्सृष्टलीलागतिरागवाक्षादलक्तकाङ्कां पदवीं ततान" ॥

अथ हसितम् ।

**हसितन्तु वृथाहासो यौवनोद्भेदसम्भवः ।**

यथा ।

"अकस्मादेव तन्वङ्गी जहास यदियं पुनः ।
नूनं प्रसूनबाणोऽस्यां स्वाराज्यमधितिष्ठति" ॥

अथ चकितम् ।

**कुतोऽपि दयितस्याग्रे चकितं भयसम्भ्रमः ।**

---

(ध) धम्मिल्लं बद्धकेशसमूहं असकलं खण्डम् । लोलता सतृष्णत्वम् । प्रसाधिका मण्डनकर्त्री तया आलम्बितं धारितं द्रवरागमशुष्कलाक्षारसं अलक्तकाङ्कां लाक्षाचिह्नां पदवीं पन्थानं अत्र हरदर्शनाय कस्याश्चिद्रागातिशयः कुतूहलम् । यौवनोद्भेदो यौवनोत्पत्तिः अकस्मात् कारणं विना स्वाराज्यं स्वर्गवदधिकारं अधितिष्ठति कुरुते । कुतोऽपीति अलक्षितकारणादित्यर्थः । भयसंभ्रमः भयेनातिचाञ्चल्यं

यथा।

"त्रस्यन्ती चलशफरीविघट्टितोरु-
र्वामोरूरतिशयमाप विभ्रमस्य।
क्षुभ्यन्ति प्रसभमहो विनाऽपि हेतो-
र्लीलाभिः किमु सति कारणे तरुण्यः" ॥ (ध)

अथ केलिः।

विहारे सह कान्तेन क्रीड़ितं केलिरुच्यते ॥

यथा।

"व्यपोहितुं लोचनतो मुखानिलै-
रपारयन्तं किल पुष्पजं रजः।
पयोधरेणोरसि काचिदुन्मनाः
प्रियं जघानोन्नतपीवरस्तनी" ॥

अथ मुग्धाकन्ययोरनुरागेङ्गितानि।

दृष्ट्वा दर्शयति व्रीड़ां सम्मुखं नैव पश्यति।
प्रच्छन्नं वा भ्रमन्तं वाऽतिक्रान्तं पश्यति प्रियम् ॥
बहुधा पृच्छ्यमानाऽपि मन्दमन्दमधोमुखी।
सगद्गदस्वरं किञ्चित् प्रियं प्रायेण भाषते ॥

---

विभ्रमस्य भ्रमणविशेषस्य क्षुभ्यन्ति भयव्याकुला भवन्ति किम्विति सुतरा-मित्यर्थः।

(न) विहारे इति कान्तेन सह क्रियमाणे विहारे सति यन्नायिकायाः क्रीड़नं स केलिरित्यर्थः। व्यपोहितुं निरसितुं अपारयन्तं अशक्नुवन्तम्। अनुरागेङ्गितानि अनुरागसूचितचेष्टितानि प्रच्छन्नं मित्यादिव्यवहित

अन्यैः प्रवर्त्तितां शश्वत् सावधाना च तत्कथाम् ।
शृणोत्यन्यत्र दत्ताक्षी प्रिये बालानुरागिणी ॥

अथ सकलानामपि नायिकानामनुरागेङ्गितानि ।

चिराय सविधे स्थानं प्रियस्य बहु मन्यते ।
विलोचनपथञ्चास्य न गच्छत्यनलङ्कृता ॥
कापि कुन्तलसंव्यानसंयमव्यपदेशतः ।
बाहुमूलं स्तनौ नाभिपङ्कजं दर्शयेत् स्फुटम् ॥(न)
आच्छादयति वागाद्यैः प्रियस्य परिचारकान् ।
विश्वसितस्य मित्रेषु बहुमानं करोति च ॥
सखीमध्ये गुणान् ब्रूते स्वधनं प्रददाति च ।
सुप्ते स्वापिति दुःखेऽस्य दुःखं धत्ते सुखे सुखम् ॥
स्थिता दृष्टिपथे शश्वत् प्रिये पश्यति दूरतः ।
आभाषते परिजनं सम्मुखं स्मरविक्रियम् ॥
यत्किञ्चिदपि संवीक्ष्य कुरुते हसितं मुधा ।
कर्णकण्डूयनं तद्वत् कबरीमोक्षसंयमौ ॥

---

अतिक्रान्तं दूरे गच्छन्तं । तत्कथां प्रियकथाम् । कुन्तलेति केशसमूहबन्धनच्छलेनेत्यर्थः ।

(प) आच्छादयति वशीकरोति वाक् प्रियवचनं आद्यपदादन्नवस्त्रादिदानादीनां ग्रहणम् । अस्य प्रियस्य सम्मुखमिति परिजनस्य विशेषणं तद्योगे प्रियसङ्गमे तच्छीलं प्रियचरितं तत्प्रियं प्रियाभीष्टं

जृम्भते स्फोटयत्यङ्गं बालमाश्लिष्य चुम्बति ।
भाले तथा वयस्याया रचयेत्तिलकक्रियाम् ॥
अङ्गुष्ठाग्रेण लिखति सकटाक्षं निरीक्षते ।
दशति स्वाधरं चापि ब्रूते प्रियमधोमुखी ॥
न मुञ्चति च तं देशं नायको यत्र दृश्यते ।
आगच्छति गृहं चास्य कार्य्यव्याजेन केनचित् ॥
दत्तं किमपि कान्तेन धृत्वाङ्गे मुहुरीक्षते ।
नित्यं हृष्यति तद्योगे वियोगे मलिना कृशा ॥
मन्यते बहु तच्छीलं तत्प्रियं मन्यते प्रियम् ।
प्रार्थयत्यल्पमूल्यानि सुप्ता न परिवर्त्तते ॥
विकारान् सात्त्विकानस्य सम्मुखी नाधिगच्छति ।
भाषते सूनृतं स्निग्धमनुरक्ता नितम्बिनी ॥
एतेष्वधिकलज्जानि चेष्टितानि नवस्त्रियाः ।
मध्यव्रीडानि मध्यायाः स्रंसमानत्रपाणि तु ॥
अन्यस्त्रियाः प्रगल्भायास्तथा स्युर्वारयोषितः ॥(प)

दिङ्मात्रं यथा मम ।

---

वस्तु । प्रार्थयतीति परस्मैपदमात्मनेपदस्य प्रायिकत्वात् अधिगच्छति प्रकाशयति सूनृतं प्रियसत्यवचनं स्निग्धां वयस्यां स्निग्धमिति पाठे स्नेहव्यञ्जकं यथास्यात्तथा भाषत इत्यर्थः ।

"अन्तिकगतमपि मामनवलोकयन्ती हन्त दृष्ट्वापि ।
सरसनखक्षतमण्डितमाविष्कुरुते भुजामूलम् ॥

तथा ।

लेख्यप्रस्थापनैः स्निग्धैर्वीक्षितैर्मृदुभाषितैः ।
दूतीसंप्रेषणैर्नार्य्या भावाभिव्यक्तिरिष्यते ॥

दूत्यश्च ।

दूत्यः सखी नटी दासी
धात्रेयी प्रतिवेशिनी ।
बाला प्रव्रजिता कारूः
शिल्पिन्याद्याः स्वयं तथा ॥

कारू रजकीप्रभृतिः । शिल्पिनी चित्रकारादिस्त्री । आदिशब्दात्ताम्बूलिकगान्धिकस्त्रीप्रभृतयः ॥ तत्र सखी यथा "श्वासान् मुञ्चतीत्यादि" । (फ)

स्वयं दूती यथा मम ।

"पन्थिअ पिआसिओ विअ लच्छीअसि जासि ता किमस्सत्तो ।
ण मणा पिबारओ इध अत्थि घरे घणरसं पिअन्ताणं" ॥

एताश्च नायिकाविषये नायकानामपि दूत्यो भवन्ति ॥

---

(फ) सरसनखक्षतेन आर्द्रनखाघातेन लक्षितं चिह्नितम् । लेखप्रस्थापनं यथा "विरहिणीरेषा मम जीवबन्धो तत्रैव नेया दिवसाः कियन्तः । संप्रत्ययोगप्रस्थितिरेष देशः करा यदिन्दोरुपतापयन्ति" ।

(ब) पन्थि अ इति पान्थ पिपासित इव लक्ष्यसे यासि तत्

दूतीगुणानाह ।

**कलाकौशलमुत्साहो भक्तिश्चित्तज्ञता स्मृतिः ।**
**माधुर्यं नर्मविज्ञानं वाग्मिता चेति तद्गुणाः ॥**
**एता अपि यथौचित्यादुत्तमाधममध्यमाः ।**

एता दूत्यः ॥

अथ प्रतिनायकः ।

**धीरोद्धतः पापकारी व्यसनी प्रतिनायकः ॥**

यथा रामस्य रावणः ॥

अथोद्दीपनविभावाः ।

**उद्दीपनविभावास्ते रसमुद्दीपयन्ति ये ।**

ते च ।

**आलम्बनस्य चेष्टाद्या देशकालादयस्तथा ॥**

चेष्टादीत्यादिशब्दाद्रूपभूषणादयः । कालादीत्यादिशब्दाच्चन्द्रचन्दनकोकिलालापभ्रमरझङ्कारादयः ॥ ( ब )

---

किमन्यत्र न मनागपि वारक इहास्ति गेहे घनरसं पिबताम् इति सम् । पिपासा जलतृष्णा सम्भोगेच्छा च घनरसं जलं पक्षे सम्भोगसुखं पिबतामनुभवतां यद्वा घनो निविड़ो रसो रागो यत्र सोऽधररसं एताः अनन्तरोक्ताः सख्यादयः तद्‌गुणाः दूतीगुणाः व्यसनं द्विविधं कामजं कोपजञ्च तद्‌योगाद्व्यसनी । व्यसनान्याह मनुः । "कामजेषु प्रसक्तो हि व्यसनेषु महीपतिः । वियुज्यतेऽर्थधर्माभ्यां क्रोधजेष्वात्मनैव तु । मृगयाक्षो दिवा स्वप्नः परिवादः स्त्रियो मदः । तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः । पैशुन्यं साहसं द्रोह ईर्ष्यासूयार्थदूषणम् । वाग्दण्डजञ्च पारुष्यं क्रोधजोऽपि गणोऽष्टकः" । अक्षो द्यूतक्रीड़ा तौर्य्यत्रिकं नृत्यगीतवाद्यानि त्रिणीति दश पैशुन्यं अविज्ञातपरदोषा-

तत्र चन्द्रो यथा मम ।

"करमुदयमहीधरस्तनाग्रे गलिततमःपटलांशुके निवेश्य ।

विकसितकुमुदेक्षणं विचुम्बत्ययममरेशदिशो मुखं सुधांशुः ॥"

यो यस्य रसस्य उद्दीपनविभावः स तत्स्वरूपवर्णने वक्ष्यते

अथानुभावाः ।

**उद्बुद्धं कारणैः स्वैः स्वैर्बहिर्भावं प्रकाशयन् ।**

**लोके यः कार्य्यरूपः सोऽनुभावः काव्यनाट्ययोः ॥**

यः खलु लोके सीतादिचन्द्रादिभिः स्वैः स्वैरालम्बनोद्दीपनकारणैरामादेरन्तरुद्बुद्धं रत्यादिकं बहिः प्रकाशयन् कार्य्यमित्युच्यते स काव्यनाट्ययोः पुनरनुभाव ।

कः पुनरसावित्याह ।

**उक्ताः स्त्रीणामलङ्कारा अङ्गजाश्च स्वभावजाः ।**

**तद्रूपाः सात्त्विकाभावास्तथा चेष्टाः परा अपि ॥**

तद्रूपा अनुभावस्वरूपाः । तत्र च यो यस्य रसस्यानुभावः स तत्स्वरूपवर्णने वक्ष्यते । तत्र सात्त्विकाः ।

---

विष्करणम् । साहसं साधोर्बन्धनादिना निग्रहः द्रोहो जिघांसा ईर्ष्या परगुणानामसहिष्णुता असूया परगुणेषु दोषाविष्करणं अर्थदूषणं अर्थानामपहरणं देयानामदानञ्च उद्दीपयन्ति परिपोषातिशयं नयन्ति । आलम्बनस्य नायिकादेश्चेष्टा नेत्रविक्षेपणादिः ।

(भ) करं किरणं पाणिञ्च अमरेशदिशः प्राच्याः । उद्बुद्धमिति विवृणोति यः खल्विति बहिः प्रकाशयन् अनुमापयन् अङ्गजा भावादयस्त्रयः स्वभावजा लीलादयोऽष्टादश । शोभाकान्त्यादीनां रत्यादिप्रकाशकत्वाभावान्नानुभावरूपता । चेष्टा नायकस्य नेत्रविक्षेपा-

**विकाराः सत्त्वसम्भूताः सात्त्विकाः परिकीर्त्तिताः।**

सत्त्वं नाम स्वात्मविश्रामप्रकाशकारी कश्चनाऽऽन्तरो धर्मः। (भ)

**सत्त्वमात्रोद्भवत्वात्ते भिन्ना अप्यनुभावतः॥**

गोवलीवर्दन्यायेनेति शेषः।

के ते इत्याह।

**स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः।**
**वैवर्ण्यमश्रु प्रलय इत्यष्टौ सात्त्विकाः स्मृताः॥**

तत्र।

**स्तम्भश्चेष्टाप्रतिघातो भयहर्षामयादिभिः।**
**वपुर्जलोद्गमः स्वेदो रतिघर्मश्रमादिभिः॥**
**हर्षाद्भुतभयादिभ्यो रोमाञ्चो रोमविक्रिया।**
**मदसम्मदपीड़ाद्यैर्वैस्वर्य्यं गद्गदं विदुः॥**

---

इयः पराः सात्त्विकविकारभिन्नाः। सत्वमिति आत्मन्येव विश्रामो यस्य स रसादिस्तस्य प्रकाश उद्बोधस्तत्कारी प्रागुक्तमपि सत्वलक्षणं शिष्याणां विविधव्युत्पत्त्यै प्रकारान्तरेण पुनरुक्तम्।

(भ) ते सात्त्विका विकाराः भिन्ना अपीति अपिना ऽभिन्ना इत्यस्य लाभः। ननु भेदाभेदयोर्विरोध इत्यत आह गोवलीवर्देति तथा चानुभावत्वावच्छिन्नप्रतियोगिताकभेदाभावेन सहा-नुभावत्वसामानाधिकरणधर्मावच्छिन्नप्रतियोगिताकभेदस्य समावेशः। यथा वलीवर्दे गोत्वावच्छिन्नप्रतियोगिताकभेदाभावेन सह गोत्वसमा-

रागद्वेषश्रमादिभ्यः कम्पो गात्रस्य वेपथुः।
विषादमदरोषाद्यैर्वर्णान्यत्वं विवर्णता ॥
अश्रु नेत्रोद्भवं वारि क्रोधदुःखप्रहर्षजम्।
प्रलयः सुखदुःखाभ्यां चेष्टाज्ञाननिराकृतिः॥ (म)

यथा मम

"तनुस्पर्शादस्या दरमुकुलिते हन्त नयने
उदञ्चद्रोमाञ्चं व्रजति जड़तामङ्गमखिलम्।
कपोलौ घर्म्मार्द्रौ ध्रुवमुपरताशेषविषयं
मनः सान्द्रानन्दं स्पृशति झटिति ब्रह्म परमम्" ॥ *

---

नाधिकरणधेनुत्वादिधर्मावच्छिन्नप्रतियोगिताकभेदस्येति भावः। "विभावा अनुभावाश्च सात्त्विका व्यभिचारिणः" इत्यादौ सात्त्विकभावस्य पृथगुपान्यासेनानुभावातिरिक्तत्वशङ्कानिरासार्थमाह पृथगुपादानं प्रतीघातः प्रतिबन्धः वपुषो जलोद्गमः रोम्णो विक्रिया उद्गमः वैस्वर्यं स्वरविकारः सुखदुःखाभ्यामिति सुखेन दुःखेन वेत्यर्थः।

(य) ब्रह्मपरममिति ब्रह्मनिविष्टचेतसो यथा चेष्टा बाह्यज्ञाननिरासो भवति तथा नायिकानिविष्टचेतसोऽपीति भावः। अत्र स्तम्भस्वेदरोमाञ्च-

---

* तनुस्पर्शात् शरीरसम्पर्कात्। नयने नेत्रे दरमुकुलिते ईषन्मुकुलीभावं प्राप्नुते इत्यर्थः। अखिलं अङ्गं उदञ्चन्तः उद्गच्छन्तः रोमाञ्चाः रोमविक्रिया यस्मिन् तादृशं सत् जड़तां जाड्यं व्रजति प्राप्नोति। उपरताशेषविषयं विरतसमस्तबाह्येन्द्रियव्यापारं मनः सान्द्रानन्दं निबीड़ानन्दस्वरूपं परमं ब्रह्म स्पृशति साक्षात् ब्रह्मानन्दस्वरूपसुखमनुभवतीत्यर्थः।

एवमन्यत् ।

अथ व्यभिचारिणः ।

**विशेषादाभिमुख्येन चरणात् व्यभिचारिणः ।**
**स्थायिन्युन्मग्ननिर्मग्नास्त्रयस्त्रिंशच्च तद्भिदाः ॥**

स्थिरतया वर्त्तमाने हि रत्यादौ निर्वेदादयः प्रादुर्भावतिरोभावाभ्यामाभिमुख्येन चरणाद्व्यभिचारिणः कथ्यन्ते ॥

के ते इत्याह ।

**निर्वेदावेगदैन्यश्रममदजड़ता औग्र्यमोहौ विबोधः स्वप्नापस्मारगर्वा मरणमलसतामर्षनिद्रावहित्थाः । औत्सुक्योन्मादशङ्काः स्मृतिमतिसहिता व्याधिसन्त्रासलज्जा हर्षासूयाविषादाः सधृतिचपलताग्लानिचिन्तावितर्काः ॥(य)**

---

प्रवयाः एवमन्यदिति । "बाले नाथ विमुञ्च मानिनि रुषमित्यत्र" स्वरभङ्गः । मागर्वमुद्वहेत्यत्र वेपथुः । शोषं वीक्ष्य मुखमित्यत्र वैवर्ण्यमश्रु च । विशेषादिति विभावानुभावापेक्षया आभिमुख्येन रसानुगुण्येन रत्यादौ चरन्तो रसरूपतया संगच्छमानाः उन्मग्नाः बुद्बुदवत् झटिति प्रतीयमानत्वेन प्रादुर्भूताः निर्मग्ना विलम्बप्रतीतिकत्वेन तिरोभूताः । त्रयस्त्रिंशदिति न्यूनसंख्यायाः व्यवच्छेदकं न त्वधिकसंख्यायाः । अत एवोक्तं हासक्रोधादयः शृङ्गारवीरादौ व्यभिचारिण इति एतद्दर्शनार्थं चकार उपन्यस्तः । तद्भिदा व्यभिचारिभावप्रकाराः चरणात् मेलकात् ।

तत्र निर्वेदः ।

**तत्त्वज्ञानापदीर्ष्यादेर्निर्वेदः स्वावमाननं ।**
**दैन्यचिन्तास्रुनिश्वासवैवर्ण्योच्छ्वसितादिकृत् ॥**

तत्र तत्त्वज्ञानान्निर्वेदो यथा ।

"मृत्कुम्भवालुकारन्ध्रपिधानरचनार्थिना ।
दक्षिणावर्त्तशङ्खोऽयं हन्त चूर्णीकृतो मया" ॥

अथावेगः ।

**आवेगः सम्भ्रमस्तत्र वर्षजे पिण्डिताङ्गता ।**
**उत्पातजे स्रस्तताङ्गे धूमाद्याकुलताग्निजे ॥**
**राजविद्रवनादेस्तु शस्त्रनागादियोजनम् ।**
**गजादेः स्तम्भकम्पादिपांश्वाद्याकुलितानिलात् ॥**
**इष्टाद्धर्षाः शुचोऽनिष्टात् ज्ञेयाश्चान्ये यथायथम् ।**

---

(१) निर्वेदादीनां ज्ञानाय कार्य्यकारणकथनपुरःसरं तल्लक्षणमाह तत्त्वेति तत्त्वज्ञानमिह देहविषयादावनुपादेयत्वज्ञानमेव न तु जीवात्मपरमात्मनोरभेदज्ञानं तस्मिन् सति मोक्ष एव न तु स्वावमाननं तत्कारणे वैराग्यादौ लक्षणा । प्रथमादिपदात् पुराणश्रवणादीनां द्वितीयादिपदात् स्वस्य कुकर्मोद्भावनादीनां ग्रहणम् । हन्तेति चूर्णीकृतः चूर्णाख्यद्रव्यविशेषीकृतः विरक्तस्य दक्षिणावर्त्तशङ्खचूर्णकथनमसङ्गतमिति उपमाकल्पनेनायं निदर्शनालङ्कारः तथाच मृत्कुम्भवालुकारन्ध्रपिधानवत्तुच्छं वैषयिकसुखं तस्य रचना अनुकूलव्यापारः तदर्थिना तत्कामेन परमपुरुषार्थसाधनतया दक्षिणावर्त्तशङ्खवदुपादेयो मानुषदेहः चूर्णीकृतः जरया जर्ज्जरो कृत इत्यर्थः ।

तत्र शत्रुजो यथा ।

"अर्घ्यमर्घ्यमिति वादिनं नृपं सोऽनपेक्ष्य भरताग्रजो यतः ।
क्षत्रकोपदहनार्चिषं ततः सन्दधे दृशमुदग्रतारकाम्" ॥

एव मन्यदूह्यम् । ( र )

अथ दैन्यम् ।

**दौर्गत्याद्यैरनौजस्यं दैन्यं मलिनतादिकृत् ॥**

यथा ।

"वृद्धोऽन्धः पतिरेष मञ्चकगतः स्थूणावशेषं गृहं
कालोऽभ्यर्णजलागमः कुशलिनी वत्सस्य वार्त्तापि नो ।
यत्नात्सञ्चिततैलबिन्दुघटिका भग्नेति पर्य्याकुला
दृष्ट्वा गर्भभरालसां निजवधूं श्वश्रूश्चिरं रोदिति" ॥

---

यद्वा रावणशक्त्या पतिते लक्ष्मणे श्रीरामस्य परिवेदनमिदं अयं लक्ष्मण एव दक्षिणावर्त्तशङ्खः मया चूर्णीकृतो विनाशितः चूर्णाख्यद्रव्यविशेषीकृतश्च कोऽशेन मया रावणवधादिरेव स्नुतकुम्भवालुकारन्ध्रपिधानं तद्रचनाकामेन अतिशयोक्त्यलङ्कारोऽयं रूपकोपपादकः अत्र मत्तो आपज्जन्यं स्वावमाननं वेद्यं । एवमन्यदपि तत्रावेगे पिण्डिताङ्गतासङ्कुचितशरीरत्वं पीड़िताङ्गतेतिपाठे स्पष्ट एवार्थः । उत्पातजे दिव्यनाभसभूमिजरूपत्रिविधोत्पातजन्ये राजविद्रवजादेरित्यादिना शत्रुजादिग्रहणं नागादीत्यादिना अश्वादिपरिग्रहः गजादेर्ज्जायमाने आवेगे एवमग्न्येऽपि । नृपं दशरथं स भार्गवः क्षत्त्रेषु यः कोपः स एव दहनः तस्य शिखां ततस्तस्मिन् अत्रार्घ्यमर्घ्यमिति सङ्कुर्वदतो दशरथस्य भार्गवदर्शने सम्भ्रमः ।

( ल ) दौर्गत्यं दारिद्र्यं आदिना श्रमादेर्ग्रहणं अनौजस्यं निस्तेजस्त्वम् । स्थूणा स्तम्भः अभ्यर्णजलागमो निकटस्थवर्षा-

अथ श्रमः ।

**खेदो रत्यध्वगत्यादेः श्वासनिद्रादिकृच्छ्रमः ।**

यथा ।

"सद्यः पुरीपरिसरे च शिरीषमृद्वी
गत्वा जवात् त्रिचतुराणि पदानि सीता ।
गन्तव्यमस्ति कियदित्यसकृद् ब्रुवाणा
रामाश्रुणः कृतवती प्रथमावतारम्" ॥*

अथ मदः ।

**सम्मोहानन्दसम्भेदो मदो मद्योपयोगजः ॥**
**अमुना चोत्तमः शेते मध्यो हसति गायति ।**
**अधमप्रकृतिश्चापि परुषं वक्ति रोदिति ॥**

यथा ।

"प्रातिभं त्रिसरकेण गतानां वक्रवाक्यरचनारमणीयः ।
गूढसूचितरहस्यसहासः सुभ्रुवां प्रववृते परिहासः" ॥(ल)

---

(ल) त्रिसरकः तैलविन्दूनां घटिका चुद्रभाजनम् । सद्य इति वारम्वारं गन्तव्याध्वपरिमाणजिज्ञासया सीतायाः स्वल्पपथलङ्घनजश्रममवधार्य्य श्रीरामस्य रोदनम् । सम्मोहानन्दयोः सम्भेदो मेलकः । मद्यस्यासवस्य उपयोगात् भक्षणाज्जातः अमुना मदेन । प्रातिभं प्रागल्भ्यं त्रिसरकेण मद्येन गूढं सूचितं रहस्यं यत्र स चासौ सहासश्चेति ।

---

* पुरीपरिसरे अयोध्याप्रान्तप्रदेशे । शिरीषमृद्वी शिरीषपुष्पसुकुमारा । असकृत् वारम्वारम् । प्रथमावतारं पूर्वाविष्करणम् ।

अथ जड़ता ।

**अप्रतिपत्तिर्जड़ता स्यादिष्टानिष्टदर्शनश्रुतिभिः ।**
**अनिमिषनयननिरीक्षणतूष्णींभावादयस्तत्र ॥**

यथा मम कुवलयाश्वचरिते प्राकृतकाव्ये ।

"णवरिअ तं जुअजुअलं अण्णोण्णणिहिदसजलमन्थरदिट्ठिं ।
आलेक्खओपिअं विअखणमेत्तं अअससं तत्थत्थिअं मुहसङ्गं" ॥

अथोग्रता ।

**शौर्य्यापराधादिभवं भवेच्चण्डत्वमुग्रता ।**
**तत्र स्वेदः शिरःकम्पतर्जनाताड़नादयः ॥**

यथा ।

"प्रणयिसखीसलीलपरिहासरसाधिगतै-
र्ललितशिरीषपुष्पहननैरपि ताम्यति यत् ।
वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः
पततु शिरस्यकाण्डयमदण्ड इवैष भुजः" ॥* (व)

---

(व) अप्रतिपत्तिः कर्त्तव्यानिश्चयः तूष्णींभावो मौनं तत्र जड़तायाम् । णवरिअ इति केवलं तद्युवयुगलं अन्योऽन्यनिहित-सजलमन्थरदृष्टि । आलेख्यार्पितमिव क्षणमात्रं तत्र संस्थितं मुक्तसङ्गं इति शम् । णवरिअ शब्दः केवलार्थो देशी चण्डत्वमत्यन्तासहिष्णुत्वं प्रणयिनी या सखी तस्याः परिहासरसेनाधिगतैः प्राप्तैः । अकाण्ड-

---

* यद्वपुः ताम्यति क्लाम्यति । अज्ञातभर्तृव्यसनेति अज्ञातं भर्तुर्व्यसनं प्रियवियोगो यया तथा भूता सती कृतोपकारा प्राप्तोपकारेव बभूव ।

अथ मोहः ।

**मोहो विचित्तता भीतिदुःखावेगानुचिन्तनैः ।**
**मूर्च्छनाज्ञानपतनभ्रमणादर्शनादिकृत् ॥**

यथा ।

"तीव्राभिषङ्गप्रभवेन वृत्तिं मोहेन संस्तम्भयतेन्द्रियाणाम् ।
अज्ञातभर्तृव्यसना मुहूर्त्तं कृतोपकारेव रतिर्बभूव" ॥

अथ विबोधः ।

**निद्रापगमहेतुभ्यो विबोधश्चेतनागमः ।**
**जृम्भाङ्गभङ्गनयनमीलनाङ्गावलोककृत् ॥**

यथा ।

"चिररतिपरिखेदात् प्राप्तनिद्रासुखानां
चरममपि शयित्वा पूर्व्वमेव प्रबुद्धाः ।
अपरिचलितगात्राः कुर्व्वते न प्रियाणां
अशिथिलभुजचक्राश्लेषभेदं तरुण्यः" ॥

---

यमदण्ड इति कृतान्तयमदण्ड इत्यर्थः । अत्र मालतीशरीरे शस्त्रप्रहारं कुर्वतोऽघोरकण्ठस्यापराधेन माधवस्य चण्डत्वमेतादृशोक्त्या व्यज्यते ।

(घ) चित्तस्य निमीलनं विचित्तता सुषुप्तिवारणायाह भीतीति आवेगः सम्भ्रमः अनुचिन्तनमत्यन्तचिन्ता अदर्शनमज्ञानम् । अभिषङ्गः शोकः वृत्तिं विषयसम्बन्धं संस्तम्भयता प्रतिबध्नता एतेनाज्ञानकरत्वं मोहस्य सूचितं व्यसनं विपत् । निद्रापगमहेतवो गीतवादित्रादयः तेभ्यश्चेतनागमो ज्ञानलाभः नयननिमीलनं नेत्रप्रकाशः । चरमं नायकनिद्रायाः पश्चात् पूर्वं नायकप्रबोधात् प्राक् अशिथिलेन दृढ़निश्चिन्नेन भुजेन

अथ स्वप्नः ।

**स्वप्नो निद्रामुपेतस्य विषयानुभवस्तु यः ।**
**कोपावेगभयग्लानिसुखदुःखादिकारकः ॥ (ग)**

यथा ।

"मामाकाशप्रणिहितभुजं निर्दयाश्लेषहेतो-
र्लब्धायास्ते कथमपि मया स्वप्नसन्दर्शनेन ।
पश्यन्तीनां न खलु बहुशो न स्थलीदेवतानां-
मुक्तास्थूलास्तरुकिशलयेष्वश्रुलेशाः पतन्ति" ॥ *

अथापस्मारः ।

**मनःक्षेपस्त्वपस्मारो ग्रहाद्यावेशनादिजः ।**
**भूपातकम्पप्रस्वेदफेनलालादिकारकः ॥**

---

यः कण्ठस्याश्लेषः तस्य भङ्गं प्रशिथिलेनेति पाठे निद्रावशात् भुजशैथिल्ये प्रियः प्रबुध्य भुजाक्षेपं कर्त्तुमर्हतीति अस्य निद्राभङ्गो नोचित इति भावः ।

(घ) मामिति यक्षस्य मेघं प्रति प्रियायै वाचनिकार्पणमिदं मां यक्षं कथमपि महता कष्टेन मुक्ता इव स्थूलाः मनःक्षेप इति मनसो नाड़ी-विशेषनिवेशेण घूर्णनमित्यर्थः । ग्रहादीत्यादिना भूतादिपरिग्रहः भध्य-मादिपदेन धातुवैषम्यादिपरिग्रहः फेणावसानं फेणमुद्वमन्त्यसौ

---

* मया कथमपि स्वप्नसन्दर्शनेन लब्धायास्ते तव निर्दयाश्लेष-हेतोः गाढ़ालिङ्गनार्थं आकाशप्रणिभूजं शून्यार्पितहस्तं मां पश्यन्तीनां स्थलीदेवतानां वनदेवतानां मुक्तावत् स्थूला अश्रुलेशा नेत्राम्बुविन्दवः तरुकिशलयेषु बहुशः पुनः पुनः न खलु पतन्ति अपि तु पतन्त्येव ईदृशावस्थापन्नं मां दृष्ट्वा वनदेवता अपि रुदन्तीति भावः ।

यथा ।

"आश्लिष्टभुमिं रसितारमुच्चैर्लोलद्भुजाकारबृहत्तरङ्गम् ।
फेनायमानं पतिमापगानामसावपस्मारिणमाशशङ्के" ॥ *

अथ गर्व्वः ।

गर्व्वो मदः प्रभावश्रीविद्यासत्कुलतादिजः ।
अवज्ञासविलासाङ्गदर्शनाविनयादिकृत् ॥

यथा ।

"धृतायुधो यावदहं तावदन्यैः किमायुधैः ।
यद्वा न सिद्धमस्त्रेण मम तत् केन साध्यताम्" ॥

अथ मरणम् ।

शराद्यैर्म्मरणं जीवत्यागोऽङ्गपतनादिकृत् ।(ख)

यथा ।

"राममन्मथशरेण ताड़िता दुःसहेन हृदये निशाचरी ।
गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा" ॥

---

श्रीकृष्णः आशशङ्के ज्ञातवान् । मदस्सित्तविकारविशेषः राज्ञः कोष-दण्डादिजन्यप्रतापः प्रभावः श्रीस्त्रिवर्गसम्पत्तिः अवज्ञा परस्मिन् अन्यै-र्म्मद्धृतायुधभिन्नैः ।

(ख) रामेति सा निशाचरी ताड़का राक्षसी सैव निशाचरी अभिसारिका नायिका राम एव मन्मथः तस्य शरेण हृदये वक्षसि मनसि

---

* आपगानां पतिं समुद्रम् । अपस्मारिणं अपस्माररोगवन्तम् ।

अथालस्यम्।

**आलस्यं श्रमगर्भाद्यैर्जाड्यं जृम्भासितादिकृत्॥**

यथा।

"न तथा भूषयत्यङ्गं न तथा भाषते सखीम्।
जृम्भते मुहुरासीना बाला गर्भभरालसा"॥

अथामर्षः।

**निन्दाक्षेपापमानादेरमर्षोऽभिनिविष्टता।**
**नेत्ररागशिरःकम्पभ्रूभङ्गोत्तर्जनादिकृत्॥ (ह)**

यथा।

"प्रायश्चित्तं चरिष्यामि पूज्यानां वो व्यतिक्रमात्।
न त्वेवं दूषयिष्यामि शस्त्रग्रहमहाव्रतम्"॥

अथ निद्रा।

**चेतःसम्मीलनं निद्रा श्रमक्लममदादिजा।**
**जृम्भाक्षिमीलनोच्छ्वासगात्रभङ्गादिकारणम्॥**

---

च ताड़िता सती जीवितेशो यम एव जीवितेशः प्रियः तस्य वसतिं जगाम कीदृशी गन्धवद्रुधिरमेव चन्दनं तेनोक्षिता लिप्ता। जाड्यमित्यत्र कचिज्जैह्म्यमिति पाठः स न सम्यक् असङ्गतार्थापत्तेः। आसितमुपवेशनं दोषोद्भावनं निन्दा भर्त्सनमाक्षेपः अपमानः पराभवः आदिना हस्तादिहरणादेः ग्रहणं अभिनिविष्टता निन्दादिकर्त्तुर्निर्य्यातनानिर्णयः क्रोधस्तु उत्कटापचिकीर्षा इत्यनयोर्भेदः।

(ह) प्रायश्चित्तमिति द्रोणादीन् प्रति अर्जुनस्योक्तिरियं व्यतिक्रमात् हननात्। चेतसः सम्मीलनं मेध्यानाड़ीप्रवेशेननिश्चलत्वं सार्थ-

यथा ।

"सार्थकानर्थकपदं ब्रुवती मन्थराचरम् ।
निद्रार्द्धमीलिताक्षी सा लिखितेवास्ति मे हृदि" ॥

अथावहित्था ।

**भयगौरवलज्जादेर्हर्षा-**
**द्याकारगुप्तिरवहित्था ।**
**व्यापारान्तरसक्त्यन्यथाव-**
**भाषणविलोकनादिकरी ॥ (छ)**

यथा ।

"एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी ।
लीलाकमलपत्राणि गणयामास पार्व्वती" । *

अथौत्सुक्यम् ।

**इष्टानवाप्तेरौत्सुक्यं कालक्षेपासहिष्णुता ।**
**चित्ततापत्वरास्वेददीर्घनिश्वसितादिकृत् ॥**

---

कानि अनर्थकानि च पदानि यत्र तद्‌यथास्यात् तथा मन्थराणि गभी-राणि अनासन्नानि असंपूर्णानि वा अक्षराणि यत्र तद्‌यथास्यात् तथा । लिखितेवेति । धारावाहिकस्मरणस्फोरणाय हर्षादेराकारस्य सूचकस्य मुखरागादेः गुप्तिः सम्वरणं सक्तिरासङ्गः । अन्यथेति अप्रक्रान्तस्य भाषणं विलोकनञ्च आदिना क्रियामात्रस्य ग्रहः ।

(छ) देवर्षौ नारदे पितुर्हिमालयस्य । व्यभिचारिभावस्येतितत्रा-

---

* अधोमुखी अवनतवदना लीलाकमलपत्राणि क्रीड़ापद्मपत्राणि ।

यथा ।

"यः कौमारहरः स एव हि वरस्ता एव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढ़ाः कदम्बानिलाः ।
सा चैवास्मि तथापि तत्र सुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतः समुत्कण्ठते" ॥

अत्र यत्काव्यप्रकाशकारेण रसस्य प्राधान्यमित्युक्तं तद्रसन-धर्मयोगित्वाद्व्यभिचारिभावस्यापि रसशब्दवाच्यत्वेन गतार्थं मन्तव्यम् ॥ (च)

अथोन्मादः ।

**चित्तसम्मोह उन्मादः कामशोकभयादिभिः ।**
**अस्थानहासरुदितगीतप्रलपनादिकृत् ॥**

यथा मम ।

"भ्रातर्द्विरेफ ! भवता भ्रमता समन्तात्
प्राणाधिका प्रियतमा मम वीक्षिता किम् ।

---

नुभावादिकृतपरिपोषराहित्येन रतेः सम्पूर्णरसत्वं न संभवति वर्णनीय-त्वेन चमत्कारित्वेन कौत्सुक्यस्यैव प्राधान्यमिति भावः । अतएव काव्यप्रकाशटीकाकारचण्डीदासेनोक्तं रसपदमत्र सम्भोगव्यभिचार्यौत्-सुक्यमाह रस्यते आस्वाद्यत इति व्युत्पत्त्या न तु सम्भोगनामा रसः स्वाधीनपतिकायाः क्रीड़ास्थानं प्रत्युत्सुकतायाः वर्णनीयत्वादिति गतार्थं प्राप्तविषयम् ।

(क) चित्तस्य सम्मोहश्चैतनादिविशेषज्ञानजननाच्छत्वम् । भ्रातरिति व्यवस्यति कश्चिद्विरही तत्र कामेन भ्रमरः प्रत्युत्तराच्चम इति विशेषनिर्द्धारणाच्चमत्वं तर्कणं सम्भावना प्रहितनखरेषु क्षतनखा-

झङ्कारमनुभूय सानन्दम्।
ब्रूषे किमोमिति सखे! कथयाशु तन्मे
किं किं व्यवस्यति कुतोऽस्ति च कोऽद्यशोयम्" ॥

अथ शङ्का।

**परक्रौर्य्यात्मदोषाद्यैः शङ्कानर्थस्य तर्कणम्।**
**वैवर्ण्यकम्पवैस्वर्य्यपार्श्वालोकास्यशोषकृत् ॥**

यथा मम।

"प्राणेशेन प्रहितनखरेष्वङ्गकेषु क्षपान्ते
जातातङ्का रचयति चिरं चन्दनालेपनानि।
धत्ते लाक्षामसकृदधरे दत्तदन्ताविघाते
क्षामाङ्गीयं चकितमभितश्चक्षुषी विक्षिपन्ती" ॥

अथ स्मृतिः।

**सदृशज्ञानचिन्ताद्यैर्भ्रूसमुन्नमनादिकृत्।**
**स्मृतिः पूर्व्वानुभूतार्थविषयज्ञानमुच्यते ॥ (क)**

यथा मम।

"मयि सकपटं किञ्चित् क्वापि प्रणीतविलोचने
किमपि नयनं प्राप्ते तिर्य्यग्विजृम्भिततारकम्।

---

घातेषु जातः आतङ्कः सख्याद्युपहासरूपा शङ्का यस्याः सा अत्र सम्भोगचिह्नगोपन एव विश्रान्तिरिति शङ्काया एव प्राधान्यम्। सदृशेति चिन्ता भावनाख्यसंस्कारः आद्यपदेन सम्बन्धिज्ञानादेर्ग्रहणं अत्र सदृशज्ञानादेः संस्कारोद्बोधनद्वारा संस्कारस्य तु स्मृतिं प्रति साक्षादेव कारणत्वमिति बोद्धव्यम्।

स्मितमुपगतामालीं दृष्ट्वा सलज्जमवाञ्चितं।
कुवलयदृशः स्मेरं स्मेरं स्मरामि तदाननम्" ॥*

अथ मतिः।

**नीतिमार्गानुसृत्यादेरर्थनिर्द्धारणं मतिः।**
**स्मेरता धृतिसन्तोषौ बहुमानश्च तद्भवाः॥**

यथा।

"असंशयं क्षत्रपरिग्रहक्षमा यदार्य्यमस्यामभिलाषि मे मनः।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः" ॥

अथ व्याधिः।

**व्याधिर्ज्वरादिर्वाताद्यैर्भूमीच्छोत्कम्पनादिकृत्।**

तत्र दाहमयत्वे भूमीच्छादयः। शैत्यमयत्वे उत्कम्पनादयः स्पष्टमुदाहरणम्। (ख)

---

(ख) मयीति सकपटं यथास्यात् तथा अजिज्ञासितपदार्थे किञ्चित् प्रणीतविलोचने मयि तिर्य्यक् कुटिलं यथास्यात् तथा विजृम्भिता व्यापारिता प्रकाशिता वा तारका यस्य तादृशं नयनं प्राप्ते सति स्मितमुपगतां सखीं दृष्ट्वा सलज्जं यथास्यात्तथा अवाञ्चितमानमितं स्मेरं स्मेरं पुनःपुनः स्मितयुक्तं वदनं स्मरामीत्यर्थः। नीतिमार्गो नीतिशास्त्रं तस्यानुसृतिरवगमः आदिना अनुमानादेर्ग्रहणं निर्द्धारणं निश्चयः। असंशयमिति शकुन्तलामालोक्य दुःष्मन्तस्यानुमानमिदं क्षत्रपरिग्रहक्षमा क्षत्रियविवाहोचिता इयमितिशेषः अस्यां शकुन्तलायां समर्थयति सतामिति प्रमाणं निश्चयवीजं अन्तःकरणस्य मनसः प्रवृत्तयः संकल्पादयः। वाताद्यैरित्याद्यपदेन पित्तस्य श्लेष्मणोर्ग्रहणं भूमीच्छा

---

* प्रोषितस्य नायकस्य सखायं प्रत्युक्तिः।

अथ त्रासः ।

**निर्घातविद्युदुल्काद्यैस्त्रासः कम्पादिकारकः ॥**

यथा ।

"परिस्फुरन्मीनविघट्टितोरवः
सुराङ्गनास्त्रासविलोलदृष्टयः ।
उपाययुः कम्पितपाणिपल्लवाः
सखीजनस्यापि विलोकनीयताम्" ॥*

अथ व्रीड़ा ।

**धार्ष्ट्याभावो व्रीडा वदनानमनादिकृद्दुराचारात् ।**

---

भूमिपतनेच्छा तत्र व्याधौ उदाहरणं यथा मम "प्रियजनपरिषङ्गाद्वे-पमानां क्षयाङ्गीं विकलवचनवर्णां स्वेदसंसिक्तगात्रीं । विपुलपुलकलेखा-माकलय्य ज्वरार्त्तां कुमतिरमितचिन्तासागरे निर्ममज्ज" ।

(ग) निर्घात इति "यदान्तरीक्षे बलवान् मारुतो मरुता हतः । पतत्यधः स निर्घातो जायते वायुसम्भवः" इत्युक्तलक्षणो निर्घातः । "दृह त्क्षिखा च सूक्ष्माग्रा रक्तनीलशिखोज्ज्वला । पौरुषी च प्रमाणेन उल्का नानाविधा स्मृता" इत्युक्तलक्षणा चोल्काद्यपदेन भूकम्पादेर्ग्रहणं अत्र मनःक्षोभ इति पूरणीयम् । परिस्फुरदिति जलविहारवर्णनमिदम् । अपिना नायकस्य विलोकनीयतां रमणीयताम् । धार्ष्ट्याभावः प्रागल्भ्य-राहित्यं । निधानकुम्भस्य निधिपूर्णकलसस्य पिता दिलीपः शरीरे शरीर-

---

* परिस्फुरदित्यादि परितः स्फुरद्भिः सञ्चरद्भिः मीनैर्मत्स्यैर्वि-घट्टिता वितारिता ऊरवो यासां ताः । सुराङ्गना अप्सरसः त्रास-लोलदृष्टयः चञ्चलनयनाः । विलोकनीयता दर्शनीयत्वम् ।

यथा। "मयि सकपटमित्यादि"। अथ हर्षः।

**हर्षस्त्विष्टावाप्तेर्मनःप्रसादोऽश्रुगद्गदादिकरः॥**

यथा।

"समीक्ष्य पुत्रस्य चिरात्पिता मुखं
निधानकुम्भस्य यथैव दुर्गतः।
मुदा शरीरे प्रबभूव नात्मनः
पयोधिरिन्दूदयमूर्च्छितो यथा"॥ (ग)

अथासूया।

**असूयान्यगुणर्द्धीनामौद्धत्यादसहिष्णुता।**
**दोषोद्घोषभ्रूविभेदावज्ञाक्रोधेङ्गितादिकृत्॥**

यथा।

"अथ तत्र पाण्डुतनयेन
सदसि विहितं मधुद्विषः।
मानमसहत न चेदिपतिः
परवृद्धिमत्सरि मनो हि मानिनाम्"॥

यथा मम।

"एषा कुडिलघणेण चिउरकडापेण तुह णिबद्धा वेणी।
मह सहि दारइ दंशइ आअसजट्ठिव्व कालउरइव्व हिअअं"॥

---

चेष्टायां प्रबभूव समर्थो बभूव इन्दूदयेन मूर्च्छितः प्रवृद्धः अतिवृद्धस्य समुद्रस्य स्तम्भितत्वं भवति इत्यभिप्रायेणेयमुपमा अथवा यथा पयोधिरिन्दूदयेन तरलो भवति तथा पुत्रोत्पत्त्या हर्षतरलो बभूवेत्युपमा।

(घ) क्रोधेङ्गितं मुखरागादि। मानं पूजां चेदिपतिः शिशुपालः मत्सरि सद्द्वेषं सत्वसंचयो वद्धहानिः। एषा इति एषा कुटिलघनेन

अथ धृतिः ।

ज्ञानाभीष्टागमाद्यैस्तु सम्पूर्णस्पृहता धृतिः ।
सौहित्यवचनोल्लाससहासप्रतिभादिकृत् ॥

अथ विषादः ।

उपायाभावजन्मा तु विषादः सत्त्वसङ्क्षयः ।
निःश्वासोच्छ्वासहृत्तापसहायान्वेषणादिकृत् ॥

यथा मम ।

"कृत्वा दीननिपीडनां निजजने बद्धा वचोविग्रहं
नैवालोच्य गरीयसीरपि चिरादामुष्मिकीर्यातनाः ।
द्रव्यौघाः परिसञ्चिताः खलु मया यस्याः कृते साम्प्रतं
नीवाराञ्जलिनापि केवलमहो सेयं कृतार्था तनुः" ।*(घ)

अथ चपलता ।

मात्सर्य्यद्वेषरागादेश्चापल्यं त्वनवस्थितिः ।
तत्र भर्त्सनपारुष्यस्वच्छन्दाचरणादयः ॥

यथा ।

"अन्यासु तावदुपमर्दसहासु भृङ्ग !
लोलं विनोदय मनः सुमनोलतासु ।

---

-चिकुरकलापेन तव निबद्धा वेणी । मम सखि दारयति दग्धत्वायस-यष्टिरिव कालोरगीव हृदयमिति मम् । स्पृहायाः समाप्तिरेव संपूर्णत्वं बद्धा कृत्वा आमुष्मिकीः परलोकभवाः नीवारस्तृणधान्यं कृते निमित्तं साम्प्रतं वार्द्धके ।

(ङ) अत्र तत्त्वज्ञानेन निस्पृहत्वं अन्ये त्विति मधुपानकालीन-

मुग्धामजातरजसं कलिकामकाले
व्यर्थं कदर्थयसि किं नवमालिकायाः" ॥

अथ ग्लानिः।

रत्यायासमनस्तापक्षुत्पिपासादिसम्भवा।
ग्लानिर्निष्प्राणताकम्पकार्श्यानुत्साहतादिकृत् ॥

यथा।

"किशलयमिव मुग्धं बन्धनाद्विप्रलूनं
हृदयकुसुमशोषी दारुणो दीर्घशोकः।
ग्लपयति परिपाण्डुक्षाममस्याः शरीरं
शरदिज इव घर्म्मः केतकीपत्रगर्भम्" ॥*

---

स्तरणप्रहारादिरुपमर्द्दः पक्षे सम्भोगकालीनस्तुम्बनालिङ्गनादिः लोलं सतृष्णं मुग्धां कोमलां सुरतसूढाञ्च रजः परागः आर्त्तवञ्च अकाले मकरन्दाभावदशायां बाल्ये च अनोपभोक्तरि बालाया अस्थैर्य्यं परुष-

---

* दीनानां दरिद्राणां प्रजानामिति भावः। निपीडनां उत्पिड़नां कृत्वा निजजने वचसा विग्रहं कलहं वद्धा कृत्वेत्यर्थः। चिरात् बहुकालिकी गरीयः अतिमहती आमुष्मिकीः पारलौकिकीर्यातनाः नारकीया इत्यर्थः यस्याः तत्त्वराः। कृते निमित्तं। द्रव्यौघाः धनराशयः नीवाराञ्जलिना एकाञ्जलिमात्रतृणधान्येन कृतार्थां पुष्टी भवति अहो आश्चर्य्यम्। पूर्वं संसारनिर्वाहार्थं अज्ञानतः बहुतरं अकार्य्यमनुष्ठाय पश्चात् वार्द्धक्ये वयसि सर्वं परित्यज्य अरण्यवासिना केनचित् ज्ञानवता उक्तमिदम्। शरदिजः शरत्कालीनः घर्मो निदाघः केतकीपत्रगर्भं केतकी-पुष्पमध्यं यथा ग्लपयति म्लानयति तथा हृदयकुसुमशोषी दारुणः तीव्रः दीर्घशोकः बन्धनात् वृन्तात् विप्रलूनं छिन्नं किशलयमिव मुग्धं मनोज्ञं परिपाण्डुपरितः पाण्डुवर्णं क्षामं कृशं अस्याः सीतायाः शरीरं देहं ग्लपयति ग्लानयतीत्यन्वयः।

अथ चिन्ता ।

**ध्यानं चिन्ता हितानाप्तेः**

**शून्यता श्वासतापकृत् । (ङ)**

यथा मम ।

"कमलेण विहसिएण संयो-

एन्तो विरोहिणं ससिबिम्बं ।

करअलपल्लअसुही किं चिन्तसि

सुमुहि अन्तराहिअहिअआ ॥"

अथ वितर्कः ॥

**तर्को विचारः सन्देहा**

**द्भ्रूशिरोऽङ्गुलिनर्त्तकः ॥**

यथा । "किं रुद्धः प्रिययेत्यादि" ॥ एते च त्रयस्त्रिंशद्व्यभिचारिभेदा इति यदुक्तं" तदुपलक्षणमित्याह ।

**रत्यादयोऽप्यनियते रसे स्युर्व्यभिचारिणः ।**

तथा हि शृङ्गारेऽनुच्छिद्यमानतयावस्थानाद् रतिरेव स्थायिशब्दवाच्या । हासः पुनरुत्पद्यमानो व्यभिचार्य्येव

---

वचनेन प्रतीयते । निष्प्राणता असामर्थ्यं च बलनाद्युत्पत्तिस्थानात् निष्प्राणत्वानौजस्य सत्त्वसंचयाणां बलहानिरूपत्वेऽपि विभिन्नकारणत्वेन ग्लानिदैन्यविषादानां भेदः ।

(ङ) कमलेनेति कमलेन विकसितेन संयोजयन्ती विरोधिनं शशिबिम्बं करतलपर्य्यस्तमुखी किं चिन्तयसि सुमुखि अन्तराहितहृदया इति मम । अनियते स्थावस्थितिनियमरहिते अनुच्छिद्यमान-

व्यभिचारिलक्षणयोगात्। तदुक्तं "रसावस्थः परं भावः स्थायितां प्रतिपद्यते इति"। तत्कस्य स्थायिनः कस्मिन् रसे सञ्चारित्वमित्याह।

शृङ्गारवीरयोर्हासो वीरे क्रोधस्तथा मतः॥
शान्ते जुगुप्सा कथिता व्यभिचारितया पुनः।
इत्याद्यन्यत्समुन्नेयं तथा भावितबुद्धिभिः॥

अथ स्थायिभावः।

अविरुद्धा विरुद्धा वा
यं तिरोधातुमक्षमाः।
आस्वादाङ्कुरकन्दोऽसौ
भावः स्थायीति सम्मतः॥ (च)

यदुक्तम्।

"स्रक्सूत्रवृत्त्या भावानामन्येषामनुगामुकः।
न तिरोधीयते स्थायी तैरसौ पुष्यते परमिति"॥

तद्भेदानाह।

रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा।
जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमोऽपि च॥

---

तया अवश्यं स्थायित्वेन उत्पाद्यमानः विशेषानुकूल्येन शृङ्गाररूपतया रतौ सङ्क्रम्यमाणः। परमिति अवश्यमित्यर्थः। अक्षमा इति भावा इति शेषः कन्दो मूलम्।

(च) स्रक्सूत्रवृत्त्या स्रक्सूत्रन्यायेन अनुगामुकः व्यङ्ग्यत्वेन सम्बन्धी तैर्भावैः पुष्यते रसरूपतां नीत्वा प्रवृद्धः क्रियते तद्भेदान् स्थायिभाव-

तत्र।

रतिर्मनोऽनुकूलेऽर्थे मनसः प्रवणायितम्।
वागादिवैकृताच्चेतोविकासो हास इष्यते॥
इष्टनाशादिभिश्चेतोवैक्लव्यं शोकशब्दभाक्।
प्रतिकूलेषु तैक्ष्ण्यस्यावबोधः क्रोध इष्यते॥
कार्य्यारम्भेषु संरम्भः स्थेयानुत्साह उच्यते।
रौद्रशक्त्या तु जनितं चित्तवैक्लव्यदं भयम्॥(क)
दोषेक्षणादिभिर्गर्हा जुगुप्सा विस्मयोद्भवा।
विविधेषु पदार्थेषु लोकसीमातिवर्त्तिषु॥
विस्फारश्चेतसो यस्तु स विस्मय उदाहृतः।
शमो निरीहावस्थायामात्मविश्रामजं सुखम्॥

यथा मालतीमाधवे रतिः। नटकमेलके हासः। रामायणे शोकः। महाभारते शमः। एवमन्यत्रापि। एते हि

---

भेदान् भावाः स्थायिभावाः शमोऽपि च स्थायिभाव इत्यर्थः। रतिरिति मनसोऽनुकूले प्रिये वस्तुनि प्रवणायितं प्रेमार्द्रं मनोरतिरित्यर्थः। तच्चोत्कठावेश एव पर्य्यवस्यति स चानुराग एव सोऽपि प्रकृते सुरतेच्छारूप एव केचित्तु सचानुराग एव सोऽपीष्टसाधनताज्ञानधारारूपः अभिलाषहेतुत्वेनोक्तत्वादित्याहुः तन्न सुरतेच्छाया आलम्बनप्राप्त्यभिलाषं प्रति हेतुत्वसम्भवेन लक्षणाया अयोगात्। चेतोविकाश उपहसनीयत्वेन ज्ञानं सुखविकाशरूपहास्यहेतुः चेतो वैक्लव्यं दुःखं तैक्ष्ण्यस्यापचिकीर्षायाः अवबोध उत्कटत्वम्। कार्य्यारम्भेषु सन्निकृष्टकार्य्येषु संरम्भः उत्कट आवेशः केचित्तु संरम्भः सहर्षप्रवृत्तिरित्याहुस्तन्न आद्यप्रवृत्तिरूपस्यारम्भस्य प्रवृत्त्यसम्भवात् वीररसे उत्कटावेशस्यैव स्थायित्वेन

एतेष्वन्तरा उत्पद्यमानैस्तैस्तैर्विरुद्धैरविरुद्धैश्च भावैरनुच्छिन्नाः प्रत्युत परिपुष्टा एव सहृदयानुभवसिद्धाः।

किञ्च।

नानाभिनयसम्बन्धान्
भावयन्ति रसान् यतः।
तस्माद्भावा अमी प्रोक्ताः
स्थायिसञ्चारिसात्त्विकाः॥

यदुक्तम्।

"सुखदुःखादिभिर्भावैर्भावस्तद्भावभावनम्"॥

---

आस्वाद्यमानत्वाच्च। रौद्रशक्त्येति शात्रवादेरनिष्टजननसामर्थ्येन जनितं यत् चेतसो वैक्लव्यं अस्थिरत्वं तद्ददाति जनयति यत् तत्स्वानिष्टतर्कणं भयमित्यर्थः। केचित्तु वैक्लव्यं मनसोभयमिति पठित्वा रौद्रः क्रुद्धः तस्य क्रोधरूपया शक्त्या वैक्लव्यमिह भाविदुःखे द्वेषः। तस्य च परक्रोधजन्यत्वं तज्जन्यसुखविषयत्वात् न तु तज्जन्यं दुःखमेव वैक्लव्यं तदनुत्पत्तिदशायामपि भीत्यनुपलम्भात् एवञ्च मनःक्षोभरूपात् त्रासाख्यव्यभिचाराभावादस्य भेद इति व्याकुर्वन्ति। तन्न व्याघ्रादीनां क्रोधाभावेऽपि तेभ्यो भयोत्पत्तिसम्भवात् मनःक्षोभरूपत्रासाख्यव्यभिचारिभावस्य भयङ्करशात्रवाद्यनिष्टजननसामर्थ्य जन्यत्वेनैव भेदसम्भवाच्च।

(ज) लोकसीमातिवर्त्तिषु लोकव्यवहारातिक्रान्तेषु विस्फारो विस्तारः स च दृष्टहेतुभ्योऽसम्भवित्वज्ञानेन हेत्वनुसन्धाने मनोव्यापारणरूपः निरीहावस्थायां निस्पृहादशायां स्वस्य जीवस्य आत्मनि परमात्मरूपे विश्रामोऽवस्थानं तज्जन्यमित्यर्थः। शान्तरसस्य निर्वेदः स्थायीति काव्यप्रकाशकृत् तन्न निर्वेदस्य व्यभिचारिरूपत्त्वेन स्थायित्वायोगात्। अविरुद्धा इति कारिकां विवृणोति एते हीति रत्यादयो हीत्यर्थः एषु रसेषु। भावानां विशेषलक्षणान्युक्त्वा सामान्यलक्षण-

अथ रसस्य भेदानाह ।

शृङ्गारहास्यकरुणरौद्रवीरभयानकाः ।
बीभत्सोऽद्भुत इत्यष्टौ रसाः शान्तस्तथा मतः ॥(ञ)

तत्र शृङ्गारः ।

शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः ।
उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते ॥
परोढां वर्ज्जयित्वा तु वेश्याञ्चाननुरागिणीम् ।
आलम्बनं नायिकाः स्युर्द्दक्षिणाद्याश्च नायकाः ॥
चन्द्रचन्दनरोलम्बरुताद्युद्दीपनं मतम् ।
भ्रूविक्षेपकटाक्षादिरनुभावः प्रकीर्त्तितः ॥
त्यक्त्वौग्र्यमरणालस्यजुगुप्सा व्यभिचारिणः ।
स्थायी भावो रतिः श्यामवर्णोऽयं विष्णुदैवतः ॥

---

माह किञ्चेति वेशचेष्टादिभिर्नायकसदृशीकरणमभिनयः तत्सम्बन्धान् तद्वराङ्गान् अभिनयेति काव्यमात्रपरं । सात्त्विक इति अनुभावत्वोपलक्षणं बहुवचनाद्विभावपरिग्रहः । सुखदुःखादिभिरिति सुखं शमः दुःखं शोकः आदिना रत्यादिपरिग्रहः सुखादिभिः स्थायिभावैस्तद्भावभावनं रसत्वप्रापणं यस्मात् स भाव इत्यर्थः । अष्टाविति नाट्याभिप्रायेण शान्तस्य नाट्ये तादृक् पुष्टिविरहात् तदुक्तं "अष्टौ नाट्ये रसाः स्मृता" इति ।

(ञ) शृङ्गमिति मन्मथस्य सम्भोगेच्छायाः उद्भेद उद्बोधः तदागमनहेतुकः मन्मथोद्भेदप्राप्तिजन्यः वीतरागानां रसानुत्पत्तेः उत्तमः प्रकृतिर्नायको यत्र सः प्राय इत्यनेन शृङ्गाराभासादावधमप्रकृतित्वं सूचितं

यथा। "शून्यं वासगृहमित्यादि"। अत्र उक्तस्वरूपः पतिरुक्तस्वरूपा च बाला आलम्बनविभावौ। शून्यं वासगृहमुद्दीपनविभावः। चुम्बनमनुभावः। लज्जाहासौ व्यभिचारिणौ। एतैरभिव्यक्तः सहृदयरतिभावः शृङ्गाररसरूपतां भजते। तद्भेदावाह।

**विप्रलम्भोऽथ सम्भोग इत्येष द्विविधो मतः।(ञ)**

तत्र।

**यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ॥**

अभिष्टं नायकं नायिकां वा।

**स च पूर्व्वरागमानप्रवासकरुणात्मकश्चतुर्द्धा स्यात्॥**

तत्र।

**श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः।**
**दशाविशेषो योऽप्राप्तौ पूर्व्वरागः स उच्यते॥**

---

एवञ्च शृङ्गं गच्छति कारणत्वेन प्राप्नोतीति शृङ्गारपदव्युत्पत्तिरवधेया अथ वा शृङ्गेनार्य्यते सामाजिकैः प्राप्यतेऽसाविति कर्मव्युत्पत्त्या प्रणालतत्पदं सिद्धं। अत्र शृङ्गारे परोढ़ा अनुरागिवेश्या वर्जनं तद्विषयरसस्य शृङ्गाराभासत्वादिति भावः। रोलम्बो भ्रमरः आदिना देशकालादिग्रहणं तद्भेदौ शृङ्गारभेदौ।

(ञ) तत्र तयोर्मध्ये विप्रलम्भमाह यत्र त्विति तु शब्दश्चार्थः। यत्र रसे प्रकृष्टा प्रकरणादिना प्रधानत्वं प्राप्ता रतिरक्ति नायिका नायको वा अभीष्टं नायकं नायिकां वा नोपैति नोपभुङ्क्तेऽसौ विप्रलम्भ इत्यर्थः। तथा चोपभोगाभावसम्बलितप्रकृष्टरतिविषयो रसो विप्रलम्भ इत्यर्थः। करुणादौ शोकोद्दीपनतया रतिसत्त्वे तत्राति-

श्रवणन्तु भवेत्तत्र दूतवन्दिसखीमुखात् ।
इन्द्रजाले च चित्रे च साक्षात् स्वप्ने च दर्शनम् ॥
अभिलाषश्चिन्तास्मृतिगुण
कथनोद्वेगसंप्रलापाश्च ।
उन्मादोऽथ व्याधिर्जड़ता-
मृतिरिति दशात्र कामदशाः ॥ (ञ)

---

व्याप्तिवारणाय प्रकृष्टेति सम्भोगेऽतिव्याप्तिवारणाय उपभोगाभावेति विप्रलम्भसमानविषयके ज्ञानान्तरे संस्कारे वा अतिव्याप्तिवारणाय रस इति अन्ये तु यत्र दुःखसम्वलितत्वाद्रतिर्नप्रकृष्टा अभीष्टमुपैति विषयीकरोति स विप्रलम्भ इति व्याकुर्वन्ति तन्न करुणेऽतिव्याप्तेः यदि च यत्र त्यस्य शृङ्गारे इति व्याकारात् करुणे नातिव्याप्तिरित्युच्यते तदा अभीष्टमुपैतीत्यस्यानर्थक्यं अभीष्टविषयकरतेरेव शृङ्गारत्वेन परिणामात् अपरे तु नायिकादिरभीष्टं नोपैति न सङ्गच्छते तथा चाभीष्टविच्छेदसम्वलिता रतिर्यत्र स विप्रलम्भ इत्याहुस्तन्न प्रणयमानादावभीष्टविच्छेदाभावे नाव्याप्तेः केचित्तु सम्भोगसुखसम्भिन्ना विप्रलम्भस्तु दुःखयुक् रतिस्तयोः प्रकर्षः स्यादाधिक्यात् सुखदुःखयोरिति दर्शनात् दुःखसम्वलितरतिस्थायिभावको रसो विप्रलम्भ इत्याहुस्तन्न प्रणयमाने दुःखायोगादव्याप्तेः । स च विप्रलम्भश्चतुर्द्धेति इदमुपलक्षणं विरहोऽपि वेदितव्यः स च गुर्वादिपरतन्त्रत्वात् सङ्गमप्रतिरोधः "यथा किं रुद्धः प्रियया कयाचिदित्यादि" अन्यथा तस्य निरुक्तप्रकारचतुष्टयानन्तर्भावात् लक्ष्यत्वाभावेन तत्र सामान्यलक्षणस्यातिव्याप्तिप्रसङ्गात् तत्र पूर्वरागादिषु । मिथ इति अन्योऽन्यमित्यर्थः । दशाविशेषोऽवस्थाभेदः अप्राप्तौ परस्परासङ्गमे वन्दिनः स्तुतिपाठकाः । दशाविशेषानाह अभिलाष इति दश दशप्रकाराः । अत्र पूर्वरागे कामकृता रतिजन्या दशाः कामदशाः ।

अभिलाषः स्पृहा चिन्ता प्राप्त्युपायादिचिन्तनम्।
उन्मादश्चापरिच्छेदश्चेतनाचेतनेष्वपि॥
अलक्ष्यवाक् प्रलापः स्याच्चेतसो भ्रमणाद्भृशम्।
व्याधिस्तु दीर्घनिःश्वासपाण्डुताकृशतादयः॥
जड़ता हीनचेष्टत्वमङ्गानां मनसस्तथा। (ट)

शेषं स्पष्टम्।

क्रमेणोदाहरणानि।

"प्रेमार्द्राः प्रणयस्पृशः परिचयादुद्गाढ़रागोदया-
स्तास्ता मुग्धदृशो निसर्गमधुराश्चेष्टा भवेयुर्मयि।
यास्वन्तःकरणस्य बाह्यकरणव्यापाररोधीक्षणा-
दाशंसापरिकल्पितास्वपि भवत्यानन्दसान्द्रो लयः"॥

अत्र मालतीसाक्षाद्दर्शनप्ररूढ़रागस्य माधवस्याभिलाषः।

"कथमीक्षे कुरङ्गाक्षीं साक्षाल्लक्ष्मीं मनोभुवः।
इति चिन्ताकुलः कान्तो निद्रां नैति निशीथिनीम्"॥

---

(ट) स्पृहा अभीष्टप्राप्तीच्छा अपरिच्छेदो विशेषनिर्द्धारणाभावः। अलक्ष्यवाक् निर्विषयं वचः शेषं स्पष्टत्यादिकं।

(ठ) प्रेमार्द्रा इति प्रेम्णा आर्द्रा निविड़संघट्टनाः प्रेमाभिव्यञ्जिका इति यावत् प्रणयं स्नेहं स्पृशयन्ति जनयन्ति परिचयान्मुहुर्मुहुर्दर्शनात् उद्गाढ़ उत्कठो यो रागः सुरतेच्छा तस्योदयो याभ्यस्ताः मुग्धदृशो मालत्याः चेष्टा नेत्रविक्षेपादिरूपाः क्रियाः बाह्यकरणव्यापाररोधी बाह्येन्द्रियसम्बन्धप्रतिबन्धकः आशंसापरिकल्पितासु सङ्कल्पविषयीभूतासु अन्तःकरणस्य लयो निविड़ा-

अत्र कस्याश्चिन्नायिकाया इन्द्रजालदर्शनप्ररूढ़रागस्य नायकस्य चिन्ता। इदं मम। "मयि सकपटमित्यादौ" नायकस्य स्मृतिः। "नेत्रे खञ्जनगञ्जने" इत्यादौ गुणकथनम्, "श्वासान् मुञ्चतीत्यादौ" उद्वेगः।

"त्रिभागशेषासु निशासु च क्षणं
निमील्य नेत्रे सहसा व्यबुध्यत।
क्व नीलकण्ठ! व्रजसीत्यलक्ष्यवाग-
सत्यकण्ठार्पितबाहुबन्धना"॥ (ठ)

अत्र प्रलापः। "भ्रातर्द्विरेफेत्यादौ" उन्मादः।

"पाण्डुक्षामं वदनं हृदयं सरसं तवालसञ्च वपुः।
आवेदयति नितान्तं क्षत्रियरोगं सखि! हृदन्तः"॥

अत्र व्याधिः।

"भिसिणीअलसअणीए णिहिअं सव्वं सुणिच्चलं अङ्गं।
दीहो णीसासहरो एससाहेइ जीअइ त्ति परं"॥

---

भिनिवेशो भवतीत्यन्वयः निशीथिनीमित्यविच्छेदे द्वितीया। इन्द्रजालेति इन्द्रजालस्य कुहकस्य क्रीड़ा। मयि सकपटमिति स्मृतिसञ्चारिभावो-दाहरणं। नेत्रे खञ्जनगञ्जने इति प्ररूढ़यौवनाया मध्यमनायिकाया उदाहरणं त्रिभागशेषासु तृतीयभागावशिष्टासु अलक्ष्यवाक् अविषय-वाक्यः असत्यं मिथ्या शिवस्य कण्ठेऽर्पितं बाहुबन्धनं यया यद्वा असत्यस्य अलीकदृष्टस्य शिवस्य कण्ठे अर्पितं बाहुबन्धनं यया।

(ड) भ्रातर्द्विरेफेति उन्मादसञ्चारिभावोदाहरणं क्षामं कृशं सरसं सानुरागं तव भावत्याः। क्षत्रियेति एतच्छरीराचिकित्स्येति हृदन्तः हृदयमध्ये। भिसिनीति बिसिनीदलशयनीये निहितं सर्वं सुनिश्चलमङ्गम्। दीर्घो निश्वासभर एव साधयति जीवतीति परमिति सं।

अत्र जड़ता। इदं मम॥

रसविच्छेदहेतुत्वान्मरणं नैव वर्ण्यते।

जातप्रायन्तु तद्वाच्यं चेतसाकाङ्क्षितं तथा॥

वर्ण्यतेऽपि यदि प्रत्युज्जीवनं स्याददूरतः।

तत्राद्यं यथा।

"शेफालिकां विदलितामवलोक्य तन्वी

प्राणान् कथञ्चिदपि धारयितुं प्रभूता।

आकार्ण्य सम्प्रति रुतं चरणायुधानां

किं वा भविष्यति न वेद्मि तपस्विनी सा"॥ (ढ)

द्वितीयं यथा।

* "रोलम्बाः परिपूरयन्तु हरितो झङ्कारकोलाहलै-

र्मन्दं मन्दमुपैतु चन्दनवनीजातो नभस्वानपि।

---

रसस्य रतेर्विच्छेदहेतुत्वात् विनाशहेतुत्वात् रत्याश्रयस्य मरणाद्रतेर्नाश इति मरणरूपानुभावेन रतेर्मिलनाभावात् रसत्वं नोपपद्यते इति भावः। ततः मरणं मरणात् परं जीवनं प्रत्युज्जीवनं प्रभूता समर्था संप्रति रात्रिशेषयामार्द्धे चरणायुधानां कुक्कुटानां किं कीदृगवस्था तपस्विनी ब्रह्मचारिणी मैथुनरहितत्वात् अथवा तुच्छा अर्द्धरात्रे शेफालिका-विकसति तदानीमेव त्वामप्राप्य कथञ्चित् प्राणान् धारयति रात्रिशेषया-मार्द्धे कुक्कुटा नदन्ति इदानीमपि त्वामप्राप्य सा मृतप्रायेति भावः।

(ढ) द्वितीयं चेतसा काङ्क्षितं मरणम्। नभस्वान् वायुः पञ्चमं स्वरविशेषं अश्मसारकठिना लौहकठिना तृतीयं प्रत्युज्जीवनसन्नि-

---

* रोलम्बाः भ्रमराः। हरितो दिशः। माद्यन्तः चूताङ्कुरस्वादेन

माद्यन्तः कलयन्तु चूतशिखरे केलीपिकाः पञ्चम
प्राणाः सत्वरमश्मसारकठिना गच्छन्तु गच्छन्त्वमी" ॥

ममैतौ ॥ तृतीयं यथा ।

कादम्बर्य्यां महाश्वेतापुण्डरीकवृत्तान्ते ।

एष च प्रकारः करुणविप्रलम्भविषय इति वक्ष्यामः ॥

केचित्तु ।

"नयनप्रीतिः प्रथमं चित्तासङ्गस्ततोऽथ सङ्कल्पः ।
निद्राच्छेदस्तनुता विषयनिवृत्तिस्त्रपानाशः ।
उन्मादो मूर्च्छा मृतिरित्येताः स्मरदशा दशैव स्युः इत्याहुः ॥

तत्र च ।

**आदौ वाच्यः स्त्रिया रागः पुंसः पश्चात्तदिङ्गितैः ॥**

इङ्गितान्युक्तानि यथा रत्नावल्यां सागरिकावत्सराजयोः ।
आदौ पुरुषानुरागे सम्भवत्यप्येवमधिकं हृदयङ्गमं भवति ॥

**नीली कुसुम्भं मञ्जिष्ठा पूर्व्वरागोऽपि च त्रिधा ।**
**न चातिशोभते यन्नापैति प्रेम मनोगतम् ॥**
**तन्नीलीरागमाख्यान्ति यथा श्रीरामसीतयोः ।**

---

कृष्टं मरणं एष तृतीयः नयनप्रीतिर्दर्शनेच्छा चित्तासङ्गः मनसः सङ्गतिर्नायकप्राप्तीच्छा सङ्कल्पः प्राप्त्युपायादिचिन्ता तत्र च पूर्व्वरागे च तदिङ्गितैः स्त्रीचेष्टाविशेषैः इङ्गितान्युक्तानीति अभिलाषादिरूपाणीत्यर्थः । एवं प्रथमं स्त्रिया रागवर्णनं मनोगतं मनोहरं एव-

---

उन्मत्ताः केलीपिकाः क्रीड़ार्थं पालिता कोकिलाः कलयन्तु अव्यक्तमधुरं गायन्तु ॥

कुसुम्भरागन्तं प्राहुर्यदपैति च शोभते॥
मञ्जिष्ठारागमाहुस्तं यन्नापैत्यतिशोभते।(ढ)

अथ मानः।

मानः कोपः स तु द्वेधा प्रणयेर्ष्यासमुद्भवः।
द्वयोः प्रणयमानः स्यात्प्रमोदे सुमहत्यपि॥
प्रेम्णः कुटिलगामित्वात्कोपो यः कारणं विना।

द्वयोरिति नायकस्य नायिकायाश्च उभयोश्च प्रणयमानो वर्णनीयः। उदाहरणम्। तत्र नायकस्य यथा।

अलीअपसुत्तअ विणिमीलिअच्छदेसु सुहअमजभ्रओआसं।
गण्डपरिउम्बणपुलइ अङ्ग ण उणो चिराइस्सं"॥

नायिकाया यथा कुमारसम्भवे सन्ध्यावर्णनावसरे।(ण)

---

मधिकहृदयङ्गमता भवतीति वा पाठः एवं प्रथमं स्त्रिया रागवर्णने कुसुम्भरागमञ्जिष्ठा।

(ण) रागयोर्लक्ष्यं दर्शयितव्यं अवश्यं यदि आव्यमानमाह अथेति स तु मानस्तु द्वयोः स्त्रीपुंसयोः प्रमोदे प्रेम्नि। ननु प्रमोदे सति कोप एव न भवति कथं तत्र मानलक्षणसङ्गतिरित्यत आह प्रेम्न इति कुटिलगामित्वात् कुटिलनायकादिवृत्तित्वात् कारणमपराधादि कुटिलस्य विनापि कारणं तत्सम्भावनया कोपो भवतीति भावः। यद्वा कुटिलगामित्वात् दुरवगमस्वभावत्वात्। अलिअ इति अलीकप्रसुप्तकविनिमीलिताक्ष देहि शुभग मह्यमवकाशम्। गण्डपरिचुम्बनपुलकिताङ्ग न पुनश्चिरयिष्यामि इति सम्। मम विलम्बेन तव क्रोधो जात इति लक्ष्यते पुनरेवं विलम्बं न करिष्यामि इति भावः। अत्रालीकस्वप्ने नायकस्य कौटिल्यम्।

(ल) उभयोर्यथा ।

"पणअकुविआणं दोसं वि अलिअपसुत्ताणं माणइल्लाणं ।
णिच्चलणिरुद्धणीसासदिसअसाणं को मल्लो" ॥

अनुनयपर्य्यन्तासहत्वे त्वस्य न विप्रलम्भभेदता किन्तु सम्भोगसञ्चारीर्ष्याख्यभावत्वम् ।

यथा ।

*"भ्रूभङ्गे रचितेऽपि दृष्टिरधिकं सोत्कण्ठमुद्वीक्षते
रुद्धायामपि वाचि सस्मितमिदं दग्धाननं जायते ।
कार्कश्यं गमितेऽपि चेतसि तनूरोमाञ्चमालम्बते
दृष्टे निर्व्वहणं भविष्यति कथं मानस्य तस्मिन् जने" ॥

यथा वा ।

† "एकस्मिन् शयने पराङ्मुखतया वीतोत्तरं ताम्यतो-
रन्योन्यस्य हृदि स्थितेऽप्यनुनये संरक्षतोर्गौरवम् ।

---

(ल) पणअ कुविआण इति प्रणयकुपितयोर्द्वयोरप्यलीकप्रसुप्तयोर्मानवितयोः । निश्चलनिरुद्धनिःश्वासदत्तकर्णयोः को मल्ल इति शेषम् । मल्लो मानभङ्गसमर्थः । प्रियवचनादिरूपमानभङ्गानुकूलव्यापारोऽनुनयस्तत्पर्य्यन्तासहत्वे तं विनैव भङ्गुरत्वे च इत्यर्थः । अस्य प्रणयमानस्य ईर्ष्या अत्वास्तया तस्या एव व्यभिचारित्वेन गणित-

---

* निर्व्वहणं निर्वाहः मानावलम्बनमित्यर्थः ।

† पराङ्मुखतया परिवृत्त्यशयितया वीतोत्तरं परित्यक्तवचनं यथा तथा ताम्यतोः क्षीणयतोः । रपाङ्गवलनात् तिर्य्यक् नेत्रान्तरचालनात् मिश्रीभवन्ति सम्मीलन्ती चक्षुंषि ययोः । मानकलिः प्रणय-

दम्पत्योः शनकैरपाङ्गवलनान्मिश्रीभवच्चक्षुषो-
र्भग्नो मानकलिः सहासरभसव्यासक्तकण्ठग्रहः" ॥

पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते ॥
ईर्ष्या मानो भवेत् स्त्रीणां तत्र त्वनुमितिस्त्रिधा ।
उत्स्वप्नायितभोगाङ्कगोत्रस्खलनसम्भवा ॥ (त)

तत्र दृष्टे यथा ।

"विनयति सुदृशोदृशोः परागं
प्रणयिनि ! कौसुमानानिलेन ।
तदहितयुवतेरभीक्ष्णमक्ष्णो-
र्द्वयमपि रोषरजोभिरापुपूरे" ॥

---

त्वात् । भ्रूभङ्ग इति मानोपदेष्ट्रीं सखीं प्रति नायिकाया उक्तिरियं दृग्धाननं तच्छुखं अधिकमित्युत्तरत्रापि स्थानद्वयेऽनुषज्यते अत्र दर्शनादीनामनुभावानां वलवत्त्वेन तैः परिपुष्टा रतिः सम्भोगत्वमेवाव-लम्बते भ्रूभङ्गादिभिर्व्यज्यमानाया ईर्ष्यायास्तत्तत्साधनत्वमेवेति भावः । स्त्रीणामिति प्रणयमानान्नायकस्यायं न भवतीति भावः । सुरतश्र-मवशादुत्कटनिद्राप्राप्तिरुत्स्वप्नायितं भोगाङ्कः सम्भोगचिह्नं गोत्रस्य नाम्नः स्खलनं अस्मिन्नुच्चारणं तत्सम्भवा तत्परामर्शजन्या ।

(थ) विनयति निरस्यति सति "परागः कौसुमे रेणौ स्नानीयादौ रजस्यपीति" शासनात्र कौसुममिति पौनरुक्त्यं । तस्या अहितयुवतेः प्रतिपक्षनायिकायाः रोषरजोभिर्नायकापराधजन्यक्रोधसम्भवरागैः ।

---

कलहः । सहासं यथा तथा रभसेन वेगेन व्यासक्तः दत्तः कण्ठग्रहः कण्ठाश्लेषो यस्मिन् सः ।

सम्भोगचिह्नेनानुमिते यथा ।

"नवनखपदमङ्गं गोपयस्यंशुकेन
स्थगयसि पुनरोष्ठं पाणिना दन्तदष्टम् ।
प्रतिदिशमपरस्त्रीसङ्गशंसीविसर्पन्
नवपरिमलगन्धः केन शक्यो वरीतुम्" ॥ (थ)

एवमन्यत्र ।

सामभेदोऽथ दानञ्च नत्युपेक्षे रसान्तरम् ।
तद्भङ्गाय पतिः कुर्य्यात् षड़ुपायानिति क्रमात् ॥
तत्र प्रियवचः साम भेदस्तत्सख्युपार्जनम् ।
दानं व्याजेन भूषादेः पादयोः पतनं नतिः ॥
सामादौ तु परिक्षीणे स्यादुपेक्षावधारणम् ।
रभसत्रासहर्षादेः कोपभ्रंशो रसान्तरम् ॥

यथा । "नो चाटुश्रवणे इत्यादि" । अत्र हि सामादयः पञ्च सूचिताः । रसान्तरमूह्यं ।

---

नवनखेति नायकं प्रति मानिन्या उक्तिरियं स्थगयसि आच्छादयसि परिमलो विमर्द्दलग्नकुङ्कुमादिः तस्य गन्धः केनोपायेन वरीतुं गोपयितुं ।

(द) प्रसङ्गात् मानभङ्गोपायानाह सामेति तद्भङ्गाय मानभङ्गाय तस्या मानिन्याः सख्या उपार्ज्जनं प्रसादनं अवधीरणं अवज्ञया त्यागः रभसः सम्भ्रमः यतो रभसादेः कोपभ्रंशः तद्रसान्तरमित्यर्थः । रसान्तरोदाहरणं यथा "कथं समोरसि कृतपक्षनिस्वनः शिलीमुखोऽपतदिति जल्पति प्रिये । विहत्य किं किमिति सजल्पया तया ससाध्वसं कुपितममोचि-कान्तया" । अत्र कान्तवक्षसि शरपतनशङ्कया मानभङ्गः । प्रवासमाह

अथ प्रवासः।

प्रवासो भिन्नदेशित्वं कार्य्याच्छापाच्च संभ्रमात्।
तत्राङ्गचेलमालिन्यमेकवेणीधरं शिरः॥
निश्वासोच्छ्वासरुदितभूमिपातादि जायते। (ढ)

किञ्च।

अङ्गेष्वसौष्ठवं तापः पाण्डुता कृशता रुचिः॥
अधृतिः स्यादनालम्बस्तन्मयोन्मादमूर्च्छनाः।
मृतिश्चेति क्रमाज्ज्ञेया दश स्मरदशा इह॥
असौष्ठवं मलापत्तिस्तापस्तु विरहज्वरः।
अरुचिर्वस्तुवैराग्यं सर्व्वत्रारागिता धृतिः॥
अनालम्बनता चापि शून्यता मनसः स्मृता।
तन्मयं तत्प्रकाशो हि बाह्याभ्यन्तरतस्तथा॥

शेषं स्पष्टम्। एकदेशतो यथा मम तातपादानाम्।

---

प्रवास इति भिन्नदेशित्वं भिन्नदेशवृत्तित्वं अत्रापि यत्रेत्यनुषज्यते यत्र स्त्रीपुंसयोर्भिन्नदेशित्वं तत्तदनुभावजनकत्वेन साध्यते प्रवास इत्यर्थः। अस्य कारणान्याह कार्य्यादिति अस्यानुभावानाह तत्रेति प्रवासे इत्यर्थः। अङ्गमालिन्यादिकं नायिकायाः।

(ध) मतान्तरमाह किञ्चेति दशेत्यत्र एकादशेति विज्ञेयं एवञ्च ज्ञेयेत्यत्र एकेति पाठः कल्पनीयः इह प्रवासे मलापत्तिर्मल-सम्बन्धः शून्यता विषयाग्राहित्वं तत्प्रकाशः तस्य नायकस्यालोकदर्शनं बाह्याभ्यन्तरत इति वहिरिन्द्रियग्राह्यो मनोग्राह्यो वेत्यर्थः। चिन्ता-भिरिति विरहिणीसख्याः कश्चित् प्रत्युक्तिरियं स्तिमितं जड़ीकृतं

"चिन्ताभिः स्तिमितं मनः करतले लीना कपोलस्थली
प्रत्यूषक्षणदेशपाण्डुवदनं श्वासैकखिन्नोऽधरः ।
अश्रुःशीकरपद्मिनीकिशलयैर्नोपैति तापः शमं
कोऽस्याः प्रार्थितदुर्लभोऽस्ति सहते दीनां दशामीदृशीम्" ॥

**भावी भवन् भूत इति त्रिधा स्यात्तत्र कार्य्यजः ।**

कार्य्यजस्य बुद्धिपूर्वकत्वात् त्रैविध्यम् । (ध)

तत्र भावी यथा मम ।

"यामः सुन्दरि ! याहि पान्थदयिते ! शोकं वृथा मा कृथाः
शोकस्ते गमने कुतो मम ततो वाष्पं कथं मुञ्चसि ।
शीघ्रं न व्रजसीति मां गमयितुं कस्मादियं ते त्वरा
भूयानस्य सह त्वया जिगमिषोर्जीवस्य मे सम्भ्रमः" ॥

भवन् यथा ।

"प्रस्थानं वलयैः कृतं प्रियसखैरस्रैरजस्रं गतं
धृत्या न क्षणमासितं व्यवसितं चित्तेन गन्तुं पुरः ।

---

विषयान्तरसञ्चयाच्चमसिति यावत् एतेनानालम्बनता सूचिता श्वासैकखिन्नो न तु कान्तदर्शनच्छलेन प्रार्थितः सन् दुर्लभः यो दीनां दैन्यव्यञ्जिकां दशां सहते इत्यर्थः । बुद्धिपूर्वकत्वात् स्वेच्छया विधीयमानत्वात् एवञ्च भिन्नदेशगमनस्य सम्भावनायां भावित्वम् । निश्चये वर्त्तमानत्वं निष्पत्तौ भूतत्वं अन्ययोस्तु सम्भावनानिश्चयाद्यभावादेकविधत्वमेव ।

(न) याम इति वर्त्तमानसामीप्ये लट् गमन सम्भावनामात्रेण यत् पान्थेति सम्बोधनं तत् स्वस्मिन् कान्तस्य प्रेमाभावसूचनाय तदवगत्य झटित्येव दयिते इत्यनेन सम्बोधनं ततः शोकाभावादिति हेतोर्वाष्पं मुञ्चसीत्यर्थः । जीवस्य प्राणानां सम्भ्रमस्त्वरा अत्र कान्तासम्मतिसापेक्ष्यतया गमनस्य सम्भावनामात्रं प्रस्थानमिति कान्तस्य

यातुं निश्चितचेतसि प्रियतमे सर्वे समं प्रस्थिता
गन्तव्ये सति जीवितप्रियसुहृत् सार्थः किमु त्यज्यते" ॥

भूतो यथा। "चिन्ताभिः स्तिमितमित्यादि"। (न) शापाद्यथा। "तां जानीया इत्यादि"। सम्भ्रमो दिव्यमा-

---

प्रवासं निश्चित्य स्वजीवितं प्रति नायिकाया उक्तिरियं उ भो जीवित-प्रियतम प्रवासे सति त्वयावश्यं गन्तव्यं तथाच प्रियतमे यातुं निश्चितचेतसि सति त्वया च वलयादिप्रियसुहृत्सार्थः किं कथं त्यज्यते तेनैव सार्द्धं गम्यतामित्यर्थः। प्रियसुहृद्भिः सह गमने कष्टातिशयो न भविष्यति जीवितसत्त्व एव वलयादिधारणं क्रियते इति वलयादीनां जीवितप्रियसुहृत्त्वं प्रस्थानमाह प्रस्थानमिति यातेत्यर्थः बहुदिनव्यापकतद्वार्त्तया कार्श्येन वलयभ्रंशः अश्रैरसुभिः अजस्रं निर-वच्छिन्नं गतं गन्तुमारब्धं एषु पुनः प्रियसखत्वोपादानं अत्यन्तप्रियत्व-सूचनाय तच्चेष्टदुःखे अश्रुपातेनैव जीवितरक्षो भवतीति स्वरक्षाकारि-त्वात् अन्ये तु अश्रुजीवितयोरेकहृदयगामित्वादत्यन्तप्रियत्वमित्याहुः तेषामयमाशयः नाड़ीविशेषेण हृत्कोषादश्रुनिर्गमो भवतीति न चैवं धृतेरपि प्रियसखत्वापत्तिरितिवाच्यं धृतेरात्मधर्मत्वेन मनोधर्मत्वेन वा हृदयवृत्तित्वायोगात् नासितं गतं पुरो गन्तुमित्यनेन चित्तस्य पुरःसरत्वमेवोपपादितं न तु विभिन्नकालीनं गमनं तेन समं प्रस्थिता इति नानुपपन्नं यद्वा प्रियजीवन एव वलया धार्य्यन्ते इति वलयानां धृतेः प्रीतजनकत्वात् चित्तस्य तत्प्रवणत्वात् प्रियस्य सुहृत्त्वं अप्राणनान्तु मानभङ्गव्यञ्जकतया अत्यन्तसखित्वमिति अत्र पृथक् प्रियसखत्वोपादानं प्रियतमगमने गन्तुमारब्धा वलयादयः सख्योदितं कर्म कुर्वन्ति त्वमपि प्रियस्य सुहृद्भवसीति तवापि गमनं न्याय्यमित्याह गन्तव्ये सतीति अत्रेय-मुक्तिरनुभावः अश्रुपातहृत्तापव्यङ्ग्यो विषादो व्यभिचारिभावः प्रियतम आलम्बनं नायिकाया रतिस्ते सामाजिके रसोत्पत्तिः।

नुषनिर्घातोत्पातादिजः । यथा । विक्रमोर्वश्यामुर्वशीपुरूरवसोः ॥

अत्र पूर्वरागोक्तानामभिलाषादीनामत्रोक्तानाञ्चाङ्गसौष्ठवादीनामपि दशानामुभयेषामप्युभयत्र सम्भवेऽपि चिरन्तनप्रसिद्ध्या विविच्य प्रतिपादनम् ॥

अथ करुणः ।

**यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये ।**
**विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः ॥**

यथा कादम्बर्य्यां पुण्डरीकमहाश्वेतावृत्तान्ते ॥

पुनरलभ्ये शरीरान्तरेण वा लभ्ये तु करुणाख्य एव रसः । किञ्चात्राकाशसरस्वतीभाषानन्तरमेव शृङ्गारः । सङ्गमप्रत्याशायां रतेरुद्भवात् । प्रथमन्तु "करुणः एव" इत्यभियुक्ता मन्यन्ते । यच्चात्र "सङ्गमप्रत्याशानन्तरमपि भवतो विप्रलम्भशृङ्गारस्य प्रवासाख्यो भेद एव इति" केचिदाहुः ।

---

(प) तां जानीया इति प्रोषितभर्त्तृकाया नायिकाया उदाहरणमिदं दिव्यो विद्युदुल्कादिः मानुषो मर्त्यलोके भवो भूकम्पादिः निर्घात इति नाभसोपलक्षणं उत्पातोऽनिष्टसूचको दैवकृतः प्रकृतिविपर्य्यासः आदिना उन्मादादिपरिग्रहः उर्वशीपुरोरवसोरिति उर्वशी हि पुरा मित्रावरुणशापात् मनुष्यलोकं प्राप्य पुरुरवसो गृहे यदि भवन्तं सुरतसमयातिरिक्तसमये नग्नं पश्यामि तदा त्वामहं त्यक्ष्यामि मम मेषद्वयञ्च भवता रक्षणीयं इति नियमं कृत्वा स्थिता तदनन्तरं देवैरन्धतमसे मेषद्वयमपहृतं तत् श्रुत्वा पुरोरवाः संभ्रमेण वस्त्रमपरिधायैव खड्गपाणिर्मेषापहर्त्तुः पश्चाद्धावितः एतस्मिन्नन्तरे

तदन्ये मरणरूपविशेषसम्भवात्तद्भिन्नमपि मन्यन्ते । अथ सम्भोगः ॥

दर्शनस्पर्शनादीनि निषेवेते विलासिनौ ।
यत्रानुरक्तावन्योऽन्यं सम्भोगोऽयमुदाहृतः ॥ (प)

आदिशब्दादन्योऽन्याधरपानचुम्बनादयः । यथा । "शून्यं वासगृहमित्यादि" ।

संख्यातुमशक्यतया चुम्बनपरिरम्भणादिबहुभेदात् ।
अयमेक एव धीरैः कथितः सम्भोगशृङ्गारः ॥
तत्र स्यादृतुषट्कं चन्द्रादित्यौ तथोदयास्तमयः ।
जलकेलिवनविहारप्रभातमधुपानयामिनीप्रभृतिः ॥
अनुलेपनभूषाद्यावाच्यं शुचिमेध्यमन्यच्च ॥

---

विद्वद्भिस्तं नग्नमवलोक्य उर्वशी स्वर्गं गतेति पद्यस्य वर्त्तुलार्थः । अत्र दैवकृतमेषापहरणरूपदिव्योत्पातेन पुरोरवसः संभ्रमः तेनोर्वश्या भिन्नदेशवृत्तित्वं उभयत्र पूर्वरागे प्रवासे च । करुणविप्रलम्भमाह यूनोरिति विमनायते शोकव्याकुलचित्ततया विलापं कुरुते पुनरलभ्य इति रतेर्नाशात् उत्कटशोकसम्भवाच्च करुणाख्यो रसो न पुनर्विप्रलम्भ इति भावः । अत्र विशेषमाह किञ्चेति निषेवेते कुरुतः एकतरस्यानुरागाभावे शृङ्गाराभास इति तद्वारणायान्योऽन्यमिति ।

(फ) शून्यमिति व्याख्यातमेतत् प्राक् एक एकप्रकारः सम्भोगोद्दीपनविभावानाह तत्रेति सम्भोगे इत्यर्थः स्यात् उपयुक्तं भवति वाच्यं सम्भोगोद्दीपकतया वर्णनीयं शुचिमेध्यमत्यन्तनिर्मलं अन्यत् हर्म्यादि संख्यातुं शक्या ये सम्भोगभेदास्तानाह किञ्चेति एतद्भेद-

तथा च भरतः । "यत्किञ्चिल्लोके शुचिमेध्यमुज्ज्वलं दर्शनीयं वा तत्सर्वं शृङ्गारेणोपमीयते उपयुज्यते" । किञ्च ।

**कथितश्चतुर्विधोऽसावानन्तर्य्यात्तु पूर्वरागादेः ।**

यदुक्तम् ।

"न विना विप्रलम्भेन सम्भोगः पुष्टिमश्नुते ।
कषायिते हि वस्त्रादौ भूयान्रागो विवर्द्धते" ॥

तत्र पूर्व्वरागानन्तरं सम्भोगो यथा कुमारसम्भवे पार्व्वतीपरमेश्वरयोः । प्रवासानन्तरं सम्भोगो यथा मम तातपादानाम् । (फ)

"क्षेमं ते ननु पक्ष्मलाक्षि किमयं क्षेमं महङ्गं दृढ़ं
एतादृक् कृशता कुतस्तुह पुणो पुट्ठं शरीरं जदो ।
केनाहं पृथुलः प्रिये ! पणइणी देहः स सम्मीलनात्
त्वत्तः सुभ्रु ! न कापि मे जइ इदं क्षेमं कुदो पुच्छसि" ॥

एवमन्यत्राप्यूह्यम् । अथ हासः ।

---

वादिमतापेक्षया पक्षान्तरसूचनं आदिना मानप्रवासकरुणविप्रलम्भानां ग्रहणम् । अश्नुते प्राप्नोति एतेन पूर्वरागादिकं विनापि सम्भोगः सम्भवतीति सूचितम् । तथा च प्रकृष्टाप्रकृष्टभेदेन सम्भोगो द्विविधः विप्रलम्भानन्तरः प्रकृष्टः स च विप्रलम्भस्तु भेदेन चतुर्विधः तद्विपरीतोऽपकृष्ट इति फलितम् ।

(ब) क्षेमं ते इति संस्कृतेन नायकस्य प्रश्नः प्राकृतेन नायिकाया उत्तरम् । किमयं कथकं क्षेमं ममाङ्गं दृढं अतिशयितं कृशं यन्ममाङ्गं तदेव क्षेममित्यर्थः । तत्र पुनः पुष्टं शरीरं यतः प्रणयिनीदेहस्य सम्मीलनात् । यदिदं क्षेमं कुतः पृच्छसि । अपरो यथा मम "पादप्रणतमालोक्य कान्तमेकान्तकातरम् । मुञ्चन्ती वासमन्तानं

विकृताकारवाग्वेशचेष्टादेः कुहकाद्भवेत् ॥
हासो हास्यस्थायिभावः श्वेतः प्रमथदैवतः।
विकृताकारवाक् चेष्टं यमालोक्य हसेज्जनः ॥
तदत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम्।
अनुभावोऽक्षिसङ्कोचवदनस्मेरतादयः ॥
निद्रालस्यावहित्याद्या अत्र स्युर्व्यभिचारिणः।

ज्येष्ठानां स्मितहसिते मध्यानां
विहसितावहसिते च
नीचानामपहसितं तथा
ऽतिहसितञ्च षड्भेदाः। (ब)

ईषद्विकासि नयनं स्मितं स्यात् स्पन्दिताधरम्।
किञ्चिल्लक्ष्य द्विजं तत्र हसितं कथितं बुधैः ॥

---

सुमुखी तेन चुम्बिता"। "कान्ते घोरकृतान्तवक्त्रकुहरात् त्वं पुण्य-पुञ्जेन मे मुक्ताक्रन्ततदर्जनश्रमभरं प्रत्यङ्गमालिङ्ग्य माम्। दूत्याकर्ण्यं निमीलितार्द्धनयनं स्मेरं शनैरानतं सोल्लासं वदनाम्बुजं कृतदृशः स्मेरं चुचुम्बे प्रियः"। हास्यरसमाह विकृतेति विकृता आकारादयो यस्य तस्मात् कुहकात्। नर्त्तकात् एतदुपलक्षणं विकृताकारादिविषयकश्रव्यकाव्यादपि। कुतकादिति पाठे विकृताकारादिजन्यात् कौतुकादित्यर्थः। अत्र हास्यरसे तच्चेष्टा विकृताकारादिपुरुषचेष्टा हास्यरसस्थायिभावस्य हासस्य भेदानाह ज्येष्ठानामिति उत्तमानामित्यर्थः। तदिति हासभेदादित्यर्थः। एष हास्यरसः।

(भ) स्मितादीनां लक्षणमाह ईषदिति तत्र हासेषु मध्ये गुरो

मधुरस्वरं विहसितं सां-
शशिरःकम्पमवहसितम् ।
अपहसितं सास्राच्चं क्षिप्ता-
ङ्गं भवत्यतिहसितम् ॥

यथा मम ।

गुरोर्गिरः पञ्च दिनान्यधीत्य
वेदान्तशास्त्राणि दिनत्रयञ्च ।
अमी समाघ्राय च तर्कवादान्
समागताः कुक्कुटमिश्रपादाः ॥

अस्य नटकमेलकप्रभृतिषु परिपोषो द्रष्टव्यः ।

अत्र च ।

यस्य हासः स चेत् क्वापि साक्षान्नैव निबध्यते ।
तथाप्येष विभावादिसामर्थ्यादुपलभ्यते ॥
अभेदेन विभावादि साधारण्यात् प्रतीयते ।
सामाजिकैस्ततो हास्यरसोऽयमनुभूयते ॥

एवमन्येष्वपि रसेषु बोद्धव्यम् । ( भ )

---

प्रभाकरस्य । ननु रसे नायकस्याभेदः सामाजिके भासते स चात्र श्लोकेन निबद्धः कथं तस्याभेदारोपो जायतामित्यत आह अत्र चेति चकारादन्यत्र एव नायकः विभावादेः सामर्थ्यात् अन्यथानुपपत्तिज्ञानात् । ततः किमित्यत आह अभेदेनेति स्वपरसाधनत्वेनेत्यर्थः । साधारण्यात् साधारणीकरणव्यापारात् ततश्च साधारण्यज्ञानात् ।

अथ करुणः।

इष्टनाशादनिष्टाप्तेः करुणाख्यो रसो भवेत्।
धीरैः कपोतवर्णोऽयं कथितो यमदैवतः॥
शोकोऽत्र स्थायिभावः स्याच्छोच्यमालम्बनं मतम्।
तस्य दाहादिकावस्था भवेदुद्दीपनं पुनः॥
अनुभावा दैवनिन्दा भूपातक्रन्दितादयः।
वैवर्ण्योच्छ्वासनिश्वासस्तम्भप्रलपनानि च॥
निर्वेदमोहापस्मारव्याधिग्लानिस्मृतिश्रमाः।
विषादजड़तोन्मादचिन्ताद्या व्यभिचारिणः॥

शोच्यं विनष्टबन्धुप्रभृति। यथा मम राघवविलापे।
"विपिने क्व जटानिबन्धनं तव चेदं क्व मनोहरं वपुः।
अनयोर्घटनाविधेः स्फुटं ननु खड्गेन शिरीषकर्त्तनम्"॥

अत्र हि रामवनवासजनितशोकार्त्तस्य दशरथस्य दैवनिन्दा। एवं बन्धुवियोगविभवनाशादावप्युदाहार्य्यम्। परिपोषस्तु महाभारते स्त्रीपर्व्वणि द्रष्टव्यः। अस्य करुणविप्रलम्भाद्भेदमाह।

---

(म) करुणरसमाह इष्टेति इष्टनाशः पुत्रादेर्विच्छेदो मरणञ्च वित्तादेर्विनाशश्च। अनयोर्जटाधारणश्रीरामशरीरयोः घटना योजना खड्गेन शिरीषकर्त्तनमिवेत्यर्थः। अत्र प्रकरणाद्दशरथो नायको लभ्यते इति विद्दणोति अत्रेति अनुचिताचरणमेव दैवनिन्दा सैवानुभावः। बन्धुवियोगो बन्धुमरणं तत्र यथा "गृहिणी सचिवः सखा मिथः प्रियशिष्या ललिते कलाविधौ। करुणाविमुखेन मृत्युना हरता त्वां वद किं

शोकस्थायितया भिन्नो विप्रलम्भादयं रसः ।
विप्रलम्भे रतिः स्थायी पुनः सम्भोगहेतुकः ॥ (म)

अथ रौद्रः ।

रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः ।
आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम् ॥
मुष्टिप्रहारपतनविकृतच्छेदावदारणैश्चैव ।
संग्रामसम्भ्रमाद्यैरस्योद्दीप्तिर्भवेत् प्रौढ़ा ॥
भ्रूविभङ्गोष्ठनिर्दंशबाहुस्फोटनतर्जनाः ।
आत्मावदानकथनमायुधोत्क्षेपणानि च ॥
उग्रतावेगरोमाञ्चस्वेदवेपथवो मदः ।
अनुभावास्तथाक्षेपः क्रूरसन्दर्शनादयः ।
मोहोऽमर्षादयस्तत्र भावाः स्युर्व्यभिचारिणः ॥

---

नाम हृतम्" । अत्रेन्दुमती मरणजनितशोकार्त्तस्याजस्य मृत्युनिन्दा । वित्तनाशो यथा "प्रातर्भवामि वसुधाधिपचक्रवर्त्ती सोऽहं व्रजामि विपिने जटिलस्तपस्वी । यच्चिन्तितं तदिह दूरतरं प्रयाति यच्चेतसा न गणितं तदिहाभ्युपैति" । अत्र नष्टराजश्रियः रामस्य परिदेवनं स्थायी भाव इति शेषः । पुनः सम्भोगो हेतुर्ज्ञापको यस्य सः ।

(य) रौद्ररसमाह रौद्र इति तच्चेष्टा रिपुचेष्टा तां विशिष्याह मुष्टीति विकृतं विरुद्धाचरणं छेदः खड्गादिना अवदारणं शूलादिना अस्य रौद्रस्य "अवदानं कर्म वृत्तमित्यमरः" । कृतमिति द्रोणशिरश्छेदेन क्रुद्धस्याश्वत्थाम्नोऽर्जुनं सम्बोध्योक्तिरियं इदं मत्पितृशिरश्छेदरूपं गुरुपातकं तत्कारणं कर्म यैरुद्यतायुधैर्मर्य्यादाशून्यैस्तदेव अनुज-

यथा।

"कृतमनुमतं दृष्टं वा यैरिदं गुरु पातकं
मनुजपशुभिर्निर्मर्य्यादैर्भवद्भिरुदायुधैः।
नरकरिपुणा सार्द्धं तेषां सभीमकिरीटिना-
मयमहमसृङ्‌मेदोमांसैः करोमि दिशां बलिम्" ॥

अस्य युद्धवीराद्भेदमाह।

रक्तास्यनेत्रता चात्र भेदिनी युद्धवीरतः। (२)

अथ वीरः।

उत्तमप्रकृतिर्वीर उत्साहस्थायिभावकः ॥
महेन्द्रदैवतो हेमवर्णोऽयं समुदाहृतः।
आलम्बनविभावास्तु विजेतव्यादयो मताः ॥
विजेतव्यादिचेष्टाद्यास्तस्योद्दीपनरूपिणः।
अनुभावास्तु तत्र स्युः सहायान्वेषणादयः ॥

---

पशुभिर्भवद्भिः कृतं अनुमतं दृष्टं वा नरकरिपुणा कृष्णेन सार्द्धं भीम-किरीटिसहितानां तेषां मेदो मांसैरयमहं दिशां दिगवस्थितभूतानां बलिं करोमीत्यर्थः। अयमेतत् वचनवक्त्रैव अश्वत्थाम्नः क्रोधस्था-र्जुनादिरालम्बनं तद्कार्य्यमुद्दीपनं तादृशगर्ज्जनमनुभावः गर्ज्जनव्यङ्ग्यो गर्वोऽमर्षश्च व्यभिचारी क्रोधस्य सामाजिके रसोत्पत्तेः। ननु रौद्रयुद्धवीरयोः रिपुरालम्बनविभाव इत्यनयोरभेद एवापतित इत्यनयोर्भेदं दर्शयितुमाह अस्येति रौद्रस्येत्यर्थः। रक्तास्यनेत्रताव्यङ्ग्यः क्रोध एव भेदः। तथा चोभयत्र रिपोरालम्बनत्वेऽपि क्रोधाविर्भावे रौद्रः उत्साहाविर्भावे वीर इत्यनयोर्भेद इति भावः।

(२) वीररसमाह उत्तमप्रकृतिरिति उत्तमा धीरोदात्तरूपा

सञ्चारिणस्तु धृतिमति-
गर्वस्मृति तर्करोमाञ्चाः ।
स च धर्मदानयुद्धैर्दयया
च समन्वितश्चतुर्द्धा स्यात् ॥

स च वीरः । दानवीरो धर्म्मवीरो दयावीरो युद्धवीरश्चेति चतुर्व्विधः । तत्र दानवीरो यथा परशुरामः । "त्यागः सप्तसमुद्रमुद्रितमहीनिर्व्याजदानावधिरिति" । अत्र परशुरामस्य त्यागे उत्साहः स्थायी भावः । सम्प्रदानभूतैः ब्राह्मणैरालम्बनविभावैः सत्त्वाध्यवसायादिभिश्चोद्दीपनविभावैर्व्विभावितः सर्व्वस्वत्यागादिभिरनुभावैरनुभावितो हर्षधृत्यादिभिः सञ्चारिभिः पुष्टिं नीतो दानवीरतां भजते । धर्म्मवीरो यथा युधिष्ठिरः ।

"राज्यञ्च वसु देहश्च भार्य्या भ्रातृसुताश्च ये ।
यच्च लोके ममायत्तं तद्धर्म्माय सदोद्यतम्" ॥ (२)

---

प्रकृतिर्नायको यत्रेत्यर्थः । यद्वा उत्तमा चमत्कारातिशया धायकतया रसान्तरादुत्कृष्टा प्रकृतिः स्वभावो यस्य इत्यर्थः । विजेतव्यादिचेष्टादीत्यादिना दाने सत्वाध्यवसायादेर्धर्मे धर्मशास्त्राध्ययनादेर्दयायां दीनस्य कातरोक्त्यादेर्ग्रहणं सहायः सहकारी स च युद्धे सैन्यं दाने वित्तं धर्मे द्रव्यमन्त्रादि दयायां त्यागादि रोमाञ्चस्य सञ्चारिभावत्वाभावात् तज्जनकत्वेन लक्षणा । स चेति वीरस्तेत्यर्थः । दानादावुत्साहसम्भवादिति भावः । त्याग इति सप्तभिः समुद्रैर्मुद्रिता वेष्टिता या मही तस्या निर्व्याजं निरुपाधि यद्दानं तदेवावधिर्यस्य सः तत्तस्य गुणविशेषस्य अध्यवसाय उद्रेकः आदिना प्ररोचनादेर्ग्रहणं

युद्धवीरो यथा श्रीरामचन्द्रः।

"भो लङ्केश्वर ! दीयतां जनकजा रामः स्वयं याचते
कोऽयं ते मतिविभ्रमः स्मर नयं नाद्यापि किञ्चित् कृतम्।
नैवञ्चेत् खरदूषणत्रिशिरसां कण्ठासृजा पङ्किलः
पत्री नैष सहिष्यते मम धनुर्ज्याबन्धबन्धूकृतः" ॥

दयावीरो यथा जीमूतवाहनः।

"शिरामुखैः स्यन्दत एव रक्त-
मद्यापि देहे मम मांसमस्ति।
तृप्तिं न पश्यामि तवापि तावत्
किं भक्षणात्त्वं विरतो गरुत्मन्।"

एष्वपि विभावादयः पूर्व्वोदाहरणवदूह्याः।

अथ भयानकः।

**भयानको भयस्थायिभावः कालाधिदैवतः।**
**स्त्रीनीचप्रकृतिः कृष्णो मतस्तत्त्वविशारदैः॥**
**यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम्।**
**चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुनः॥**

---

राज्यञ्चेति उद्यतमुपयुक्तं अत्र युधिष्ठिरस्य वैदिककर्मण्युत्साह एतादृशोक्तैरनुभावेनास्वाद्यमानः सामाजिकानां रसतामापद्यते।

(ल) भो इति रावणं प्रति श्रीरामस्योक्तिरियं नयं नीतिं गतं नष्टं एवं जनकजादानं पत्री शरः कात्मनोऽसहनं पत्रिण्यारोपितं रिपुहनने तस्य प्रधानोपायत्वसूचनाय ज्याबन्धबन्धूकृतो गुणयोजितः। अत्र श्रीरामस्य युद्धोत्साहः एतादृशोक्तैरनुभावेनास्वाद्यमानः सामाजिकानां रसतामापद्यते। शिरामुखैरिति नाड़ीच्छेदैः इत्यर्थः। मम जीमूत-

अनुभावोऽत्र वैवर्ण्यं गद्गदस्वरभाषणम् ।
प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादयः ॥
जुगुप्सावेगसम्मोहसन्त्रासग्लानिदीनताः ।
शङ्कापस्मारसम्भ्रान्तिमृत्याद्या व्यभिचारिणः(ल)

यथा ।

"नष्टं वर्षवरैर्मनुष्यगणनाभावादपास्य त्रपा-
मन्तःकञ्चुकि कञ्चुकस्य विशति त्रासादयं वामन इत्यादि" ॥

अथ बीभत्सः ।

जुगुप्सास्थायिभावस्तु बीभत्सः कथ्यते रसः ।
नीलवर्णो महाकालदैवतोऽयमुदाहृतः ॥
दुर्गन्धमांसपिशितमेदांस्यालम्बनं मतम् ।
तत्रैव कृमिपाताद्यमुद्दीपनमुदाहृतम् ॥
निष्ठीवनास्यवलननेत्रसङ्कोचनादयः ।

---

वाहनस्य गरुत्मन्निति श्येनरूपधारिणः शक्रस्य सम्बोधनं अत्र जीमूतवाहनस्य कपोतरूपधारिधर्मात्मकपरदुःखप्रहरणोत्साहः स्वदेहमांसत्यागानुभावेनास्वाद्यमानः सामाजिकानां रसतामापद्यते । भयानकरसमाह भयानक इति स्त्रीनीचप्रकृतिरिति स्त्रीनीचनायक इत्यर्थः बालस्त्रीनीचनायक इति रुद्रपाठोक्तेर्बालनायकत्वमपि बोध्यं तस्यानुभवस्य संभ्रान्तिरुन्मादः ।

(व) नष्टमिति अत्र वर्षवरादीनां नीचानां वानरवेशेनान्तःपुरप्रविष्टं विदूषकमालोक्य जायमानं भयं नाशाद्यनुभावेनास्वाद्यमानं सामाजिकानां रसतामापद्यते । स्त्रीनायको भयानको यथा "इदं मघोनः कुलिशं धारासन्निहितानलम् । स्मरणं यस्य दैत्यस्त्री गर्भ-

**अनुभावास्तत्र मतास्तथा स्युर्व्यभिचारिणः ॥**
**मोहोऽपस्मार आवेगो व्याधिश्च मरणादयः।(व)**

यथा।

"उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोथभूयांसि मांसा-
न्यंशस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रपूतीनि जग्ध्वा।
अन्तःपर्य्यस्तनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति" ॥

अथाद्भुतः।

**अद्भुतो विस्मयस्थायिभावो गन्धर्वदैवतः।**
**पीतवर्णो वस्तु लोकातिगमालम्बनं मतम् ॥**

---

पाताय कल्पते"। बालनायको यथा "घोरमम्भोधरध्वानं निशम्य व्रजबालकाः। मातुरङ्के न्यलीयन्त सकम्पविकृतस्वराः" बीभत्सरसमाह जुगुप्सेति निष्ठीवनं खुतकप्रक्षेपः आस्यवलनं मुखसम्वरणम्।

(व) उत्कृत्येति श्मशाने शवं भुञ्जानं प्रेतं दृष्ट्वा माधवस्योक्तिरियं अयं प्रेतरङ्कः प्रेतदरिद्रः अङ्कस्थात् क्रोड़स्थात् करङ्कात् मृतशरीरात् अस्थिसंस्थं स्थपुटगतं सन्धिसंस्थमपि क्रव्यं मांसं अव्यग्रमव्याकुलं यथास्यात्तथा अत्तीत्यन्वयः। क्रमेण भक्षणादव्यग्रता भक्षणक्रममाह उत्कृत्येति प्रथमं कृत्तिं चर्म उत्कृत्योत्कृत्य पुनःपुनश्छित्वा अत्तीत्यनेनान्वयः अथानन्तरं पृथूच्छोथेन महोत्फुल्लतया भूयांसि बहुलानि अंशः स्कन्धस्फिक् नितम्बः आदिना जरुपरिग्रहः अंशाद्यवयवेषु सुलभानि उग्रपूतीनि उत्कटदुर्गन्धीनि जग्ध्वा भुक्त्वेत्यन्वयः स्थपुटगतस्याकर्षणादार्त्तत्वं तदाकर्षणार्थञ्च दशनप्रकटनं कश्चिदाच्छिद्य नेष्यतीति भयात् पर्य्यस्तनेत्रत्वं करङ्कोऽस्थिशेषं शिरः स्थपुटो विकटगभीरभाग इति चण्डीदासः। अत्र माधवस्य जुगुप्सा शवप्रेताभ्यामालम्बनाभ्यां पूतिगन्धा-

गुणानां तस्य महिमा भवेदुद्दीपनं पुनः।
स्तम्भः स्वेदोऽथ रोमाञ्चगद्गदस्वरसम्भ्रमाः॥
तथा नेत्रविकासाद्या अनुभावाः प्रकीर्त्तिताः।
वितर्कावेगसम्भ्रान्तिहर्षाद्या व्यभिचारिणः॥

यथा।

"दोर्दण्डाञ्चितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यत-
टङ्कारध्वनिरार्य्यबालचरितप्रस्तावनाडिण्डिमः।
द्राक्पर्य्यस्तकपालसंपुटमिलद्ब्रह्माण्डभाण्डोदर-
भ्राम्यत्पिण्डितचण्डिमा कथमहो नाद्यापि विश्राम्यति"॥(ग)

---

(ग) उद्दीपनेन तादृशुक्त्या आक्षेपलभ्येन निष्ठीवनादिना चानुभावेन तथैव मोहादिव्यभिचारिणा च सम्वलितो वीभत्सो रसः। अद्भूतरसमाह अद्भूत इति लोकातिगं लोकातिवर्त्ति। दोर्दण्डेति दीर्घकालव्यापकेन हरधनुष्टङ्कारेण विस्मितस्य लक्ष्मणस्योक्तिरियं दोर्दण्डाभ्यामञ्चित आकुञ्चितो यश्चन्द्रशेखरस्य हरस्य धनुर्द्दण्डस्तस्यावभङ्गाय उद्यत उद्गत आर्य्यस्य श्रीरामस्य बालचरितानां प्रस्तावनायां गाने डिण्डिमो वाद्य-भेदः पर्य्यस्त उत्क्षिप्तः कपालसंपुटः पिधानपात्राकारब्रह्माण्डोपरि-भागः तेन द्राक् झटिति मिलत् सङ्गच्छमानं ब्रह्माण्ड एव भाण्डं क्षुद्रस्थाली तस्योदरे भ्राम्यन् अतएव पिण्डितो बहुलीकृतश्चण्डिमा महत्वं यस्य अद्यापि इदानीमपि शरावाच्छन्नमुखस्थालीमध्ये जायमानः शब्दो बहुलो भवतीत्यभिप्रायेणेदं अत्र लक्ष्मणस्य विस्मयो धनुष्टङ्कारालम्बनेन तस्यातिदीर्घत्वगुणोद्दीपनेन एतादृशुक्त्या अनुभावेन व्यक्त आश्चर्य्यरसतामापद्यते।

अथ शान्तः ।

शान्तः शमस्थायिभाव उत्तमप्रकृतिर्मतः ।
कुन्देन्दुसुन्दरच्छायः श्रीनारायणदैवतः ॥
अनित्यत्वादिनाऽशेषवस्तुनिःसारता तु या ।
परमात्मस्वरूपं वा तस्यालम्बनमिष्यते ॥
पुण्याश्रमहरिक्षेत्रतीर्थरम्यवनादयः ।
महापुरुषसङ्गाद्यास्तस्योद्दीपनरूपिणः ॥
रोमाञ्चाद्याश्चानुभावास्तथा स्युर्व्यभिचारिणः ।
निर्वेदहर्षस्मरणमतिभूतदयादयः ॥

यथा ।

"रथ्यान्तश्चरतस्तथा धृतजरत्कन्थालवस्याध्वगैः
सत्रासञ्च सकौतुकञ्च सदयं दृष्टस्य तैर्नागरैः ।
निर्व्याजीकृतचित्सुधारसमुदा निद्रायमाणस्य मे
निःशङ्कः करटः कदा करपुटीभिक्षां विलुण्ठिष्यति" ॥

पुष्टिस्तु महाभारतादौ द्रष्टव्या ॥ (ष)

---

(ष) शान्तरसमाह शान्त इति अत्र निर्वेदः स्थायिभावः । एतत्पक्षे अवमाननीयत्वमेवालम्बनम् । निर्वेदस्य व्यभिचारित्वेन स्थायित्वायोगात् शमस्य स्थायित्वेनानुभूयमानत्वाच्च ग्रन्थकृता तदुपेक्षितम् । रोमाञ्चाद्या इत्याद्यपदेन दयादीनामपि ग्रहणम् । रथ्यान्तरिति कस्यचिज्जातनिर्वेदस्योक्तिरियं रथ्या गृहसमीपदेशः तन्मध्ये चरतो भिक्षार्थं भ्रमतः अध्वगैर्नागरैश्च वीभत्सवेशदर्शनेन त्रासः अनुपादेयकन्थालवधारणेन कौतुकं दीनत्वेन दया निर्व्याजीकृतः कामादिनाशेन

निरहङ्काररूपत्वाद्दयावीरादिरेष नो ॥

दयावीरादौ हि जीमुतवाहनादौ अन्तरा मलयवत्याद्यनुरागादिरन्ते च विद्याधरचक्रवर्त्तित्वाद्यवाप्तिर्दर्शनादहङ्कारोपशमो न दृश्यते। शान्तस्तु सर्व्वप्रकारेणाहङ्कारप्रशमैकरूपत्वान्न तत्रान्तर्भावमर्हति। अतश्च नागानन्दे शान्तरसप्रधानत्वमपास्तम्॥ ननु।

"न यत्र दुःखं न सुखं न चिन्ता
न द्वेषरागौ न च काचिदिच्छा।
रसः स शान्तः कथितो मुनीन्द्रैः
सर्व्वेषु भावेषु शमप्रधानः" ॥

इत्येवं रूपस्य शान्तस्य मोक्षावस्थायामेवात्मस्वरूपापत्तिलक्षणायां प्रादुर्भावात् तत्र सञ्चार्य्यादीनामभावात् कथं रसत्वमित्युच्यते।

---

निष्प्रतिबन्धकीकृतो यः चित्सुधाया स्नानाद्धतस्य रस आस्वादः तस्य मुदा तज्जन्यानन्देन निद्रायमाणस्य मुद्रितनेत्रस्य निर्विजीकृतेऽपि पाठे बीजं वासना तच्छून्यीकृतेत्यर्थः करटः काकः।

(ख) ननु शान्ते दयाद्यतिशयसम्भवेन दयावीरादिरेवायमित्यत आह निरहङ्काररूपत्वादिति आदिना धर्म्मवीरदेवताविषयरतिप्रभृतीनां ग्रहणम्। एष शान्तरसः तथा चाहङ्कारादिसम्वलितो दयादिरेव दयावीरादेर्घटकः तदितरः शान्तरस इति विशेषः। ततश्च ईदृशविशेषावधारणाच्च नागानन्दे दयावीरादिप्रधाने ग्रन्थविशेषे। न यत्रेति द्वेषो रिपूणामपचिकीर्षा रागः सुहृदामुपचिकीर्षा इच्छा वैषयिकसुखतदुपायेच्छा भावेषु पदार्थेषु लोष्ट्रकाञ्चनादिविभावादिषु सत्स्वनुरागद्वेष-

युक्तवियुक्तदशायामव-
स्थितो यः शमः स एव यतः ।
रसतामेति तदस्मिन्
सञ्चार्य्यादेः स्थितिश्च न विरुद्धा ॥

यच्चास्मिन् सुखाभावोऽप्युक्तस्तस्य वैषयिकसुखपरत्वान्न विरोधः । उक्तं हि । (स)

"यच्च कामसुखं लोके यच्च दिव्यं महासुखम् ।
तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥
सर्व्वाकारमहङ्काररहितत्वं व्रजन्ति चेत् ।
अत्रान्तर्भावमर्हन्ति दयावीरादयस्तथा" ॥

---

राहित्येन समम विषमं प्रमाणं प्रतीतिर्येन । शमप्रधान इति पाठस्तु न मनोरमः अर्थसङ्गतेः तादृशदशायां व्यभिचारिभावादीनामसम्भवात् शम एव स्थायितया प्रधानं यत्र सः आत्मस्वरूपापत्तिलक्षणायां परमात्मस्वरूपत्वप्राप्तिस्वरूपायां । युक्तवियुक्तेति विषयेभ्यः प्रत्याहृत्य साक्षात् कर्त्तव्ये वस्तुनि मनो निधाय वर्त्तमानश्चिन्तासन्तानवान् युक्तः । यस्य योगजधर्मसहकृतेन मनसा जिज्ञासितवस्तुसाक्षात्कारो जायते । यश्च भूतेन्द्रियजयी अनिमाद्याः कामसिद्धीर्दूरश्रवणाद्याश्च इन्द्रियसिद्धीरासादितवान् समाध्यन्वितो वियुक्तः यस्य योगजधर्मसहकृतानि वाह्येन्द्रियाणि स्वे स्वे विषये महत्त्वसन्निकर्षादिसहकारिनिरपेक्षाणि वर्त्तन्ते स एव युक्तवियुक्तः तद्दशायामित्यर्थः अस्मिन् शान्तरसे ।

(स) नन्वत्र शमरूपसुखसत्त्वेन न सुखमित्यसङ्गतमत आह यच्चेति तृष्णाक्षयसुखस्य शमसुखस्य एते कामसुखदिव्यसुखे सर्वाकारं सर्वप्रकारं एतेनाहङ्कारसामान्याभावः प्रतीयते सर्वेति सर्वं देहेन्द्रियादि आकार

आदिशब्दात् धर्म्मवीरदानवीरदेवताविषयरतिप्रभृतयः । तत्र देवताविषया रतिर्यथा ।

"कदा वाराणस्यामिह सुरधुनीरोधसि वसन्
वसानः कौपीनं शिरसि निदधानोऽञ्जलिपुटम् ।
अये ! गौरीनाथ ! त्रिपुरहर ! शम्भो ! त्रिनयन !
प्रसीदेति क्रोशन्निमिषमिव नेष्यामि दिवसान्" ॥

अथ मुनीन्द्रसम्मतो वत्सलः ।

**स्फुटं चमत्कारितया वत्सलञ्च रसं विदुः ।**
**स्थायी वत्सलतास्नेहः पुत्राद्यालम्बनं मतम् ॥**
**उद्दीपनानि तच्चेष्टा विद्याशौर्य्यदयादयः ।**
**आलिङ्गनाङ्गसंस्पर्शशिरश्चुम्बनमीक्षणम् ॥**

---

आश्रयो यस्य तत्तथा । अहङ्कारोऽभिमानः तद्रहितत्वं तदभावं व्रजन्ति दयावीरादिनायका इति शेषः । यदि दयावीरादिनायका देहेन्द्रियादिविषयकाभिमानशून्या भवन्ति तदा दयावीरादयो रसाः शान्तरसस्वरूपाः भवन्तीति तदर्थः । अभिमानश्च देहेन्द्रिययोरहमित्यारोपः । देहादिसम्बन्धिनि पुत्रादौ ममेत्यारोपश्च अत्र शान्तरसे । तत्रेति शान्तरसान्तर्भूतेषु दयावीरादिषु मध्ये शान्तरसस्यान्तर्भूतदेवताविषयरतिरित्यर्थः । कदेति कस्यचिच्छैवस्योक्तिरियं अत्र कौपिनपरिधानेच्छयाहङ्कारनिवृत्तिः प्रतीयते । केषाञ्चिन्मतं वत्सलरसमाह स्फुटमिति उत्कटमित्यर्थः । विदुरिति केचिदिति शेषः अन्ये पुनरस्य भावकाव्यत्वमिच्छन्ति तन्न चमत्कारातिशययोगेन रसत्वस्यैव युक्तत्वात् वत्सलता प्रेम तत्सहितस्नेहो रतिः सा च लालनपालनादीच्छा पुत्रादीत्यादिना भ्राता-

पुलकानन्दवाष्पाद्या अनुभावाः प्रकीर्त्तिताः।
सञ्चारिणोऽनिष्टशङ्का हर्षगर्वादयो मताः॥
पद्मगर्भच्छविर्वर्णो दैवतं लोकमातरः। (छ)

यथा

"यदाह धात्र्या प्रथमोदितं वचो
ययौ तदीयामवलम्ब्य चाङ्गुलीम्।
अभूच्च नम्रः प्रणिपातशिक्षया
पितुर्मुदं तेन ततान सोऽर्भकः॥

एतेषाञ्च रसानां परस्परविरोधमाह।

आद्यः करुणवीभत्सरौद्रवीरभयानकैः।
भयानकेन करुणेनापि हास्यो विरोधभाक्॥
करुणो हास्यशृङ्गाररसाभ्यामपि तादृशः।
रौद्रस्तु हास्यशृङ्गारभयानकरसैरपि॥

---

दिपहर्षं भ्रात्रालम्बनो यथा "देशे देशे कलत्राणि देशे देशे च बान्धवाः। तन्तु देशं न पश्यामि यत्र भ्राता सहोदरः" इति। अत्र श्रीरामस्य भ्रातृस्नेहः तादृशोक्त्यनुभावेनास्वाद्यमानो रसतामेति। केचित्तु सहोदर इति सहः संग्रामसहोऽदरो निर्भयश्चेति व्याख्यायन्ति तन्मते तदुभयमुद्दीपनविभावः।

(छ) यदाहेति पितुर्दिलीपस्य स रघुः अत्र दिलीपस्नेहस्य रघुरालम्बनं पारलयोक्ता तच्चेष्टा उद्दीपनमन्ये षामाक्षेपाल्लाभः। अत्र रसानां तत्तद्वर्णकथनं तदधिष्ठातृदेवताभिप्रायेण आद्य इति शृङ्गार

**भयानकेन शान्तेन तथा वीररसः स्मृतः ।**
**शृङ्गारवीररौद्राख्यहास्यशान्तैर्भयानकः ॥**
**शान्तस्तु वीरशृङ्गाररौद्रहास्यभयानकैः ।**
**शृङ्गारेण तु बीभत्स इत्याख्याता विरोधिता ॥**

आद्यः शृङ्गारः ।

एषाञ्च समावेशप्रकारा वक्ष्यन्ते । (क)

**कुतोऽपि कारणात् क्वापि स्थिरतामुपयन्नपि ॥**
**उन्मादादिर्न तु स्थायी न पात्रे स्थैर्य्यमेति यत् ।**

यथा । विक्रमोर्व्वश्यां चतुर्थेऽङ्के पुरूरवस उन्मादः ।

**रसभावौ तदाभासौ भावस्य प्रशमोदयौ ॥**
**सन्धिः शवलता चेति सर्वेऽपि रसनाद्रसाः ।**

---

इत्यर्थः [वि]रोधभागित्यनेनान्वयः शोकजुगुप्साभयसत्वेन रतेरसम्भवादिति भावः । एवमग्रेऽपि तादृश इति विरोधभाक् स्यानत्रये विरोधभागित्यनेनान्वयः ।

(क) ननु शृङ्गारादावुन्मादादेरपिसम्भवात् कथं रत्यादिस्थायिभावत्वं नियमितमित्यत आह कुतोऽपीति क्वापि तद्रसविशेषे पात्रे तद्रसत्वावच्छिन्ने इदानीं रसपदस्य मुख्यलाक्षणिकार्थभेदज्ञापनार्थमाह रसभावाविति रसनात् आनन्दसम्वलितज्ञानसम्बन्धात् रसाः रसपदप्रतिपाद्याः उपचारादिति रत्यादिस्थायिभावानामभावेन मुख्यलक्षणायोगादिति भावः न चात्र देवादिविषयरतिसत्त्वात् कथं स्थायिभावाभावः इति वाच्यं कान्तादिविषयरतेरेव स्थायित्वोपपादनात् सञ्चारिण इति

रसनधर्मयोगित्वाद्भावादिष्वपि रसत्वमुपचारादित्यभिप्रायः। भावादय उच्यन्ते।

**सञ्चारिणः प्रधानानि देवादिविषया रतिः।**
**उद्बुद्धमात्रः स्थायी च भाव इत्यभिधीयते॥**

"न भावहीनोऽस्ति रसो न भावो रसवर्ज्जितः।
परस्परकृता सिद्धिरनयोरसभावयोः"॥

इत्युक्तदिशा परमालोचनया परमविश्रान्तिस्थानेन रसेन सहैव वर्त्तमाना अपि राजानुगतविवाहप्रवृत्तभृत्यवदापाततो यत्र प्राधान्येनाभिव्यक्ता व्यभिचारिणो देवमुनिगुरुनृपादिविषया च रतिः उद्बुद्धमात्रा विभावादिभिरपरिपुष्टतया रसरूपतामनापद्यमानाश्च स्थायिनो भावा भावशब्दवाच्याः। तत्र व्यभिचारी यथा "एवं वादिनि देवर्षावित्यादि"। अत्रावहित्था देवविषया रतिः। यथा कुन्दमालायाम् (क)

---

यथा विभावादिभिरभिव्यक्तो रत्यादिचिदानन्दचमत्काररूपत्वेन परिणतो रसतामापद्यते तथा स्वस्वकार्य्यकारणाभ्यामभिव्यक्तो देवादिविषयरत्यादिचिदानन्दचमत्कारस्वरूपतां प्राप्तो भावत्वं प्राप्नोति चमत्कारसत्त्वासत्त्वाभ्यामनयोर्भेद इति भावः सञ्चारिभावानां प्रधानत्वमुपपादयति न भावहीन इति एवं वादिनीति देवर्षौ नारदे अत्र शिवप्रसङ्गजातहर्षस्फुरत्कस्य मुखरागादेर्लज्जया गोपनमवहित्था सा चाधोमुखत्वव्यङ्ग्यलज्जया कारणेन लीलाकमलपत्रगणनरूपव्यापारान्तरासङ्गेन च झटिति प्रतीयते इति तस्याः प्रधानत्वं विभावादीनामत्यन्ततिरस्कृतत्वेन शृङ्गारस्याप्रधानत्वम्।

"दिवि वा भुवि वा ममास्तु वासो
नरके वा नरकान्तक ! प्रकामम् ।
अवधीरितशारदारविन्दौ
चरणौ ते मरणेऽपि चिन्तयामि" ॥

मुनिविषया रतिर्यथा ।

विलोकनेनैव तवामुना मुने !
कृतः कृतार्थोऽस्मि निर्वर्हितांहसा ।
तथापि शुश्रूषुरहं गरीयसी-
र्गिरोऽथवा श्रेयसि केन तृप्यते" ॥

राजविषया रतिर्यथा मम ।

"त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम् ।
न धत्ते शिरसा गङ्गां भूरिभारभिया हरः" ॥

एवमन्यत् ।

उद्बुद्धमात्रस्थायी भावो यथा ।

"हरस्तु किञ्चित्परिवृत्तधैर्यश्चन्द्रोदयारम्भ इवाम्बुराशिः ।
उमामुखे बिम्बफलाधरोष्ठे व्यापारयामास विलोचनानि" ॥

---

(ख) दिविवेति हे नरकान्तक हे श्रीकृष्ण मरणेऽपीत्यपिना इदानीमपि अत्र वक्तुः श्रीकृष्णभक्तोच्छ्रा रतिः । विलोकनेनेति नारदं प्रति श्रीकृष्णस्योक्तिरियं निर्बर्हितांहसा विनाशितपापेन त्वद्वाजीति राजानं प्रति कस्यचिदुक्तिरियं गुरुविषया रतिर्यथा "कसङ्गोत्तमहत्वरः-क्रतुभुजामध्यायमाद्यो रविर्यज्ज्ञानो वयमद्य ते भगवती भूरद्यराजन्वती । अद्य स्वं बहुमन्यते सहचरैरस्माभिराखण्डलो येनैतावदरुन्धतीपतिरपि स्नेनानुगृह्णाति नः" अत्र दशरथस्य वशिष्ठे गुरौ रतिः पित्रोरपि

अत्र पार्व्वतीविषया भगवतो रतिः । ननूक्तं प्रपाणकरसवद्विभावादीनामेकोऽवभासो रस इति" तत्र सञ्चारिणः पार्थक्याभावात् कथं प्राधान्येनाभिव्यक्तिरित्युच्यते ।

**यथा मरीचखण्डादेरेकीभावे प्रपाणके ।**
**उद्रेकः कस्यचित् क्वापि तथा सञ्चारिणो रसे ॥**

अथ रसाभासभावाभासौ । ( ख )

**अनौचित्यप्रवृत्तत्वे आभासो रसभावयोः ॥**

अनौचित्यञ्चात्र रसानां भरतादिप्रणीतलक्षणानां सामग्रीरहितत्वे सत्येकदेशयोगित्वोपलक्षणपरं बोध्यं तच्च बालव्युत्पत्तये एकदेशतो दर्श्यते ।

---

गुरुत्वेन तद्विषया रतिर्यथा "जीवत्सु तातपादेषु न मे दारपरिग्रहः । मातृभिश्चिन्त्यमानानां ते हि नो दिवसा गताः" । अत्र श्रीरामस्य पित्रोरतिः । नृपादीत्यादिपदेन मित्रादेर्ग्रहणं तत्र यथा "अद्य राज्यं मया प्राप्तं अद्य वाली हतो मया । हरीणामद्य पूज्योऽस्मि यद्भवान् मित्रतां गतः" । अत्र सुग्रीवस्य श्रीरामे मित्रे रतिः आदिपदात् पुत्रादेर्ग्रहणं इत्यन्ये तच्च तद्विषयकरतेः वत्सलरसत्वेनैव ग्रन्थकृता दर्शितत्वात् । हरस्त्विति परिवृत्तेति लुप्तेत्यर्थः । अत्रेति उमामुखावलोकनरूपानुभावमात्रेण व्यक्ता रतिः उद्दीपनविभावादिकृतपरिपोषराहित्येन रसतां नापद्यते इति भावव्यपदेश एवास्योचित इति भावः ।

(ग) अनौचित्येति रसभावयोरनौचित्येन प्रवृत्तत्वे वर्त्तमानत्वे सति रसाभासो भावाभासश्च इत्यर्थः । अत्र रसानामनौचित्यमाह अनौचित्यमिति अनौचित्यपदमित्यर्थः । सामग्रीरहितत्वे विभावादिरूपयावत्कारणासत्त्वे एकदेश योगित्वं यत्किञ्चिल्लक्षणसम्बन्धः । तदुप-

उपनायकसंस्थायां मुनिगुरुपत्नीगतायाञ्च ।
बहुनायकविषयायां रतौ तथाऽनुभयनिष्ठायाम् ॥
प्रतिनायकनिष्ठत्वे तद्वदधमपात्रतिर्य्यगादिगते ।
शृङ्गारेऽनौचित्यं रौद्रे गुर्वादिगतकोपे ॥
शान्ते च हीननिष्ठे गुर्वाद्यालम्बने हास्ये ।
ब्रह्मवधाद्युत्साहेऽधमपात्रगते तथा वीरे ॥
उत्तमपात्रगतत्वे भयानके ज्ञेयमेवमन्यत्र ।

तत्र रतेरुपनायकनिष्ठत्वे यथा मम ।

"स्वामी मुग्धतरो वनं घनमिदं बालाहमेकाकिनी
क्षौणीमावृणुते तमालमलिनच्छायातमःसन्ततिः ।
तन्मे सुन्दर ! मुञ्च कृष्ण ! सहसा वर्त्मेति गोप्या गिरः
श्रुत्वा तां परिरभ्य मन्मथकलासक्तो हरिः पातु वः" ॥

बहुनायकनिष्ठत्वे यथा ।

"कान्तास्त एव भुवनत्रितयेऽपि मन्ये
येषां कृते सुतनु ! पाण्डुरयं कपोलः" ॥

---

लक्षणपरं तद्बोधतात्पर्य्यकम् । तच्च अनौचित्यञ्च । उपनायकेति शृङ्गारे शृङ्गारे दक्षिणाद्याश्च नायकाः इत्युक्तम् । नायकलक्षणे कुलीन इत्यनेन सत्कुलजातत्वं शीलवानित्यनेन सद्वृत्तत्वञ्च नायकस्य लभ्यते । नायकसामान्यगुणैर्भवति यथा सम्भवैर्युक्तेत्यनेन नायिकायाश्च सद्वृत्तत्वं लभ्यते । नायकस्य निषिद्धयोषित्सङ्गमे नायिकायाश्च निषिद्धपुरुषसङ्गमे सद्वृत्तत्वं न भवतीति तद्विषयकशृङ्गारस्य यथोक्त-नायकाभावात् एकदेशयोगित्वं निषिद्धयोषित उक्ताः शृङ्गारतिलके ।

अनुभयनिष्ठत्वे यथा । मालतीमाधवे नन्दनस्य मालत्याम् । "पश्चादुभयनिष्ठत्वेऽपि प्रथममेकनिष्ठत्वे रतेराभासत्वम्" इति श्रीमल्लोचनकाराः ॥

ततोदाहरणं यथा रत्नावल्याम । सागरिकाया अन्योऽन्यसन्दर्शनात् प्राक् वत्सराजे रतिः ॥

प्रतिनायकनिष्ठत्वे यथा । हयग्रीववधे हयग्रीवस्य जलक्रीड़ावर्णने । ( घ )

---

"सम्बन्धिमित्रद्विजराजहीनवर्णाधिकानां प्रमदा न गम्याः । वृद्धा तथा प्रव्रजिताविभिन्नमताश्च धर्मार्थ मनोभवज्ञैरिति" । एवं योषितामपि सम्बन्ध्यायः पुरुषा निषिद्धाः । एवञ्च मुनिगुरुपत्नीगतायाञ्चेति चकारेण सम्बन्ध्यादिपत्न्यायोध्याः । उपनायकसंस्थायामित्यत्र सम्बन्ध्याद्यन्यतम उपनायको बोध्यः । अन्यथा बहुनायकविषयायामिति प्रतिनायकनिष्ठत्वे इत्यनयोरुपादानं वर्थं स्यात् । बहुनायकेति सम्बन्ध्यादिभिन्ना अपि बहुनायकानिषिद्धा इतिभावः । अनुभयनिष्ठायामिति विभिन्नमताश्चेत्यनेन अन्यतरस्यासम्मतौ निषिद्धत्वादिति भावः । नायकस्य प्रतिपक्षः प्रतिनायकः । अस्य सम्बन्ध्यादिभिन्नत्वेनानिषिद्धत्वेऽपि भर्त्तुरनभिमताचरणेनासद्वृत्तत्वं नायिकाया इतिभावः । अधमपात्रेति असत्कुलजातनायक इत्यर्थः । तिर्य्यगादीति तिर्य्यगादीनां नायकलक्षणाभावादिति भावः । रौद्र इत्यादौ अनौचित्यमित्यन्वेति "क्रोधात्मको भवेत् रौद्रे प्रतिभूरैरमर्षितः । छद्मप्रायो भवेदत्र नायकोऽत्युग्रविग्रहः" इत्यनेन रौद्रे प्रतिभूरजनितक्रोधो न तु गुर्वादिजनितक्रोधो नायक इति भावः हीननिष्ठे रागादिहीनविषये गतेच्छो नायकस्तत्र तमोराग-परिक्षयादित्युक्तनायकवैपरित्यात् अनौचित्यमिति भावः । ब्रह्मवधादिति ब्रह्मवधादीनां वेदविरुद्धानामाचरणतया नायकत्वं न सम्भवतीति भावः । अधम पात्रगत इति "उत्साहात्मा भवेद्वीरी दयादानादि-

अधमपात्रगतत्वे यथा।

"जघनस्थलनद्धपत्रवल्ली
गिरिमल्लीकुसुमानि कापि भिल्ली।
अवचित्य गिरौ पुरो निषण्णा
स्वकचानुत्कचयाञ्चकार भर्त्रा॥"

तिर्य्यग्गतत्वे यथा।

"मल्लीमतल्लीषु वनान्तरेषु वल्ल्यन्तरे वल्लभमाह्वयन्ती।
चञ्चद्विपञ्चीकलनादभङ्गी सङ्गीतमङ्गीकुरुते स्म भृङ्गी"॥

आदिशब्दात्तापसादयः।

रौद्राभासो यथा।

"रक्तोत्फुल्लविशाललोलनयनः कम्पोत्तराङ्गो मुहु-
र्मुक्त्वा कर्णमपेतभीर्धृतधनुर्वाणो हरेः पश्यतः।
आध्मातः कटुकोक्तिभिः स्वमसकृद्दोर्विक्रमं कीर्त्तयन्न-
स्फोटपटुर्युधिष्ठिरमसौ हन्तुं प्रविष्टोऽर्ज्जुनः॥ (ङ)

---

पूर्वकः। त्रिविधो नायकस्तत्र जायते सत्वसङ्कुलः। भार्य्यौदार्य्य-शौठीर्य्य धैर्य्यवीर्य्यादिभूषितः। आवर्जितजनो यश्च विरूढप्रौढ-विक्रमः इत्युक्तगुणश्लीणनायकगत इत्यर्थः उत्तमेति बालस्त्री नीचनायक इत्यनेन बालादिनायकत्वमेव भयानकस्योचितं एवमन्यत्रेति अद्वैवहतपात्रगते करुणे तत्त्वज्ञानपात्रगते वीभत्से विशेष दर्शित-पात्रगते आश्चर्य्ये अपकार्य्यालम्बने वत्सले अनौचित्यं बोध्यमित्यर्थः।

(घ) स्वामीति मुग्धतरोऽतिमूढ़ः विलम्बे प्रहारादिकं करोति अथ-चात्यन्त सुरतानभिज्ञः घनमित्यनेन भयदत्वं निविड़तया जनदर्शनाभावेन सुरतयोग्यस्थानत्वञ्च सूचितं एकाकिनीत्यादिना गमने भयं स्वच्छन्द-गमनेति च सूचितं सुन्दरेति मयि परित्यागायत्तवः अथ च स्वप्रियत्वं

भयानकाभासो यथा।

"अशक्नुवन् सोढुमधीरलोचनः
सहस्ररश्मेरिव यस्य दर्शनम्।
प्रविश्य हेमाद्रिगुहागृहान्तरं
निनाय बिभ्यद्दिवसानि कौशिकः"॥*

---

सूचितं। अत्र श्रीकृष्णाय सम्बन्धित्वेन गोप्यास्तदनुरागोऽनुचित इति भावः। स्वामी निःश्वसितेऽप्यसूयतीत्यादि परनायकोदाहरणन्तु न शृङ्गाराभासः। तथात्वे शृङ्गारे परनायकोदाहरणमनर्थकं स्यादिति ध्येयम्।

(ङ) जघनेति गिरिनल्लीकानुनानि कुटजपुष्पाणि उत्कचयाञ्चकार बन्धयामास। मल्लीति मतल्लीभिः प्रशस्तेषु वनान्तरेषु वनमध्येषु वल्लान्तरे स्वाधिष्ठितलताभिन्नलतायां वर्त्तमानं सुरतार्थमाह्वयन्ती वल्लत् प्रवाहवच्चिरवच्छिन्नं विपञ्चीकलनादभङ्ग्या वीणास्वच्छमधुरनादसादृश्येन विशिष्टं यत् सङ्गीतं तदङ्गीकुरुते स्म स्मरोद्दीपनोपकरणं कुरुते स्म। आदिशब्दात्तिर्यगादिगत इत्यत्रादिपदात्। रक्तोत्फुल्लेति कर्णं सुतपुत्रं प्रतिमूरं हरेरित्यनादरे षष्ठी पश्यन्तं कृष्णमनादृत्येत्यर्थः। आध्मातो दग्धः कटुकोक्तिभिरित्यत्र वचनैरिति रूपकं व्यङ्ग्यं। स्वं स्वकीयं स्कन्धस्य करेणाघातो हंसास्फोटस्तत्पटुः तत्कारीत्यर्थः। अत्र ज्येष्ठभ्रातरि गुरौ क्रोधोऽनुचितः।

(च) अशक्नुवन्निति यस्य रावणस्य कौशिक इन्द्रः पेचकश्च अत्रानौचित्यं दर्शयति स्त्रीति। भावाभास इति प्रथमादिपदेन चिन्त्यादीनां द्वितीयादिपदेनानुरागिण्यादीनां ग्रहणं। यथा "राकासुधाकरमुखी

---

* पेचक यस्य रावणस्य। बिभ्यत् भयं गच्छत्।

स्त्रीनीचविषयमेव हि भयं रसप्रकृतिः ।

एवमन्यत्र ।

**भावाभासो लज्जादिके तु वेश्यादिविषये स्यात् ।**

स्पष्टम् । (च)

**भावस्य शान्तावुदये सन्धिमिश्रितयोः क्रमात् ॥**

**भावस्य शान्तिरुदयः सन्धिः शवलता मता ॥**

क्रमेण यथा । (छ)

---

तरलायताक्षी सञ्चारयौवनतरङ्गितविभ्रमाङ्गी । तत् किं करोमि विदधे कथमत्र मैत्रीं तत्स्वीकृतिव्यतिकरे क इहाभ्युपायः" । अत्र नायिकायाः स्वीकारोपायचिन्तयानुरागाभावो व्यज्यते । अत्र चिन्ता अनुचिता एवं नृपादिविषयरतेः शालवादिविषयत्वेऽप्यनौचित्यम् ।

(छ) भावशान्त्यादिमाह भावस्येति एतत् सप्तम्यन्तपदेनान्वेति भावस्य व्यभिचारिणः शान्त्यादावास्वाद्ये सति भावशान्त्यादि नाम काव्यात्मा भवतीत्यर्थः । शान्तिर्विरुद्धसामग्रीबलात् प्रशमावस्था । उदयः स्वसामग्रीमाहात्म्येनोद्गमावस्था सन्धिरुभयसामग्रीयोगेन परस्परविमर्दः । स च परस्परविमर्दयोरेकनाशे चान्योत्पत्तिरित्येवं रूपः । केचित्तु विरुद्धयोरेकस्मिन्नेकदैवावच्छेदभेदेन स्थितिः सन्धिरित्याहुस्तन्न । वक्ष्यमाणोदाहरणासङ्गतिप्रसङ्गात्तत्रावच्छेदकानुपस्थितेः । अनुपस्थितस्यापि लक्षणादेरवच्छेदकत्वं कल्प्यमिति चेत् एकदेत्यसङ्गतेः । मिश्रितं मिश्रणं तच्च पूर्वपूर्वस्य बाध्यत्वेन उत्तरोत्तरस्य वाधकत्वेनैकत्र काव्ये निवन्धनम् । वाध्यत्वञ्च विरोधिसामग्रीस्थगितपरिपुष्टिकत्वम् । बाधकत्वञ्च विरोधि यस्मिन्नर्थे तदन्यवान् सबलशब्दः । वलपरिपुष्टिप्रतिवन्धकत्वम् । भावशान्तावेकस्यैव नाशः । उदये एकस्यैवोत्पत्तिः । सन्धौ द्वयोरेव युगपद्विनाशोत्पत्ती । शवलतायां बहूनां विनाशोत्पत्ती

"सुतनु! जहिहि कोपं पश्य पादानतं मां
न खलु तव कदाचित् कोप एवं विधोऽभूत्।
इति निगदति नाथे तिर्य्यगामीलिताक्ष्या
नयनजलमनल्पं मुक्तमुक्तं न किञ्चित्॥"*

अत्र वाष्पमोचनेनेर्ष्याख्यसञ्चारिभावस्य प्रशमः।

"चरणपतनप्रत्याख्यानात् प्रसादपराङ्मुखे
निभृतकितवाचारेत्युक्ता रुषा परुषीकृते।
व्रजति रमणे निःश्वस्योच्चैः स्तनस्थितहस्तया
नयनसलिलच्छन्ना दृष्टिः सखीषु निवेशिता"॥

---

इति विशेषः। केचित्तु भावानामुत्तरोत्तरबलवत्त्वं सबलता बलवत्तत्त्व-मूह्यो वा इत्याहुः तन्न। वक्ष्यमाणोदाहरणे हि द्वयोर्द्वयोर्भावयोरुत्तरस्यैव बलवत्त्वं न तु यावतामुत्तरेषां।

(ज) भावशान्तिमुदाहरति सुतन्विति अनल्पं बहुतरम्। प्रशम इति व्यज्यते इति शेषः। अत्र पादपतनरूपप्रसादसामग्र्या ईर्ष्यायाः प्रशमः स्फुटते। भावोदयमाह चरणपतनेति चरणपतनस्य प्रत्याख्यानात् चरणक्षेपादिना निराकरणात् पराङ्मुखे स्वप्रसादरूपफलविमुखे परुषीकृते रूक्षे हृष्टीने कृते। स्तनस्थितहस्तयेति स्तनमध्ये हस्तनिवेशेन हृदयमास्फुटेति हृदयाश्वास इति भावः। अत्र नायकप्रत्याख्यान-रूपसामग्र्या विषादः स्फुटते। भावसन्धिमाह नयनेति नयनयुगस्या-सेचनकं अतितृप्तिजनकं। तदसेचनकं तृप्तेर्नास्त्यन्तो यस्य दर्शनादित्य-मरः। मदिरः खञ्जनः। मदयति आनन्दयति दुनोति सन्तापयति

---

* इति इत्थं तिर्य्यक् यथा तथा आमीलिते अक्षिणी यया अनल्पं प्रचुरम्।

अत्र विषादस्योदयः ।

"नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम् ।
रूपमिदं मदिराच्या मदयति हृदयं दुनोति च मे" ॥*

अत्र हर्षविषादयोः सन्धिः ।

इदं मम । (ज)

"क्वाकार्य्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः ! स्वास्थ्यमुपैहि कः खलु युवा धन्योऽधरं धास्यति" ॥†

---

अत्रैकस्यैव कामिनीरूपस्यात्युत्कृष्टत्वेनानन्दस्य उपभोगाप्रयोजनकत्वेन विषादस्य जनकत्वं । अत्युत्कृष्टत्वज्ञानकाले आनन्द उपभोगाप्रयोजनकज्ञानकाले विषादः । विरुद्धयोरपि तयोरेकस्मिन् समावेशः काललाघवेन संसर्गप्रतिभासः ।

(झ) भावशबलतामाह क्वाकार्य्यमिति उर्वशीविरहात् स्वमरणमुपक्रम्य पश्चान्निवर्त्तमानस्य पुरूरवस उक्तिरियं अकार्य्यं स्त्रिया सह मरणं शशलक्ष्मणश्चन्द्रस्य सा उर्वशी मे मया श्रुतमधीतं । मुखमिति तस्या इति शेषः । धास्यति पास्यति । कुलमित्यन्तेन चन्द्रकुले स्त्रीविरहात् आत्महननमकार्य्यमित्येवं विचाररूपो वितर्कः । सेत्यन्ते-

---

* मानसवृत्त्यापि दुष्प्रापं मनोरथाविषयम् ।

† दृश्येत दृष्टिविषयवर्त्तिनी भवेत् । दोषाणां अकर्त्तव्यानुष्ठानानाम् । शास्त्रं ज्ञात्वा कथमहं अकार्य्यं करोमीति भावः । किं वक्ष्यन्ति एवमकार्य्यकारिणं मामुद्दिश्य इति शेषः । चेत इति [illegible] । अधरं उर्वश्या इति शेषः ।

अत्र वितर्कौत्सुक्यमतिस्मरणशङ्कादैन्यधृतिचिन्तानां शबलता (भ)।

इति साहित्यदर्पणे रसभावादिनिरूपणो नाम

तृतीयः परिच्छेदः।

---

नौत्सुक्यं। स्मृतमित्यन्तेन सर्वथा तदनुरागो दोषायैवेत्यर्थनिर्द्धारणरूपा मतिः। सुखमित्यन्तेन सुखस्य कमनीयत्वस्मरणं। कृतधिय इत्यन्तेन शङ्का। दुर्लभेत्यन्तेन स्वानौजस्यरूपं दैन्यं। उपैहीत्यन्तेन धृतिः। भावयतीत्यन्तेन चिन्ता व्यङ्ग्या। अत्र द्वयोर्द्वयोर्भावयोः पूर्वस्य प्रशमाङ्गस्य वाध्यत्वं। उत्तरस्य विप्रलम्भाङ्गस्य वाधकत्वं। चिन्तायां विश्रान्तेः तदङ्गकस्य विप्रलम्भशृङ्गारस्य शान्तापेक्षया परिपोषः। तस्मा-यन्तरान्तरा प्रशमोदयादेकान्तमभिलाषस्य नास्वाद्यत्वमिति खण्डरसत्व-मित्यवधेयम्। उभयाङ्गस्य भावसमूहस्य वाध्यवाधकभावो सुकरत्वे-नास्वाद्यते इति भावशबलताया एव प्रधानत्वमिति।

इति साहित्यदर्पणविवृतौ तृतीयः प्रकाशः।

---

# चतुर्थः परिच्छेदः ।

अथ काव्यभेदमाह ।

**काव्यं ध्वनिर्गुणीभूतव्यङ्ग्यञ्चेति द्विधा मतम् ।**

तत्र ।

**वाच्यातिशयिनि व्यङ्ग्ये ध्वनिस्तत्काव्यमुत्तमम् ।**

वाच्यादधिकचमत्कारिणि व्यङ्ग्यार्थे ध्वन्यतेऽस्मिन्निति व्युत्पत्त्या ध्वनिर्नामोत्तमं काव्यम् ।

---

(क) काव्यस्वरूपं निरूप्य विभागमाह काव्यमिति व्यङ्ग्य इति सतीत्यर्थः । ध्वन्यते * व्यज्यतेऽस्मिन् वाक्यार्थसमुदाये गुणीभूतव्यङ्ग्येऽप्युक्तव्युत्पत्तिसम्भवेऽपि ध्वनिपदस्य निरुक्तरूढ़िसापेक्षत्वान्न तत्र व्यवहारः वस्तुतस्तु ध्वन्यते इति ध्वनी रसादिः ध्वनतीति ध्वनिः शब्दादिगता

---

* ध्वन्यतेऽस्मिन्निति शब्दार्थसमुदाये इत्यर्थः । अत्र सप्तम्यर्थो वृत्तित्वम् । तच्च व्यञ्जनाजन्यबोधरूपस्य ध्वननपदार्थस्य एकदेशे व्यञ्जनायामन्वेति । तथा च यद्वृत्तिव्यञ्जनाजन्यबोधविषयो रसादिः स ध्वनिरित्यर्थः । वस्तुतस्तु ध्वनति व्यञ्जनया रसादीन् प्रत्याययतीति ध्वनिः शब्दार्थसमुदाय इत्यर्थः । एवं ध्वन्यतेऽसाविति व्युत्पत्त्या रसादिरपि । एवं ध्वननं ध्वनिरिति व्यञ्जनाजन्यबोधोऽपि । एवं ध्वन्यतेऽनया इति व्यञ्जनापि ध्वनिरित्यवधेयम् । वस्त्वलङ्कारध्वन्योः काव्यघटकत्वाभावेऽपि काव्योत्कर्षकतया तद्व्यञ्जकशब्दार्थयोः ध्वनित्वमवगन्तव्यम् । अन्यथा वक्ष्यमाणध्वनिकाव्यप्रकारसंख्यानुपपत्तेः । गुणीभूतव्यङ्ग्येऽप्युक्तव्युत्पत्तिसम्भवेऽपि ध्वनिपदस्य निरुक्तरूढ़िसापेक्षत्वान्न तत्र व्यवहारः । इति पाठान्तरम् ।

**भेदौ ध्वनेरपि द्वावुदीरितौ लक्षणाभिधामूलौ ।**
**अविवक्षितवाच्योऽन्यो विवक्षितान्यपरवाच्यश्च ॥**

तत्राविवक्षितवाच्यो नाम लक्षणामूलो ध्वनिः । लक्षणामूलत्वादेवात्र वाच्यमविवक्षितं बाधितस्वरूपम् । विवक्षितान्यपरवाच्यस्त्वभिधामूलः । अत एवात्र वाच्यं विवक्षितम् । अन्यपरं व्यङ्ग्यनिष्ठम् । (क)

अत्र हि वाच्योऽर्थः स्वरूपं प्रकाशयन्नेव व्यङ्ग्यार्थस्य प्रकाशकः । यथा प्रदीपो घटस्य । अभिधामूलस्य बहुविषयतया पश्चान्निर्देशः । अविवक्षितवाच्यस्य भेदावाह ॥

**अर्थान्तरं संक्रमिते वाच्येऽत्यन्तं तिरस्कृते ।**
**अविवक्षितवाच्योऽपि ध्वनिर्द्वैविध्यमृच्छति ॥**

---

शक्तिः ध्वननं ध्वनिः रसादिप्रतीतिरिति व्युत्पत्तिभेदात् ध्वनिपदार्थभेदो बोध्यः । काव्यात्मभूतस्य ध्वनेर्भेदेनैव ध्वनिकाव्यप्रभेदानाह भेदाविति इह यद्यपि वस्त्वलङ्कारध्वनीनां काव्यात्मत्वं नाङ्गीकृतं तथापि रसादिप्रकर्षकत्वेनैव तेषां काव्यात्मत्वमित्यभिप्रायेण तत्साधारणं ध्वनिप्रभेदनिरूपणं प्रक्रमते इति भावः । लक्षणाभिधामूलाविति लक्षणामूलोऽभिधामूलश्चेत्यर्थः । तयोः परिचायकावाह अविवक्षितेति आद्य इति शेषः । अन्योऽभिधामूलः । अभिधामूल इति ध्वनिरित्यनुषज्यते । अतएव अभिधामूलत्वादेव ।

(ख) वाच्यार्थस्य व्यङ्ग्यपरत्वमुपपादयति अत्र हीति वाच्यार्थस्य स्वोपस्थितिद्वारा शाब्दबोधं प्रति कारणत्वमित्यभिप्रायेणेदम् । पश्चान्निर्देश इति तथाच लक्षणामूलध्वनेरल्पविषयत्वात् सूचीकटाहन्यायेन प्रथमं निर्देश इति भावः । अविवक्षितवाच्यस्येति ध्वनेरिति शेषः । यत्रेति प्रकृतावन्वय इति शेषः । स्वयं मुख्यतावच्छेदकरूपेण

अविवक्षितवाच्यो नाम ध्वनिरर्थान्तरसंक्रमितवाच्यो-ऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः । यत्र स्वयमनुपयुज्यमानो मुख्योऽर्थः स्वविशेषरूपेऽर्थान्तरे परिणमति तत्र मुख्यार्थस्य स्वविशेषरूपार्थान्तरसंक्रमितत्वादर्थान्तरसंक्रमितवाच्यत्वम् । (ख)

यथा ।

"कदली कदली करभः करभः करिराजकरः करिराजकरः ।
भुवनत्रितयेऽपि बिभर्त्ति तुलामिदमूरुयुगं न चमूरुदृशः" ॥

अत्र द्वितीयकदल्यादिशब्दाः पौनरुक्त्यभिया सामान्यकदल्यादिरूपे मुख्यार्थे बाधिता जाड्यादिगुणविशिष्टकदल्यादिरूपमर्थं बोधयन्ति जाड्याद्यतिशयश्च व्यङ्ग्यः । यत्र

---

स्वविशेषरूपे स्वकीयमुख्यतावच्छेदकव्याप्यधर्म्मे परिणमति विशेष्यतया भासते । अर्थान्तरे संक्रमितत्वात् विशेष्यतया भासमानत्वात् एतेन मुख्यार्थस्य मुख्यतावच्छेदकरूपेण प्रकृतान्वयानुपयोगित्वं बाधस्तस्यैव विशेषणान्तररूपेण बोध इति इयमुपादानलक्षणेति सूचितम् ।

(ग) कदलीति । मणिबन्धादाकनिष्ठं करस्य करभो बहिरित्यमरः । चमूरुर्मृगविशेषः । जाड्यादीति जाड्यं शैत्यं यद्यपि शैत्यं पयस्यैव तथापि तस्य परम्परया कदलीवृत्तित्वमवगन्तव्यं । आदिना ह्रस्वत्वकर्क्कशत्वयोर्ग्रहणं । न च शैत्यादीनामन्यत्रापि सत्वात् कथं कदल्यादिव्याप्यत्वमितिवाच्यं । शैत्यादिविशेषस्यैवात्र विवक्षितत्वात् । जाड्याद्यतिशयस्येति व्यङ्ग्यो लक्षणाप्रयोजनबोधविषयः । सर्व्वत्रैव मुख्यार्थस्याभेदः सम्बन्धः । एवञ्च कदल्यतिशीता करभोऽतिह्रस्वः करिराजकरोऽतिकर्क्कशः इति हेतोश्चमूरुदृश इदमीदृशमूरुयुगं भुवनत्रितयेऽपि तुल्यां साम्यं न [illegible]त्यर्थः । घटादौ सर्व्वथा सादृश्यं न सम्भवति यत्र तु

पुनः स्वार्थं सर्व्वथा परित्यजन्नर्थान्तरे परिणमति तत्र मुख्यार्थस्यात्यन्ततिरस्कृतत्वादत्यन्ततिरस्कृतवाच्यत्वम्। (ग) यथा।

"निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते" ॥

अत्रान्धशब्दो मुख्यार्थे बाधितोऽप्रकाशरूपमर्थं बोधयति अप्रकाशातिशयश्च व्यङ्ग्यः। अन्धत्वाप्रकाशत्वयोः सामान्यविशेषभावाभावान्नार्थान्तरसंक्रमितवाच्यत्वम् ॥ यथा।

"भम धम्मिअ बीसत्थो सो सुणहो अज्ज मारियो देण।
गोलानईकच्छकुडङ्गवासिणा दरीअसीहेण" ॥ (घ)

---

कदल्यादौ सादृश्यं सम्भाव्यते तद्दातिशैत्यादिना अपकृष्टत्वमिति सुतरां भुवनत्रये तुला नास्तीति भावः। अत्र व्यतिरेकालङ्कारोऽपि व्यङ्ग्यः।

यत्र पुनरिति शब्द इति शेषः। सर्व्वथेति मुख्यतावच्छेदकस्यैव त्यागो न तु मुख्यस्य अत्र तूभयोरिति भावः। अर्थान्तरे मुख्यार्थभिन्ने परिणमति लक्षणया वर्त्तते। अत्यन्ततिरस्कृतत्वात् सर्वथा बाध्यत्वात्।

(घ) निश्वासान्ध इति निश्वासेनान्धोऽप्रकाशः आदर्शो दर्पण इवेत्यर्थः। मुख्यार्थे दृष्टिहीनरूपे प्रकाशस्याकिञ्चित्कत्वं तद्रहितः। अत्र चाक्षुषज्ञानाजनकत्वरूपैकधर्मवत्त्वं मुख्यलक्ष्ययोः सम्बन्धः। सामान्यविशेषभावाभावादिति मुख्यार्थतावच्छेदक लक्ष्यतावच्छेदकयोः सामान्यविशेषभाव एवार्थान्तरसंक्रमितवाच्यत्वं भवति। यथा "त्वामस्मि वच्मि इत्यादौ"। न च "यस्य मित्राणि मित्राणि शत्रवः शत्रवस्तथा। अनुकम्प्योऽनुकम्प्यश्च स जातः स च जीवति"। इत्यादौ काव्यप्रकाशकारदत्तोदाहरणे मित्रत्वादीनां मुख्यतावच्छेदकानां लक्षतावच्छेदकैराश्वस्तत्वनियन्त्रणीयत्वस्नेहपात्रत्वैः सह सामान्यविशेषभावाभावात् कार्यतानियम इति वाच्यम्। आवश्यकत्वादिविशेषरूपेणैव विवक्षितत्वात्।

अत्र भ्रम धाम्मिकेत्यतो भ्रमणस्य विधिः प्रकृतेऽनुपयुज्यमानतया भ्रमणनिषेधे पर्य्यवस्यतीति वीपरीतलक्षणाशङ्का न कार्य्या । यत्र खलु विधिनिषेधावुत्पद्यमानावेव निषेधविध्योः पर्य्यवस्यतस्तत्रैव तदवसरः । यत्र पुनः प्रकरणादिपर्य्यालोचनेन विधिनिषेधयोर्निषेधविधी अवगम्यते तत्र ध्वनित्वमेव । तदुक्तम् ॥

"क्वचिद्बाध्यतया ख्यातिः क्वचित् ख्यातस्य बाधनम् ।
पूर्व्वत्र लक्षणैव स्यादुत्तरत्राभिधैव तु"

अत्राद्ये मुख्यार्थस्यार्थान्तरे संक्रमणं प्रवेशः न तु तिरोभावः अत एवात्राजहत्स्वार्था लक्षणा । द्वितीये तु स्वार्थस्यात्यन्तं तिरस्कृतत्वाज्जहत्स्वार्था ॥

**विवक्षिताभिधेयोऽपि द्विभेदः प्रथमं मतः ।**
**असंलक्ष्यक्रमो यत्र व्यङ्ग्यो लक्ष्यक्रमस्तथा ॥**

---

(ङ) ननु भम धम्मिअ इत्यादौ विपरीतलक्षणासत्त्वेनात्यन्ततिरस्कृतवाच्यध्वनेरिदमुदाहरणं भवितुमर्हतीति विप्रतिपद्यमानं प्रत्याह भम धम्मिअ इति "भ्रमधार्म्मिक विश्वस्तः स श्वा अद्य मारितः तेन । गोदानदीकच्छकुञ्जवासिना दृप्तसिंहेन इति सं" आश्रमस्थायाः कुलटाया गोदावरीकुञ्जरूपे सङ्केतस्थाने प्रत्यहं पुष्पावचयनेन कृतसङ्केतभङ्गं सम्प्रेरितकुक्कुरोपद्रवेणाप्यनिवृत्तं धार्म्मिकं प्रति तस्या एव दिनान्तरे उक्तिरियं गोदा गोदावरी यो दिनान्तरे त्वामुद्वेजयति स श्वा गोदावरीतीरकुञ्जवासिना दृप्तसिंहेन मारित इत्यन्वयः । प्रकृते तात्पर्य्यविषयीभूतस्वैरविहारे उत्पद्यमानौ उत्पद्यमानान्वयबोधौ अन्वयबोधात् प्रागित्यर्थः । तदवसरः विपरीतलक्षणावसरः एवञ्चात्र लक्षणामूलध्वनेरवसरो नास्तीति भावः । ध्वनित्वमभिधामूलध्वनित्वं वाध्यतया

विवक्षितान्यपरवाच्योऽपि ध्वनिरसंलक्ष्यक्रमव्यङ्ग्यः संलक्ष्यक्रमव्यङ्ग्यश्चेति द्विविधः। (ङ)

**तत्राद्यो रसभावादिरेक एवात्र गण्यते।**
**एकोऽपि भेदोऽनन्तत्वात् संख्येयस्तस्य नैव यत्॥**

उक्तस्वरूपा रसभावादिरसंलक्ष्यक्रमव्यङ्ग्यः। अत्र व्यङ्ग्यप्रतीतेर्विभावादिप्रतीतिकारणकत्वात् क्रमोऽवश्यमस्ति किन्तु उत्पलपत्रशतव्यतिभेदवल्लाघवान्न संलक्ष्यते। एषु रसादिषु च एकस्यापि भेदस्यानन्तत्वात् संख्यातुमशक्यत्वादसंलक्ष्यक्रमव्यङ्ग्यध्वनिर्नाम काव्यमेकभेदमेवोक्तं तथाहि एकस्यैव हि शृङ्गारस्य एकोऽपि सम्भोगरूपो भेदः परस्परालिङ्गनाधरपानचुम्बनादिभेदात् प्रत्येकञ्च विभावादिवैचित्र्यात् संख्यातुमशक्यः का गणना सर्व्वेषाम्॥(च)

---

विपरीतार्थे पर्य्यवसन्नतया स्वरातिरन्वयबोधः स्वरातस्यान्वयबोधविषयीभूतस्य बाधनं बाधोदयाद्विपरीतार्थे पर्य्यवसानं लक्षणा लक्षणामूलोध्वनिः। अभिधा अभिमूलो ध्वनिः। अत्र लक्षणामूलध्वनौ आद्ये अर्थान्तरसंक्रमितवाच्ये द्वितीयेऽत्यन्ततिरस्कृतवाच्ये जहत्स्वार्था लक्षणेत्यनुषज्यते। प्रथमसिति पश्चादस्यापरे भेदा वक्तव्या इति भावः। यत्र ध्वनौ। लक्ष्यक्रम इति व्यङ्ग्य इत्यन्वयः।

(च) आद्योऽसंलक्ष्यक्रमव्यङ्ग्यः आदिना रसाभासादिग्रहणं एकप्रकारत्वे हेतुमाह एकोऽपीति अनन्तत्वात् अतिबहुलत्वात् संख्येयः सङ्ख्यातुं शक्यः तस्य रसभावादेः मेलनेन भेदनं व्यतिभेदः लाघवात् शीघ्रोत्पन्नत्वात् स इति शेषः। एषु च रसभावादिषु च अनन्तत्वादिति सङ्ख्यातुमशक्यत्वादित्यत्र हेतुः उक्तमर्थं विशेषाख्यानेन द्रढ़यति तथाहीति विभावादिति वैचित्र्यात् वैलक्षण्याच्चेत्यन्वयः।

**शब्दार्थोभयशक्त्युत्थे व्यङ्ग्येऽनुस्वानसन्निभे ।**
**ध्वनिर्लक्ष्यक्रमव्यङ्ग्यस्त्रिविधः कथितो बुधैः ॥**

क्रमलक्ष्यत्वादेवानुरणनरूपो यो व्यङ्ग्यस्तस्य शब्दशक्त्युद्भवत्वेन अर्थशक्त्युद्भवत्वेन शब्दार्थशक्त्युद्भवत्वेन च त्रैविध्यात् संलक्ष्यक्रमव्यङ्ग्यनाम्नो ध्वनेः काव्यस्यापि त्रैविध्यम् ।

तत्र ।

**वस्त्वलङ्काररूपत्वाच्छब्दशक्त्युद्भवो द्विधा ।**

अलङ्कारशब्दस्य पृथगुपादानादलङ्कारं वस्तुमात्रं गृह्यते । तत्र वस्तुरूपशब्दशक्त्युद्भवो व्यङ्ग्यो यथा ॥ (क)

"पन्थिअ ! ण एत्थ सत्थरमत्थि मणं पत्थरत्थले गामे ।
उण्णअपओहरं पेक्खिअ उण जइ बससि ता बसस" ॥

---

(क) लक्ष्यक्रमव्यङ्ग्यध्वनिमाह शब्देति शब्दस्यार्थस्य तदुभयस्य च शक्तेरुत्तिष्ठति आविर्भवति यस्तस्मिन् । अनुस्वानः प्रतिध्वनिः तस्य खलु जनकीभूतशब्दोत्तरजायमानत्वरूपक्रमो लक्ष्यते तत्सन्निभे तत्तुल्ये व्यङ्ग्ये सतीत्यर्थः । क्रमस्य व्यङ्ग्यव्यञ्जकप्रतीतिपौर्वापर्य्यस्य लक्ष्यत्वात् स्फुटप्रतीयमानत्वात् अनुरणनरूपः प्रतिध्वनितुल्यः । वस्त्वलङ्काररूपत्वादिति व्यङ्ग्यस्येति शेषः । अलङ्कारमिति अलङ्कारशब्दोऽत्र धर्म्मपरः तेन न विद्यते अलङ्कारो यत्रेति समासः । तत्पुरुषे क्लीवत्वं न स्यात् शेषतत्पुरुषद्वन्द्वावन्त्यस्यपदलिङ्गकावित्यनेन पुंस्त्वप्रसक्तेः ।

(ख) पन्थिअ इति पथिक नात्र प्रस्तरमस्ति मनाक् प्रस्तरस्थले ग्रामे उन्नतपयोधरं प्रेक्ष्य यदि वससि तद्वस इति सम् । निवासार्थिनं पथिकं प्रति स्वयं दूत्या उक्तिरियम् । प्रस्तरं शयनीयकटः मनागल्पमपि तन्नास्ति । प्रस्तर एव वयं स्वपिम इति दर्शयति

अत्र सत्थरादिशब्दशक्त्या यद्युपभोगक्षमोऽसि तदास्स्वेति वस्तु व्यज्यते।

अलङ्काररूपो यथा॥ "दुर्गालङ्घितविग्रह इत्यादि"॥ अत्र प्राकरणिकस्य उमानाममहादेवीवल्लभभानुदेवनामनृपतेर्वर्णने द्वितीयार्थसूचितमप्राकरणिकस्य पार्वतीवल्लभस्य वर्णनमसम्बद्धं मा प्रसाङ्क्षीदितीश्वरभानुदेवयोरुपमानोपमेयभावः कल्प्यते। तदत्र उमावल्लभ उमावल्लभ इवेत्युपमालङ्कारो व्यङ्ग्यः। (ज)

यथा वा॥

"अमितः समितः प्राप्तैरुत्कर्षैर्हर्षदः प्रभो!।
अहितः सहितः साधुयशोभिरसतामसि"॥ *

---

प्रस्तरस्थल इति पयोधरं मेघम्। तत्तदा निवासोपयुक्तं शयनीयकटादिकं अत्र नास्त्येव मेघप्रतिरुद्धगतिकतया यदि वससि तद्वस इत्यापाततः प्रतीयते। तस्य व्यङ्ग्यमाह अत्रेति। सत्थरादीत्यादिना पत्थरत्थलपत्तहरशब्दयोर्ग्रहणम्। परदारगमननिषेधकशास्त्रार्थकं सत्थरपदं प्राकृतश्लिष्टम्। प्रस्तरे स्त्रीजनं सम्भोगार्थं गृह्णातीत्येवमर्थकं प्रस्तरस्थलपदं संस्कृतश्लिष्टम्। स्तनार्थकमपि दत्तहरपदमुभयोः श्लिष्टं एषां शक्त्या सामर्थ्येन परस्परयापि शब्दशक्त्युद्भवो यथा "शनिरशनिश्च तमुच्चैर्निहन्ति नरेन्द्रकुप्यसि यस्मै त्वम्। यत्र प्रसीदसि पुनः स भात्युदारोऽनुदारः"। शनिर्ग्रहोऽशनिर्वज्रञ्च तमुच्चैर्निहन्ति। अनुदारोऽनुमतदारः तत्राशनिशब्दशक्त्याशनिविरुद्धे व्यञ्जिते तद्द्वारा विरुद्धावपि त्वदनुवर्त्तनार्थमेकं कार्य्यं कुरुते इति वस्तु व्यज्यते। उत्तरार्द्धे तु

---

* हर्षदः लोकानामिति शेषः।

अवामित इत्यादावपिशब्दाभावाद्विरोधाभासो व्यङ्ग्यः ।
व्यङ्ग्यस्यालङ्कार्य्यत्वेऽपि ब्राह्मणश्रमणन्यायादलङ्कारत्वमुप-
चर्य्यते । (भ)

**वस्त्वलङ्कृतिर्व्वापि द्विधार्थः सम्भवी स्वतः ।**
**कवेः प्रौढोक्तिसिद्धो वा तन्निबद्धस्य चेति षट् ॥**
**षड्भिस्तैर्व्यज्यमानस्तु वस्त्वलङ्काररूपकः ।**
**अर्थशक्त्युद्भवो व्यङ्ग्यो याति द्वादशभेदताम् ॥**

---

विरोधाभास एव । यद्वा सोऽनुदारोऽपि त्वदनुवृत्त्या उदारो भवती-
त्यर्थः । अलङ्काररूप इति शब्दशक्त्युद्भवो व्यङ्ग्य इत्यनुषज्यते । मा
प्रसाङ्क्षीदिति प्रसक्तं माभूदित्यर्थः ।

(भ) शब्दशक्तिमूलमलङ्कारान्तरमाह यथा वेति अमित इति हे प्रभो
त्वमसतामहितः समिद्युद्धं ततः प्राप्तैरुत्कर्षैरमितोऽपर्य्याप्तः साधुयशोभिः
सहितः । व्यङ्ग्यमाह अमितेति । अमितो मितशून्यः समितो मितयुक्त-
श्चेति । विरोधाभासस्य वाच्यत्वे पदयोः समानविभक्तिकत्वमपि चका-
रसत्त्वञ्चापेक्षितं तदभावादेवात्र व्यङ्ग्यत्वमित्याह अपिशब्दाभावादिति ।
एतदुपलक्षणम् । समानविभक्तिकत्वाभावाच्चेत्यपि द्रष्टव्यम् । ननु रसस्य
प्रकर्षकतया उपमादेर्यदा गौणत्वं तदैवालङ्कारत्वं वक्ष्यते । व्यङ्ग्यत्वेना-
स्वाद्यतया मुख्यत्वात् कथमलङ्कारत्वमित्याह व्यङ्ग्यस्यालङ्कार्य्यत्वेऽपीति
श्रमणः सन्न्यासी तस्य तद्दशायां ब्राह्मणत्वाभावेऽपि यथा दशान्तरीयं
ब्राह्मणत्वमादाय तथा व्यपदेशस्तथात्रापि वाच्यतादशीयमलङ्कारत्व-
मादाय तथा व्यपदेश इति भावः ।

(ञ) अर्थशक्त्युद्भवं व्यङ्ग्यमाह वस्तु वेति । द्विविधोऽर्थः पुनस्त्रैविध्येन
षट्प्रकारो भवतीत्याह सम्भवीति स्वतः सम्भवीत्यन्वयः । तन्निबद्धस्य

स्वतः सम्भवी औचित्याद्बहिरपि सम्भाव्यमानः । प्रौढोक्त्या सिद्धो न त्वौचित्येन । (ञ)

तत्र क्रमेण यथा ॥

"दृष्टिं हे प्रतिवेशिनि ! क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायेणास्य शिशोः पिता न विरसाः कौपिरपः पास्यति ।
एकाकिन्यपि यामि सत्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः" ॥ *

अनेन स्वतः सम्भविना वस्तुमात्रेण एतत्प्रतिपादिकाया-भाविपरपुरुषोपभोगजनखक्षतादिगोपनरूपं वस्तुमात्रं व्यज्यते ॥

---

कविवर्णितस्य वक्तुः प्रौढोक्तिसिद्ध इत्यनुषज्यते षट्षठ्प्रकारः । स्वतःसम्भविपदार्थं व्याचष्टे स्वत इति औचित्यात् याथार्थ्यं बहिरपि तादृशशब्दातिरिक्तप्रमाणेनापि सम्भाव्यमानत्वप्रतीयमानः रूपकालङ्कारे रूप्यरूपकयोरभेदस्यालीकत्वेऽपि तयोः सादृश्यस्यापि लोकप्रसिद्धत्वे स्वतः सम्भवित्वम् । अतएवाधरम्लानकमलदलमिति रूपकं स्वतःसम्भवितया काव्यप्रकाशे उक्तम् । धम्मिल्ले नवमल्लिकासमुदय इति सादृश्याप्रसिद्धा प्रौढोक्तिसिद्धं रूपकमुदाहरिष्यति प्रौढोक्त्या वर्णनमात्रेण सिद्धो निष्पन्नवत् प्रतीयमानः ।

(ट) अत्र स्वतःसम्भवि वस्तुव्यङ्ग्यं वक्ष्याह दृष्टिमिति कस्याश्चित् कुलटाया उक्तिरियं । इह अस्मद्गृहेऽपीत्यन्वयः स्वगृहे चेति तदर्थः कौपीः कूपभवाः अत उक्तकारणात् निरन्तरा निरवकाशा घना इत्यर्थः । तनुं मम शरीरं आलिखन्तु खण्डयन्तु जरठः कठिनश्छेदोऽग्रभागो येषां ते नलस्य ग्रन्थयः पर्वाणि । व्यङ्ग्यमाह अनेनेति वाक्या-

---

* शिशोः पिता मद्भर्त्ता इति शेषः । तमालाकुलं तमालवनवेष्टितं स्रोतः नदीमित्यर्थः ।

"दिशि मन्दायते तेजो दक्षिणस्यां रवेरपि ।
तस्यामेव रघोः पाण्ड्याः प्रतापं न विषेहिरे" ॥*

अनेन स्वतः सम्भविना वस्तुना रवितेजसो रघुप्रतापोऽधिक इति व्यतिरेकालङ्कारो व्यज्यते । (ट)

"आपतन्तममुं दूरादूरीकृतपराक्रमः ।
बलोऽवलोकयामास मातङ्गमिव केशरी" ॥

अत्रोपमालङ्काररूपेण स्वतः सम्भविना व्यञ्जकार्थेन बलदेवः क्षणेनैव वेणुदारिणः क्षयं करिष्यतीति वस्तु व्यज्यते

---

र्थेनेत्यर्थः । तत्प्रतिपादिकायास्तस्य वाक्यार्थस्य वक्त्रा अयं वाक्यार्थो लोकप्रसिद्ध एव । स्वतःसम्भवि वस्तुव्यङ्ग्यमलङ्कारमाह दिशीति । मन्दायते मृदु भवति एवकारोऽप्यर्थे उपमानादुपमेयस्याधिक्यं न्यूनत्वं वा व्यतिरेकः तस्य व्यङ्ग्यत्वं प्रकृतोपयोगि प्रकर्षनिकर्षयोरन्यतरस्य बोधाभिप्रायेण प्रयुक्तधर्मस्य तत्प्रकारत्वासम्भवेन तद्बोधानुपपत्त्या निरुक्तधर्मव्यङ्ग्यकारणमुखेन तद्बोधोपपत्तौ भवति दिशीत्यादौ रवितेजसो मार्दवप्रयुक्तो यो निकर्षः तस्य सह्यत्वप्रयुक्तरघुप्रतापगतप्रकर्षनिरूपकत्वात् प्रकृतानुपयोगितया मार्दवव्यङ्ग्यसह्यत्वेन प्रकृतोपयोगि निकर्षप्रत्यायत्वाद्व्यतिरेकस्य व्यङ्ग्यत्वम् ।

(ठ) स्वतःसम्भव्यलङ्कारव्यङ्ग्यं वस्त्वाह आपतन्तमिति अभिमुखमायान्तमित्यर्थः । अमुं वेणुदारिणं ऊरीकृतपराक्रमः स्वीकृतविक्रमः कृतयुद्धप्रतिज्ञ इति यावत् । बलो बलदेवः विपुलविक्रमत्वेन बलस्य केशरिसादृश्यं मदान्धत्वेन वेणुदारिणो मातङ्गसादृश्यं लोक-

---

* तस्यामेव दक्षिणस्यामेव । पाण्ड्याः तदाख्यक्षत्रियविशेषाः । विषेहिरे सोढुं शक्ताः ।

"गाढ़कान्तदशनक्षतव्यथासङ्कटादरिवधूजनस्य यः।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन् युधि रुषा निजाधरम्"॥

अत्र स्वतः सम्भविना विरोधालङ्कारेणाधरो निर्दष्टः शत्रवो व्यापादिताश्चेति समुच्चयालङ्कारो व्यङ्ग्यः। (ठ)

"सज्जेइ सुरहिमासो ण आपणेइ जुअइजनलक्खसहे।
अहिणअसहआरमुहे णअपल्लवपत्तले अनङ्गस्स शरे"॥

अत्र वसन्तः शरकारः कामो धन्वी युवतयो लक्ष्यं पुष्पाणि शरा इति कविप्रौढोक्तिसिद्धं वस्तु प्रकाशी भवन्मदनविजृम्भणरूपं वस्तु व्यनक्ति।

---

प्रसिद्धमेव। स्वतःसम्भव्यलङ्कारव्यङ्ग्यमलङ्कारमाह गाढेति गाढकान्तदशनक्षतजन्यव्यथैव सङ्कटो विपत् तस्मात् ओष्ठा एव विद्रुमस्य प्रवालस्य दलानि खण्डानि क्रोधेन निजाधरं निर्दश्य निहते शत्रौ तद्वधूनां कान्तकर्त्तव्यो रतिकालीनोऽधरदंशो निवर्त्तते इत्यर्थः। अधरस्य निर्दशनव्यथाया उत्पत्तिरेव न तु मोचनं इत्यापाततो विरोधः। आश्रयभेदात् त्वविरोध एव व्यापादिताः मारिताः। धुनोति चासिं तनुते च कीर्त्तिमित्यादावेकाधिकरणे च एष दृश्यते इति वक्ष्यमाणवदत्र कार्य्यकारणकालनियमविपर्य्ययरूपातिशयोक्तिमूलं क्रियायौगपद्यं समुच्चयः। निर्दशन्निति वर्त्तमाननिर्देशात् तत्कालीनमोचनेन तद्धेतुशत्रुव्यापादनस्यापि तत्कालीनत्वलाभः कार्य्यकारणयोः शत्रुव्यापादनाधरदंशनयोः समकालत्वन्तु बाधितमप्याहार्य्यप्रतीतिविषय एव शीघ्रकारिताव्यञ्जकमित्यवधेयं। अत्र समुच्चयार्थकचकाराद्यभावेन शत्रुव्यापादनक्रियाया व्यङ्ग्यत्वेन समुच्चयस्य व्यङ्ग्यत्वं।

(ठ) कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यं वस्तु आह सज्जेइ इति सज्जयति सुरभिमासो न वार्पयति युवतिजनलक्ष्यसहान्। अभिनवसहकारमुखान् नवपल्लवपत्रलाननङ्गस्य शरान् इति सम्। सुरभिमासश्चैत्रः अभिनवो

"रजनीषु विमलभानोः
करजालेन प्रकाशितं वीर ! ।
धवलयति भुवनमण्डल
मखिलं तव कीर्त्तिसन्ततिः सततम्" ॥

अत्र कविप्रौढ़ोक्तिसिद्धेन वस्तुना कीर्त्तिसन्ततेश्चन्द्रकरजालादधिककालप्रकाशकत्वेन व्यतिरेकालङ्कारो व्यङ्ग्यः । (ङ)

"दशाननकिरीटेभ्यस्तत्क्षणं राक्षसश्रियः ।
मणिव्याजेन पर्य्यस्ताः पृथिव्यामश्रुविन्दवः" ॥ *

अत्र कविप्रौढ़ोक्तिसिद्धेनापह्नुत्यलङ्कारेण भविष्यद्राक्षसश्रीविनाशरूपं वस्तु व्यज्यते ।

---

नवमुकुलितः सहकारोऽतिसौरभाढ्यो मुखमादिर्येषां तान् । नवपल्लव एव पत्रं पक्षस्तल्लान्ति गृह्णन्ति तान् । प्रकाशीभवत् सिद्धवङ्गासमानं । विजृम्भणं विशेषेण वर्द्धनं । अत्र वसन्तादीनां शरकारत्वादिकमलीकम् । कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यमलङ्कारमाह रजनीष्विति विमलभानोः शुभ्रकिरणस्य चन्द्रस्येत्यर्थः । सततं रात्रिन्दिवं । अत्र यशसा निखिलभुवनमण्डलधवलीकरणमलीकमपि कविप्रौढोक्तिसिद्धं । अखिलमित्यनेनाधिकदेशप्रकाशकत्वञ्च बोध्यं । रात्रिन्दिवप्रकाशस्यापि रात्रिप्रकाशकत्वमस्तीति तस्य निकर्षकारणत्वासम्भवात् तद्व्यङ्ग्येन रात्रिमात्रप्रकाशकत्वेन निकर्षप्रत्यायनाद्व्यतिरेकस्य व्यङ्ग्यत्वम् ।

(ढ) कविप्रौढोक्तिसिद्धालङ्कार व्यङ्ग्यं वस्तु आह दशाननेति यस्मिन् क्षणे श्रीरामः पृथिव्यामवतीर्णः तत्क्षणं व्याप्येत्यर्थः । पर्य्यस्ताः पतिताः । प्रकृतानां मणीनां प्रतिषेधेनाप्र-

---

* राक्षसः श्रियः लक्ष्म्राः ।

"धम्मिल्ले नवमल्लिकासमुदयो हस्ते सिताम्भोरुहं
हारः कण्ठतटे पयोधरयुगे श्रीखण्डलेपो घनः ।
एकोऽपि त्रिकलिङ्गभूमितिलक ! त्वत्कीर्त्तिराशिर्ययौ
नानामण्डनतां पुरन्दरपुरीवामभ्रुवां विग्रहे" ॥

अत्र कविप्रौढोक्तिसिद्धेन रूपकालङ्कारेण "भूमिष्ठोऽपि स्वर्गस्थानामुपकारं करोषीति" विभावनालङ्कारो-व्यज्यते । (ढ)

"शिखरिणि क्व नु नाम कियच्चिरं
किमभिधानमसावकरोत्तपः ।
सुमुखि ! येन तवाधरपाटलं
दशति बिम्बफलं शुकशावकः ॥

अत्रानेन कविनिबद्धस्य कस्यचित् कामिनः प्रौढोक्ति-सिद्धेन वस्तुना तवाधरः पुण्यातिशयलभ्य इति वस्तु प्रतीयते ।

---

कृतानामश्रुबिन्दूनां स्थापनमपह्नुतिः । अत्र राजशत्रुस्त्रियोऽश्रुबिन्दूनामलीकत्वेन कविप्रौढोक्तिमात्रसिद्धत्वम् । कविप्रौढोक्तिसिद्धालङ्कार-व्यङ्ग्यमलङ्कारमाह धम्मिल्ल इति । धम्मिल्लाः संयताः कचा इत्यमरः । समुदयः समूहः । श्रीखण्डलेपश्चन्दनप्रलेपः विग्रहे देहे । त्वत्तेति कीर्त्ति-राशेर्धावल्यरूपसादृश्यमप्रसिद्धमपि कविप्रतिभानमात्रसिद्धमिति तन्मू-लकरूपकस्यापि तथात्वमिति भावः । स्वर्गस्थानामुपकारे स्वर्गस्थितिरेव कारणं तां विनापि भवतीति विभावना उपकारस्य यत्नादिद्वारेण ।

(ण) कविनिबद्धप्रौढोक्तिसिद्धवस्तु व्यङ्ग्यं वस्त्वाह शिख-रिणीति अधरवत् पाटलं रक्तं शुकशावकस्य तपश्चरणं प्रौढोक्तिमात्र-सिद्धं यत् सादृश्येनोत्कृष्टं वस्तु पुण्यं विना न लभ्यते तस्य सुतरामेव

"सुभगे ! कोटिसंख्यत्वमुपेत्य मदनाशुगैः ।
वसन्ते पञ्चता त्यक्ता पञ्चतासीद्वियोगिनाम्" ॥

अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन कामशराणां कोटिसंख्यत्वप्राप्तया निखिलवियोगिमरणेन वस्तुना शराणां पञ्चता शरान् विमुच्य वियोगिनः श्रितेत्युत्प्रेचालङ्कारो व्यज्यते । (ण)

"मल्लिकामुकुले चण्डि ! भाति गुञ्जन्मधुव्रतः ।
प्रयाणे पञ्चबाणस्य शङ्खमापूरयन्निव" ॥

अत्र कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन उत्प्रेचालङ्कारेण कामस्यायमुन्मादकः कालः प्राप्तस्तत् कथं "मानिनि मानं न मुञ्चसीति" वस्तु व्यज्यते ।

"महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती ।
अणुदिणमणसकम्मा अङ्गं अणुअं पि तणु पइ" ॥ *

---

पुरुषातिशयलभ्यत्वमिति भावः । कविनिबद्धप्रौढ़ोक्तिसिद्धवस्तुव्यङ्ग्यमलङ्कारमाह सुभग इति पञ्चता पञ्चसंख्यायोगित्वं मरणञ्च ।

(त) कविनिबद्धप्रौढ़ोक्तिसिद्धालङ्कारव्यङ्ग्यं वस्त्वाह मल्लिकेति चण्डि अत्यन्तकोपने कामस्येति सहाय इति शेषः । उन्मादकः प्रोषितपीडातिशयजनकः मानस्येति पाठे यथा श्रुत एवार्थः । उत्प्रेक्षणीयस्य कामप्रयाणकालीनशङ्खापूरणस्यासम्भवित्वात् प्रौढ़ोक्तिसिद्धत्वम् । कविनिबद्धप्रौढ़ोक्तिसिद्धालङ्कारव्यङ्ग्यमलङ्कारमाह महिलेति "महिला सहस्रभरिते तव हृदये सुभग । सा अमान्ती

---

* तनूकरोति कृशीकरोति तनोः कार्श्यातिशये यदि स्थानं प्राप्नुदित्यर्थः ।

"अत्रामा अन्तोति" कविनिबद्धवक्तृप्रौढोक्तिसिद्धेन काव्यलिङ्गालङ्कारेण तनोस्तनूकरणेऽपि तव हृदये न वर्त्तत इति। विशेषोक्त्यलङ्कारो व्यज्यते। न खलु कवेः कविनिबद्धस्येव रागाद्याविष्टता। अतः कविनिबद्धवक्तृप्रौढोक्तिः कविप्रौढोक्तेरधिकं सहृदयमचत्कारिणीति पृथक्प्रतिपादिता।

(त) एषु च अलङ्कृतिव्यञ्जनस्थले रूपेणोत्प्रेक्षणव्यतिरेचनादिमात्रस्य प्राधान्यं सहृदयसंवेद्यं न तु रूप्यादीनामित्यलङ्कृतेरेव मुख्यत्वम्।

---

दिवसमनन्यकर्माङ्गं तन्वपि तनयति" इति सम्। नायकं प्रति सख्या उक्तिरियं। अमान्ती मानमवकाशमप्राप्नुवती दिवसं प्राप्य तनयति क्षीणीकरोति "हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते इति" काव्यलिङ्गलक्षणम्। अत्र पदार्थतया हेतुर्निर्दिष्ट इत्याहुः। अत्रामान्तीति मनसोऽणुत्वादनुपलभ्यमानत्वाच्च तत्र मानमेव न सम्भवति कुतस्तल्लाभ इति भावः। तनु तनूकरणरूपकारणस्य सत्त्वेऽपि त्वद्धृदयहत्तित्वरूपफलं नास्तीति विशेषोक्तिः। ननु कविनिबद्धप्रौढ़ोक्तिसिद्धस्य कविप्रौढ़ोक्तिसिद्धत्वमस्त्येवेति कथं तस्य पृथगुपादानमित्यत आह न खल्विति रागादीत्यादिना उत्साहादिपरिग्रहः। प्रौढ़ोक्त्या हि वक्तृरागाद्याविष्टचित्तत्वं प्रतीयते तत्र कव्यपेक्षया कविनिबद्धस्य वक्तुरधिकरागाद्याविष्टचित्तत्वमिति तद्व्यञ्जिकायाः प्रौढ़ोक्तेरधिकचमत्कारकारित्वमिति भावः।

(थ) ननु यत्रालङ्कारस्य व्यञ्जकत्वमुक्तं तत्रालङ्कार्यस्य वस्तुनोऽपि व्यञ्जकत्वमस्त्येवेति कथमलङ्कारस्य पृथगुपादानमत आह एषु वेति प्रागुक्तद्वादशसु भेदेषु मध्ये इत्यर्थः। अलङ्कृतिव्यञ्जनस्थले अलङ्कारव्यञ्जकत्वस्थले। रूप्यादीनामित्यादिना उत्प्रेक्षणीय-

## एकः शब्दार्थशक्त्युत्थे

उभयशक्त्युद्भवे व्यङ्ग्ये एको ध्वनिर्भेदः। यथा।

"हिममुक्तचन्द्ररुचिरः सपद्मको
मदयन् द्विजान् जनितमीनकेतनः।
अभवत् प्रसादितसुरो महोत्सवः
प्रमदाजनस्य स चिराय माधवः" ॥

अत्र माधवः कृष्णो माधवो वसन्त इवेत्युपमालङ्कारो व्यङ्ग्यः। (थ)

एवञ्च व्यङ्ग्यभेदादेव व्यञ्जकानां काव्यानां भेदः।

## तदष्टादशधा ध्वनिः।

---

व्यतिरेचनीयादीनां ग्रहणं। सुखत्वमिति अतएव तेनैव व्यवहार इति भावः। हिममुक्तेति हिममुक्तो निर्मलो यश्चन्द्रः स इव रुचिरोऽभिलषणीयः वसन्तपक्षे हिममुक्तेन चन्द्रेण रुचिरो दीप्यमानः पद्मा लक्ष्मीः तत्सहितः पक्षे पद्मयुक्तः द्विजान् विप्रान् कोकिलांश्च जनितप्रद्युम्नः पक्षे जनितसुरताभिलाषः प्रसादिताः प्रसन्नचित्तीकृताः सुरा देवा येन पक्षे प्रसादिता विमलीकृता सुरा मद्यं येन माधवः श्रीकृष्णः वसन्तस्य अत्रोभयशक्तिव्यङ्ग्यस्य वसन्तस्योपमा उभयशक्तिव्यङ्ग्या तथा हि प्रमदाजनस्य महोत्सवजनने यदर्थे यस्य प्रसिद्धिस्तत्रैव तदर्थस्य सामर्थ्यं एवमेव काव्यप्रकाशः वसन्तस्यैव सामर्थ्य-मित्यर्थः। प्रतिसन्धानसहकृतेन माधवपदेन वसन्त एव व्यज्यते न त्वर्था-न्तरं तस्य तत्र सामर्थ्याभावात्। नचात्र शब्दार्थोभयस्त्वेपसत्त्वेन उभयशक्तिव्यङ्ग्योपमेति वाच्यं। तथा सति दुर्गालङ्घितेत्यत्रापि उभय-स्यैपसत्त्वेन उभयशक्तिव्यङ्ग्यत्वं स्यात्। गृहीतगरिमेत्यर्थस्यैपस्यापि तत्र सत्त्वात्।

अविवक्षितवाच्योऽर्थान्तरसंक्रमितवाच्योऽत्यन्ततिरस्कृतवाच्यश्चेति द्विविधः। विवक्षितान्यपरवाच्यस्तु असंलक्ष्यक्रमव्यङ्ग्यत्वेनैकः। संलक्ष्यक्रमव्यङ्ग्यत्वाच्च न च शब्दार्थोभयशक्तिमूलतया पञ्चदशेति अष्टादशभेदो ध्वनिः।

एषु च।

**वाक्ये शब्दार्थशक्त्युत्थस्तदन्ये पदवाक्ययोः ॥**

तत्र अर्थान्तरसंक्रमितवाच्यो ध्वनिः पदगतो यथा।

"धन्यः स एव तरुणो नयने तस्यैव नयने च।
युवजनमोहनविद्या भवितेयं यस्य सम्मुखे सुमुखी" ॥

अत्र द्वितीयनयनशब्दो भाग्यवत्तादिगुणविशिष्टनयनपरः। (द)

वाक्यगतो यथा।

"त्वामस्मि वच्मि विदुषां समुदायोऽत्र तिष्ठति।
आत्मीयां मतिमादाय स्थितिमत्र विधेहि तत्" ॥

अत्र प्रतिपाद्यस्य सम्मुखीनत्वादेव लब्धे प्रतिपाद्यत्वे

---

(द) ननूक्तभेदेषु व्यङ्ग्यस्यैव भेदो दर्शितः तच्च प्रकृतानुपयुक्तमत आह एवञ्चेति तदिति उक्तक्रमादित्यर्थः। अष्टादशत्वमुपपादयति अविवक्षितेति वाक्ये वाक्य एव तदन्ये उभयशक्त्युत्थादन्ये। धन्य इति युवजनमोहनविद्या विद्येव युवजनमोहिनीत्यर्थः। यद्यपि कदली कदलीत्यादौ पदगतोऽर्थान्तरसंक्रमितवाच्यार्थध्वनिरुदाहृत एव तथाप्युदाहरणान्तरदर्शनमेतत् दृढ़प्रतिपत्तये।

(ध) त्वामस्मि इति अस्मि अहं समवायः सङ्घः आत्मीयां आत्मने हितां तत्तस्मात् लक्षणावीजमन्वयानुपपत्तियोगित्वं प्रदर्श्य

"त्वामिति" पुनर्वचनमन्यव्यावृत्तिविशिष्टं त्वदर्थं लक्षयति। एवं वच्मीत्यनेनैव कर्त्तरि लब्धे "अस्मीति" पुनर्वचनमन्यव्यावृत्तिविशिष्टं मदर्थं लक्षयति। तथा "विदुषां समुदाय" इत्यादिवचनेनैव वक्तुः प्रतिपादने सिद्धे पुनः "वच्मीति" वचनं "उपदिशामि" इति वचनविशेषरूपमर्थं लक्षयति। एतानि च लक्षितानि स्वातिशयं व्यञ्जयन्ति। एतेन मम वचनं तवात्यन्तं हितं तदवश्यमेतत् कर्त्तव्यमित्यभिप्रायः। तदेवमयं वाक्यगतोऽर्थान्तरसंक्रमितवाच्यो ध्वनिः। अत्यन्ततिरस्कृतवाच्यः पदगतो यथा। "निश्वासान्ध इवेत्यादि"। वाक्यगतो यथा "उपकृतं बहु तत्रेत्यादि" अन्येषां वाक्यगतत्वे उदाहृतम्। (ध)

पदगतत्वं यथा।

"लावण्यं तदसौ कान्तिस्तद्रूपं स वचःक्रमः।
तदा सुधास्पदमभूदधुना तु ज्वरो महान्"॥

---

लक्ष्यार्थं व्यङ्ग्यार्थञ्च दर्शयति अत्रेति अस्मीति पुनर्वचनमिति हितकारिमदर्थं लक्षयतीति शेषः। सर्वत्र मुख्यार्थस्याभेदः सम्बन्धः एतानि अन्यव्यावृत्तिविशिष्टत्वदादिवस्तूनि स्वातिशयमिति त्वत्पदार्थस्य वादजल्पादिक्षमत्वं मत्पदार्थस्यात्यन्तहितैषित्वं उपदेशस्यानुपेक्षणीयत्वमतिशयः प्रत्येकपदव्यङ्ग्यत्वं प्रदर्श्य वाक्यव्यङ्ग्यं दर्शयति एतेनेति उक्तवाक्येनेत्यर्थः। अभिप्रायः प्रतीयत इति शेषः उपकृतमिति व्याख्यातमिदं प्राक् अत्र लाक्षणिकपदानामेकवाक्यस्थत्वाद्वाक्यत्वेनैव व्यञ्जकत्वं यद्यप्युपकृतादिलाक्षणिकपदानां प्रत्येकवाक्यस्थत्वं तथापि महावाक्यगतत्वेनैकवाक्यस्थत्वं वेद्यम्। अन्येषां असंलक्ष्यक्रमव्यङ्ग्यादीनां उदाहृतमिति निरुक्तरसाद्युदाहरणमेव तदुदाहरणमित्यर्थः।

अत्र लावण्यादीनां तादृगनुभवैकगोचरताव्यञ्जकानां तदादिशब्दानामेव प्राधान्यम्। अन्येषान्तु तदुपकारित्वमेवेति तन्मूल एव ध्वनिव्यपदेशः। (न)

तदुक्तं ध्वनिकृता।

"एकावयवसंस्थेन भूषणेनेव कामिनी।
पदद्योत्येन सुकवेर्ध्वनिना भाति भारती" ॥*

---

(न) असंलक्ष्यक्रमव्यङ्ग्यं पदप्रकाश्यमाह लावण्यमिति कस्यचिद्विप्रलम्भवर्णनमिदं सर्वावयवगतो विदग्धनयनोत्सवहेतुः कोऽप्यतिशयो लावण्यं प्रत्येकमवयवानां संस्थानसौभाग्यं कान्तिरिति चण्डीदासः। रूपं सौन्दर्यं तदा नायिकासन्निधानसमये सुधासदं सुखातिशयजनकं अधुना नायिकाविच्छेददशायां ज्वरः सन्तापजनकः विभावादिव्यङ्ग्ये रसे तदादिपदानां व्यञ्जकत्वमुपपादयति अत्रेति अनुभवैकगोचरताव्यञ्जकानामनिर्वचनीयत्वव्यञ्जकानां अत्युत्कृष्टविप्रलम्भव्यञ्जने प्राधान्यं अन्येषां विभावादीनां लावण्यादिपदानां या तदुपकारित्वं तदादिपदसहकारित्वं इति हेतोस्तन्मूलक एव पदमूलक एव न तु वाक्यमूलकः प्रधानेन हि व्यपदेशा भवन्तीति न्यायादित्यर्थः। अत्यन्तसन्तोषसम्पादकवस्तुस्मरणात् विरहिणां दुःखातिशयो भवतीति विप्रलम्भातिशयो व्यज्यते इति एतत्पदगतासंलक्ष्यक्रमव्यङ्ग्यध्वनेरुदाहरणमुपपन्नं। ननु तदादिपदानामनुभवगोचरेऽभिधैव कथं व्यञ्जनेति चेन्न अनुभवैकगोचरेत्यनेनानिर्वचनीयत्वस्य विवक्षणीयत्वात्। अतएव चण्डीदासः अनुभवैकगोचरास्तत्कालचमत्कारिणो निर्वक्तुमशक्याः सर्वस्वव्ययप्राणपणनादिभिरपि प्रार्थनीया इति व्याचकार।

(प) नन्वितरसाचिव्यं विना पदस्य व्यञ्जकत्वं तावन्न सम्भवति तत्र प्राधान्याप्राधान्यविवेचनमकिञ्चित्करं तथा सति सर्वत्र वाक्य-

---

* भारती वाणी।

एवं भावादिष्वप्यूह्यम् ।

"भुक्तिमुक्तिकृदेकान्तसमादेशनतत्परः ।

कस्य नानन्दनिस्यन्दं विदधाति सदागमः" ॥

अत्र सदागमशब्दः सन्निहितमुपनायकं प्रति सच्छास्त्रार्थमभिधाय "सतः पुरुषस्यागमः" इति वस्तु व्यनक्ति । ननु "सदागमः सदागम इवेति" न कथमुपमा ध्वनिः । सदागमशब्दार्थयोरुपमानोपमेयभावाविवक्षणात् । (प)

---

स्यैव व्यञ्जकत्वमुपपन्नं पदगतध्वनिप्रभेदाङ्गीकारस्तु प्राचीनमताभिप्राये-णैवेत्यभिप्रायेण प्राचीनमतमुपन्यस्यति तदुक्तमिति । एकावयवेति नासिकास्यगजस्तनादिनेत्यर्थः । पदद्योत्येन पदव्यङ्ग्येन ध्वनिना अर्थेन । भावादिष्वपीति पदप्रकाश्यभावादिष्वपीत्यर्थः । तेषामसंलक्ष्यक्रमव्यङ्ग्यध्वनित्वेनोदाहर्तुमुचितत्वात् । शब्दशक्तिमूलं पदप्रकाश्यं वस्त्वाह भुक्तीति जनान्तरसन्निधावुपनायके उपस्थिते पुराणाद्यागमप्रशंसाव्याजेन हर्षं सूचयन्त्याः नायिकाया उक्तिरियं । सदागमः सच्छास्त्रं पुराणादिकं कस्यानन्दनिस्यन्दं न विदधाति अपि तु सर्वस्यैव कीदृशः भुक्तिमुक्त्योः स्वर्गापवर्गयोः कर्त्ता एकान्तसमादेशनं तत्त्वोपदेशः तत्परः तत्कारी व्यङ्ग्यार्थस्तु सत्पुरुषस्य भवादृशस्यागमनं कस्य मद्विधजनस्य आनन्दनिस्यन्दं न विदधाति कीदृशः भुक्तिमुक्त्योः सुरतोपभोगगृहकर्मत्यागयोः कर्त्ता एकान्तसमादेशनस्य बहुलीलोपदेशस्य कारकः ईदृशार्थस्य वाक्यव्यङ्ग्यत्वेऽपि तत्र सदागमपदस्य प्रधानत्वादन्येषां सहकारित्वात् पदव्यङ्ग्यव्यपदेश इत्याह अत्रेति सन्निहितं जनान्तरसन्निधावुपस्थितं सच्छास्त्रमभिधाय अभिधया बोधयित्वा सदागमशब्दयोरिति सदागम इति शब्दः प्रतिपादको ययोः तयो सच्छास्त्रसत्पुरुषागमनयोरित्यर्थः ।

दहस्य सङ्गोपनार्थमेव हि द्व्यर्थपदप्रतिपादनं प्रकरणादि-पर्यालोचनेन च सच्छास्त्राभिधानस्यासम्बन्धत्वात्।

"अनन्यसाधारणधीर्धृताखिलवसुन्धरः।
राजते कोऽपि जगति स राजा पुरुषोत्तमः" ॥

अत्र पुरुषश्रेष्ठः पुरुषोत्तम इवेत्युपमाध्वनिः। अनयोः शब्दशक्तिमूलो संलक्ष्यक्रमभेदौ। (फ)

---

(फ) अविवक्षणे हेतुमाह रहस्येति उपनायकानुरागस्य गोपनार्थमेव न तूपमानोपमेयभावबोधनार्थं हि यस्मात् द्व्यर्थशब्दानां प्रतिपादनं प्रयोगः। ननु तदर्थं कृतमेतदर्थं भवतीति न्यायात् उपमानोपमेयत्वबोधकः कथं न स्यादित्यत आह प्रकरणादीति आदिना वयोवस्थादि संग्रहः सच्छास्त्राभिधानस्यासम्बन्धाच्चेत्यन्वयः। असम्बन्धात् प्रकृतानुपयोगित्वात् तथा च यत्र वाक्यार्थः प्रकृतोपयुक्तः व्यङ्ग्यार्थस्तु संबद्धः तत्रैवागत्या तयोरुपमानोपमेयभावः कल्प्यते अत्र तु व्यङ्ग्यार्थस्यैव प्रकृतोपयोगित्वं वाच्यार्थस्य तदङ्गत्वमिति न तदवसर इति भावः। शब्दशक्तिमूलं पदप्रकाश्यमलङ्कारमाह अनन्येति अनन्यसाधारणा अनन्यतुल्या धीर्यस्य। धृता पालिता धारिता च वसुन्धरा येन। पुरुषोत्तम इव विष्णुरिव। नन्वत्र पूर्वार्द्धे श्लेषसम्भवेन "दुर्गालङ्घितविग्रह" इतिवद्वाक्यव्यङ्ग्यमेवोपमानोपमेयत्वमिति चेत् सत्यं अनेकार्थस्य पुरुषोत्तमपदस्य सार्थकत्वाय एकार्थकानामप्यनन्येति पदानां द्व्यर्थकत्वं कल्प्यते इति पुरुषोत्तमपदस्यैव प्रधानत्वं "दुर्गालङ्घितेत्यादौ" तु बहूनामेव पदानां स्वभावत एवानेकार्थत्वमिति ततोऽस्य भेदः। ननु संज्ञायामेव समासशासनात् कथं पुरुषोत्तमपदस्यानेकार्थत्वं न च सप्तमीसमासस्यैव संज्ञायां विधानात् षष्ठीसमासेन पुरुषश्रेष्ठवाचकत्वमिति वाच्यं। निर्द्धारणे विहितायाः षष्ठ्याः समासनिषेधात्। उच्यते। पुरुषोत्तमयति संसर्गेणोत्कृष्टं करोति इति व्युत्पत्त्या तस्य पुरुषश्रेष्ठवाचकत्वात्।

"सायं स्नानमुपासितं मलयजेनाङ्गं समालेपितं
यातोऽस्ताचलमौलिमम्बरमणिर्विस्रब्धमत्रागतिः ।
आश्चर्यं तव सौकुमार्य्यमभितः क्लान्ताऽसि येनाधुना
नेत्रद्वन्द्वममीलनव्यतिकरं शक्नोति तेनासितुम्" ॥

अत्र स्वतः सम्भविना वस्तुना कृतपरपुरुषपरिचया क्लान्ताऽसीति वस्तु व्यज्यते । तच्चाधुना क्लान्ताऽसि न तु पूर्वं

(व) स्वतः सम्भवि वस्तुव्यङ्ग्यं वस्तुपदप्रकाश्यमाह सायमिति उपनायकेन पथ्युपभुक्तां स्नातागतां सखीमुपलक्षन्त्याः सख्या उक्तिरियं उपासितं कृतं स्नानमलयजलेपयोः असमप्रतिबन्धकत्वं दर्शितं सायं पदस्य त्रिमुहूर्त्तरूपसायाह्नपरत्वे तत्रातपसम्भावनया तां वारयति यात इति अम्बरमणिः सूर्यः विस्रब्धं स्वच्छन्दं यथा स्यात्तथाऽत्रागतिः एतेन भयात् क्लैव्याद्वा श्रमो नास्तीति दर्शितम् । विस्रब्धमन्देत्यपि क्वचित् पाठः आश्चर्यमदृष्टपूर्वं येन सौकुमार्य्येण अभितो वहिरन्तश्च क्लान्तासि क्लमज्ञापकमाह नेत्रद्वन्द्वमिति अमीलनव्यतिकरं मीलनसम्पर्करहितं आसितुं स्थातुं शक्नोति वस्तुना वाक्यार्थेन । ननु तादृशार्थस्य वाक्यार्थव्यङ्ग्यत्वे वाक्यगतध्वनिरेवायं न तु पदगत ध्वनिरित्यत आह तच्चेति तादृशव्यङ्ग्यञ्चेत्यर्थः । तद्व्यङ्ग्यमधुनापदस्यैव इत्यन्वयः । अत्र हेतुगर्भविशेषणमाह अधुना क्लान्तासीत्यादिबोधयत इति तथा च तादृशक्लमस्य सौकुमार्य्यप्रयुक्तत्वे दिनान्तरेऽप्येवं स्यादतोऽधुनापदादाधुनिकक्लमहेतुलाभः इति भावः । ननु तथापि अधुनापदस्यैवेति नियमः कथमुपपद्यते स्वं स्वमर्थं बोधयतां पदान्तराणामपि व्यञ्जनायामुपकारसम्भवादित्यत आह इतरेति अधुनापदस्येतरपदार्थानामुत्कर्षाधानात्तस्यैव पदार्थान्तरापेक्षया वैशिष्टं प्राधान्यं अधुनापदार्थप्रधानेन तावद्वाक्यार्थेन तादृशपदान्तराणामपि परपुरुषपरिचयव्यञ्जकत्वं । तथा हि सायमिति अधुनापदार्थप्रतिसन्धानेन सायन्तनस्नानस्य निमित्तान्तरानुसन्धानप्रति-

कदाचिदपि तवैवंविधः क्रमो दृष्टः इति बोधयतोऽधुना-पदस्यैवेतरपदार्थोत्कर्षादधुना पदस्यैव पदान्तरापेक्षया वैशिष्ट्यम्। (ब)

"तदप्राप्तिमहादुःखविलीनाशेषपातका।
तच्चिन्ताविपुलाह्लादक्षीणपुण्यचया तथा॥
चिन्तयन्ती जगत्सूतिं परं ब्रह्मस्वरूपिणम्।
निरुच्छ्वासतया मुक्तिं गताऽन्या गोपकन्यका"॥

---

बन्धादविलम्बितमेव परपुरुषपरिचयं प्रत्याययति एवं मलयजेत्यादिपर-पुरुषसम्भोगचिह्नगोपनं यात इति परपुरुषसम्भोगप्रतिबन्धकप्रकाशाभावं विस्रब्धमित्यादि तद्देशे तत्कालिकनायकसत्त्वाभावं अधुनापदार्थप्रतिपादनेनैव प्रत्याययति चलोपहास एव महावाक्यव्यङ्ग्यः इदञ्च व्यङ्ग्यं तत्प्रकर्षकमित्यवधेयम्।

(भ) स्वतः सम्भविवस्तुव्यङ्ग्यमलङ्कारं पदप्रकाश्यमाह तदप्रा-प्तीति श्रीकृष्णाप्राप्तीत्यर्थः। तच्चिन्ता इति श्रीकृष्णचिन्ता इत्यर्थः। जगतः सूतिर्जन्म यस्मात् तं परं सर्वोत्कृष्टं ब्रह्मस्वरूपिणं श्रीकृष्णं निरुच्छ्वासतया निरुद्धप्राणतया अन्याया गुरुजनोपरोधेन श्रीकृष्ण-समीपं गन्तुमशक्ता सा श्रीकृष्णवियोगेन मृता मुक्ता इत्यर्थः। समस्त-पापपुण्यक्षयादेव मुक्तिरित्युपपादयति तदप्राप्तीति तदप्राप्तिजन्ये-त्यर्थः। तच्चिन्तेति तच्चिन्ताजन्येत्यर्थः। भोगेन हि पापपुण्यक्षयो भवति तन्नाभायाह महादुःखेति विपुलाह्लादेति च तयोरुपभोगेनेति बोध्यम्। पापपुण्ययोः सामस्त्यलाभश्च अशेषचयपदाभ्यां अशेषचय-पदयोः प्रभावात् सामर्थ्यात् कारणसामस्त्येन फलसामस्त्यप्रतीतिरुचितै-वेति भावः। हेतुरयं तादात्म्याध्यवसाये दुष्कृतसुकृतफलराशिदुःखा-ह्लादप्रचयः तदात्म्याध्यवसितयोरभेदारोपविषययोः प्रत्यायनं प्रकृष्ट-वैशिष्ट्येन प्रतिपादनम्। अतिशयोक्तीति विषयनिगरणेन विषयिता-

अत्राशेषचयपदप्रभावादनेकजन्मसहस्रभोग्यदुष्कृतसुकृतफलराशितादात्म्याध्यवसिततया भगवद्विरहदुःखचिन्ताह्लादयोः प्रत्यायनमित्यतिशयोक्तिद्वयप्रतीतिरशेषचयपदद्वयद्योत्या। अत्र च व्यञ्जकस्य प्रौढोक्तिमन्तरेणापि सम्भवात् स्वतः सम्भविता। (भ)

---

दात्म्यारोपः अतिशयोक्तिरिति तल्लक्षणं यथा "कथमुपरि कलापिनां कलाप इत्यादि" अत्र प्रकरणवैशिष्ट्यात् विषयस्य केशपाशस्य लाभ इति विषयिनिगरणं अशेषचयपदद्योत्या अशेषचयपदव्यञ्जनाजन्या अयं भावः प्रकृतेऽभिधेयबोधानन्तरं सुखदुःखभोगविशेषेण कथं यावत् पुण्यपापक्षय इत्यनुपपत्तिं प्रति सन्धयतो व्यञ्जनया सुखदुःखभोगजन्याशेषपुण्यपापक्षयवतीतिप्रतीतिर्जायते अत्राशेषचयपदाभ्यां विषयिणः सुखदुःखराशेर्वाच्यत्वव्यञ्जनया झटिति प्रतीतिः प्रकरणवैशिष्ट्येन प्रकृतयोर्भगवद्विरहदुःखचिन्ताह्लादयोः प्रतीतिरित्यतिशयोक्तिद्वयस्य व्यङ्ग्यत्वम्। न चाध्यवसायमात्रेण कथमनुपपत्तिनिरास इति वाच्यम्। एककार्यकारित्वरूपसादृश्यपर्यवसानेन तन्निरासात्। तथा च भगवच्चिन्ताविरहाभ्यां तथा सुखदुःखे जनिते यदुपभोगेन यावत् सुखदुःखभोगनाश्ययोः सुकृतदुष्कृतपुञ्जयोर्नाशो जनितः एतत् सूचनाय महत्त्वं विपुलत्वञ्च दुःखाह्लादयोर्विशेषणमुपन्यस्तं। केचित्तु मुक्त्युपयोगित्वेन प्रकृतस्य समस्तपापफलराशेः पापविशेषफलेनाप्रकृतेन भगवद्विरहमहादुःखेन मुक्त्युपयोगित्वेन प्रकृतस्य समस्तपुण्यफलराशेः पुण्यविशेषफलेनाप्रकृतेन तच्चिन्ताविपुलसुखेन सहाभेदप्रतीतिरतिशयोक्तिविशेषो प्रकृते शब्दोपात्तेनाप्रकृतेन सहाभेदप्रतीतिरतिशयोक्तिरिति तल्लक्षणादित्याहुः तन्न। विषयिणि प्रसिद्धधर्मस्य विषये प्रतीतिरेवातिशयोक्तिः फलं न तु विषये प्रसिद्धस्य विषयिणि प्रतीतिरेवं स्थितावतिशयोक्तिद्वयस्य निष्फलत्वापातात् विषये प्रसिद्धस्य यावत्पुण्यपापनाशकत्वस्य विषयिणि प्रतीतेरसम्भवेनाभिप्रेतानुपपत्तिनिरास-

स्यायोगाद्विषयिणः शब्दोपात्तत्वेन कथमुपरि कलापिनां कलाप इति तद्वाचत्रोपपत्तावतिशयोक्तिद्वयस्य व्यङ्ग्यत्वायोगाच्च। न चाशेषत्वयपद-प्रभावेन विषयस्य व्यङ्ग्यत्वेनैव तस्य व्यङ्ग्यत्वमिति वाच्यं तथा सति कथमुपरि इत्यादौ प्रकरणवैशिष्ट्येन विषयस्य व्यङ्ग्यतया अतिशयो-क्तिर्व्यङ्ग्यत्वापातात्। व्यञ्जकस्य वाक्यार्थस्य। स्वतः सम्भव्यलङ्कारव्यङ्ग्यं पदप्रकाश्यं वस्तु यथा "क्षणदासावक्षणदा वलमबलम्। व्यसनम-व्यसनम्। बत वीर भवद्विषतां पराङ्मुखे त्वयि पराङ्मुखं सर्वम्।" क्षणदा रात्रिः अक्षणदा अनुत्सवकरी व्यसनं दुःखं अबीनां मेषा-णामिव असनमितस्ततो भ्रमणञ्च पराङ्मुखे प्रतिकूले पराङ्मुखं विपरीतम्। अत्र शब्दशक्तिमूलविरोधनिर्वाह्येन चतुर्थपदगते-नार्थान्तरन्यासेन विधेरपि त्वामनुवर्त्तते इति सर्वपदद्योत्यं वस्तु। स्वतः सम्भव्यलङ्कारव्यङ्ग्योऽलङ्कारः पदद्योत्यो यथा "तव पत्यधर-स्तन्वि म्लानपद्मदलं प्रगे। इति श्रुत्वा नववधू करोति मुखमानतम्।" अत्र रूपकालङ्कारेण त्वयास्यात्यन्तचुम्बनं कृतं येन म्लानत्वमिति काव्य-लिङ्गालङ्कारो म्लानादिपदद्योत्यः। कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्यं वस्तुपदप्रकाश्यं यथा "चन्द्रधवलासु रात्रिषु धनुरपि कुसुमं समा-स्फाल्य। एकच्छत्रमनङ्गस्त्रिभुवनराज्यं करोत्यनिशम्।" अत्रानङ्गस्य चापास्फालनपूर्वकत्रिभुवनाधिकारकरणशालीकत्वात् कविप्रौढोक्तिसिद्धेन तेन वस्तुना येषां कामिनामसौ राजा तेषां न कोऽपि तदादेशपरा-ङ्मुख इति जाग्रद्भिरुपभोगपरैः केवलं तैर्निशातिवाह्यते इति त्रिभु-वनराज्यपदद्योत्यं वस्तु वज्यते। कविप्रौढोक्तिसिद्धवस्तुव्यङ्ग्योऽलङ्कारः पदप्रकाश्यो यथा "निशि शरधियार्पयत्यनङ्गो दृशि सुदृशः स्वबलं वयस्य बाले। दिशि निपतति यत्र सा च तत्र व्यतिकरमेत्य समुन्मिषन्त्य-वस्थाः।" अवस्थाः प्रागुक्ता विरहकालीना दश कामदशाः अत्र क्रमि-काणां युगपदुन्मेषणरूपं वस्तु वाक्यार्थः स्वतो सम्भवित्वात् कविप्रौढोक्ति-सिद्धः तेन व्यतिकरपदद्योत्यो विरोधो व्यज्यते। कविप्रौढोक्तिसिद्धालङ्कार-व्यङ्ग्यं वस्तुपदप्रकाश्यं यथा "सन्तापभाजा हृदयेन हारो निवार्यमा-णोऽपि कुङ्कुमाङ्गाच्याः। वक्षोजभारस्य वयस भावाद्विशुद्धजातिर्न

"पश्यन्त्यसङ्ख्यपथगां त्वद्दानजलवाहिनीम्।
देव! त्रिपथगात्मानं गोपयत्युग्रमूर्द्धनि"॥

इदं मम। अत्र "पश्यन्तीति" कविप्रौढोक्तिसिद्धेन काव्यलिङ्गालङ्कारेण न केऽप्यन्ये दातारस्तव सदृशा इति व्यतिरेकालङ्कारोऽसङ्ख्यपदद्योत्यः। एवमन्येष्वप्यर्थशक्तिमूलसंलक्ष्यक्रमभेदेषूदाहार्य्यम्। तदेवं ध्वनेः पूर्वोक्तेष्वष्टादशसु भेदेषु मध्ये शब्दार्थशक्त्युत्थो व्यङ्गो वाक्यमात्रे भवन्नेकः। अन्ये पुनः सप्तदश वाक्ये पदे चेति चतुस्त्रिंशदिति पञ्चत्रिंशद्भेदाः।

---

चलत्यसुखात्।" विशुद्धजातिर्विशुद्धसुक्ताजातिघटितः। अत्र विशुद्धजातित्वहेत्वलङ्कारेणानवरतकम्पमान एवास्ते इति न चलतीति पदव्यङ्ग्यं वस्तु अनपगमनहेतुत्वस्यायान्तरत्वे नारोप्यमाणत्वात् कविप्रौढोक्तिसिद्धत्वं।

(म) कविप्रौढोक्तिसिद्धालंकारव्यङ्ग्यमलङ्कारं पदप्रकाश्यमाह पश्यन्तीति अत्र दानजलस्य नदीरूपत्वं स्वतोऽसम्भविकविप्रौढ़ोक्त्या-सिद्धं अतोत्प्रेचापि व्यङ्ग्या। एवमन्येष्वपीति कविप्रौढ़ोक्तिसिद्ध-वस्त्वलङ्कारव्यङ्ग्येषु यथोदाहृतं कविनिबद्धवक्तृप्रौढ़ोक्तिसिद्धवस्त्वलङ्कार-व्यङ्ग्येषु चतुर्षु भेदेषु यथा मम "सुतरामच्चमस्तव पञ्चभिः पुष्प-पत्रिभिः। युवत्यामोघया शक्त्या जगद्धिष्यति मन्मथः।" अत्र नायिकारूपशक्त्या मन्मथस्य जगद्वेधनमसम्भवि कविनिबद्धप्रौढोक्ति-सिद्धं वस्तु तेन नायिकायाः सर्वमनोहरत्वरूपं वस्तु जगत्पदद्योत्यं प्रकाश्यते। यो व्रजत्यतितरां सहायतां हन्त विश्वविजये मनोभुवः। तं निशम्य मधुरं पिकस्वरं कः प्रयाति धृतिमानतानने।" अत्र पिकस्वरस्य हायकत्वस्य विश्वविजयो वस्तु कविनिबद्धप्रौढोक्तिसिद्धं

**प्रबन्धेऽपि मतो धीरैरर्थशक्त्युद्भवो ध्वनिः ।**

प्रबन्धो महावाक्यम् । अनन्तरोक्तद्वादशभेदोऽर्थशक्त्युत्थः । यथा महाभारते गृध्रगोमायुसंवादे । ( म )

"अलं स्थित्वा श्मशानेऽस्मिन् गृध्रगोमायुसंकुले ।
कङ्कालबहुले घोरे सर्वप्राणिभयङ्करे ॥
न चेह जीवितः कश्चित् कालधर्म्ममुपागतः ।
प्रियो वा यदि वा द्वेष्यः प्राणिनां गतिरीदृशी" ॥

इति दिवसे शक्तस्य गृध्रस्य श्मशाने मृतं बालमुपादाय तिष्ठतां दिवसे तं परित्यज्य गमनमिष्टम् । ( य )

---

तेन मानभङ्गकारणे पिकस्वरे सत्यपि मानो न भग्न इति विशेषोक्तिरलङ्कार आनत इति पदद्योत्यो व्यज्यते । "सन्तप्तचामीकरचारुवर्णं कर्णे निबद्धं नवकर्णिकारम् । तदेव शस्त्रं मदनस्य जैत्रं जगत्त्रयं तेन जितं भवत्या" । अत्र नायिकाकर्णार्पितं नवकर्णिकारमेव मदनशस्त्रमिति रूपकं कविनिबद्धप्रौढोक्तिसिद्धं कर्णिकारेण तव मुखस्य तादृशी शोभा जाता यया वीतरागा अपि स्मरपराधीना भवन्तीति वस्तु जगत्त्रयपदप्रकाश्यं व्यञ्जयति । यशश्चन्द्र इवाभाति राजंस्ते दानसम्भवम् । दैन्यं न हन्यते हन्त तेन दृष्टिविरोधि मे । अत्र यशसः शुक्लत्वासम्भवात् तेन चन्द्रोपमानमप्यसम्भवि कविनिबद्धप्रौढोक्तिसिद्धं तेन दैन्यमेव तम इति रूपकं दृष्टिविरोधिपदद्योत्यं व्यज्यते ।

( य ) स्वतः सम्भविवस्तुव्यङ्ग्यवस्तुप्रबन्धप्रकाश्यमाह अलं स्थित्वेति श्मशाने मृतबालकं त्यजतस्तद्बन्धून् प्रति गृध्रस्य वचनमिदं न स्थेयमित्यर्थः । शरीरास्थि कङ्कालस्तेन बहुले व्याप्ते । कालधर्मं मृत्युम् । दिवा प्रभवतो दिने भक्षणक्षमस्य । गमनमिष्टमिति वाक्यसमूहेन द्योत्यते इत्यग्रेणान्वयः ।

"आदित्योऽयं स्थितो मूढ़ाः स्नेहं कुरुतसाम्प्रतम्।
बहुविघ्नो मुहूर्त्तोऽयं जीवेदपि कदाचन॥
अमुं कनकवर्णाभं बालमप्राप्तयौवनम्।
गृध्रवाक्यात् कथं बालास्त्यजध्वमविशङ्किताः"॥

इति निशि समर्थस्य गोमायोर्दिवसे परित्यागोऽनभिलषित इति वाक्यसमूहेन द्योत्यते। अत्र स्वतः सम्भवी व्यञ्जकः। एवमन्येष्वेकादशभेदेषूदाहार्य्यम्। एवं वाच्यार्थव्यञ्जकत्वे उदाहृतम्। लच्यार्थस्य यथा। "निःशेषच्युतचन्दनमित्यादि"। व्यङ्ग्यार्थस्य यथा। "उअ णिच्चलेत्यादि"

अनयोः स्वतः सम्भविनोर्लच्यव्यङ्ग्यार्थौ व्यञ्जकौ। एवमन्येष्वेकादशभेदेषूदाहार्य्यम्।

**पदांशवर्णरचनाप्रबन्धेष्वस्फुटक्रमः।**
**असंलच्यक्रमव्यङ्ग्यो ध्वनिस्तत्र पदांशकः॥**

प्रकृतिप्रत्ययोपसर्गनिपातादिभेदादनेकविधः। (र)

---

(र) गोमायूक्तप्रबन्धस्य तादृशव्यङ्ग्रमाह आदित्योऽयमिति। आदित्यसत्त्वात् युष्माकं रात्रिञ्चरतोऽपि भीतिर्नास्तीति सूचितम्। स्नेहकारणं स्थितिरेव। अयं सन्ध्यासमयासन्नो मुहूर्त्तो दारुणतया बहुविघ्नः सम्भावितभूताद्यावेशस्तदवगमात् मुहूर्त्तान्तरे जीवनस्य सम्भावना दर्शिता। सत्सम्भावनायां हेतुमाह अमुमिति। कनकवर्णाभत्वे रूपविपर्य्ययाभावात् जीवनसम्भावना। बालमिति मृत्युकालाप्राप्त्या। अप्राप्तयौवनमिति यौवनाधीनापचाराभावेन जीवनसम्भावना। मूढ़ा बाला इति पाठे शिशुबुद्धय इत्यर्थः। समर्थस्य भच्चणचमस्य। स्वतः सम्भवीति वाक्यार्थ इति शेषः। एवं निरुक्तध्वनिसमूहः। लच्यार्थस्येति व्यञ्जकत्वे इति शेषः। एवमन्येऽपि एवमन्येष्वपीति एकादशत्वं

यथा।

"चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।
करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं
वयं तत्त्वान्वेषान्मधुकर! हतास्त्वं खलु कृती"॥

अत्र "हता" इति न पुनर्दुःखं प्राप्तवन्त इति हन् प्रकृतेः। (ल)

"मुहुरङ्गुलिसंवृताधरोष्ठं
प्रतिषेधाक्षरविक्लवाभिरामम्।
मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः
कथमप्युन्नमितं न चुम्बितन्तु॥"

---

लक्ष्यव्यङ्ग्ययोः प्रत्येकापेक्षया। उभयापेक्षया तु द्वाविंशत्त्वमिति द्रष्टव्यम्। अस्फुटक्रम इत्यस्य विवरणं असंलक्ष्यक्रमव्यङ्ग्य इति।

(ल) चलापाङ्गामिति। भ्रमरं प्रति दुष्मन्तस्योक्तिरियम्। वेपथुमतीमतिचपलां करं व्याधुन्वत्याः शकुन्तलायाः भ्रमरनिराकरणाय मधुकरव्याधूननं रतेः सुरतेच्छायाः सर्वस्वं प्रधानकारणम्। यद्वा रतौ सर्वस्वमिवादरणीयम्। यद्वा रतेः कामपत्न्याः सर्वस्वं युवजये परमसहायम्। वयं तद्दृष्टिस्पर्शादिवञ्चिताः। अतत्त्वान्वेषात् तत्त्वपरिज्ञातः। हता हतप्राया अतिपीड़िता इत्यर्थः। कृती धन्यः। यद्वा तत्त्वान्वेषात् तत्तत्कर्मकर्त्तृत्वस्यान्वेषात् इङ्गितसंवादीच्छातो वयं हता इत्यर्थः। अत्र विप्रलम्भोत्कर्षो दुःखातिशयेन व्यज्यते दुःखातिशयश्च हता इत्यनेन व्यज्यते। अत्रेति हता इति प्रयुक्तं न तु दुःखं प्राप्तवन्त इति प्रयुक्तं तथात्वे प्रकृतोपयुक्तस्य दुःखातिशयस्य प्रतीतिर्न स्यात्। हन् प्रकृतेरिति व्यञ्जकत्वमिति शेषः। मुहुरिति गौतम्या शकुन्तलायां नीड़ायां दुष्मन्तस्यानुतापवर्णनमिदम्।

अत्र "तु" इति निपातस्यानुतापव्यञ्जकत्वम् । "न्यक्कारो ह्ययमेव मे यदरय इत्यादौ ।" "अरय" इति बहुवचनस्य "तापस" इत्येकवचनस्य "अत्रैवेति" सर्वनाम्नः "निहन्तीति" "जीवतीति" च तिङः "अहो" इत्यव्ययस्य "ग्रामटिकेति" करूपतद्धितस्य "विलुण्ठनेति" व्युपसर्गस्य "भुजैरिति" बहुवचनस्य व्यञ्जकत्वम् ।

---

( व ) प्रतिषेधाचरेण मैवं कुर्विति निषेधवचसा विक्लवं व्याकुलं अतएवाभिरामम् । तादृशप्रतिषेधस्य विधिपर्य्यवसन्नतया तत्प्रयोगेन सुखस्य रमणीयत्वमिति भावः । अंसे स्कन्धे विवर्त्तयितुं परिवृत्य स्थातुं शीलमस्य । कथमपि चक्षुः परागापसारणच्छलेन उन्नमितमङ्गुलीभ्या-मूर्द्धीकृत्यष्टतं । न्यक्कार इति । व्याख्यातमिदं प्राक् । बहुवचनस्येत्यादि-षष्ठ्यन्तानां व्यञ्जकत्वमित्यग्रे तनेनान्वयः । अरीणां प्रतीकाराक्षमत्वम् । तापसारेरेकत्वख्यापनेन एकतापसनिग्रहेण सर्वरक्षा भवति सोऽपि सर्वप्राणैः कर्त्तुमशक्य इतीदृक्पदेन रिपुनिग्रहे दूरगमनादिव्यापारो नास्ति तथापि स कर्त्तुं न शक्यत इति अपकारस्य वर्त्तमानत्वख्यापनेन विलम्बासहिष्णौ रिपुनिग्रहेणाशाक्रमुद्यमस्तथेति जीवनस्य वर्त्तमानत्व-ख्यापनेन प्रागेव मरणमुचितं येनैतादृशः पराभवो माभूदिति जीवन-स्याश्चर्य्यत्वख्यापनं मानिनां तादृशपराभवे जीवनमत्यन्तमनुचितमिति स्वर्गस्य क्षुद्रत्वख्यापनेन यस्य स्वर्गविलुण्ठनेनापि श्लाघा नास्ति सता-वदेकतापसेन पराभूयते अहो दुर्द्दैवविलसितमेतदिति स्वर्गलुण्ठनस्य विशिष्टत्वख्यापनेन स्वःपतेरत्यन्ततिरस्कारिणो रावणस्य एकतापसेन पराभवो दुर्द्दैवेनोपपद्यते इति भुजानां बहुत्वख्यापनेन रिपुनिग्रहे रावणस्याधिकसाधनसत्त्वेऽपि स कर्त्तुं न शक्यते इति व्यज्यते । यद्य-प्येते संलक्ष्यक्रमव्यङ्ग्याख्यवस्तुध्वनय एव तथाप्येतेऽसंलक्ष्यक्रमव्यङ्ग्यस्य निर्वेदाख्यभावस्य परिपोषक इति व्यपदेश इति भावः ।

"आहारे विरतिः समस्तविषयग्रामे निवृत्तिः परा *
नासाग्रे नयनं तदेतदपरं यच्चैकतानं मनः ।
मौनञ्चेदमिदञ्च शून्यमधुना यद्विश्वमाभाति ते
तद्ब्रूयाःसखि ! योगिनी किमसि भोः ! किं वा वियोगिन्यसि"।

अत्र तु "आहार इति" विषयसप्तम्याः "समस्तेति" "परेति" च विशेषणद्वयस्य "मौनं चेदमिति" प्रत्यक्षपरामर्शिनः सर्वनाम्नः "आभातीति" उपसर्गस्य "सखीति" प्रणयस्मारणस्य "असि भोः" इति सोपहासोल्लासस्य

(अ) आहार इति । विरहिणीमुपहसन्त्याः सख्या उक्तिरियं विरती रागाभावः एकतानमनन्यवृत्तियोगिन्या विश्वं शून्यसदृशं प्रतिभाति योगिन्याः वियोगिन्याश्च सदपि विश्वं प्रकृतानुपयोगित्वेनासदिव प्रतिभाति । विशेषणस्येत्यनन्तरं तदेतदिति बुद्धिस्थपरामर्शिनः सर्वनाम्नः अपरमिति विशेषणस्येत्यवगन्तव्यम् । प्रतीयते इति प्रत्ययः प्रतीतिविषयस्तत्परामर्शिनः तद्वाचकस्य प्रत्यक्षपरामर्शिनः इति क्वचित् पाठः । प्रणयस्मारणस्य प्रेमसूचकस्य सोल्लासस्य उपहाससूचकस्य उत्तरपद्यस्य वियोगिनीति पदस्य दार्ढ्यं प्रामाण्यं तत्सूचकस्य वर्त्तमानोपदेशस्य वर्त्तमानकालप्रयोगस्य तत्तदिति सहृदयनिर्वचनीयेत्यर्थः । तथा हि । आहार इति विषयसप्तम्या आहारविषयकरागाभाव एव न तु योगिनीवदनिष्टसाधनताज्ञानात् योगप्रतिकूलाहारान्निवृत्तिः । तदुक्तम् । "नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नत इति" । एवञ्च योगिन्याः प्राणधारणार्थमाहारोऽस्त्येव तव तु सोऽपि नास्तीति भावः । एवं योगिन्या योगसाधने यदृच्छोपपन्ने च विषये प्रवृत्तिरस्ति तव तु सर्वथैव विषयान्निवृत्तिरिति समस्तेत्यादिविशेषणद्वयं

* नयनं तिष्ठतीतिशेषः ।

"किंवा" इत्युत्तरपचद्दाव्यं सूचकस्य वाशब्दस्य "असौति" वर्त्तमानोपदेशस्य तत्तद्विशेषव्यञ्जकत्वं सहृदयसंवेद्यम्।(भ) वर्णरचनयोरुदाहरिष्यते। प्रबन्धे महाभारते शान्तः।

रामायणे करुणः। मालतीमाधवरत्नावल्यादौ शृङ्गारः। एवमन्यत्र।

**तदेवमेकपञ्चाशद्भेदास्तस्य ध्वनेर्मताः।**
**सङ्करेण त्रिरूपेण संसृष्ट्या चैकरूपया। (म)**
**वेदखाग्निशराः शुद्धैरिषुबाणाग्निसायकाः॥**

---

व्यञ्जयति। योगिन्या ध्यानसमय एव नासाग्रे नयनं चित्तैकाग्रत्वञ्च तव तु सर्वदैव तदुभयमिति तदेतदपरमिति व्यञ्जयति। योगिनी मौनसमये इङ्गितादिनार्थं बोधयति तव तु तदपि नास्ति इतीदमपरेण व्यज्यते। योगिन्यास्तत्त्वेन विश्वमसत् स्फुरति तव तु तत्त्वं विनैव इतीदमदद्योत्यम्। योगिन्या जगति शून्यत्वस्फुरणं ब्रह्मस्फूर्त्तिसम्वलितं तव तु न तथेति आङुपसर्गो द्योतयति। योगिन्या रागिणि जने प्रणयो नास्ति तव तु सोऽस्तीति सखीत्यनेन व्यज्यते त्वं योगिन्यपि न तु वियोगिनीति किंवाशब्देन द्योत्यते।

(भ) वर्णरचनयोरिति वर्णो माधुर्य्यादिगुणव्यञ्जकः रचना पदविन्यासविशेषः सापि माधुर्य्यादिव्यञ्जिका उदाहरिष्यत इति गुणपरिच्छेदे इति शेषः। एवमन्यत्रेति माघे शिशुपालदूतोक्तौ सन्धौ वाच्ये वस्तुमात्ररूपो विग्रहः शब्दशक्तिमूलः प्रबन्धव्यङ्ग्यो दृश्यत इति यथोदाहसः। तदेवमिति पूर्वं पञ्चत्रिंशद्भेदा उक्ता अर्थशक्तिमूलध्वनेः प्रबन्धप्रकाश्यत्वेन पुनर्द्वादशविधत्वं असंलक्ष्यक्रमव्यङ्ग्यध्वनेरपि पदांशवर्णरचनाप्रबन्धप्रकाश्यत्वेन चतुर्विधत्वमिति षोड़शमिलित्वा एकपञ्चाशदिति। यद्यप्यर्थानां वाच्यलक्ष्यव्यङ्ग्यभेदेन पदांशानाञ्च प्रकृत्यादिभेदेन कथोऽधिकापि प्रकारा सम्भवन्ति तथापि सम्प्रदायानु-

शुद्धैः शुद्धभेदैरेकपञ्चाशता योजनेत्यर्थः। दिङ्मात्रं तूदा क्रियते। (ख)

---

रोधेन एकपञ्चाशत्त्वमेव दर्शितम्। सङ्करेणेति अलङ्कारपरिच्छेदे वक्ष्यमाणरीत्या निरूपेणेत्यर्थः। यथा "अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थितौ। सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनरिति"। अलङ्कारसङ्करस्य त्रैविध्यमुक्तं तदनुसारेण सङ्करत्रैविध्यं बोध्यम्। चतैकाश्रयस्थितावित्यस्य एकव्यञ्जकानुप्रवेश इत्यर्थः। सन्दिग्धत्वेऽयं ध्वनिः स ध्वनिर्वा इति संशयेऽङ्गाङ्गिभावानापन्नो अनेकव्यञ्जकानुप्रविष्टोऽसन्दिग्धो ध्वनिसमुदायः संसृष्टिः।

(ख) अनेकधेति यदुक्तं तदेवाह वेदेति। वेदाश्चत्वारः खं शून्यं अग्नयस्त्रयः शराः पञ्च सजातीयानेकसङ्ख्याप्रस्तावे अङ्कस्य वामतो गतिरित्यङ्कविदां नियमेन चतुरुत्तरशतत्रयाधिकपञ्चसहस्राणीत्यर्थः। ननु कथमेतत् एकपञ्चाशतश्चतुर्गुणेन चतुरधिकशतद्वयमेव भवतीति चेन्न। यतः प्रथमस्य सजातीयेनैकेन विजातीयैः पञ्चाशता च सह संसृष्टौ एकपञ्चाशत्त्वम्। एवं द्वितीयस्य सजातीयेनैकेन विजातीयैरूनपञ्चाशता च सह संसृष्टौ पञ्चाशत्त्वम्। तृतीयस्य सजातीयेनैकेन विजातीयैरष्टचत्वारिंशता च सह संसृष्टौ ऊनपञ्चाशत्त्वं भवति। चतुर्थस्य सजातीयेनैकेन विजातीयैः सप्तचत्वारिंशता च सह संसृष्टौ अष्टचत्वारिंशत्त्वम्। एवमन्येषामेकैकह्रासेन सप्तचत्वारिंशदादिकम्। चरमस्य सजातीयेनैकेन संसृष्टावेकविधत्वमेवेति मिलित्वा षड्विंशत्यधिकत्रयोदशशतत्वं ध्वनिसंसृष्टेः। एवं क्रमेण अष्टसप्तत्युत्तरनवशताधिकत्रिसहस्रत्वं त्रिविधध्वनिसङ्करस्य मिलित्वा वेदखाग्नीत्यादिसङ्ख्याया उपपत्तिः। न चैकपञ्चाशतः तावता गणने एकाधिकषड्विंशतिशती संसृष्टौ तत्रैव तत्त्रिगुणसङ्करयोजने सति "वेदखाब्धिवियच्चन्द्रा" इति काव्यप्रकाशोक्तसङ्ख्या भवति कथं वेदखाग्नीत्यादिसंख्येति वाच्यम्। संसृष्टिसङ्करयोः पूर्वपूर्वसंसर्गस्योत्तरोत्तरगणनाया न प्रवेशात् तावत्

"अत्युन्नतस्तनयुगा तरलायताक्षी
द्वारि स्थिता तदुपयानमहोत्सवाय ।
सा पूर्णकुम्भनवनीरजतोरणस्रक्
सम्भारमङ्गलमयत्नकृतं विधत्ते ॥"

अत्र "स्तनाविव पूर्णकुम्भौ दृष्टय एव नवनीरजस्रज इति" रूपकध्वनिरसध्वन्योरेकाश्रयानुप्रवेशः सङ्करः ।

"धिन्वन्त्यमूनि मदमूर्च्छदलिध्वनीनि
धूताध्वनीनहृदयानि मधोर्दिनानि ।
निस्तन्द्रचन्द्रवदनावदनारविन्द-
सौरभ्यसौहृदसगर्व्वसमीरणानि" ॥

---

सङ्करात्वानुपपत्तेः । अतएव काव्यप्रकाशटीकाकारचण्डीदासेन संसृष्टौ सङ्करयोजने च सिन्धुगगणशिखिशराः शुद्धयोगे शरवाणाग्निवाणा इत्युक्तम् । शुद्धैरिति संसृष्टिसङ्कररहितैर्योगे इत्यर्थः । इषवः पञ्च वाणाः पञ्च अग्नयस्त्रयः शायकाः पञ्च । पञ्चपञ्चाशदुत्तरयततयाधिकपञ्चसहस्राणीत्यर्थः ।

(ह) अत्युन्नतेति प्रवासादागतं नायकं श्रुत्वा वासगृहद्वारि स्थितायाः नायिकाया वर्णनमिदम् । तस्य नायकस्य उपयानमुपगमः स्वगृहप्रवेश इति यावत् । तत्कालीनमहोत्सवाय सम्भारः सङ्घटनमेव मङ्गलं प्रवासादागतस्य गृहप्रवेशसमये पूर्णकुम्भस्थापनादिरूपं मङ्गलं क्रियते इति लोकाचारः । अत्र स्तनकटाक्षयोर्यथासम्भवं पूर्णकुम्भत्वेन नवनीरजतोरणस्रक्त्वेन च रूपकत्वं तयोरेव नायकरतेरुद्दीपकतया शृङ्गारस्य व्यङ्ग्य इत्येवं व्यञ्जकानुप्रवेशः । धिन्वन्तीति प्रीणयन्तीत्यर्थः । अमूनि अनुभूयमानमहोत्सवानि मदेन मूर्च्छन्तो वर्द्धमाना अलिध्वनयो यत्र । मधोर्वसन्तस्य निस्तन्द्रोऽतिप्रकाशमानश्चन्द्र इव वदनं यासान्तासां वदनारविन्दसौरभस्य सौहृदेन सादृश्येन सगर्व्वा उत्कृष्टाः समीरणा यत्र

अत्र निस्तन्द्रेत्यादिलक्षणामूलध्वनीनां संसृष्टिः। (ङ)

अथ गुणीभूतव्यङ्ग्यम्।

अपरन्तु गुणीभूतव्यङ्ग्यं

वाच्यादनुत्तमे व्यङ्ग्ये।

अपरं काव्यम्। अनुत्तमत्वं न्यूनतया साम्येन च सम्भवति।

तत्र स्यादितराङ्गं काक्वाक्षिप्तञ्च वाच्यसिद्ध्यङ्गम्

सन्दिग्धप्राधान्यं तुल्यप्राधान्यमस्फुटमगूढम्।

व्यङ्ग्यमसुन्दरमेवं भेदास्तस्योदिता अष्टौ॥

इतरस्य रसादेरङ्गं रसादिव्यङ्ग्यं यथा। (च)

---

तानि लक्षणामूलध्वनीनाम् अत्यन्ततिरस्कृतवाच्यानाम्। तथा हि निस्तन्द्रपदेन तन्द्रारहित उच्यते चन्द्रे तत्कथनस्यानुपयोगितया प्रकाशमाने लक्षणा प्रकाशातिशयबोधः प्रयोजनम्। एवं प्रेमवाचकस्य सौहृदपदस्य सादृश्ये लक्षणा। सादृश्यातिशयबोधः प्रयोजनम्। गर्वस्याचेतने वायावसम्भवात् सगर्वपदस्य उत्कृष्टे लक्षणा उत्कर्षातिशयबोधः प्रयोजनम्। एषु वाच्यार्थस्यार्थान्तरसंक्रमितत्वाभावादत्यन्ततिरस्कृतवाच्यत्वम्। अत्रोक्तत्रिविधसङ्करासम्भवात् ध्वनीनां संसृष्टिरेव।

(च) ध्वनिं निरूप्य गुणीभूतव्यङ्ग्यं निरूपयति अथेति। अपरं ध्वनिभिन्नम्। तत्र गुणीभूतव्यङ्ग्ये इतरस्य रसादेर्वाक्यार्थस्य वा अङ्गं रसादि अनुरणनरूपं वा व्यङ्ग्यमित्यन्वयः। एवमन्यत्रापि काक्वाक्षिप्तं काकुवशात् झटिति वाच्यवत् प्रतीयमानम्। वाच्यस्यान्वयबोधबीजं वाच्यसिद्ध्यङ्गं आपाततः प्रतीतस्य वाच्यस्य प्रतिसन्धानानुपपत्तिनिरासकम्। अस्फुटं सहृदयैरपि झटित्यप्रतीयमानं अगूढं स्फुटतया वाच्यायमानं असुन्दरं चमत्काराप्रत्यासन्नः एवं निरुक्तव्यङ्ग्यभेदेन। तस्य गुणीभूतव्यङ्ग्यस्य रसाङ्गं रसरूपव्यङ्ग्यम्।

"अयं स रसनोत्कर्षी पीनस्तनविमर्द्दनः ।
नाभ्यूरुजघनस्पर्शी नीवीविस्रंसनः करः ॥"

अत्र शृङ्गारः करुणस्याङ्गम् ।

"मानोन्नतां प्रणयिनीमनुनेतुकामः
त्वत्सैन्यसागररवोद्गतकर्णतापः ।
हा ! हा ! कथं नु भवतो रिपुराजधानी
प्रासादसन्ततिषु तिष्ठति कामिलोकः ॥" *

---

(क) उदाहरति अयमिति । भूरिश्रवसः समरपतितं हस्तं विलोक्य तत्पत्न्या रोदनमिदं । अयमीदृगवस्थः स तत्तत्कर्मणि सुखरनुभूतः । तत्तत्कर्माह रसनेति रसनां मम क्षुद्रघण्टिकाम् उत्कर्षयितुं मार्जनादिना उत्कृष्टीकर्त्तुं आक्रष्टुं वा शीलं यस्य सः नीव्या वस्त्रबन्धनस्य विस्रंसनो मोचनकरः अत्रालम्बनविच्छेदेन रतेरव्यक्ततया स्मर्य्यमाणानां तदङ्गानां शोकोद्दीपनत्वात् करुणानुकूलेति शृङ्गारस्य करुणाङ्गत्वम् । अतएव प्राकरणिकत्वेन प्रधानस्य करुणस्य व्यञ्जकत्वं वाक्यार्थमपेक्ष्य तदानीमप्राप्तरसभावस्य शृङ्गारस्य न्यूनचमत्कारित्वम् । ननु तदानीं शृङ्गारस्य रसत्वाप्राप्त्या कथमस्य रसाङ्गरसोदाहरणत्वं सङ्गच्छतामिति चेन्न । तदानीं शृङ्गाररसस्य पूर्णरसत्वाभावेऽपि खण्डरसत्वस्य सत्त्वात् । तच्च दोषपरिच्छेदे निर्णेष्यते । शृङ्गारस्य करुणाविरुद्धत्वेऽपि स्मृतिविषयत्वेन गुणत्वमेव न तु दोषत्वम् । भावाङ्गं रसव्यङ्ग्यमुदाहरति मानोन्नतामिति राज्ञः स्तुतिरियम् मानोन्नतामुन्नतमानां त्वत्सैन्यसागररवेण उद्गतकर्णतापो भवति । अत्रेति प्रथमपादेनौत्सुक्यम् । द्वितीयपादेन त्रासो व्यज्यते । औत्सुक्यत्रासयोः

---

* प्रासादसन्ततिषु स्थित इतिशेषः ।

अत्रौत्सुक्यत्रासससन्धिसंस्कृतस्य करुणस्य राजविषयरताविषयरताङ्गभावः। (क)

"जनस्थाने भ्रान्तं कनकमृगतृष्णान्वितधिया
वचो वैदेहीति प्रतिपदमुदश्रुप्रलपितम्।
कृता लङ्काभर्त्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता॥"

---

सन्धिना संस्कृतस्य शलोत्कर्षस्य एतेन भावसन्धेः करुणरूपरसाङ्गत्वं दर्शितम्। भावस्यास्वादपात्रत्वेन प्रधानत्वं वाच्यार्थो व्यङ्ग्यकरुणनिरपेक्ष एव। तस्य व्यञ्जकः करुणस्तु वाच्यसापेक्षहाहापदार्थव्यङ्ग्य एव तत्प्रकर्षक इति वाक्यार्थापेक्षया व्यङ्ग्यस्य न्यूनचमत्कारित्वम्। एवं भावादीनां भावाद्यङ्गत्वे उदाहरणानि काव्यप्रकाशाद्युक्तानि बोध्यानि ग्रन्थप्रपञ्चभयादिह नोक्तानि।

(ख) वाच्यार्थस्याङ्गं शब्दशक्तिमूलमनुरणनरूपव्यङ्ग्यमुदाहरति जनस्थान इति। धनार्थं प्रयतमानस्याप्राप्तधनस्य कस्यचिदुक्तिरियम्। मया रामत्वं प्राप्तमित्यापाततः प्रतीयते पश्चादन्यस्य धर्मं कथमन्यो लभतामित्यनुपपत्तिं प्रतिसन्धत्तः स्वरूपशब्दसामर्थ्येन व्यज्यमानं सादृश्यमादाय रामसादृश्यं प्राप्तमिति बोधः पारमार्थिकः। सादृश्यघटकानि स्वरूपशब्दवाच्यत्वरूपसाधर्म्याण्याह जनस्थान इति। कनकमृगस्य तृष्णया प्राप्तीच्छया अन्वितधिया रामेण जनस्थाननाम्नि दण्डकारण्यैकदेशे भ्रान्तम्। मया तु कनकस्य मृगतृष्णाभ्यामन्वेषण प्राप्तीच्छाभ्यामन्वितधिया जनानां स्थाने भ्रान्तम्। केचित्तु कनकमेव मृगतृष्णा मरीचिका कनके मृगतृष्णारोपश्च दुष्प्रापजलार्थिनो मृगतृष्णायामिव दुष्प्रापकनकार्थिनः कनकेऽपि प्रवृत्तेस्तादृशप्रवृत्तिविषयत्वरूपसाधर्म्यादित्याहुः। तन्न स्वरूपसतः कनकस्य बुद्धिमोकर्षासम्भवात् तत् प्राप्तीच्छायां लक्षणावश्यमङ्गीकार्या। एवञ्च तत्र

अत्र रामत्वं प्राप्तमित्यवचनेऽपि शब्दशक्तेरेव रामत्व-मवगम्यते । (ख)

वचनेन तु सादृश्यहेतुकतादात्म्यारोपणमाविष्कुर्वता तद्गोपनमपाकृतम् । तेन वाच्यं सादृश्यं वाक्यार्थान्वयोप-पादकतयाऽङ्गतां नीतम् । काक्वाक्षिप्तं यथा । (ग)

---

निरुक्तसाधर्म्यासम्भवात् रूपकासङ्गतेः । "मृगः पशौ कुरङ्गे च करि-नक्षत्रभेदयोः । अन्वेषणे च याच्ञायामिति मेदिनी" । रामेण प्रति-पदं पदे पदे वैदेहि इति वचः उदस्तु यथाख्यातस्तथा प्रलपितम् । मया तु वै निश्चितं देहीति वचः प्रतिपदं प्रतिस्थानं प्रलपितं । रामेण लङ्काभर्त्तू रावणस्य वदनानां परिपाट्यां पङ्क्तौ इषुघटना कृता । मया तु भर्त्तुर्धनस्वामिनो वदनस्य परिपाटीषु सन्तोषसूचकभङ्गीषु कापि घटना परिचयोऽत्यन्तार्थं कृता । कुशलं दारिद्र्यापनायकं वस्तु यस्य तत्ता मया नाधिगता रामेण तु कुशलवौ सुतौ यस्याः सा सीता प्राप्तेति तुशब्दद्वयोऽर्थः । अस्योपमाध्वनित्वं वारयन् वाक्यार्थाङ्गत्वमुपपाद-यति अत्रेति । शब्दशक्तेरेव स्वरूपशब्दसामर्थ्यादेव रामत्वं राम-सादृश्यम् ।

(ग) वचनेन मयाप्तं रामत्वमिति वाक्येन आविष्कुर्वता व्यञ्जयता तद्गोपनं सादृश्यस्य गूढत्वं अपाकृतं खण्डितम् । एतेन अधिकचमत्-कारित्वाभावेनास्योपमाध्वनित्वं वारितम् । तेन सादृश्यस्य गोपनापाक-रणेन वाच्यं वाच्यवत् झटिति प्रतीयमानं वाक्यार्थस्य रामसादृश्यप्राप्ते-रन्वयोपपादकतया अन्वयप्रतियोगित्वेनान्वयस्य निर्वाहकतया तत्रापाततः प्रतीतस्यार्थस्यानुपपत्तिं व्यङ्ग्यं निरस्यति स वाच्यसिद्ध्यङ्गस्य विषयः । यत्र त्वापाततः प्रतीतस्यबाधेन तत्स्थाने आत्मानमर्पयित्वा अन्वयं निर्वाहयति सोऽस्य विषय इत्यनयोर्भेदः । अत्रोपमानोपमेयभावो व्यङ्ग्यो वाच्या-ङ्गतां नीत इति काव्यप्रकाशवृत्तिं केचिदेवं विद्वध्वन्ति । उपमानोप-

"मथ्नामि कौरवशतं समरे न कोपात्
दुःशासनस्य रुधिरं न पिबाम्युरस्तः ।
संचूर्णयामि गदया न सुयोधनोरू
सन्धिं करोतु भवतां नृपतिः पणेन" ॥

अत्र "मथ्नाम्येवेत्यादि" व्यङ्ग्यं वाच्यस्य निषेधस्य सहभावेनैवं स्थितम् ।

---

मेयभाव उपमा रामप्राप्तिव्यङ्ग्या वाच्यस्य* कुशलवसुताप्राप्त्यप्राप्तत्का-द्रामात् व्यतिरेकरूपस्यास्याङ्गतां प्रकर्षकतां नीत इति तन्न । अङ्गतासुपपादकतामित्यस्यैव वक्तुं युक्तत्वात् उपमानव्यञ्जनाभावे व्यतिरेकप्रतीत्यनुपपत्तेः उपपन्नातिशयाधायकस्यैव प्रकर्षकत्वसम्भवात् । अर्थशक्तिमूलानुरणनरूपस्य वाच्याङ्गत्वं यथा । "आगत्य सम्प्रति वियोगविसंष्ठुलाङ्गीमम्भोजिनी क्वचिदपि क्षपितत्रियामः । एतां प्रसादयति पश्य शनैः प्रभाते तन्वङ्गि पादपतनेन सहस्ररश्मिः"। अत्र नायकवृत्तान्तोऽर्थशक्तिमूलो वस्तुरूपो रविकमलिनीवृत्तान्ताध्यारोपेण स्थितः ।

(घ) मथ्नामीति सहदेवं प्रति सन्धिकरणासहिष्णोर्भीमस्योक्तिरियम् । सर्वत्र भविष्यत् सामीप्ये लट् । उरस्तो वक्षःस्थलात् सुयोधनेति दुर्योधनस्यैव नामान्तरम् । नृपतिः युधिष्ठिरः । भवतामित्यभिमतमिति शेषः । यद्वा भवतां नृपतिरित्यनेन स्वाभीष्टानाचरणात् स्वनृपतित्वाभावसूचनम् । पणेन कुशस्थल्यादिग्रामपञ्चकप्रापणरूपेण । मथ्नाम्येवेति प्रबलतरपरिपन्थिसन्धिप्रसङ्गसमुज्जृम्भमाणसंरम्भविसंष्ठुलकण्ठतालुसंयोगविकृतेन शिरश्चालनसहोत्पन्नेन नञा झटि-

---

* अप्राप्तकुशलवसुताकस्य उपमेयस्य दरिद्रस्य प्राप्तकुशलवसुताका-द्रामादाधिक्यरूपस्य नञा प्रतिपाद्य व्यतिरेकालङ्कारस्याङ्गताम् । पाठान्तरम् ।

"दीपयन् रोदसीरन्ध्रमेष ज्वलति सर्वतः ।
प्रतापस्तव राजेन्द्र ! वैरिवंशदवानलः" ॥

अत्रान्वयस्य वेणुत्वारोपणरूपो व्यङ्ग्यः । प्रतापस्य दवानलत्वारोपसिद्ध्यङ्गम् । (ग)

---

न्ययोगव्यवच्छेदो व्यज्यते स एव एवकारेण दर्शितः । सहभावेनेति वाच्यप्रतीतिसमकालमेव दीप्तभावगद्गदसाकाङ्क्षतया काकुरवेण व्यङ्ग्य-प्रतीतिरिति वाच्यमतस्तन्मात्रं व्यङ्ग्यमेव इवादिभिराख्यमानं वाच्याय-मानम् । अतएवात्र मुख्यार्थबाधाद्यनुसरणविलम्बासहत्वात् लक्षणा इति प्राचीनाः । मुख्यार्थबाधो झटित्यर्थपर्य्यवसानाय प्रतीयते इति नवीनाः । वाच्यार्थप्रतीतिसमये व्यञ्जनाया अर्थबोधनासामर्थ्यमेव प्राचीनमतास्वरसः । केचित्तु न न मथिष्याभीत्यादिरीत्या अपरनञर्थ आक्षिप्यते । तथा च नञर्थद्वयेनैवकारार्थः पर्य्यवस्यतीत्याहुस्तन्न । वाच्यार्थस्यैव व्यञ्जनयोपस्थितेरसम्भवात् वाच्यव्यङ्ग्ययोर्युगपदुपस्थित्य-योगाच्च । वाच्यसिद्ध्यङ्गं व्यङ्ग्यमुदाहरति दीपयन्निति प्रकाशयन्नि-त्यर्थः । रोदस्योर्द्यावापृथिव्यो रन्ध्रमवकाशं ज्वलति दीप्यते । अत इति अन्वयस्य कुलस्य प्राथमिकबोधे दावानलस्य धातुगोत्रसम्बन्धासम्भवोपष्ट-म्भादप्रामाण्यपहस्ततः प्रतापस्य दावानलत्वानुपपत्त्या व्यङ्ग्यं कुलस्य वेणुत्वारोपणमभिसन्दधतः श्रोतुर्वैरिकुलवेणुदावानल इति द्वितीय बोधः । आरोप्यमाणस्य वेणोर्दावानलसम्बन्धित्वमक्षतमित्यनुपपत्तिनिरा-सेन दावानलत्वारोपणस्याङ्गं व्यङ्ग्यरूपकं प्रतापस्य दाहकत्वेन कविपर-म्परासिद्धपिशङ्गत्वेन च दावानलसादृश्यं प्रसिद्धमिति तद्रूपकं वैरिकुलस्य वेणुत्वारोपणकारणमिति श्लिष्टनिबन्धनं परम्परितरूपकमिदम् । क्वचिच्च प्रकरणादिनियमाभावेन रूप्यरूपकयोरुभयोरेव श्लिष्टशब्दवाच्यत्वम् । यथा "विद्वन्मानसराजहंसेत्यादि" । प्रकृते तु नियन्त्रणवशात् रूपकस्य व्यङ्ग्यत्वमेवेत्यवधेयम् ।

"हरस्तु किञ्चित् परिवृत्तेत्यादौ" विलोचनव्यापार-चुम्बनाभिलाषयोः प्राधान्ये सन्देहः।

"ब्राह्मणातिक्रमत्यागो भवतामेव भूतये।
जामदग्न्यश्च वो मित्रमन्यथा दुर्म्मनायते"॥

अत्र परशुरामो रक्षःकुलक्षयं करिष्यतीति व्यङ्गस्य वाच्यस्य च समं प्राधान्यम्। (ङ)

---

(ङ) सन्दिग्धप्राधान्यं व्यङ्ग्यमुदाहरति हरस्त्विति। आकालिकवसन्ते पार्वतीमालोकमानस्य हरस्य धैर्य्यविपर्य्ययवर्णनमिदं परिवृत्तधैर्य्यो नष्टधृतिः। विलोचनेति मुखमात्रे लोचनव्यापारेण चुम्बनाभिलाषः सम्भाव्यते। न च द्वयोरेव शृङ्गारव्यञ्जकतया प्राधान्यमिति तुल्यप्राधान्यमेवेदमिति वाच्यम्। उभयोः प्राधान्यसन्देहे तस्यानवकाशात् प्राधान्यसन्देहस्य दर्शनं इतरेतरनुभावरूपतया शृङ्गारस्य व्यञ्जने प्रधानभूतचुम्बनाभिलाषव्यञ्जकत्वेन व्यङ्ग्यमिति। एवं चुम्बनाभिलाषः सम्भाव्यमानत्वेन प्रधानभूताखाद्यत्वेन शृङ्गारव्यञ्जकतया प्रधानमित्याकारको बोध्यः। प्राधान्यस्य निश्चयाभावादेव वाच्यादनुत्तमत्वं व्यङ्ग्यस्य। तुल्यप्राधान्यव्यङ्ग्यमाह ब्राह्मणेति। दिग्विजये भार्गवजिगीषुं दशग्रीवं प्रति मन्त्रिण उक्तिरियं। अतिक्रमः पराभवः। भवतामेव भूतये न तु स्वार्थं ब्रवीमि। मित्रञ्चेति चकारस्यान्वयः। उभयोरेकशिष्यत्वेन सतीर्थ्यतया मित्रत्वं तस्यातिक्रमो न केवलं ब्राह्मणातिक्रमः मित्रातिक्रमश्च। अन्यथा अतिक्रमे दुर्म्मनायत इति भविष्यत्सामीप्ये लट्। तस्यातिक्रमप्रवृत्तावतिक्रमो न सेत्स्यति तस्य दौर्म्मनस्यमेव भविष्यति। यथा कार्त्तवीर्य्येण तद्दौर्म्मनस्यमाचर्य्य क्षत्रियकुलं नाशितं तथा भवतापि रक्षःकुलं नाशयितव्यमिति भावः। जामदग्न्यदौर्म्मनस्य व्यङ्ग्यो रक्षःकुलक्षयः मित्रब्राह्मणातिक्रमत्यागजन्या विभूतिर्वाच्या ताभ्यां जामदग्न्यातिक्रमो न कर्त्तव्य इत्यर्थनिर्वा-

"सन्धौ सर्वस्वहरणं विग्रहे प्राणनिग्रहः ।
अल्लापदीननृपतौ न सन्धिर्न च विग्रहः" ॥

अत्राल्लापदीनाख्ये नृपतौ दानसामादिमन्तरेण नान्यः प्रशमोपायः व्यङ्ग्यं व्युत्पन्नानामपि झटित्यस्फुटम् ।

"अनेन लोकगुरुणा सतां धर्म्मोपदेशिना ।
अहं व्रतवती स्वैरमुक्तेन किमतः परम्" ॥

अत्र प्रतीयमानोऽपि शाक्यमुनेस्तिर्य्यक्योषिति बलात्कारोपभोगः स्फुटतया वाच्यायमान इत्यगूढम् । (च)

---

स्वरूपमतिर्व्यज्यते इत्युभयोः समं प्राधान्यम् । अतएव वाच्याद्नुत्तमत्वमस्य । केचित्तु वाच्यस्य मित्रब्राह्मणदौर्मनस्यस्य समं प्राधान्यमिति त्रासरूपव्यभिचारिभावव्यञ्जने द्वयोः साम्यात् शापपापोत्पादकत्वेन हि वाच्यात् त्रासः व्यङ्ग्यात्तु साक्षादित्याहुः । तन्न दुर्वृत्तस्य पापसम्भावनाया त्रासासम्भवात् ब्राह्मणदौर्मनस्यजन्यशापसम्भावनया त्राससम्भवेऽपि वाच्यस्य व्यङ्ग्यापेक्षया व्यवहितत्वात्तुल्यप्राधान्यासम्भवाच्च ।

(च) अस्फुटं व्यङ्ग्यमाह सन्धाविति । विग्रहे युद्धे अन्यः सन्धिर्विग्रहो वा अत्र दानादिकमेवोचितमित्यर्थनिर्द्धारणरूपमतेर्व्यभिचारिभावस्य सन्धिविग्रहानिष्टसाधनत्वरूपवाच्यं व्यङ्ग्यनिरपेक्षमेव व्यङ्ग्यं वाच्यसन्धिविग्रहाभावसापेक्षमिति वाच्याद्नुत्तमत्वस्य । अगूढव्यङ्ग्यमाह अनेनेति । शाक्यमुनेस्तिर्य्यग्योषिद्बलात्कारोपभोगमसहमानायास्तत्पत्न्या उक्तिरियम् । व्रतं गृहस्थधर्मानुष्ठानं तद्वती । उक्तेनेति अतःपरं न वक्तव्यमित्यर्थः । लोकगुरोः सद्धर्मोपदेशकस्यास्य दुष्कर्माचरणमनुचितमेव मम तु व्रताचरणसहायस्य तादृशस्य कत्थनमपि नोचितमिति भावः । आक्षेपालङ्कारमहिम्ना व्यङ्ग्यरूपो विशेषो झटित्येव प्रतीयत इति वाच्यायमानत्वस्य व्यङ्ग्यनिरपेक्ष एव वाच्यः आक्षेपालङ्कार ईर्ष्यासञ्चारिभावज्ञापकः प्रतिनायिकायास्तिर्य्यक्त्वेन व्यङ्ग्यस्य तदुपभोगस्य न ईर्ष्योत्कर्षाधायकत्वमिति व्यङ्ग्याद्नुत्तमत्वमस्य ।

"वाणीरकुडुङ्गुड्डीणसउणिकोलाहलं सुणन्तीए ।
घरकम्मवावडवाए बहुए सीअन्ति अङ्गाइं" ॥

अत्र दत्तसङ्केतः कश्चिल्लतागृहं प्रविष्ट इति व्यङ्ग्यात् "सीदन्त्यङ्गानि" इति वाच्यस्य चमत्कारः सहृदयसंवेद्य इत्यसुन्दरम् । किञ्च यो दीपकतुल्ययोगितादिषु उपमाद्यलङ्कारो व्यङ्ग्यः स गुणीभूतव्यङ्ग्य एव । काव्यस्य दीपकादिमुखेनैव चमत्कारविधायित्वात् ।

---

(ख) असुन्दरं व्यङ्ग्यमाह वाणीरेति । "वाणीरकुञ्जोड्डीनशकुनिकोलाहलं शृण्वन्त्याः । गृहकर्मव्यापृताया वध्वाः सीदन्त्यङ्गानीति सम्" । चण्डीदासस्तु कुडुङ्गो लतागृहं वारता व्याकुलेति व्याचकार । सीदन्ति गृहकर्माक्षमाणि भवन्तीति लक्षणात इतिशेषः । गृहकर्मव्यापृताया इति तु तात्पर्यग्राहकम् । व्यङ्ग्यादिति व्यङ्ग्यमपेक्ष्येत्यर्थः । वाच्यादेवाङ्गावसादात् हर्षावेगसम्बलितानुरागोद्रेककृतमदनपरवशताप्रतीतिः । व्यङ्ग्यन्तु तटस्थप्रायं एतच्च स्वविषये वाच्यस्याङ्गादिसर्वापवादरूपं द्रष्टव्यम् । तेषु व्यङ्ग्यस्यापि चारुत्वसम्भवादिति चण्डीदासः । तटस्थत्वञ्च व्यवहितोपकारत्वेन उदासीनवदाभासमानत्वं तथाहि शकुनिकोलाहलश्रवणेनोपनायकस्य लतागृहप्रवेशानुमानं ततो हर्षावेगौ ताभ्यामनुरागोद्रेकः ततो मदनपरवशताप्रतीतिः । एवञ्च व्यङ्ग्यस्य चमत्काराप्रत्यासन्नत्वमेवासुन्दरत्वमिति फलितम् । केचित्तु रसादिबोधजनने वाच्यस्यापेक्षत्वमेवासुन्दरत्वमिति । व्यङ्ग्यादिति इत्यादिव्यङ्ग्यादित्यर्थः । तथा च वध्वाश्च न तत्र गतेर्यत्तत्पर्यन्तादित्यर्थः । वध्वा अगमनमेव न केवलं तदीयविप्रलम्भव्यञ्जकम् । किन्तु शकुनिकोलाहलश्रवणेन सीदन्त्या वध्वा अगमनमिति वाच्याङ्गावसादसहकारेणैव रसव्यञ्जनाया वाच्यसुखनिरोधकत्वात् तदपेक्षया न्यूनचमत्कारीति वदन्ति । तन्न अङ्गावसादव्य-

तदुक्तं ध्वनिकृता।

"अलङ्कारान्तरस्यापि प्रतीतौ यत्र भासते।
तत्परत्वं न काव्यस्य नासौ मार्गो ध्वनेर्मतः" ॥

यत्र च शब्दान्तरादिना गोपनकृतचारुत्वस्य विपर्य्यासः। (ज)

यथा।

"दृष्ट्या केशव ! गोपरागहृतया किञ्चिन्न दृष्टं मया
तेनात्र स्खलितास्मि नाथ ! पतितां किं नाम नालम्बसे।

---

ङ्गर्यविषादसहकृतस्यैव वध्वगमनस्य विप्रलम्भव्यञ्जनसम्भवेन वाच्याङ्गाव-साद्दुःखनिरीक्षणायोगात् तदानीन्तनगमनाभावसत्त्वेऽपि गमनसम्भाव-नया विप्रलम्भासम्भवात्। न च गृहकर्मव्याप्टतायाः इत्यनेन गमना-भावनिश्चयेन गमनसम्भावनैव नास्तीति वाच्यम्। गृहकर्मान्तःपाति-जलाहरणादिच्छलेनापि तत्सम्भवात्। एतेनोपनायकविषयत्वेन विप्र-लम्भाभासस्यैव वक्तुमुचितत्वाच्च। विषयविशेषे केषाञ्चित् ध्वनिभ्रमं निरस्य गुणीभूतव्यङ्ग्यं व्यवस्थापयति किञ्चेति। दीपकादिमुखेनैवेत्येव-कारेण व्यङ्ग्योपमादिव्यवच्छेदः। अलङ्कारान्तरस्येति अलङ्कारान्तरस्य प्रतीतावपि यत्र वाक्यस्य तत्परत्वं व्यङ्ग्यालङ्कारान्तरतात्पर्य्यं काव्यं न भासते असौ न ध्वनेर्मार्गः विषय इत्यर्थः। वाच्यस्य दीपकादेरेव वैचित्र्यावहत्वं व्यङ्ग्यस्तूपमादिकमजागलस्तनायमेवेति भावः। चारुत्वस्य चमत्कारस्य विपर्य्यास इति योऽपि गुणीभूतव्यङ्ग्य इति पूर्वेणान्वयः।

(ज) दृष्टेति। हे केशव ! हे नाथ ! गोपरागैर्गोधूलिभिर्हृतया आकुलया दृष्ट्या चक्षुषा मया किञ्चिन्मार्गादिकं न दृष्टं तेन हेतुना अत्र तवाग्रत एव स्खलितास्मि पतिता भवामि पतितां मां किं कथं नालम्बसे न धारयसि। धारणे हेतुमाह एकस्त्वमिति विषमेषु वातवर्षा-दिसङ्कटेषु खिन्नमनसां दुःखितचेतसां सर्वासामबलानां स्त्रीणां गतिराश्रयः।

एकस्त्वं विषमेषु खिन्नमनसां सर्वाबलानां गति-
र्गोप्यैवं गदितः सलेशमवताद्गोष्ठे हरिर्वश्चिरम्" ॥

अत्र गोपरागादिशब्दानां गोपे राग इत्यादिव्यङ्ग्यार्थानां "सलेशमिति" पदेन स्फुटतयावभासः। सलेशमितिपदस्य परित्यागे ध्वनिरेव। किञ्च यत्र वस्त्वलङ्काररसादिरूपव्यङ्ग्यानां रसाभ्यन्तरे गुणीभावः तत्र प्रधानकृत एव काव्यव्यवहारः। (ज)

तदुक्तं तेनैव।

"प्रकारोऽयं गुणीभूतव्यङ्ग्योऽपि ध्वनिरूपताम्।
धत्ते रसादितात्पर्यालोचनया पुनरिति" ॥

---

गतौ रक्षकः सलेशं सश्लेषम्। श्लिष्टार्थौ यथा गोपे निजस्वामिनि यो रागस्तेन हृतया लुप्तया दृष्ट्या ज्ञानेन किञ्चित् तत्र रहस्यं मया न दृष्टं नानुभूतं तेन हेतुना अत्र घासु गोपीषु मध्येऽहमेव स्खलिता परमसुखात् भ्रष्टा पतितां प्रणतां मां किं नावलम्बसे नानुगृह्णासि। ननु परस्त्रियां ममानुग्रहो नोचित एव इत्यत आह एकस्त्वमिति विषमेषुः कामः तेन खिन्नमनसां व्याकुलचेतसां सर्वासामबलानां गोपवधूनां गतिः स्मरवैक्लव्यनाशकः। "परागः कौसुमे रेणौ स्नानीयादौ रजस्यपीत्यमरः"। स्फुटतया अवभास इति तथा च कामिनीकुचकलसवद्गूढं चमत्करोति अमूढन्तु स्फुटतया वाच्यायमानमिति गुणीभूतव्यङ्ग्यमेवेति भावः।

इदानीं गुणीभूतव्यङ्ग्यप्रकारेष्वपि यत्र विश्रामधामतया रसादिकं प्रधानमस्ति तत्र तेनैव काव्यव्यपदेशः इत्याह किञ्चेति। प्रधानेन हि व्यपदेशा भवन्तीति न्यायादिति भावः।

(झ) तेनैव ध्वनिकृतैव। रसादीति। रसादौ यत् तात्पर्यं तस्य पर्यालोचनया अनुसन्धानेन। नन्वेवं यत्र रसादीनामप्यतत्त्व

यत्र तु ।

"यत्रोन्मदानां प्रमदाजनानामभ्रंलिहः शोणमणीमयूखैः ।
सन्ध्याभ्रमं प्राप्नुवतामकाण्डेऽप्यनङ्गनेपथ्यविधिं विधत्ते" ॥

इत्यादौ रसादीनां नगरीवृत्तादिवस्तुमात्रेऽङ्गत्वं तत्र तेषामतात्पर्य्यविषयत्वेऽपि तैरेव गुणीभूतैः काव्यव्यवहारः। तदुक्तमस्मत्सगोत्रकविपण्डितमुख्यश्रीचण्डीदासपादैः। "काव्यार्थस्याखण्डबुद्धिवेद्यस्य तन्मयीभावेनास्वाददशायां गुणप्रधानभावावभासस्तावन्नानुभूयते कालान्तरे तु प्रकरणादिपर्य्यालोचनया भवन्नप्यसौ न काव्यव्यपदेशं व्याहन्तुमीशस्तस्यास्वादमात्रायत्तत्वादिति"। (क)

---

तात्पर्य्यविषयत्वेन प्रधानत्वं तत्रैव काव्यव्यवहार इति फलितं । एवञ्च ध्वनित्वासङ्कीर्णं गुणीभूतव्यङ्ग्यत्वं क्वापि नास्तीति कुतस्तस्य काव्यविभाजकत्वमत आह यत्र त्विति । तेषां रसादीनां यत्र नगर्य्यां शोनमणी पद्मरागः अनङ्गनेपथ्यविधिं सुरतोपयुक्तवेशरचनां विधत्ते सम्पादयति । तेषां रसादीनामतात्पर्य्यविषयत्वेऽपि तात्पर्य्यविषयत्वेनाप्रधानत्वेऽपि तैरेव रसादिभिरेव काव्यव्यवहार इति । तथा च यत्रोभयसङ्करस्तत्र व्यवहारसन्देहे तथा निरूपितं यत्र तूभयसङ्करो नास्ति तत्र रसादीनामन्यतमस्य सम्बन्धमात्रेणैव काव्यव्यवहारो न तु प्रधानत्वेऽपीति भावः । वाक्यार्थस्य पदार्थसमूहस्य अखण्डबुद्धि वेद्यतया एकबुद्धिग्राह्यतया । नन्वनेकपदार्थानां कथमेकबुद्धिग्राह्यत्वनियम इत्यत आह तन्मयीभावेनेति अखण्डबुद्धिस्वरूपीभावेन कालान्तरे आस्वादविनाशदशायाम् । असौ गुणप्रधानभावावभासः । तस्य काव्यव्यपदेशस्य । तथा चोक्तस्थले वाक्यस्य रसादितात्पर्य्यकत्वाभावेऽपि प्रासङ्गिकरसादिव्यञ्जकत्वेनापि काव्यत्वमक्षतमेवेति भावः ।

केचित् चित्राख्यं तृतीयं काव्यभेदमिच्छन्ति तदाहुः।

"शब्दचित्रं वाच्यचित्रमव्यङ्ग्यं त्ववरं स्मृतम्"।

इति तन्न। यदि हि अव्यङ्ग्यत्वेन व्यङ्ग्याभावस्तदा तस्य काव्यत्वमपि नास्तीति प्रागेवोक्तम्। ईषद्व्यङ्ग्यत्वमिति चेत्। किं नाम ईषद्व्यङ्ग्यत्वम्। आस्वाद्यव्यङ्ग्यत्वम् अनास्वाद्यव्यङ्ग्यत्वं वा। आद्ये प्राचीनभेदयोरन्तःपातः। द्वितीयेत्वकाव्यत्वम्। यदि चास्वाद्यत्वं तदा क्षुद्रत्वमेव। क्षुद्रतायामनास्वाद्यत्वात्।

तदुक्तं ध्वनिकृता।

"प्रधानगुणभावाभ्यां व्यङ्ग्यस्यैवं व्यवस्थिते।

उभे काव्ये ततोऽन्यद्यत्तच्चित्रमभिधीयत इति"॥ (ञ)

इति साहित्यदर्पणे ध्वनिगुणीभूतव्यङ्ग्याख्यकाव्यभेदनिरूपणो नाम चतुर्थः परिच्छेदः।

---

(ञ) काव्यप्रकाशादिकारमतं दूषयति केचिदिति व्यङ्ग्याभाव इति विवक्षित इति शेषः। ईषद्व्यङ्ग्यत्वमिति विवक्षितमित्यनुषज्यते। प्राचीनभेदयोः प्राचीनोक्तध्वनिगुणीभूतव्यङ्ग्ययोः। आद्ये क्षदुपपत्त्यन्तरमाह यदि चेति तदा क्षुद्रत्वमेवेत्यकारप्रश्लेषः। तथा च व्यङ्ग्यस्य आस्वाद्यत्वे क्षुद्रत्वायोगात् अनास्वाद्यत्वे काव्यत्वायोगाच्च ईषद्- व्यङ्ग्यमिति वाक्यार्थमपार्थकमेवेति भावः। वैचित्र्यस्य काव्यप्रकारत्वाभावे प्राचीनसंवादमप्याह तदुक्तमिति। ततस्ताभ्यां चित्रं काव्याभासमात्रं न तु वास्तवं काव्यम्।

इति साहित्यदर्पणविवृतौ चतुर्थः परिच्छेदः।

# पञ्चमः परिच्छेदः।

अथ केयमभिनवा व्यञ्जना नाम वृत्तिरित्युच्यते।

**वृत्तीनां विश्रान्तेरभिधातात्पर्य्यलक्षणाख्यानाम्।**
**अङ्गी कार्य्यां तुर्य्यां वृत्तिर्बोधे रसादीनाम्॥**

अभिधायाः सङ्केतितार्थमात्रबोधनविरताया न वस्त्वलङ्काररसादिव्यङ्ग्यबोधने क्षमत्वं न च सङ्केतितो रसादिः। (क)

---

(क) ननु व्यङ्ग्यं तावत् काव्यव्यपदेशबीजं तच्च व्यञ्जनया बोध्यं वस्तु तस्या अप्रामाणिकत्वे सर्वमेतदसिद्धमिति तत्र प्रमाणमुपन्यस्यन्नवतारयति। अथ केयमिति। इयं व्यङ्ग्यबोधसाधनी अभिनवा नवीनैरभ्युपगम्यमाना। प्रमाणोपन्यासाय प्रथमं तस्याः स्वरूपं निरूपयति वृत्तीनामिति। यद्यपि निवृत्तास्वित्यादिना व्यञ्जनायाः स्वरूपं निरूपितमेव व्यञ्जनध्वननावगमनप्रत्यायनादिव्यपदेशविषयेत्यनेन तत्र प्रमाणञ्चोपन्यस्तं तथापि दृढप्रतिपत्तये प्रमाणान्तरोपन्यासार्थं पुनरारम्भः। विश्रान्तेः स्वार्थबोधनेन विरमात्। वृत्तिः शब्दार्थयोरन्यतरस्य व्यापारः। बोधे बोधनिमित्तम्। रसादीनामिति वस्त्वलङ्कारयोरप्युपलक्षणम्। नन्वभिधयैव रसादिबोधो जायतामित्यत आह अभिधाया इति। मात्रपदेन वस्त्वादिव्यवच्छेदः। विरतायाः पुनरुत्थानाभावादिति भावः सोऽयमुक्तो हेतुरत्र द्रष्टव्यः। हेत्वन्तरमप्याह न चेति स्वव्यञ्जकपदसङ्केताभाववानित्यर्थः। तेन रसादीनां रसादिपदसङ्केतितत्वेऽपि न क्षतिः।

न हि विभावाद्यभिधानमेव तदभिधानम्। तस्य तदैकरूप्यानङ्गीकारात्। यत्र च स्वशब्देनाभिधानं तत्र प्रत्युत-दोष एवेति वक्ष्यामः। क्वचिच्च "शृङ्गाररसोऽयम्" इत्यादौ स्वशब्दाभिधानेऽपि न तत्प्रतीतिः। तस्य स्वप्रकाशानन्दरूपत्वात्। अभिहितान्वयवादिभिरङ्गीकृता तात्पर्य्याख्या वृत्तिरपि संसर्गमात्रे परिक्षीणा न व्यङ्ग्यबोधिनी॥ यच्च केचिदाहुः। (ख)

"सोऽयमिषोरिव दीर्घदीर्घतरोऽभिधाव्यापारः" इति॥ यच्च ध्वनिकेनोक्तम्।

---

(ख) न हीति तदभिधानं रसाद्यभिधानं विभावादेरेव रसरूपत्वाङ्गीकारादिति भावः। तस्य विभावाद्यभिधानस्य तदैकरूप्यानङ्गीकारात् आस्वादरूपरसादिप्रतीतितादात्म्यास्वीकारात्। तथा च विभावाद्यभिधानानन्तरं जायमानाया आस्वादरूपरसादिप्रतीतेः कारणतया व्यञ्जना अवश्यं स्वीकार्य्येति भावः। तादृशप्रतीतेः रसादिपदाजन्यत्वमपि प्रतिपादयति यत्र चेति तामुद्वीक्ष्य कुरङ्गाक्षीं रसो न कोऽप्यजायत इत्यादावित्यर्थः। स्वशब्देन रसशृङ्गारादिपदेन अभिधानं रसस्य प्रतिपादनम्। दोष एवेत्येवकारेणास्वादरूपरसप्रतीतिव्यवच्छेदः। ननु रसस्य स्वशब्दाभिधानं काव्य एव दोषो न तु लौकिकवाक्ये एवञ्च काव्ये दोषवशात् तादृशप्रतीतिर्मास्तु लौकिकवाक्ये तु स्यादेवेत्यत आह क्वचिच्चेति लौकिकवाक्ये चेत्यर्थः। तत्प्रतीतिः रसप्रतीतिः। तस्य रसस्य तथा चाभिधया जायमानस्य बोधस्य स्वप्रकाशत्वाभावादानन्दरूपत्वाभावाच्च न रसस्वरूपत्वस्वीकार इति भावः। कारिकोक्तक्रमेण तात्पर्य्याख्यवृत्तेरपि व्यङ्ग्यबोधनाक्षमत्वमुपपादयति अभिहितेति। एतच्च वक्तृतात्पर्य्यविशेषरूपाया व्यञ्जनाया मा(?)ख्याय। संसर्गमात्रेऽन्वयबोधमात्रे परिक्षीणा विरता।

"तात्पर्य्याव्यतिरेकाच्च व्यञ्जकत्वस्य न ध्वनिः ।
यावत्कार्य्यप्रसारित्वात् तात्पर्य्यं न तुलाधृतमिति" ॥

तयोरुपरि शब्दबुद्धिकर्म्मणां विरम्य व्यापाराभाववादिभिरेव पातनीयो दण्डः । एवञ्च किमिति लक्षणाप्युपास्या । दीर्घदीर्घतराभिधाव्यापारेणापि तदर्थबोधसिद्धेः ॥ किमिति च "ब्राह्मण ! पुत्रस्ते जातः कन्या ते गर्भिणीत्यादौ" अपि हर्षशोकादीनामपि न वाच्यत्वम् । (ग)

यत्पुनरुक्तं "पौरुषेयमपौरुषेयञ्च वाक्यं सर्व्वमेव कार्य्य-

---

(ग) शब्दश्रुतेरनन्तरं यावानर्थः प्रतीयते तत्र शब्दस्याभिधैव व्यापार इतिमतं दूषयितुमुत्थापयति सोऽयमिति । इषोरिवेति अतिदीर्घइषुव्यापारो यथैकलक्ष्यं भित्त्वा लक्ष्यान्तरमपि भिनत्ति तथा एकैवाभिधा वाच्यार्थं बोधयित्वा व्यङ्ग्यार्थमपि बोधयतीति भावः । तात्पर्य्येति तात्पर्य्यभेदाभावात् शब्दादेर्व्यञ्जकत्वस्य व्यञ्जनसामर्थ्यस्य न ध्वनिर्नाम न व्यञ्जना नाम एवञ्च तात्पर्य्यमेव व्यङ्ग्यबोधकं नन्विदं संसर्गमात्रबोधकं कथं व्यङ्ग्यं बोधयत्वित्याह यावदिति । तात्पर्य्यं हि संसर्गव्यङ्ग्ययोर्बोधकत्वात् न तुलाधृतं न संसर्गमात्रबोधकत्वेन नियन्त्रितमित्यर्थः । नन्वयं न्यायोऽप्रामाणिक एवेत्यत आह एवञ्चेति अभिधयैव व्यङ्ग्यबोधस्वीकारे चेत्यर्थः । एतदर्थेति लक्ष्यार्थेत्यर्थः । लक्षणाजन्यबोधानन्तरमपि व्यङ्ग्यबोधायाभिधासत्त्वस्वीकारे लक्षणासत्त्वस्वीकारस्याकिञ्चित्करत्वादिति भावः । लक्षणाया अस्वीकारे इष्टापत्तेर्दोषान्तरमाह किमितिचेति न वाच्यत्वमित्यन्वयः । कन्या अदत्तपुत्री प्रतिपाद्यस्य मुखप्रसादाप्रसादादिभिरनुमितानामपि हर्षशोकादीनां शब्दानन्तरप्रतीतत्वेन वाच्यत्वापत्तिरिति भावः ।

(घ) रसादीनां तात्पर्य्यग्राह्यत्वमनुमानेन साधयतां मतमाह यत्पुनरिति । पौरुषेयं पुरुषनिष्पन्नं लौकिकं मन्वादिशास्त्ररूपञ्च अपौरुषेयं

परम् अतत्परत्वेऽनुपादेयत्वादुन्मत्तवाक्यवत् ततश्च काव्यशब्दानां निरतिशयसुखास्वादव्यतिरेकेण प्रतिपाद्यप्रतिपादकयोः प्रवृत्त्यौपयिकप्रयोजनान्तरानुपलब्धे र्निरतिशयसुखास्वाद एव कार्य्यत्वेनावधार्य्यते यत्परः शब्दः स शब्दार्थं इति न्यायादिति"। तत्र प्रष्टव्यम्। किमिदं तत्परत्वं नाम। तदर्थत्वं वा तात्पर्य्यवृत्त्या तद्‌बोधकत्वं वा। आद्ये न विवादः व्यङ्ग्यत्वेऽपि तदर्थतानपायात्। (घ)

द्वितीये तु केयं तात्पर्य्याख्या वृत्तिः। अभिहितान्वयवादिभिरङ्गीकृता वा तदन्या वा। आद्ये दत्तमेवो-

---

वेदस्वरूपं सर्वमेवेति व्यापकतामपहाय यत्‌यदुपादेयं वाक्यं तत्‌कार्य्यतत्‌परं यथा घटमानयेति लौकिकं वाक्यम् जलाहरणरूपकार्य्यं तत्‌परं यथा वा विश्वजिता यजेतेति वैदिकं वाक्यं स्वर्गरूपकार्य्यं तत्‌परमित्यन्वयव्याप्तिरत्रावधेया व्यतिरेकव्याप्तिं दर्शयति अतत्‌परत्व इति यद्‌यत् न कार्य्यं तत्‌परं तदनुपादेयं वाक्यं यथोन्मत्तादिवाक्यमिति। अनुमितिं दर्शयति ततश्चेति प्रतिपाद्यस्य श्रोतुः काव्यश्रवणे प्रवृत्तिः प्रतिपादकस्य वक्तुः काव्यपाठे प्रवृत्तिः तयोरौपयिकं कारणीभूतफलेच्छाविषयो यत् प्रयोजनान्तरं चतुर्वर्गादि तस्यानुपलब्धेः शब्दे नानुपस्थानात् अवधार्य्यते तात्पर्य्येण प्रतिपद्यते। ननु कार्य्यान्तरवत् रसादिरपि न प्रतीयेतेत्यत आह यत्‌पर इति यद्‌बोधेच्छया उच्चरित इत्यर्थः। शब्दार्थः शब्दप्रतिपाद्यः एतेन इतरबाधबलात् तात्पर्य्येण रसादिप्रतिपादकत्वसिद्धिर्दर्शिता एवं च काव्यं कार्य्यं तत्‌परं उपादेयवाक्यत्वात् इत्यनुमानमवगन्तव्यम्। अत्र काव्यत्वविच्छेदेन साध्यसिद्धिरभिमता तेन काव्यत्वसामानाधिकरण्येन कार्य्यान्तरप्रतिपादकत्वसिद्धौ न सिद्धसाधनं एतन्मतं दूषयति तत्रेति। व्यङ्ग्यत्वेऽपीति व्यञ्जनावादिमते सिद्धसाधनमिति भावः।

(ङ) द्वितीये त्विति अन्वाभिधया कार्य्यं कुरु इत्यादिवाक्ये जला-

न्तरम् । द्वितीये तु नाममात्रे विवादः । तन्मतेऽपि तुरीयवृत्तिसिद्धेः नन्वस्तु युगपदेव तात्पर्य्यशक्त्या विभावादिसंसर्गस्य रसादेश्च प्रकाशनमिति चेन्न । तयोर्हेतुफलभावाङ्गीकारात् यदाह मुनिः । "विभावानुभावव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति" । सहभावे च कुतः सव्येतरविषाणयोरिव कार्य्यकारणभावः । पौर्व्वापर्य्यविपर्य्ययात् । "गङ्गायां घोष इत्यादौ" तटाद्यर्थमात्रबोधनविरतायाः लक्षणायाश्च कुतः शीतत्वपावनत्वादिव्यङ्ग्यबोधकता । तेन तुरिया वृत्तिरुपास्यैवेति निर्व्विवादमेतत् । किञ्च ।

**बोद्धृस्वरूपसङ्ख्यानिमित्तकार्य्यप्रतीतिकालानाम् ।**
**आश्रयविषयादीनां भेदाद्भिन्नोऽभिधीयते व्यङ्ग्यः ॥**

वाच्यार्थव्यङ्ग्यार्थयोर्हि पदतदर्थमात्रज्ञाननिपुणैर्व्वैयाकरणैरपि सहृदयैरेव स संवेद्यतया बोद्धृभेदः । "भ्रम

---

हरणार्थं पठमानाय इत्यादौ च कार्य्यप्रतिपादके व्यभिचारोऽपि दोषो द्रष्टव्यः । इत्तमेवेति संसर्गबोधे परिक्षीणत्वात् कार्य्यबोधनाक्षमत्वं तात्पर्य्यस्येत्युत्तरं तन्मतेऽपि रसादीनां तात्पर्य्यग्राह्यत्ववादिमतेऽपि ननु विभावादिसंसर्गबोधरसादिबोधयोः क्रमीकत्वाङ्गीकार एव दूषणमुक्तं यौगपद्याङ्गीकारे तु नास्यावसर इत्यभिप्रायेणाह नन्वस्त्विति । तयोर्विभावादिसंसर्गबोधरसादिबोधयोः संयोगात् संसर्गबोधात् । ननु सहोत्पन्नयोरपि तयोः कार्य्यकारणभाव आस्तामित्यत आह सहभावे चेति युगपदुत्पत्तिस्वीकारे चेत्यर्थः । सव्येतरविषाणयोर्वामदक्षिणशृङ्गयोः । इदानीं लक्षणाया व्यङ्ग्यबोधाक्षमत्वं दर्शयति गङ्गायामिति । तेन अभिधादीनां व्यङ्ग्यबोधाक्षमत्वेन वाच्यव्यङ्ग्ययो-

"धर्म्मिक इत्यादौ" क्वचिद्वाच्ये विधिरूपे निषेधरूपतया। क्वचित् "निःशेषच्युतचन्दनमित्यादौ" निषेधरूपे विधिरूपतया च स्वरूपभेदः। (ङ)

"गतोऽस्तमर्क इत्यादौ" च वाच्योऽर्थ एक एव प्रतीयते। व्यङ्ग्यस्तु तद्बोद्धृवक्त्रादिभेदात्। क्वचित् कान्तमभिसरेति"। "गावो निरुध्यन्तामिति" नायकस्यायमागमनावसर इति सन्तापोऽधुना नास्तीत्यादिरूपेणानेक इति संख्याभेदः वाच्यार्थः शब्दोच्चारणमात्रेण वेद्यः। एष तु तथाविधप्रतिभा नैर्मल्यादिनेति निमित्तभेदः। प्रतीतिमात्रचमत्कारकरणाच्च कार्य्यभेदः। केवलरूपतया चमत्-

---

भेदमुपपाद्य तेनैवाभिधातो व्यञ्जनाया भेदमुपपादयति किञ्चेति। आश्रयविषयादीनां इत्यनन्तरं चकारो द्रष्टव्यः। बोद्धृभेदमुपपादयति वाच्यार्थेति। पदेति तदर्थेति पदाभिधेयेत्यर्थः। मात्रपदेन व्यञ्जनाव्यवच्छेदः वैयाकरणैरपीत्यपिना सहृदयपरिग्रहः सहृदयैरेवेत्येवकारेण वैयाकरणव्यवच्छेदः। स्वरूपभेदमुपपादयति भम धार्म्मिक इत्यादि विधिरूपे वाच्ये सतीत्यन्वयः। निषेधरूपतयेति व्यङ्ग्यस्येत्यादिः निषेधरूपतयेति वाच्ये इत्यन्वयः। स्वरूपभेद इति वाच्यार्थव्यङ्ग्यार्थयोरिति पूर्वेणान्वयः। एवमग्रेऽपि निःशेषेति कल लक्षणावादिमते भेदमुदाहरणमुक्तम्।

(ङ) संख्याभेदमुपपादयति गतोऽस्तमिति। बोद्धा प्रतिपाद्यः वक्त्रादिना प्रकरणादीनां ग्रहणम्। भेदाद्वैलक्षण्यात्। निमित्तभेदमुपपादयति वाच्यार्थ इति। मात्रपदेन प्रतिभा नैर्मल्यादिव्यवच्छेदः। शब्दोच्चारणं शब्दज्ञानं वाच्यार्थबोधे तस्यैव निमित्तत्वात्। एष तु व्यङ्ग्यार्थस्तु। प्रतीभेति गूढार्थग्रहणशक्तिस्य प्रतिभा तस्या नैर्मल्यं तादृशग्रहणप्रतिबन्धकीभूतदुरदृष्टासंसर्गः। आदिना वक्त्रादिवैशिष्ट्यज्ञानादिपरिग्रहः।

कारितया च प्रतीतिभेदः । पूर्व्वपश्चाद्भावेन च काल-भेदः । शब्दाश्रयत्वेन शब्दतदेकदेशतदर्थवर्णसङ्घटनाश्रय-त्वेन चाश्रयभेदः ॥ (च)

"कस्स ण बहोइ रोसो दट्ठुण पिआइ सव्वणं अहरं ।
सभमरपउमग्घाइणिवारिअवामे सहस्सएण्हिं" ॥

इति सखीतत्कान्तविषयत्वेन विषयभेदः तस्मान्नाभि-धेय एव व्यङ्ग्यः तथा ।

---

कार्य्यभेदमुपपादयति प्रतीति । मात्रपदेन चमत्कारव्यवच्छेदः । वाच्यस्य प्रतीतिमात्रकरणात् व्यङ्ग्यस्य तु सुखसम्वलितप्रतीतेश्चमत्कारस्य च कर-णात् तयोः कार्य्यभेदः प्रतीतिभेदमुपपादयति केवलेति । वाच्यप्रतीतेः सुखचमत्कारहीनतया व्यङ्ग्यप्रतीतेस्तदुभयवत्तया भेदः । कालाभेदमुप-पादयति पूर्व्वेति । वाच्यार्थव्यङ्ग्यार्थयोः प्रतीतिपौर्वापर्य्येण कालभेदः । आश्रयभेदमुपपादयति शब्देति । वाच्यस्य शब्दमात्राश्रयत्वेन शब्दमा-त्रसम्बन्धित्वेन व्यङ्ग्यस्य शब्दादिसम्बन्धित्वेन तयोराश्रयभेदः । तदेक-देशेति शब्दैकदेशेत्यर्थः । स च प्रकृतिप्रत्ययोपसर्गादिरूपः । तदर्थेति शब्दार्थेत्यर्थः ।

(च) विषयभेदमुपपादयति कस्स ण वेति । "कस्य न वा भवति रोषः पश्यतः प्रियायाः सव्रणमधरम् । सभ्रमरपद्माघ्रातिनिवारितवामे सहस्वेदानीमिति" सम् । उपनायकदष्टाधरां पत्नीं तर्जयन्तं कान्तं प्रतारयन्त्याः सख्या उक्तिरियं । सभमरेति सभ्रमरपद्माघ्राणे निवा-रितापि तत्कारिणी तत्सम्बोधने । तथा सहस्व पत्युस्तर्जनां भ्रमर-दंशनजन्यव्रणवेदनाञ्च । अत्र वाच्यार्थबोधे सखी उद्देश्या भ्रमरेणास्या अधरो दष्टो न पुनः पुरुषान्तरेणेति व्यङ्ग्यार्थबोधे कान्त उद्देश्य इति विषयभेदः । सख्या कान्तेन चोभयबोधः सम्भवतीति न बोद्धभेदः ।

**प्रागसत्त्वाद्रसादेर्नो बोधिके लक्षणाभिधे ।**
**किञ्च मुख्यार्थबाधस्य विरहादपि लक्षणा ॥**

न बोधिकेति शेषः । नहि कोऽपि रसनात्मकव्यापाराद्भिन्नो रसादिपदप्रतिपाद्यः पदार्थः प्रमाणसिद्धोऽस्ति यमिमे लक्षणाभिधे बोधयेताम् । किञ्च यत्र "गङ्गायां घोष" इत्यादावुपात्तशब्दार्थानां बुभूषन्नेवान्वयोऽनुपपत्त्या बाध्यते तत्रैव हि लक्षणायाः प्रवेशः । यदुक्तं न्यायकुसुमाञ्जलावुदयनाचार्य्यैः । (छ)

"श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति ।
पदार्थान्वयवैधुर्य्यात्तदाक्षिप्तेन सङ्गतिः" ॥

---

उपसंहरति तस्मादिति नैव व्यङ्ग्य इत्यन्वयः । व्यङ्ग्यान्तरबोधे यथा तथास्तु रसादिबोधस्तु व्यञ्जनावृत्त्यङ्गीकारमन्तरेण सर्वथा न सम्भवतीत्यभिप्रायेणाह प्रागसत्त्वादिति बोधात् पूर्वं प्रमाणान्तरासिद्धत्वादित्यर्थः । प्रमाणान्तरसिद्धमेव वस्तु लक्षणाभिधे बोधयत इति नियमाभिप्रायेणेदम् । रसादिपदस्तु व्यञ्जनासिद्धं रसादिमभिधया बोधयतीति न दोषः । लक्षणया रसादिबोधे सामग्र्यन्तरमाह किञ्चेति । पूर्वार्द्धं विवृणोति न हीति । व्यापारः कार्य्यम् । द्वितीयार्द्धं विवृणोति किञ्चेति । उपात्तशब्दार्थानां वाच्यार्थानां बुभूषन् भवन् अन्वयोऽन्वयबोधः अनुपपत्त्या अन्वयानुपपत्तिप्रतिहेतया बाध्यते प्रतिरुध्यते ।

(छ) श्रुतान्वयादिति वाच्यार्थान्वयबोधजननादित्यर्थः । अन्यदर्थान्तरं इच्छति आकाङ्क्षति । पदार्थान्वयवैधुर्य्यात् मुख्यार्थान्वयानुपपत्तिप्रहात् । तदाक्षिप्तेन मुख्यार्थसम्बन्धितया गृहीतेन सङ्गतिरन्वयबोधः । प्रकृते मुख्यार्थबाधाभावं दर्शयति न पुनरिति व्यङ्ग्यस्य लक्षणाबोध्यत्वाङ्गीकारेऽनवस्थादोषमाह यदि चेति । प्रयोजनं प्रीत

न पुनः "शून्यं वासगृहमित्यादौ" मुख्यार्थबाधः यदि च "गङ्गायां घोष इत्यादौ" प्रयोजनं लक्ष्यं स्यात् तीरस्य मुख्यार्थत्वं बाधितत्वं च स्यात् तस्यापि च लक्ष्यतया प्रयोजनान्तरं तस्यापि प्रयोजनान्तरमित्यनवस्थापातः । (ज)

न चापि प्रयोजनविशिष्ट एव तीरे लक्षणा । विषयप्रयोजनयोर्युगपत्प्रतीत्यनभ्युपगमात् । नीलादिसंवेदनानन्तरमेव हि ज्ञाततायाः अनुव्यवसायस्य वा सम्भवः । (झ)

---

त्वपावनत्वाद्यतिशयः । लक्ष्यं लक्षणाबोध्यं तदेति शेषः । बाधितत्वञ्चेति चकारेण पावनत्वाद्यतिशयेन लक्षणीयेन सम्बन्धस्येत्यपि बोध्यम् । न च तीरे पावनत्वाद्यतिशयस्य सम्बन्धसत्त्वेन कथं तदापत्तिरिति वाच्यम् । तीरे त्वाहार्य्यप्रतीतिविषयस्य प्रवाहवृत्तिपावनत्वाद्यतिशयस्य सम्बन्धाभावात् परस्परासम्बन्धस्याव्यावर्त्तकत्वेन लक्षणाहेतुत्वाभावात् तटादिनिष्ठपावनत्वादेस्तु गङ्गापदेनानुपस्थितेरकिञ्चित्करत्वात् तस्यापि लक्ष्यमाणप्रयोजनस्यापि लक्ष्यतयेति विशेषणे तृतीया लक्ष्यं प्रयोजनान्तरं कल्प्यं स्यादित्यर्थः । एवमग्रेऽपि अनवस्थायाः प्रकृताप्रतिपत्तिकरत्वं दूषकताबीजम् ।

(झ) विशिष्टलक्षणावादिनां मतं दूषयति न चापीति । प्रयोजनेन पावनत्वाद्यतिशयेन विशिष्टे तथाचातिपावने तीरे घोष इति लक्षणाजन्यो बोधस्तस्य च गङ्गातटे घोष इत्यभिधाजन्यबोधादधिकार्थप्रतीतिः फलम् । एवञ्च फलफलिनोरभेद एव पर्य्यवसन्नः । इममेव दोषमाह विषयेति । विषयः कारणीभूतज्ञानविषयः प्रयोजनं फलीभूतज्ञानविषयः । युगपत् प्रतीत्यनुपगमात् इति एतदभ्युपगमे फलफलिनोरभेदापत्तिरिति भावः । फलफलिनोरभेदमेव दर्शयति नीलादीति । संवेदनं प्रत्यक्षं ज्ञातता प्रकटता इति भट्टमते नीलादौ ज्ञाते हि ज्ञातताख्य एको धर्म्म उत्पद्यते । अनुव्यवसाय इति नैयायिकमते नीलादिज्ञाने जाते नीलमहं जानामीति ज्ञानप्रत्यक्षरूपो-

**नानुमानं रसादीनां व्यङ्ग्यानां बोधनक्षमं ।**
**आभासत्वेन हेतूनां स्मृतिर्न च रसादिधीः ॥**

व्यक्तिविवेककारेण हि "यापि विभावादिभ्यो रसादीनां प्रतीतिः सानुमान एवान्तर्भवितुमर्हति । विभावानुभावव्यभिचारिप्रतीतिर्हि रसादिप्रतीतेः साधनमिष्यते । ते हि रत्यादीनां भावानां कारणकार्य्यसहकारिभूतास्ताननुमापयन्त एव रसादीन्निष्पादयन्ति । (ञ)

---

ऽनुष्यवसायो जायते इत्यादौ सर्वत्र फलफलिनोर्भेद एव दृश्यते भवन्मते तयोरभेदापत्तिः । एतदुपलक्षणम् गङ्गापदात् प्रतीयमानस्य पावनत्वादेस्तीरे वैशिष्ट्यासम्भवोऽपि द्रष्टव्यः यदि पुनर्दूरतीरापेक्षया समीपतीरे पावनत्वाद्यतिशयः सम्भवति स एव गङ्गापदेन प्रत्याय्यते इति विभाव्यते तदा नायं दोषः अतएव तीरस्य मुख्यार्थत्वं बाधितत्वञ्च स्यादित्यत्र पन्यकृता पावनत्वाद्यतिशयेन लक्षणीयेन सम्बन्धस्येत्यापत्तिः काव्यप्रकाशकारोक्तापि नोक्ता तयोः सम्बन्धसत्त्वेनापत्त्ययोगात् । नाट्ये रामत्वेनाहार्य्यज्ञानविषये नटे काव्ये तु राम एव प्रथमं विभावादिभी रत्याद्यनुमानं ततस्तदनुमानोद्बोधितया सामाजिकानां वासनारूपप्रत्यासत्त्या साक्षात् कृतो रामादिरत्यादी रस इति ।

(ञ) श्रीशङ्कुकमतानुयायिनां व्यक्तिविवेककारादीनां मतं दूषयति नानुमानमिति । अनुमानं व्याप्तिपक्षधर्म्मताज्ञानं आभासत्वेन व्यभिचारादिदोषग्रस्तत्वेन रसादिबुद्धेः संस्कारजन्यज्ञानत्वेन स्मृतित्वं साधयतां मतं दूषयति स्मृतिरिति अत्रापि प्रागुक्तहेतोरन्वयः तन्मतं दूषयितुं परिष्करोति व्यक्तिविवेककारेण हीति । यदुक्तमित्यध्याहारेणान्वितम् । यापीति अनुमान एव अनुमितावेव एवकारेण पराभिमतव्यञ्जनाजन्यबोधव्यवच्छेदः अत्र कारणमाह विभावानुभावेति । हि शब्दो हेतौ । ननु विभावादिप्रतीतेर्व्याप्तिज्ञानत्वाभावात् कथं तज्जन्यरसादिप्रतीते-

त एव हि प्रतीयमाना आस्वादपदवीङ्गताः सन्तो रसा उच्यन्ते इत्यवश्यंभावी तत्प्रतीतिक्रमः केवलमाशुभावितयासौ न लक्ष्यते यतोऽयमसंलक्ष्यक्रमव्यङ्ग्य इति' यदुक्तं तत्र प्रष्टव्यम् । किं शब्दाभिनयसमर्पितविभावादिप्रत्ययानुमितरामादिगतरागादिज्ञानमेव रसत्वेनाभिमतं भवतः तद्भावनया भावकैर्भाव्यमानः स्वप्रकाशानन्दो वा आद्ये न विवादः । (ट)

---

रनुमितित्वमतो विभावादीनां व्याप्यत्वमुपपादयति ते इति विभावादयो हीत्यर्थः । धूमादिकारणमार्द्रेन्धनादि यथा धूमादिव्याप्यम् । वह्न्यादिकार्यं धूमादि यथा वह्न्यादिव्याप्यं तथा रत्यादेः कारणं विभावः कार्य्यम् अनुभावश्च रत्यादिव्याप्य इति भावः । तान् रत्यादीन् अनुमापयन्त इति स्वविषयकव्याप्तिपक्षधर्मताज्ञानेन बोधयन्त इत्यर्थः ।

(ट) रसादिं प्रति विभावादीनां कारणत्वमुपपादयति त एवेति विभावादय एवेत्यर्थः । आस्वादपदवीं प्रत्यक्षविषयताम् तथा च पयो यथाम्लयोगेन दधित्वं प्राप्नुवत् दध्नः कारणमुच्यते तथा विभावादयोऽप्यनुमीयमानरत्यादियोगेन रसादिरूपतां प्राप्नुवन्तो रसादेः कारणमुच्यन्ते इति भावः । नन्वेतादृशकार्य्यकारणभावस्वीकारे रसादेरसंलक्ष्यक्रमव्यङ्ग्यत्वं कथमुपपन्नमत आह अवश्यम्भावीति तासां विभावादिप्रतीतिव्याप्तिपक्षधर्मताग्रहरसाद्यनुमित्यास्वादरूपाणां प्रतीतीनां क्रमः पौर्वापर्य्यं आशुभावितया शीघ्रोत्पन्नतया असौ क्रमः तथाचासां शतपत्रव्यतिभेदवत् क्रमसत्त्वेऽपि सूक्ष्मकालतया स न लक्ष्यत इति भावः । ननु भवतामिदमधिकं कल्पनमत आह यत इति । अयमीदृशः अद्यापि रसादेर्व्यङ्ग्यत्वस्वीकारेऽपि अभिव्यक्तिर्व्यञ्जनाजन्यबोधः यथा भवतां बोधः । प्रथमं विभावाद्युपस्थितिस्ततो रत्यादिव्यञ्जनं ततः साधारण्याभिमानः ततो रसाद्युत्पत्तिरिति क्रमसत्त्वेऽपि आशुभावितया रसादेरसंलक्ष्य-

किन्तु रामादिगतरागादिज्ञानं रससंज्ञया नोच्यतेऽस्माभिरित्येव विशेषः। द्वितीयस्तु व्याप्तिग्रहणाभावाद्धेतोराभासतयाऽसिद्ध एव। यच्चोक्तं तेनैव। "यत्र यत्रैवंविधानां विभावानुभावसात्त्विकसञ्चारिणामभिधानमभिनयो वा तत्र तत्र शृङ्गारादिरसाविर्भाव इति" सुग्रहैव व्याप्तिः पक्षधर्म्मता च। तथा।

"याऽर्थान्तराभिव्यक्तौ वः सामग्रीष्टा निबन्धनम्।
सैवानुमितिपक्षे नो गमकत्वेन सम्मतेति" ॥ (ठ)

---

क्रमत्वमुपपन्नं तथास्वाक्रमपीति भावः। शब्दाभिनयेति दृश्यश्रव्यरूपकाव्यद्वयाभिप्रायेण समर्पितेति जनितेत्यर्थः। भवतस्तव वङ्गावनया विभावादिबोधेन भावकैः सामाजिकैः भाव्यमान आस्वाद्यमानः स्वेन आत्मना प्रकाशो यस्य सः रसत्वेनाभिमत इति लिङ्गव्यत्ययेनान्वयः आद्ये रागाद्यनुमितिमात्रस्य रसत्वस्वीकारे। न विवाद इति हेतोरदुष्टतया व्याप्तिग्रहसम्भवेनानुमानत्वमक्षतमिति भावः।

(ठ) ननु तर्हि भवतां किञ्चिदसम्मतमत आह किन्त्विति। द्वितीयः स्वप्रकाशानन्दः। हेतोर्विभावादेराभासतया व्यभिचारितया व्याप्तिग्रहाभावादित्यन्वयः। असिद्धो नानुमितिविषयः श्रोत्रियजरन्मीमांसकादीनां विभावादिप्रत्ययसत्त्वेऽपि स्वप्रकाशानन्दानुत्पत्तिदर्शनादयं हेतुर्व्यभिचारीति व्याप्तिग्रहाभावात् तस्यानुमानं न सम्भवतीति भावः। इदानीं विभावनादिव्यापारभागित्वेन हेतुं विशिष्य व्यभिचारिभावं वारयित्वा व्याप्तिग्रहमुपपादयतस्तस्यैव मतं दूषयति यच्चोक्तमिति। एवंविधानां विभावनादिव्यापारभागिनाम् अभिधानं शब्देनोपस्थानम् अभिनयो नटचेष्टादिभिरुपस्थानम्। रसाविर्भावो रसाद्युत्पत्तिः। सुग्रहैवेति विभावनादिव्यापारभागि विभावाद्युपस्थानं रसाद्याविर्भावव्याप्यमिति व्याप्तिग्रहः। श्रोत्रियादीनान्तु विभावादेरेवोपस्थितिर्न तु

इदमपि नो न विरुद्धम् । न ह्येवंविधा प्रतीतिरास्वाद्यत्वेनास्माकमभिमता किन्तु स्वप्रकाशमात्रविश्रान्तः सान्द्रानन्दनिर्भरः । तेनात्र सिषाधयिषितादर्थादर्थान्तरस्य साधनाद्धेतोराभासता । यच्च "भम धम्मिय" इत्यादौ प्रतीयमानं वस्तु । (ड)

"जलकेलितरलकरतलमुक्तः पुनः पिहितराधिकावदनः ।
जगदवतु कोकयूनोर्विघटनसङ्घटनकौतुकी कृष्णः" ॥

---

विभावनादिव्यापारभागिनः तत्र तादृग्व्याप्त्यपरास्वीकारादिति न व्यभिचारः । पक्षधर्मता पक्षसत्त्वं सुग्रहैवेत्यन्वयः । अहं रसाद्याविर्भावव्याप्य तादृग्विभावाद्युपस्थानवानिति सामाजिकानां व्याप्तिविशिष्टपक्षधर्मताग्रह इत्यवधेयम् । अर्थान्तराभिव्यक्तौ वाच्यादित्रयभिन्नार्थस्य व्यञ्जनया बोधे व्यञ्जनावृत्तिं स्वीकुर्वतां युष्माकं सामग्री शाब्दबोधादिरूपः कारणसमूहः निबन्धनं प्रधानम् अनुमितिपक्षे अनुमितिवादिमते तिष्ठतां नोऽस्माकं गमकत्वेन रसाद्यनुमापकत्वेन ।

(ड) दूषयति इदमपीति नो व्यञ्जनावादिनामस्माकम् । न विरुद्धमिति अस्माभिरपि तादृशानुमानं स्वीक्रियते इति भावः । ननु तर्हि किमधिकं भवान् ब्रवीतीत्यत आह न हीति न त्वित्यर्थः । स्वस्वरूपेण प्रकाशमात्रेणैव विश्रान्तो विषयीकृतः । सान्द्रस्य निरन्तरस्य आनन्दस्य निर्भरोऽतिशय आस्वाद्यत्वेनास्माकमभिमत इत्यर्थः । तेन तादृशानुमिते रसाद्यस्वीकारेण । सिषाधयिषितात् साधयितुमिष्टात् अर्थात् स्वप्रकाशानन्दरूपात् । अर्थान्तरस्य भिन्नार्थस्य रसाद्याविर्भावस्य साधनादनुमापनात् । आभासता दुष्टता । इदानीं वस्त्वलङ्कारयोरप्यनुमानेनैव बोधो न तु तदर्थमपि व्यञ्जनावृत्तिः स्वीकार्येति व्यक्तिविवेककारस्यैव मतान्तरं दूषयितुमुत्थापयति यच्चेत्यादि पर्यवस्यतीत्यन्तेन । प्रतीयमानं व्यज्यमानं वस्तु कम्प्रभयरूपं अनुमेयमेवेत्यग्रेणान्वयः ।

इत्यादौ च रूपकालङ्कारादयोऽनुमेया एव। तथा हि अनुमानं नाम पक्षसत्त्वसपक्षसत्त्वविपक्षव्यावृत्तत्वविशिष्टाल्लिङ्गाल्लिङ्गिनो ज्ञानम्। ततश्च वाच्यादसम्बन्धोऽर्थस्तावन्न प्रतीयते अन्यथातिप्रसङ्गः स्यादिति बोध्यबोधकयोरर्थयोः कश्चित्सम्बन्धोऽस्त्येव। ततश्च बोधकोऽर्थो लिङ्गं बोध्यश्च लिङ्गी बोधकस्य चार्थस्य पक्षसत्त्वं निबद्धमेव। सपक्षसत्त्व-विपक्षव्यावृत्तत्वे अनिबद्धेऽपि सामर्थ्यादनुमेये। (ढ)

तस्मादत्र यद्वाच्यार्थाल्लिङ्गरूपाल्लिङ्गिनो व्यङ्ग्यार्थस्यावगमस्तदनुमान एव पर्य्यवस्यतीति"। तन्न। तथा ह्यत्र

---

(ढ) जलकेलीति राधिकावदने मुक्ते सति तत्र चन्द्रबुद्ध्या रात्रिज्ञानेन तयोर्विघटनं पिहिते सति चन्द्रानुपलब्ध्या रात्र्यभावज्ञानेन तयोर्घटनं तयोर्भ्रान्त्या मुहुर्वियोगसंयोगदर्शनेन कौतुकमिति भावः। राधिकावदने चन्द्रत्वारोपणं रूपकालङ्कारः। अनुमेया एव न तु व्यङ्ग्याः। अनुमेयत्वमुपपादयति तथा हीति सन्दिग्धसाध्यकः सिषाधयिषाविरहविशिष्टसिद्ध्यभाववान् वा पक्षः। निश्चितसाध्यवान् सपक्षः। साध्याभाववान् विपक्षः। तद्व्यावृत्तत्वं तदवृत्तित्वम्। इयं व्याप्तिः लिङ्गात्साधनात् लिङ्गिसाध्यं वाच्यात्तावद्व्यङ्ग्यं प्रतीयत इति वाच्यार्थस्य लिङ्गत्वमित्यभिप्रेत्य तत्र पक्षसत्त्वादित्रयमुपपादयति ततश्चेति अन्यथा असम्बन्धप्रतीतिस्वीकारेऽतिप्रसङ्गः स्यात् "भम धम्मिअ" इत्यादौ भ्रमणाभावस्येव घटाभावादेरपि बोधः स्यात्। कश्चित् सम्बन्ध इति प्रकृते वैपरीत्यरूपः सम्बन्धः स एव व्यापकताघटक इति भावः। तत्र च सम्बन्धस्यावश्यं सत्त्वात्, पक्षसत्त्वादिज्ञानस्यैव उपयोगित्वात् तदुपपादयति पक्षसत्त्वमिति। निबद्धं शब्देनोपस्थितम्। सामर्थ्यात् संस्कारबलात् अवसेये प्रत्येतव्ये।

(ण) महावाक्यार्थं निरूपयति तस्मादिति दूषयति तन्नेति

"भम धम्मिअ इत्यादौ" गृहे श्वनिवृत्त्य विहितं भ्रमणं गोदावरीतीरे सिंहोपलब्धेरभ्रमणमनुमापयतीति यद्वक्तव्यं तत्र नैकान्तिको हेतुः। भीरोरपि गुरोः प्रभोर्वा निदेशेन प्रियानुरागेण च गमनस्य सम्भवात्। पुंश्चल्या वचनं प्रामाणिकं न वेति सन्दिग्धासिद्धश्च। (ण)

"जलकेलीत्यत्र" य आत्मदर्शनादर्शनाभ्यां चक्रवाकविघटनसङ्घटनकारी स चन्द्र एवेति अनुमितिरेवेयमिति न वाच्यम्। उल्लासकादावनैकान्तिकत्वात्। एवंविधोऽर्थ

---

गृहे गृहसमीपे चत्वरादौ श्वनिवृत्त्या कुक्कुरमरणप्रदर्शनेन विहितं विधिविषयः अभ्रमणमनुमापयतीत्यनेनान्वितम्। अत्र श्वनिवृत्ति विधीयमानगृहसमीपभ्रमणं लिङ्गं तच्च भीरुत्वपर्य्यवसन्नम्। सिंहवत् गोदावरीतीराभ्रमणं साध्यं धार्मिकः पक्षः समाजिकोऽनुमाता अनैकान्तिको व्यभिचारी भीरोरपीत्यनेन निरुक्तलिङ्गविशिष्टस्य पक्षस्य। गमनसम्भवादिति साध्याभावप्रदर्शनं सन्दिग्धासिद्धं हेतोर्दोषान्तरमाह पुंश्चल्या इति कुलटाया इत्यर्थः। प्रामाणिकं प्रमाजनकम्। तथा च वचनमिदं किं धार्मिकस्य भयोत्पादकं किं वा कुक्कुरस्पर्शशङ्कासङ्कुचितभ्रमणस्य तस्य स्वच्छन्दभ्रमणविधायकमिति सामाजिकानां सन्देहात् भीरुत्वसन्देह इति सन्दिग्धासिद्धो हेतुरिति भावः।

(त) अलङ्कारानुमानं दूषयति जलकेलीति। उल्लासको भवदः। आदिना रातिसाधर्म्यान्तरस्यापि ग्रहणम्। तादात्म्यसम्बन्धेन साध्यस्य चन्द्रस्य वदने बाधाद्बाधोऽपि हेतुदोषोऽत्र द्रष्टव्यः। व्यभिचारभयेन पक्षमात्रवृत्तिहेतुकवस्त्वलङ्कारानुमानमाह एवमिति। एवंविधार्थबोधक इति अत्र पक्षीभूतवाक्यार्थेन बोधयितुं योग्या ये येऽर्थास्ते एव साध्यकोटिनिविष्टेन एवंविध इत्यनेन धर्त्तव्याः। अन्यथा वक्तुरभिप्रेतस्यै-

एवं विधार्थबोधक एवंविधार्थत्वाद्यन्नैवं तन्नैवमित्यनुमाने ऽपि आभाससमानयोगक्षेमो हेतुः। एवं विधार्थत्वादिति हेतुना एवंविधानिष्टार्थसाधनस्याप्युपपत्तेः। (त)

तथा यत् "दृष्टिं हे प्रतिवेशिनि! क्षणमिहाप्यस्मदित्यादौ "नलग्रन्थीनां तनूलिखनम् एकाकितया च स्रोतो गमनं तस्याः परकामुकोपभोगस्य लिङ्गिनो लिङ्गमित्युच्यते तच्च तत्रैवाभिहितेन स्वकान्तस्नेहेनापि सम्भवतीति अनैकान्तिको हेतुः। यच्च "निःशेषच्युतचन्दनमित्यादौ" दूत्यास्तत्कामुकोपभोगोऽनुमीयते तत्किं प्रति-

---

वार्थविशेषस्य ग्राह्यत्वे "गतोऽस्तमर्क इत्यादौ" वक्तुरभिप्रेतार्थसबोधयितार्थान्तरबोधके व्यभिचारापातः। हेतोः पक्षमात्रवृत्तित्वेनान्वयदृष्टान्तासम्भवादन्वयव्याप्तिग्रहो न सम्भवतीति व्यतिरेकव्याप्तिग्रहाय व्यतिरेकोदाहरणमाह यन्नैवमिति। यद्यदेवंविधार्थबोधकत्वाभाववत् तदेवं विधार्थत्वाभाववदित्यर्थः। देवदत्तो भवतीति वाक्यार्थवदिति दृष्टान्तोऽत्र द्रष्टव्यः। आभाससमानतुल्ययोगक्षेमो दृष्टहेतुसमानकार्यकारी। तदेवोपपादयति एवमिति। अनिष्टो वक्तुरनभिमतः। तथा च यथा दुष्टहेतुप्रयोगेन वादिविजयो भवति तथार्थान्तरसाधकहेतुप्रयोगेणापीति आभासतुल्ययोगक्षेमत्वमिति भावः।

(थ) अत्रापि व्यभिचारमाह तथेति। एकाकितया चेति चकारो वार्थः स्रोतो गमनं वेत्यर्थः। लिङ्गं तादात्म्येन साधनं तत् प्रागुक्तमर्थद्वयम् अत्रैव दृष्टिमित्यादिश्लोक एव अभिहितेन द्वितीयपादप्रतिपादितेन तथा च स्नेहस्य किं दुष्करमिति जानतां सर्वेषामेव श्रोतॄणां तादृशार्थबोधो न जायते तत्रैव व्यभिचार इति भावः। कालान्तरे तादृग्वाक्यप्रयोगेन यस्य कस्यापि श्रोतुस्तादृशार्थबोधात् व्यभिचारो न भवतीति भाव्यते तदात्र तद्वाक्यप्रतिपाद्यं तादृशार्थद्वयं परकामु-

धाय्यया दूत्या तत्कालसन्निहितैर्वान्यैः तत् काव्यार्थभावनया वा सहृदयैः । (थ)

आद्ययोर्न विवादः । तृतीये तु तथाविधाभिप्रायविरहस्थले व्यभिचारः । ननु वक्त्राद्यवस्थासहकृतत्वेन विशेष्यो हेतुरिति न वाच्यम् । एवंविधव्याप्त्यनुसन्धानस्याभावात् । किञ्चैवंविधानां काव्यानां कविप्रतिभामात्रजन्मनां प्रामाण्यानावश्यकत्वेन सन्दिग्धासिद्धत्वं हेतोः । व्यक्तिवादिना चाधमपदसहायानामेवैषां पदार्थानां व्यञ्जकत्वमुक्तं तेन च तत्कान्तस्याधमत्वं प्रामाणिकं न वेत्त्यपि कथमनुमानम् । एतेनार्थापत्तिवेद्यत्वमपि व्यङ्ग्यानामपास्तम् । अर्थापत्तेरपि पूर्वसिद्धव्याप्तेरच्छाया-

---

कोपभोगप्रतिपादकं तादृशार्थत्वादित्यनुमाने बाधो हेतुदोषो द्रष्टव्यः यथा गन्धप्रागभावकालीनो घटो गन्धवानित्यादौ तत्कालीनसाध्याभावमादाय बाधः तथात्रापि व्यक्तिविशेषेकालविशेषे वा एवंविधार्थबोधकत्वरूपसाध्याभावमादाय बाधो बोध्यः तत्कामुकेति नायिकाकामुकेत्यर्थः । अनुमीयते इति चन्दनच्यवनादिरत्र हेतुः तत्कालसन्निहितैस्तादृशकथनसमये नायिकासन्निधानवृत्तिभिः वाक्यार्थभावनयेति विशेषणे तृतीया ।

(द) न विवाद इति चन्दनच्यवनादीनां स्नानादिनापि सम्भवात् सम्भोगव्यभिचारित्वेऽपि तेषां दूती तत्कालसन्निहितयोः प्रत्यक्षतोः वैलक्षण्यसहचग्रहसम्भवेन व्यभिचारज्ञानानुदयाद्व्याप्तिग्रहः सम्भवतीति भावः । ननु सामाजिकानामपि निःशेषादिपदाभिप्रायेनैव वैलक्षण्यग्रहो भविष्यतीत्यत आह तथाविधेति निःशेषादिपदानां सम्भोगजन्यत्वबोधाभिप्रायविरहस्थले इत्यर्थः । वक्त्रादीत्यत्र तु यत्संविधानवक्त्रीहिना प्रतिपाद्य दूती परिग्रहः अवस्था कामुकत्वादिवैशिष्ट्यं एवंविधेति प्रतिपाद्यावस्था सहकृतत्वस्य सन्देहानुपस्थानात् प्रमाणान्त

मुपजीव्यैव प्रवृत्तेः। यथा। "यो जीवति स कुत्राप्यव-
तिष्ठते जीवति चात्र गोष्ठग्रामविद्यमानश्चैत्र इत्यादि"।
किञ्च वक्त्रन्नायादौ तर्ज्जनीतोलनेन दशसङ्ख्यादिवत्-
सूचनबुद्धिवेद्योऽप्ययं न भवति। सूचनबुद्धेरपि सङ्केता-
दिलौकिकप्रमाणसापेक्षत्वेनानुमानप्रकारताङ्गीकारात्।
यच्च "संस्कारजन्यत्वाद्रसादिबुद्धिः स्मृतिरिति" (द)।

केचित् तत्रापि प्रत्यभिज्ञायामनैकान्तिकतया हेतो-
राभासता। "दुर्गालङ्घितेत्यादौ" च "द्वितीयार्थो नास्त्ये-

---

दस्य वा सम्भवात् अनुपस्थितिरिति कथं तदन्तर्भावेन व्याप्तिग्रह इति भावः। एतेन हेतोराभासत्वेन नन्वर्थापत्तेर्व्याप्तिग्रहादिनिरपेक्षत्वेन हेतोराभासत्वमकिञ्चित्करमित्यत आह अर्थापत्तेरपीति। व्याप्तिच्छायां व्याप्तिग्रहम् अर्थापत्तिमाह यथेति चैत्र एतद्गोष्ठीभिन्नस्थानेऽवतिष्ठते इत्यर्थापत्तिजन्यज्ञानम् अत्र जीवित्वस्य यत्किञ्चिदधिकरणावस्थान-व्याप्यत्वज्ञानमपेक्षणीयमिति व्याप्तिग्रहप्रदर्शनपुरःसरमर्थापत्तिप्रदर्शनमिदं जीवति चेत्यादिकमर्थापत्तिदर्शनं तर्जनीतोलनेन तर्जन्युत्क्षेपदर्शनेन सूच्यतेऽनेनेति सूचनं हस्तचेष्टादिरूपः सङ्केतः तद्बुद्धिवेद्यस्तद्-बुद्धिजन्यबोधविषयः अयं व्यङ्ग्यपदार्थः। सङ्केतादीत्यादिपदेनसङ्केत-ग्रहवेद्यानां ग्रहणं लौकिकप्रमाणसापेक्षत्वेन सहचारग्रहजन्यत्वेन अनुमानप्रकारताङ्गीकारात् व्याप्तिज्ञानविशेषत्वस्वीकारात् प्रकृते वक्तृ-रक्तिवैचित्यविशेषः सङ्केतः तद्गोचरव्यङ्ग्यार्थव्याप्तिग्रहेणैव व्यङ्ग्यग्रहो-न तु तदर्थं व्यञ्जना स्वीकार्या एवञ्च सति यत्र वक्तृरक्तिवैचित्यविशेष-वत्त्वेऽपि सर्व्वेषामेव श्रोतृणां अनभिज्ञाततया न व्यङ्ग्यार्थबोधस्तत्रैव व्यभिचार इति तदपि न सम्यगिति भावः। स्मृतिर्न चेति कारिकांशं विवृणोति यच्चेति। संस्कारजन्यत्वात् अन्यथा संस्कारादौ संस्कार-ध्वंसादौ तज्जन्यत्वस्य सत्त्वात् व्यभिचारस्त्वात्यन्तस्फुटत्वापत्तेः।

वेति' यदुक्तं महिमभट्टेन तदनुभवसिद्धमपलपतो गज-निमीलिकैव । तदेवमनुभवसिद्धस्य तत्तद्रसादिलक्षणार्थ-स्याशक्यापलापतया तत्तच्छब्दाद्यन्वयव्यतिरेकानुविधा-यितया च अनुमानादिप्रमाणावेद्यतया चाभिधादिवृत्ति-त्रयाबोध्यतया च तुरीया वृत्तिरुपास्यैवेति सिद्धम् । इयञ्च व्याप्त्याद्यनुसन्धानं विनापि भवतीत्यखिलं निर्मलम् । तत् किं नामिकेयं वृत्तिरित्युच्यते ।

**सा चेयं व्यञ्जना नाम वृत्तिरित्युच्यते बुधैः ।**
**रसव्यक्तौ पुनर्वृत्तिं रसनाख्यां परे विदुः ॥**

---

(थ) प्रत्यभिज्ञायां सोऽयमित्याकारकज्ञाने अनैकान्तिकतया साध्यं विना विद्यमानतया हेतोः संस्कारजन्यज्ञानत्वस्य आभासता व्यभिचारिता एतच्च साधनं रसप्रतीतिकारणीभूतवासनायाः संस्कार-विशेषत्ववादिमते । अतिरिक्तत्ववादिमते तु हेतोः पक्षावृत्तित्वेन स्वरूपासिद्धिरपि दोषो न तु व्यभिचारमात्रम् । ये तु प्रत्यभिज्ञायाः स्मृतित्वापत्तिभयेन स्मृतिजन्यत्वमेव रुन्धन्ते न तु संस्कारजन्यत्वं तन्मते व्यभिचारो न सम्भवतीत्यवधेयम् । अभिधामूलव्यञ्जनामनङ्गी-कुर्वतो मतं दूषयति दुर्गेत्यादि । द्वितीयार्थोऽप्राकरणिकार्थबोधः । गजनिमीलिका हस्तिन इव मूर्खत्वम् । उपसंहरति तदेवमिति । तत्तद्रसादिलक्षणार्थस्य तत्तद्रसादिस्वरूपार्थस्य विलक्षणार्थस्येति पाठे तत्तद्रसादिरूपस्य वाच्यादिविलक्षणस्येत्यर्थः । अनुमानादीत्यादि-पदेन अर्थापत्त्यादेर्ग्रहणम् । अभिधादीत्यादिपदेन लक्षणातात्पर्य-योर्ग्रहणम् । ननु रसादिप्रकाशार्थं रसनाख्या वृत्तिः स्वीकृता कथं तदर्थं व्यञ्जनावृत्तिः स्वीक्रियते इत्यत आह रसव्यक्ताविति रसप्रती-ताविव्यर्थः । वृत्तिं व्यापारम् । परे नैयायिकाः न लाक्षणिकाः

एतच्च विविच्योक्तं रसनिरूपणप्रस्ताव इति सर्वमवदातम् । (ध)

इति साहित्यदर्पणे व्यञ्जनाव्यापारस्थापनो नाम पञ्चमः परिच्छेदः ।

---

## षष्ठः परिच्छेदः ।

एवं ध्वनिगुणीभूतव्यङ्ग्यत्वेन काव्यस्य भेदद्वयमुक्त्वा पुनर्दृश्यश्रव्यत्वेन भेदद्वयमाह ।

**दृश्यश्रव्यत्वभेदेन पुनः काव्यं द्विधा मतम् ।**
**दृश्यं तत्राभिनेयं तत्**

---

तेषामयमाशयः । वस्त्वलङ्कारव्यङ्ग्यार्थं व्यञ्जनावृत्तिरवश्यं स्वीकार्य्या । तथैव रसादेरपि यद्यो ऽस्तु तदर्थमतिरिक्तरसनाख्यवृत्तिस्वीकारेणालमिति । न च व्यञ्जनाजन्यबोधस्यास्वादरूपत्वं नास्ति रसनाख्यव्यापारजन्यबोधस्य तु तद्रूपत्वमिति वाच्यम् । एतादृशनियमस्य प्रमाणनिर्णेयत्वात् । एतद्रसनाख्यवृत्तिस्वरूपं अवदातमविरुद्धम् ।

इति साहित्यदर्पणविवृतौ पञ्चमः परिच्छेदः ।

---

(क) अभिनेयं नट्याद्यभिनीयमानं नायकादिचरितम् । एतच्च अल्पबोध्यो व्यवहारं दत्तुरादियाः पल्लोपस्थापकमेव काव्यं न त्वेवं

तस्य रूपकसंज्ञाहेतुमाह ।

**रूपारोपात्तु रूपकम् ॥**

तत् दृश्यं काव्यं नटे रामादिस्वरूपारोपाद्रूपकमित्युच्यते । कोऽसावभिनय इत्याह ।

**भवेदभिनयोऽवस्थानुकारः स चतुर्विधः ।**
**आङ्गिको वाचिकश्चैवमाहार्य्यः सात्त्विकस्तथा ॥**

नटैरङ्गादिभी रामयुधिष्ठिरादीनामवस्थानुकरणमभिनयः ॥ रूपकस्य भेदानाह ।

**नाटकमथ प्रकरणं भाणव्यायोगसमवकारडिमाः ।**
**ईहामृगाङ्कवीथ्यः प्रहसनमिति रूपकाणि दश ॥**

किञ्च ।

**नाटिका त्रोटकं गोष्ठी सट्टकं नाट्यरासकम् ।**
**प्रस्थानोल्लाप्यकाव्यानि प्रेङ्खणं रासकं तथा ॥**
**संलापकं श्रीगदितं शिल्पकञ्च विलासिका ।**
**दुर्मल्लिका प्रकरणी हल्लीशो भाणिकेति च ।**
**अष्टादश प्राहुरुपरूपकाणि मनीषिणः ।**
**विना विशेषं सर्वेषां लक्ष्म नाटकवन्मतम् ॥**

सर्वेषां प्रकरणादिरूपकाणां नाटिकाद्युपरूपकाणाञ्च ।(क)

---

विधं विभावादिस्मरणादिवद्रसाभिव्यञ्जकमपि तत्काव्यम् । काव्यलक्षणयोगात् । यद्वा अभिनेयमत्रास्तीति मत्वर्थीयप्रत्ययेन अभिनेयपदमभिनेयोपस्थापकमनर्घराघवादिरूपकं रत्नावल्याद्युपरूपकञ्च । अवस्था प्राप्-

तत्र।

नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितं।
विलासर्द्ध्यादिगुणवद् युक्तं नानाविभूतिभिः॥
सुखदुःखसमुद्भूतिनानारसनिरन्तरम्।
पञ्चादिका दशपरास्तत्राङ्काः परिकीर्त्तिताः॥
प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्।
दिव्योऽथ दिव्यादिव्यो वा गुणवान्नायको मतः॥
एक एव भवेदङ्गी शृङ्गारो वीर एव वा।
अङ्गमन्ये रसाः सर्व्वे कार्य्यं निर्व्वहणेऽद्भुतम्॥
चत्वारः पञ्च वा मुख्याः कार्य्यव्यापृतपूरुषाः।
गोपुच्छाग्रसमाग्रन्तु बन्धनं तस्य कीर्त्तितम्॥

ख्यातं रामायणादिप्रसिद्धं वृत्तम्। यथा रामचरितादि। (ख)

---

र्थ्यम्। अनुकारः सदृशीकरणं सः अभिनयः अङ्गेन निष्पन्न आङ्गिकः। एवमग्रेऽपि वेशरचनादिनिष्पाद्य आहार्य्यः। सात्त्विकः स्तम्भस्वेदादिरूपः रङ्गादिभिर्नाट्यादिभिः। नाटकमिति अङ्क उत्सृष्टाङ्कः।

(ख) नाटकलक्षणमाह तत्रेति। वृत्तं वृत्तान्तः। विलासेति "धीरा दृष्टिर्गतिश्चित्रा विलासे सस्मितं वचः" इत्युक्तलक्षणो। नायकस्य गुणविशेषो विलासः। ऋद्धिरभ्युदयः आदिना धैर्य्यगाम्भीर्य्यादिपरिग्रहणम्। तत्र नाटके अङ्काः परिच्छेदरूपाः अङ्गी प्रधानम्। निर्वहणे उपसंहाराख्यचरमसन्धौ। अद्भुतमाश्चर्य्यं रसः। कार्य्ये नायककर्मणि

सन्धयो वक्ष्यन्ते । नानाविभूतिभिर्युक्तमिति महासहायम् । सुखदुःखसमुद्भवत्वं रामयुधिष्ठिरादिवृत्तान्तेष्वभिव्यक्तम् । राजर्षयो दुष्मन्तादयः । दिव्याः श्रीकृष्णादयः । दिव्यादिव्यो यो दिव्योऽप्यात्मनि नराभिमानी । यथा श्रीरामचन्द्रः । "गोपुच्छाग्रसमाग्रमिति क्रमेणाङ्काः सूक्ष्माः कर्त्तव्या इति" केचित् । अन्ये त्वाहुः । यथा गोपुच्छे केचिद्वाला ह्रस्वाः केचिद्दीर्घाः तथेह कानिचित् कार्य्याणि मुखसन्धौ समाप्तानि कानिचित् प्रतिमुखे । एवमन्येष्वपि कानिचित् कानिचिदिति" ।

**प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः ।**
**भवेदगूढ़शब्दार्थः क्षुद्रचूर्णकसंयुतः ॥**

---

व्यापृताः सव्यापाराः । बन्धनं गुम्फनं तस्य नाटकस्य रामचरितादीत्यादिना प्रसन्नराघवानर्घराघवादीनां ग्रहणम् ।

( ग ) महासहायमिति नानाविधाविभूतिर्नायकाद्यभ्युदयो येभ्यस्ते महान्तः सहाया यत्र इति व्युत्पत्त्यभिप्रायेण । अदिव्यनायका दुष्मन्तादयः । नराभिमानी नराभेदग्रहवान् । ईश्वरे नरत्वस्य बाधात्तादृशग्रहो भ्रम एव वाच्यः । स चेश्वरे न सम्भवतीति तस्य नरचरिताचरणन्तु लोकशिक्षार्थं माययैव न तु नरत्वाभिमानात् । तदुक्तं पाद्मे "माया मानुषचारित्रो महादेवाधिपूजित" इति । श्रीभागवते च "भ्राता वने कृपणवत् प्रियया वियुक्तः । स्त्रीसङ्गिनां गतिमिति प्रथयंश्चचार" इति । तथा सति दिव्यादिव्यपदार्थ एवं वाच्यः । मानुष्यां देवेनोत्पादितो दिव्यादिव्यो यथा युधिष्ठिरादिः । एवञ्च श्रीरामचन्द्रोऽपि दिव्यनायक एव अन्येषु गर्भविमर्षनिर्वहणेषु । क्वचन्दप-

विच्छिन्नावान्तरैकार्थः किञ्चित् संलग्नविन्दुकः
युक्तो न बहुभिः कार्य्यैर्बीजसंहृतिमान् न च ॥
नानाविधानसंयुक्तो नातिप्रचुरपद्यवान्।
आवश्यकानां कार्य्याणामविरोधाद्विनिर्मितः॥(ग)
नानेकदिननिर्वर्त्यकथया सम्प्रयोजितः।
आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा ॥
दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः।
विवाहो भोजनं शापोत्सर्गौ मृत्यू रतन्तथा ॥
दन्तच्छेद्यं नखच्छेद्यमन्यद् ब्रीडाकरञ्च यत्।
शयनाधरपानादि नगराद्यवरोधनम् ॥
स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः।
देवीपरिजनादीनाममात्यवणिजामपि ॥

---

माह प्रत्यक्षेति। प्रत्यक्षवद्भासमानं नेतुर्नायकस्य चरितं यत्र चूर्णकं गद्यप्रभेदः। अवान्तरं महावाक्यार्थैकदेशः प्रथमार्थप्रकृतिर्बीजं निर्व्वहणाख्यसन्धिः संहृतिस्तयोर्नाङ्के विधानं किन्तु अर्थोपक्षेपके अतएव बीजार्थव्यापकस्य तदित्यङ्कस्य लक्षणं वक्ष्यते। विधानं विहितं कर्म। आवश्यकानामिति एषां विरोधो नाङ्के वर्णनीय इति भावः।

(घ) पात्रैः सहायैः एभिर्दूराह्वानादिभिः देवी राजपत्नी परिजनास्तत्परिचारकाः राजकुमारादयो वा अन्ते समाप्तौ निष्क्रान्तानि रङ्गान्निर्गतानि निखिलानि पात्राणि नायकतत्सहायादयो यस्य सः। सूत्रधारक्रियमाणं मङ्गलं रङ्गद्वारम् आमुखं प्रस्तावना आदिना सभापूजाकविसंज्ञादीनां ग्रहणं फलं नायकनिष्पाद्यप्रधानप्रयोजनम्

**प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः ।**
**अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्त्तितः ॥**

विन्दादयो वक्ष्यन्ते । आवश्यकं सन्ध्यावन्दनादि । अङ्क-प्रस्तावाद् गर्भाङ्कमाह ।

**अङ्कोदरप्रविष्टो यो रङ्गद्वारा मुखादिमान् ।**
**अङ्कोऽपरः स गर्भाङ्कः सवीजः फलवानपि ॥**

यथा बालरामायणे रावणं प्रति । कञ्चुकी ।
"श्रवणैः पेयमनेकैर्दृश्यं दीर्घैश्च लोचनैर्बहुभिः" ।
भवदर्थमिव निबद्धं नाट्यं सीतास्वयम्बरणम् ॥
इत्यादिना विरचितः सीतास्वयम्बरो नाम गर्भाङ्कः ॥

**तत्र पूर्व्वं पर्व्वरङ्गः सभापूजा ततः परम् ।**
**कथनं कविसंज्ञादेर्नाटकस्याप्यथामुखम् ॥**

तत्रेति नाटके ।

**यन्नाट्यवस्तुनः पूर्व्वं रङ्गविघ्नोपशान्तये ।**
**कुशीलवाः प्रकुर्व्वन्ति पूर्व्वरङ्गः स उच्यते ॥**

---

भवदर्थमिति भवते प्रयोजनमित्यर्थः । इत्योत्प्रेक्षायाम् भवतो बहूनि श्रवणानि लोचनानि च सन्ति भवतैव तद्द्रष्टुं श्रोतुञ्च योग्यमित्यर्थः । नाटकरचनापरिपाटीमाह तत्रेति । प्रथमं पूर्वं सामाजिकसमूहः सभा तस्याः पूजा प्रशंसा ततः पूर्व्वरङ्गात् संज्ञादेरित्यादिपदेन गोत्रभाषापितृणां ग्रहणं नाटकस्यापीत्यनेन संज्ञाकथनमित्यनेनान्वितम् नाट्यमभिनेतव्यम् वस्तु वर्णनीयपदार्थः रङ्गं नाट्यस्थानम् तत्र

प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि।
तथाप्यवश्यं कर्त्तव्या नान्दी विघ्नोपशान्तये ॥(घ)

अस्याः स्वरूपमाह।

आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता॥
मङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी।
पदैर्युक्ता द्वादशभिरष्टभिर्वा पदैरुत॥

अष्टपदा यथा। अनर्घराघवे "निष्प्रत्यूहमित्यादि" द्वादशपदा यथा मम तातपादानां पुष्पमालायाम्"।

---

जायमाना ये विघ्ना नटादिदुरदृष्टजन्योपद्रवास्तदुपशान्तये कुशीलवाः सूत्रधारप्रधानटाः अस्य पूर्व्वरङ्गस्य तस्या नान्द्याः।

(ङ) आशीरिति स्तुतिर्गुणकीर्त्तनं प्रयुज्यते क्रियते। स्तुतिरित्यत्र नित्यमिति पाठे स्तुतिरित्यध्याहार्य्यम् नृपादीनामित्यादिपदेन गुर्वादिपरिग्रहः नान्दीपदेनाशीर्मङ्गल्यं वस्तु वोच्यते तदन्यतरयोगात् देवादीनां स्तुतिरपि नान्दीतिभावः आशीर्वचनयुक्ता मङ्गल्यशङ्खादिशंसिनी वा शङ्खेत्यादीति मालाद्युपलक्षणम् तेन "रुध्याङ्गार्कमरीचिकास्विव पयः पूरोयदज्ञानत" इत्यादौ स्रक्शब्दयोगेन नान्दीत्वमक्षतं पदैः सुबन्ततिङन्ताद्यन्यतरैः द्वितीयपदशब्देन श्लोकचतुर्थभाग उच्यते। अतएवोभयत्र पदशब्दोपन्यासः केचित्तु रत्नावल्यादौ श्लोकत्रयेण नान्दीदर्शनात् प्रथमपदस्यापि श्लोकचतुर्थभागपरत्वं वदन्ति। तच्च "इदं गुरुभ्यः पूर्वेभ्यो नमोवाकं प्रशास्महे। विन्देम देवतां वाचमन्तामात्मनः कलामि"त्यादेरुत्तररामचरितादौ प्रणीतायाः द्वादशपदाया नान्द्या असंग्रहापत्तेः। एवञ्चाष्टाभिरिति तदभिप्रायकत्वोपलक्षणत्वेन

"शिरसि धृतसुरापगे स्मरारा-
वरुणमुखेन्दुरुचिर्गिरीन्द्रपुत्री ।
अथ चरणयुगानते स्वकान्ते
स्मितसरसा भवतोऽस्तु भूतिहेतुः" ।

एवमन्यत्र । "एतन्नान्दीति" कस्यचिन्मतानुसारेणोक्तम् । (ङ)

वस्तुतस्तु "पूर्वरङ्गस्य रङ्गद्वाराभिधानमङ्गमिति" उच्यते । यदुक्तम् । "यस्मादभिनयो ह्यत्र प्राथम्यादवतार्य्यते ।
"रङ्गद्वारमतो ज्ञेयं वागङ्गाभिनयात्मकमिति" ।

उक्तप्रकारायाश्च नान्द्या रङ्गद्वारात् प्रथमं नटैरेव कर्त्तव्यतया न महर्षिणा निर्द्देशः कृतः । (च)

---

श्लोकत्रयेणापि नान्दी सङ्गच्छते । अतएव महानाटके त्वधिकैः श्लोकैर्नान्दी कृता । नन्वभिज्ञानशकुन्तलायां "या सृष्टिः स्रष्टुरित्यादि" द्वादशाधिकपदघटितैकश्लोकप्रणीताया नान्द्याः कथं संग्रह इति चेत् तस्याः कालिदासादिमहाकविप्रबन्धेषु चेत्यनेन ग्रन्थकृतैव नान्दीत्वाभावस्य वक्ष्यमाणत्वात् । एतत् सूत्रधारादिक्रियमाणं मङ्गलं कस्यचिदित्यनेन स्वस्यास्वरसः सूचितः ।

(च) तर्हि तस्य किं नामेत्यत आह वस्तुतस्त्विति । रङ्गद्वाराभिधानं रङ्गद्वारनामकं अन्ये इति बहुसम्मतत्वेनात्र स्वस्यापि स्वरसः सूचितः अत्र मुनेरपि स्वरसमाह यदुक्तमिति अत्र सूत्रधारक्रियमाणे मङ्गले प्राथम्यात् आरम्भं विधाय अवतार्य्यते क्रियते रङ्गस्य रङ्गक्रियमाणाभिनयस्य द्वारमारम्भः तस्य नान्दीत्वे मुनेरस्वरसमाह उक्तप्रकारायाश्चेति । च शब्दो हेतौ महर्षिणा भरतेन निर्द्देशो नियमः तथाच रङ्गद्वारात् पूर्वमेव नान्दी सा निर्विघ्नं ग्रन्थसमाप्तये कविनापि क्रियते इति भावः ।

कालिदासादिमहाकविप्रबन्धेषु च ।

"वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी
यस्मिन्नीश्वर इत्यनन्यविषयः शब्दो यथार्थाक्षरः ।
अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभिर्मृग्यते
स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः" ॥

एवमादिषु नान्दीलक्षणायोगात् । उक्तञ्च "रङ्गद्वारमारभ्य कविः कुर्य्यादिति" । अत एव प्राक्तनपुस्तकेषु "नान्द्यन्ते सूत्रधार" इत्यनन्तरमेव "वेदान्तेष्वित्यादि" श्लोकलिखनं दृश्यते । यच्च पश्चात् "नान्द्यन्ते सूत्रधारः" इति लिखनं तस्यायमभिप्रायः "नान्द्यन्ते सूत्रधार इदं प्रयोजितवान् इतः प्रभृति मया नाटकमुपादीयत इति कवेरभिप्रायः सूचित इति" ।

**पूर्वरङ्गं विधायैव सूत्रधारो निवर्त्तते ।**
**प्रविश्य स्थापकस्तद्वत् काव्यमास्थापयेत्ततः ॥**
**दिव्यमर्त्ये स तद्रूपो मिश्रमन्यतरस्तयोः ।**
**सूचयेद्वस्तु वीजं वा मुखं पात्रमथापि वा ॥**

---

(क) व्याप्तिमप्याह कालिदासादिमहाकविप्रबन्धेषु चेति नान्दीलक्षणायोगाच्चेति चकारस्यान्वयः वेदान्तेष्विति एकपुरुषमद्वितीयं ब्रह्म रोदसी द्यावापृथिव्यौ अनन्यविषयस्तन्मात्रप्रतिपादकः यथार्थाक्षरो योगार्थः अन्तर्मनसि नियमितप्राणाः प्राणायामः आदिना ध्यानधारणादेर्ग्रहणं मृग्यते ज्ञायते । नान्दीलक्षणायोगादिति अष्टपदत्वद्वादशपदत्वान्यतराभावादित्यर्थः । तथाच वेदान्तेष्वित्यादि रङ्गद्वारमेव

काव्यस्यार्थस्य स्थापनात् स्थापकः । तद्वदिति सूत्रधारसदृशगुणाकारः । इदानीं पूर्व्वरङ्गस्य सम्यक्प्रयोगाभावादेक एव सूत्रधारः सर्व्वं प्रयोजयतीति व्यवहारः । स स्थापको दिव्यं वस्तु दिव्यो भूत्वा मर्त्यं मर्त्यो भूत्वा मिश्रञ्च दिव्यमर्त्ययोरन्यतरो भूत्वा सूचयेत् । वस्त्वितिवृत्तं यथोदात्तराघवे । (छ)

"रामो मूर्ध्नि निधाय काननमगान्मालामिवाज्ञां गुरो-
स्तद्भक्त्या भरतेन राज्यमखिलं मात्रा सहैवोज्झितम् ।
तौ सुग्रीवविभीषणावनुगतौ नीतौ परां सम्पदं
प्रोत्सिक्ता दशकन्धरप्रभृतयो ध्वस्ताः समस्ता द्विषः ॥"

बीजं यथा रत्नावल्याम् ।

---

न नान्दीति तत्र नान्दीलक्षणागमने दोषो नास्तीति भावः । ननु नान्द्याः कविकरणपक्षे नटकर्मत्वाभावात् कथं नाटकारम्भत्वमत आह उक्तार्थ इति महर्षिणा इति पूर्व्वेणान्वयः । एतदनुकूलमाह अत एवेति । तथाच यत्र नान्द्यस्ति रङ्गद्वारं नास्ति तत्र तल्लेण सैव रङ्गद्वारं यत्र रङ्गद्वारमेवास्ति न नान्दी तत्र सा फलबलानुमेया यत्र त्वारम्भे बहवः श्लोकास्तत्र श्लोकद्वयं नान्दी अपरे रङ्गद्वारमित्यवधेयम् नान्द्यनन्तरं कर्त्तव्यमाह पूर्व्वरङ्गमिति । काव्यं काव्यार्थम् आस्थापयेत् सभापूजादिपुरःसरं सूचयेत् मिश्रं दिव्यादिव्यम् तयोर्दिव्यादिव्ययोः वस्तुनः प्रथमोद्दिष्टत्वेन प्राधान्यात्तदेवादाय विवृणोति दिव्यं वस्त्विति ।

(छ) राम इति । गुरोः पितुः तद्भक्त्या रामभक्त्या प्रोत्सिक्ता उद्रिक्तदर्पाः ध्वस्ता विनाशिताः उत्तरवाक्यद्वये रामेणेतिकर्त्तृपदमूह्यं तेनादिनेत्यादिपदेन समासोक्त्या प्रस्तुत प्रशंसादेर्ग्रहणम् छायादिनेति चन्द्रहासचन्द्रप्रकाशः खड्गस्य कान्तिर्नवत्वादिज्योतिः शोभा

"द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात्।
आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः।"

अत्र हि समुद्रे वहितभङ्गमग्नोत्थिताया रत्नावल्या अनुकूलदैवलालितो वत्सराजगृहप्रवेशो यौगन्धरायणव्यापारमारभ्य रत्नावलीप्राप्तौ वीजम्। मुखं श्लेषादिना प्रस्तुतवृत्तान्तप्रतिपादको वाग्विशेषः। यथा।

"असादितप्रकटनिर्म्मलचन्द्रहासः
प्राप्तः शरत्समय एष विशुद्धकान्तः।
उत्खाय गाढ़तमसं घनकालमुग्रं
रामो दशास्यमिव सम्भृतबन्धुजीवः॥"

पात्रं यथा शाकुन्तले।

"तवास्मि गीतिरागेन हारिणा प्रसभं हृतः।
एष राजेव दुष्मन्तः सारङ्गेणातिरंहसा॥"

**रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः।
रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्त्तयेत्॥
ऋतुञ्च कञ्चित्प्रायेण भारतीं वृत्तिमाश्रितः।**

स स्थापकः। प्रायेणेति क्वचिदृतोरकीर्त्तनमपि। यथा रत्नावल्याम्। भारतीवृत्तिस्तु।

---

च। उत्खाय हत्वा तमो ध्वान्तमज्ञानञ्च घनकालं वर्षासमयं सम्भृताः पुष्पपूर्णा बन्धुजीवा बन्धुका यत्र पक्षे सम्भृतो बन्धुषु समरस्थहृष्टवानरेषु जीवो येन अत्र नायकनामसूचनात् पात्रसूचनमपि सम्भवति अस्य पात्रासङ्कीर्णोदाहरणं यथा अनर्घराघवे "यान्ति न्याये

**भारती संस्कृतप्रायो वाग्व्यापारो नराश्रयः ॥**

संस्कृतबहुलो वाक्प्रधानो व्यापारो भारती ।

**तस्याः प्ररोचना वीथी तथा प्रहसनामुखे ।**

**अङ्गान्यत्रोन्मुखीकारः प्रशंसातः प्ररोचना ॥**

प्रस्तुताभिनयेषु प्रशंसातः श्रोतॄणां प्रवृत्त्युन्मुखीकरणं प्ररोचना । यथा रत्नावल्याम् । (ज)

"श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोके हारि च वत्सराजचरितं नाट्ये च दक्षा वयम् ।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किं पुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः ॥"

वीथीप्रहसने वक्ष्येते ।

**नटी विदूषको वापि पारिपार्श्विक एव वा ।**

**सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥**

---

प्रवृत्तस्य तिर्य्यञ्चोऽपि सहायताम् । अपन्थानन्तु गच्छन्तं सोदरोऽपि विमुञ्चति" । अत्र वानराणां रामसाहाय्यं विभीषणेन रावणत्यागः श्लेषेण सूचितं सारङ्गेन हरिणेन रङ्गं रङ्गस्थं सामाजिकसमूहं प्रसाद्य प्रीणयित्वा । लोकैरिति बहुवचनमविवक्षितमादाय्यं वा तेन मद्यस्यापि लाभः रूपकस्य नाटकादेः । प्रसङ्गाद्भारतीं वृत्तिमाह भारतीति । तस्या भारत्याः अभिनयदर्शनादौ प्रवृत्त्युन्मुखीकरणं प्रवृत्त्यौपयिकेच्छाजननम् ।

(झ) श्रीहर्ष इति हारि मनोहरं पदं कारणम् आमुखमाह नटीति विदूषक उक्तलक्षणकः संलापं मिथ्याभाषणं स्वकार्य्योत्थैरिति स्वकार्य्यं पात्रप्रवेशस्तदुपयुक्तैरित्यर्थः । प्रस्तुताक्षेपिभिः प्रकृतसूचकैः । आमुखभेदानाह उद्घात्यक इति । पदानीति कुर्व्वाणतया ज्ञातो-

चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥

सूत्रधारसदृशत्वात् स्थापकोऽपि सूत्रधार उच्यते । तस्यानुचरः पारिपार्श्विकः । तस्मात् किञ्चिदूनो नटः ।

उद्घात्यकः कथोद्घातः प्रयोगातिशयस्तथा ।
प्रवर्त्तकावलगिते पञ्च प्रस्तावनाभिदाः ॥

तत्र ।

पदानि त्वगतार्थानि तदर्थगतये नराः ।
योजयन्ति पदैरन्यैः स उद्घात्यक उच्यते ॥

यथा मुद्राराक्षसे सूत्रः । (अ)

“क्रूरग्रहः स केतुश्चन्द्रं सम्पूर्णमण्डलमिदानीम् । अभिभवितुमिच्छति बलात् इति” । अनन्तरं नेपथ्ये “आः कः एष मयि जीवति सति चन्द्रगुप्तमभिभवितुमिच्छतीति ॥”

अत्रान्यार्थवन्त्यपि पदानि हृदिस्थार्थगत्या अर्थान्तरे सङ्क्रमय्य पात्रप्रवेशः ।

सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा ।
भवेत् पात्रप्रवेशश्चेत् कथोद्घातः स उच्यते ॥

---

ऽप्रतीतोऽभिप्रेतार्थो येभ्यस्तानि तदर्थगतयेऽभिप्रेतार्थबोधाय योजयन्ति अभिप्रेतार्थे संक्रमयन्ति अन्यैरभिप्रेतार्थदात्रप्रतिपादकैः ।

(अ) क्रूरोऽनिष्टफलदायी स प्रसिद्धः अत्र चन्द्रपदस्य चन्द्रगुप्तपदयोगेन क्रूरग्रहादिपदानामभिप्रेतार्थप्रत्ययो भवति । तथाहि क्रूरो

वाक्यं यथा रत्नावल्याम् । "द्वीपादन्यस्मादपीत्यादि" सूत्रधारेण पठिते । नेपथ्ये एवमेतत् कः सन्देहः । "द्वीपादन्यस्मादपीत्यादि" पठित्वा यौगन्धरायणस्य प्रवेशः । वाक्यार्धं यथा वेण्याम् । (ञ)

"निर्व्वाणवैरदहनाः प्रशमादरीणां
नन्दन्तु पाण्डुतनयाः सह माधवेन ।
रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः ॥"

इति सूत्रधारेण पठितस्य वाक्यस्यार्थं गृहीत्वा नेपथ्ये आः दुरात्मन् ! वृथा मङ्गलपाठक ! कथं स्वस्था भवन्तु मयि जीवति धार्त्तराष्ट्राः । ततः सूत्रधारो निष्क्रान्तः । भीमसेनस्य प्रवेशः ।

**यदि प्रयोग एकस्मिन् प्रयोगोऽन्यः प्रयुज्यते ।
तेन पात्रप्रवेशश्चेत् प्रयोगातिशयस्तदा ॥**

यथा कुन्दमालायाम् । "नेपथ्ये इत इतोऽवतरत्वार्य्या । सूत्रः । कोऽयं खलु आर्य्याह्वानेन सहायकं मे सम्पादयति । विलोक्य । कष्टमतिकरुणं वर्त्तते ।"

---

गृह आश्रयो यस्य स चन्द्रः चन्द्रगुप्तं सम्पूर्णं मण्डलं राज्यचक्रं यस्य अर्थवन्त्यपि अभिप्रेतार्थप्रतीतियोग्यान्यपि हृदिस्थार्थागत्या अभिप्रेतार्थप्रत्ययेन उपलक्षितानि समादाय कथयित्वा अस्य सूत्रधारवाक्यस्य ।

(ञ) निर्व्वाणेति अरीणां दुर्य्योधनादीनां प्रशमात् शान्त्यवलम्बात् । रक्तेनानुरागेण प्रसाधिता वशीकृता भूर्यैस्ते क्षतविग्रहा भग्नकलहाः

"लङ्केश्वरस्य भवने सुचिरं स्थितेति
रामेण लोकपरिवादभयाकुलेन ।
निर्वासितां जनपदादपि गर्भगुर्व्वीं
सीतां वनाय परिकर्षति लक्ष्मणोऽयम् ॥"

अत्र नृत्यप्रयोगार्थं स्वभार्य्याह्वानमिच्छता सूत्रधारेण "सीतां वनाय परिकर्षति लक्ष्मणोऽयमिति" सीतालक्ष्मणयोः प्रवेशं सूचयित्वा निष्क्रान्तेन स्वप्रयोगमतिशयान एव प्रयोगः प्रयोजितः ।

**कालं प्रवृत्तमाश्रित्य सूत्रधृग् यत्र वर्णयेत् ।**
**तदाश्रयश्च पात्रस्य प्रवेशस्तत्प्रवर्त्तकम् ॥**

यथा "आसादितेत्यादि" ततः प्रविशति यथा निर्दिष्टो रामः ॥ (८)

**यत्रैकत्र समावेशात् कार्य्यमन्यत्प्रसाध्यते ।**
**प्रयोगे खलु तज्ज्ञेयं नाम्नाऽवलगितं बुधैः ।**

यथा शाकुन्तले सूत्री नटीं प्रति "तवास्मि गीतिरागेणेत्यादि" ॥ ततो राज्ञः प्रवेशः ।

---

कुरुराजसुता धार्त्तराष्ट्राः द्वितीयार्थस्तु अरीणां शत्रूणां मरणात् रक्तैः रुधिरैः प्रसाधिता अलङ्कृता भूयैः क्षतविग्रहा विक्षतशरीराः स्वस्थाः पारलौकिकसुखेन हृष्टाः अत्र सूत्रधारवाक्यस्यकुरुराजसुत-पदार्थमादाय पात्रस्य भीमस्य प्रवेशः आर्य्याह्वानेन सूत्रधारभार्य्याह्वानेन प्रवृत्तं वर्त्तमानं तदाश्रयः प्रवृत्तकालवर्णनासूचितः यथा निर्दिष्टः प्रकटनिर्म्मलचन्द्रहासभरः ।

योज्यान्यत्र यथा लाभं वीथ्यङ्गानीतराण्यपि ।

अत्र आमुखे । उद्घात्यकावलगितयोरितराणि वीथ्यङ्गानि वक्ष्यमाणानि ॥ नखकुट्टस्तु ।

नेपथ्योक्तं श्रुतं तत्र त्वाकाशवचनं तथा ।
समाश्रित्यापि कर्त्तव्यमामुखं नाटकादिषु ॥
एषामामुखभेदानामेकं कञ्चित् प्रयोजयेत् ।
तेनार्थमथ पात्रं वा समाक्षिप्यैव सूत्रधृक् ॥
प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रयोजयेत् ।

वस्त्वितिवृत्तम् ।

इदं पुनर्वस्तु बुधैर्द्विविधं परिकल्प्यते ।
आधिकारिकमेकं स्यात् प्रासङ्गिकमथापरम् (ठ)
अधिकारः फले स्वाम्यमधिकारी च तत्प्रभुः ।
तस्येतिवृत्तं कविभिराधिकारिकमुच्यते ॥

फलं प्रधानफले । यथा बालरामायणे रामचरितम् ।

---

(ठ) एकत्रेति प्रयोग इत्यनेनान्वितम् । समावेशात् साहश्योद्भावनात् अन्यत् कार्य्यं पात्रप्रवेशरूपं प्रसाध्यते सूच्यते यथालाभं यथासम्भवं पञ्चस्वेव वीथ्यङ्गानि उद्घात्यकावलगितयोरेव तदितराणि एषां उद्घात्यकादीनां तेन प्रयुक्ता मुखभेदेन अर्थं वस्तु समाक्षिप्य सूचयित्वा ततः सूत्रधारगमनानन्तरम् । अधिकारिज्ञानं तावत् आधिकारिकज्ञानजनकम् ।

(ड) तत्राधिकारस्थानाधीनमित्यधिकारं निरूपयति अधिकार इति । तत्प्रभुः फलस्वाम्यवान् तस्याधिकारिणः प्रसङ्गेन निर्वृत्तं

अस्योपकरणार्थन्तु प्रासङ्गिकमितीष्यते ।

तस्याधिकारिकेतिवृत्तस्य उपकरणनिमित्तं यच्चरितं तत्प्रासङ्गिकम् । यथा सुग्रीवादिचरितम् ।

पताकास्थानकं योज्यं सुविचार्य्येह वस्तुनि ।

इह नाट्ये ।

यत्रार्थे चिन्तितेऽन्यस्मिन् तल्लिङ्गोऽन्यः प्रयुज्यते ।
आगन्तुकेन भावेन पताकास्थानकन्तु तत् ॥

तद्भेदानाह ।

सहसैवार्थसम्पत्तिर्गुणवत्युपचारतः ।
पताकास्थानकमिदं प्रथमं परिकीर्त्तितम् ॥

यथा रत्नावल्यां "वासवदत्तेयमिति" राजा यदा तत्कण्ठपाशं मोचयति तदा तदुक्त्या "सागरिकेयमिति" प्रत्यभिज्ञाय "कथं प्रिया मे सागरिका अलमलमतिमात्र-मित्यादि" फलरूपार्थसम्पत्तिः पूर्व्वापेक्षया उपचारातिशयाद् गुणवती उत्कृष्टा" ।

वचः सातिशयश्लिष्टं नानाबन्धसमाश्रयम् ।
पताकास्थानकमिदं द्वितीयं परिकीर्त्तितम् ॥(ड)

---

प्रासङ्गिकम् । पताकास्थानमाह यत्रेति । अर्थे प्रयोजने तल्लिङ्गस्तत्-सधर्मा प्रयुज्यते क्रियते आगन्तुकेन अनभिसंहितेन भावेन पदार्थेन सहसा अतर्कितकारणेन अर्थसम्पत्तिः प्रयोजनान्तरप्राप्तिः उपचा-रतः प्रीत्यनुकूलव्यापारात् ।

यथा वेण्यां सूत्रः ।

"रक्तप्रसाधितभुवः क्षतविग्रहाश्च
स्वस्था भवन्तु कुरुराजसुताः सभृत्याः" ॥

अत्र रक्तादीनां रुधिरशरीरार्थहेतुकश्लेषवशेन बीजार्थप्रतिपादनात् नेतृमङ्गलप्रतिपत्तौ सत्यां द्वितीयं पताकास्थानम्। (ढ)

**अर्थोपक्षेपकं यत्तु लीनं सविनयं भवेत् ।**
**श्लिष्टप्रत्युत्तरोपेतं तृतीयमिदमुच्यते ॥**

---

(ढ) वासवदत्तेयमितीति वासवदत्तारूपधारिणी सागरिका सङ्केतं प्राप्ता वासवदत्तया तद्विज्ञातमिति सागरिका वासवदत्तापरिभवभयेन गले पाशं दत्त्वा तत्रैव मर्त्तुमारब्धा इति राज्ञः सागरिकायां वासवदत्ताभ्रमः तदुक्त्या सागरिकोक्त्या अत्र वासवदत्तायाः अनुनयपूर्वकं सुरतं राज्ञोऽभिप्रेतं तदन्यस्य सागरिकाया अनुनयपूर्वकसुरतस्यानुष्ठानम् वासवदत्ता रुष्टेति विकलचित्तेन राज्ञा सागरिकाप्राप्तिरूपं कारणं न तर्कितं फलं सागरिकासुरतं पूर्व्वापेक्षया पूर्वसुरतस्वरूपापेक्षया नानावस्थो विविधविशेषणसम्बन्धः तत्समाश्रयं तद्विषयकम् रक्तेति सूत्रधारवचनमिदं रोषाङ्कीयेनानुक्तम् अत्र सामान्यलक्षणं सङ्गमयति अत्रेति रक्तादीनां रक्तादिपदानां आदिना प्रसाधितविग्रहपदयोर्ग्रहणम् रुधिरशरीरेति अनयोर्मध्ये अन्वितेति बोध्यम् भीमक्रोधोपचितो युधिष्ठिरोत्साहो बीजम् तस्यार्थः प्रयोजनं शत्रुमारणं प्रधानफलमिति यावत् तस्य प्रतिपादनात् सूचनात् नेतृमङ्गलप्रतिपत्तौ नायकमङ्गलानुष्ठाने तथा च प्रतिनायकमङ्गले चिन्तिते कृमतिसंहितेन प्रधानफलसूचनेन नायकमङ्गलानुष्ठानमिति पताकास्थानकमिदमिति भावः ।

लीनमव्यक्तार्थं श्लिष्टेन सम्बन्धयोग्येनाभिप्रायान्तर-प्रयुक्तेन प्रत्युत्तरेणोपेतं सविनयं विशेषनिश्चयप्राप्त्या सहितं सम्पद्यते यत्तत्तृतीयं पताकास्थानम्। यथा वेण्यां द्वितीयेऽङ्के।

कञ्चुकी। देव! भग्नं भग्नम्। राजा। केन? कञ्चु। भीमेन। राजा। कस्य कञ्चु। भवतः। राजा। आः! किं प्रलपसि। कञ्चु। सभयं देव! ननु ब्रवीमि भग्नं भीमेन भवतः। राजा। धिक्! वृद्धापसद! कोऽयमद्य ते व्यामोहः। कञ्चु। देव! न व्यामोहः सत्यमेव।

"भग्नं भीमेन भवतो मरुता रथकेतनम्।
पातितं किङ्किणीजालवद्धाक्रन्दमिव क्षितौ"॥

अत्र दुर्य्योधनोरुभङ्गरूपप्रस्तुतसङ्क्रान्तमर्थोपक्षेपणम्।

**द्व्यर्थो वचनविन्यासः सुश्लिष्टः काव्ययोजितः।
प्रधानार्थान्तरापेक्षी पताकास्थानकं परम्॥(ण)**

---

(ण) अर्थोपक्षेपकमिति प्रस्तुत प्रयोजनसूचनं सम्बन्धयोग्येन प्रस्तुतान्वयोपयुक्तेन अभिप्रायान्तरप्रयुक्तेन अप्रस्तुतबोधाभिप्रायेण प्रयुक्तेन भग्नमिति कर्त्रादीनामव्यक्तत्वं भीमेनेति भवत इति च प्रस्तुते ऊरुभङ्गेऽप्यन्वययोग्यं मरुतेत्यादिविशेषनिश्चयः अत्र रथकेतनभङ्ग-निवेदनमभिमतं ऊरुभङ्गनिवेदनमुपपन्नम् एतदेवोपपादयति दुर्य्योध-नेति। संक्रान्तं पर्य्यवसन्नं सुश्लिष्टः सुसम्बद्धः काव्ययोजितो नाटकव्या-पारान्तरतया काव्यप्रयोगयोग्यः प्रधानं फलमेव अर्थान्तरं तदपेक्षी-तत्सूचकः।

यथा रत्नावल्याम्।

"उद्दामोत्कलिकां विपाण्डररुचिं प्रारब्धजृम्भां क्षणा-
दायासं श्वसनोद्गमैरविरलैरातन्वतीमात्मनः।
अद्योद्यानलतामिमां समदनां नारीमिवान्यां ध्रुवं
पश्यन् कोपविपाटलद्युतिमुखं देव्याः करिष्याम्यहम्"॥

अत्र भाव्यर्थः सूचितः। एतानि चत्वारि पताकास्थानकानि क्वचिन्मङ्गलार्थं क्वचिदमङ्गलार्थमपि सर्व्वसन्धिषु भवन्ति। काव्यकर्तुरिच्छावशाद्भूयोऽपि भवन्ति। यत्पुनः केनचिदुक्तं "मुखसन्धिमारभ्य सन्धिचतुष्टये क्रमेण भवन्तीति"। तदन्ये न मन्यन्ते। एषा मत्यन्तमुपादेयानामनियमेन सर्व्वत्रापि सर्व्वेषामपि भवितुं युक्तत्वात्।

**यत् स्यादनुचितं वस्तु नायकस्य रसस्य वा।
विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेत्॥**

---

(त) उद्दामेति उत्कटाभिरुद्गताभिरुत्कलिकाभिर्विपाण्डररुचम् उत्कटोत्कण्ठया विपाण्डररुचं 'उत्कण्ठोत्कलिके समे इत्यमरः' प्रारब्धजृम्भां प्राप्तप्रायप्रकाशां पक्षे विरहक्षीणतया लब्धजृम्भां आयासमितस्ततो विक्षेपः खेदञ्च श्वसनस्य वायोर्निश्वासस्य च उद्गमैरविरलैर्घनैरातन्वतीं कुर्व्वन्तीं सूचयन्तीञ्च मदनेन वृक्षविशेषेण कामेन च सहितां देव्या वासवदत्तायाः यथा विरहक्लिष्टसागरिकादर्शनेन तस्याः क्रोधस्तथा उद्यानदर्शनकृतकालविलम्बेनापीति भावः। अत्र भावी विरहक्लिष्टसागरिकासङ्गमः प्रधानमर्थः सूचितः। द्वितीये श्लेषवशेनैव प्रधानार्थसूचनं अत्र तु न तथेति भेदः। अत्र सागरिकाप्रसादे चिन्तिते देव्याः प्रसादोऽनुष्ठेयप्राय इति सामान्यलक्षणगमनम्। अन्यथा उचितं

अनुचितमितिवृत्तं यथा रामस्य छद्मना बालिवधः । तच्च उदात्तराघवे नोक्तमेव । सुग्रीववीरचरिते तु बाली रामवधार्थं मागतो रामेण हत इत्यन्यथा कृतः ।

अङ्केष्वदर्शनीया या वक्तव्यैव च सम्मता ।
या च स्याद्वर्षपर्य्यन्तं कथा दिनद्वयादिजा ॥
अन्या च विस्तरा सूच्या सार्थोपक्षेपकैर्बुधैः ।

अङ्केषु अदर्शनीया कथा युद्धादिकथा ।

वर्षादूर्द्ध्वन्तु यद्वस्तु तत्स्याद्वर्षादधोभवम् ॥ (त)

उक्तं हि मुनिना ।

"अङ्कच्छेदे कार्य्यं मासकृतं वर्षसञ्चितं वापि ।
तत्सर्व्वं कर्त्तव्यं वर्षादूर्द्ध्वं न तु कदाचित्" ॥

एवञ्च चतुर्द्दशवर्षव्यापिन्यपि रामवनवासे ये ये विराधवधादयः कथांशास्ते ते वर्षवर्षावयवदिनयुग्मादीनामेकतमेन सूचनीया न विरुद्धाः ।

---

यथा भवति तथा पुराणादिविरुद्धमपि स्वेच्छया कल्पयेत् । अदर्शनीया निषिद्धा वक्तव्यैव अवश्यं वक्तव्या । अनावश्यकत्वे सम्मता वक्तुरभीष्टा च दिनद्वयादिजा दिनद्वयादिनिर्वर्त्या नानेकदिननिर्वर्त्त्यकथया सम्प्रयोजित इत्यनेन । तस्यां निषिद्धत्वे वर्षपर्य्यन्तमिति नियमार्थम् पृथगुपादानम् अन्या एकदिननिर्वर्त्त्या विस्तरा अतिबहुला तस्या अपि नातिविस्तर इत्यनेनाङ्के निषिद्धत्वात् । अर्थोपक्षेपकैर्वक्ष्यमाणविष्कम्भकादिभिः । वर्षादूर्द्ध्वं वर्षातिरिक्तकालनिर्वर्त्त्यं यद्वस्तु तद्वर्षादधोभवं वर्षाभ्यन्तरनिर्वर्त्त्यं यथा स्यात्तथा कल्पयेदित्यर्थः ।

(थ) अङ्कच्छेदे विष्कम्भकादौ एवञ्च वर्षादूर्द्ध्वमिति प्रतिप्रसवा-

द्दिनावसाने कार्य्यं यद्दिनेनैवोपपद्यते ।
अर्थोपक्षेपकैर्वाच्यमङ्कच्छेदं विधाय तत् ॥

के ते अर्थोपक्षेपका इत्याकाङ्क्षायामाह ।

अर्थोपक्षेपकाः पञ्च विष्कम्भकप्रवेशकौ ।
चूलिकाङ्कावतारोऽथ स्यादङ्कमुखमित्यपि ॥
वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः ।
सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः ।
मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः ।
शुद्धः स्यात् स तु संकीर्णो नीचमध्यमकल्पितः ॥

तत्र शुद्धो यथा । मालतीमाधवे श्मशाने कपालकुण्डला । सङ्कीर्णो यथा रामाभिनन्दे क्षपणककापालिकौ । अथ प्रवेशकः । (२)

प्रवेशकोऽनुदात्तोक्त्या नीचपात्रप्रयोजितः ।
अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कम्भके यथा ॥

---

भिधाने च । दिनावसानेति एकदिननिर्वर्त्त्यमपि यद्दिनावसानकार्य्यं समग्रदिननिर्वर्त्त्यं तदपि विष्कम्भकादिभिर्वाच्यमित्यर्थः । वृत्तानामतीतानां वर्त्तिष्यमाणानामागामिनां कथांशानामवान्तरार्थानां निदर्शको ज्ञापकः रूपकांशविशेषः । मध्येन मध्यमेन कपालकुण्डलादिविलक्षणपात्रदर्शनेनैव तत्प्रयुक्तविष्कम्भकवैलक्षण्यदर्शनं प्रतीतिभावः ।

(२) अनुदात्तोक्त्या नीचोक्त्या नीचेनैव नीचाभ्यां वा पात्राभ्यां

अङ्कद्वयस्यान्तरिति प्रथमाङ्केऽस्य प्रतिषेधश्च। यथा-वेण्यां अश्वत्थामाङ्के राक्षसमिथुनम्। अथ चूलिका।

**अन्तर्जवनिकासंस्थैः सूचनार्थस्य चूलिका।**

यथा वीरचरिते चतुर्थाङ्कस्यादौ। "नेपथ्ये भो भो वैमानिकाः! प्रवर्त्तन्तां रङ्गमङ्गलानीत्यादि"। "रामेण परशुरामो जित इति" नेपथ्ये पात्रैः सूचितम्। (द)

अथाङ्कावतारः।

**अङ्कान्ते सूचितः पात्रैस्तदङ्कस्याविभागतः।**
**यत्राङ्कोऽवतरत्येषोऽङ्कावतार इति स्मृतः॥**

यथाभिज्ञाने पञ्चमाङ्के पात्रैः सूचितः षष्ठाङ्कस्तदङ्गस्याङ्गविशेष इवावतीर्णः। अथाङ्कमुखम्।

**यत्र स्यादङ्क एकस्मिन्नङ्कानां सूचनाऽखिला।**
**तदङ्कमुखमित्याहुर्बीजार्थख्यापकञ्च तत्॥**

यथा मालतीमाधवे। प्रथमाङ्कादौ कामन्दक्यवलोकिते

---

प्रयोजितः। एवकारेण सङ्कीर्णविष्कम्भकव्युदासः शेषं इतरवर्त्तिष्यमाण इत्यादिविशेषणं विष्कम्भकवदत्र ज्ञेयम्। प्रथमाङ्के कर्त्तव्ये प्रथमाङ्कादावित्यर्थः। अस्य प्रवेशकस्य अत्रापि वैलक्षण्यदर्शनेन विष्कम्भकादस्य वैलक्षण्यं दर्शितम्। जवनिका नटानां वेशरचनास्थानम्। अङ्कानां अङ्कनिबन्धनीयवस्तूनां यत् केवलं बीजार्थस्य ख्यापनं सूचनं तदङ्कमुखम्। भूमिका वेशरचना परिक्षिप्तेति आकाङ्क्षेत्यर्थः।

(भ) प्रकारान्तरेणाङ्कमुखमाह अङ्कान्तेति छिन्नाङ्कस्य भिन्नाङ्कस्य विष्कम्भकस्य। प्रथमाङ्कादावपि कर्त्तव्यमाह अपेक्षितमिति आका-

भूरिवसुप्रभृतीनां भाविभूमिकानां परिक्षिप्तकथाप्रबन्धस्य च प्रसङ्गात् सन्निवेशं सूचितवत्यौ ।

**अङ्कान्तपात्रैर्वाङ्कास्यं छिन्नाङ्कस्यार्थसूचनात् ।**

अङ्कान्तपात्रैरङ्कान्ते प्रविष्टैः पात्रैः । यथा वीरचरिते द्वितीयाङ्कान्ते । "प्रविश्य सुमन्त्रः । भगवन्तौ वशिष्ठविश्वामित्रौ भवतः सभार्गवानाह्वयतः । इतरे । क्व भगवन्तौ । सुमन्त्रः । महाराजदशरथस्यान्तिके । इतरे । तत्तत्रैव गच्छामः" ॥ इत्यङ्कपरिसमाप्तौ "ततः प्रविशन्त्युपविष्टा वशिष्ठविश्वामित्रपरशुरामा इत्यत्र" पूर्व्वाङ्कान्त एव प्रविष्टेन सुमन्त्रपात्रेण शतानन्दजनककथाविच्छेदे उत्तराङ्कमुखसूचनादङ्कास्यमिति । एतच्च धनिकमतानुसारेणोक्तम् । अन्ये तु "अङ्कावतारेणैव इदं गतार्थम्" इत्याहुः ।

**अपेक्षितं परित्यज्य नीरसं वस्तु विस्तरम् ।**
**यदा सन्दर्शयेच्छेषमामुखानन्तरं तदा ॥**
**कार्य्यो विष्कम्भको नाट्य आमुखाक्षिप्तपात्रकः ।**

यथा रत्नावल्याम् । यौगन्धरायणप्रयोजितः ।

**यदा तु सरसं वस्तु मूलादेव प्रवर्त्तते ।**
**आदावेव तदाङ्कः स्यादामुखाक्षेपसंश्रयः ॥**

यथा शाकुन्तले ।

---

-ङ्कितमित्यर्थः । परित्यज्य विच्छिद्य शेषं सरसं वस्तु आमुखानान्तरं प्रस्तावनानन्तरमेव आमुखाक्षेपसंश्रयः आमुखसूचितः विष्कम्भकादौ-

**विष्कम्भकाद्यैरपि नो वधो वाच्योऽधिकारिणः।**
**अन्योन्येन तिरोधानं न कुर्य्याद्रसवस्तुनोः॥**

रसः शृङ्गारादिः। यदुक्तं धनिकेन।

'न चातिरसतो वस्तु दूरं विच्छिन्नतां नयेत्।

रसं वा न तिरोदध्याद् वस्त्वलङ्कारलक्षणैरिति"॥

**वीजं विन्दुः पताका च प्रकरी कार्य्यमेव च।**
**अर्थप्रकृतयः पञ्च ज्ञात्वा योज्या यथाविधि॥**

अर्थप्रकृतयः प्रयोजनसिद्धिहेतवः तत्र वीजम्। (ध)

**अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति।**
**फलस्य प्रथमो हेतुर्वीजं तदभिधीयते॥**

यथा रत्नावल्यां वत्सराजस्य रत्नावलीप्राप्तिहेतुर्दैवानुकूल्य-लालितो यौगन्धरायणव्यापारः॥ यथा वा वेण्यां द्रौपदी-केशसंयमनहेतुर्भीमसेनक्रोधोपचितो युधिष्ठिरोत्साहः।

**अवान्तरार्थविच्छेदे विन्दुरच्छेदकारणम्।**

यथा रत्नावल्यामनङ्गपूजापरिसमाप्तौ कथार्थविच्छेदे सति उदयनस्येन्दोरिवोद्वीच्यते इति सागरिका श्रुत्वा

---

रपि इत्यपिना अङ्केरपीत्यर्थः। अधिकारिणः प्रधानफलप्रभोः वस्त्वल-ङ्कारलक्षणैः वस्त्वलङ्कारस्वरूपैः।

(न) बहुधाविसर्पतीति सहकारियोगेनोपचितं सत् विविधावा-न्तरकार्य्याणि जनयति। फलस्य प्रधानफलस्य प्रथमः प्रधानं दैवानु-कूल्यलालितो दैवानुगुण्योपचितः द्रौपदीकेशसंयमनं प्रधानफलं यत्नु-

सहर्षम् । कथं एसो सो उदअणणरिन्दो इत्यादिरवान्त-रार्थहेतुः ।

**व्यापि प्रासङ्गिकं वृत्तं पताकेत्यभिधीयते ॥**

यथा रामचरिते सुग्रीवादेर्वेण्यां भीमादेः शाकुन्तले विदूषकस्य चरितम् । (न)

**पताका नायकस्य स्यान्न स्वकीयफलान्तरम् ।**
**गर्भे सन्धौ विमर्षे वा निर्वाहस्तस्य जायते ॥**

यथा सुग्रीवादेराज्यप्राप्त्यादिः । यत्तु मुनिनोक्तम् ।

"आगर्भादाविमर्षाद्वा पताका विनिवर्त्तते" इति ।

तत्र "पताकेति पताकानायकफलं निर्व्वहणपर्य्यन्तमपि पताकायाः प्रवृत्तिदर्शनादिति" व्याख्यातमभिनवगुप्त-पादैः । (प)

---

बधादीन्यवान्तरफलानि । उद्भेदकारणं अनन्तरार्थोत्थापनहेतुः कथमि-त्यादि कथमयं स उदयननरेन्द्र इति मम् । व्यापि निर्वहणपर्य्यन्त-स्थायि पातान्तरनिष्पाद्यं प्रधानफलसाधनं प्रासङ्गिकं वृत्तं कार्य्यं ।

(प) व्यापीत्यस्य व्यावृत्तिमाह पताकेति पताकाया नायकस्य स्वा-मिनः स्वकीयं स्वमात्रोपकारि यत् फलान्तरं न पताकेत्यनुषङ्गेनान्वयः । अस्य व्यापकत्वाभावमुपपादयति गर्भे इति सन्धाविति काकाक्षिन्यायेन उभयत्रान्वेति निर्वाहः समाप्तिः तस्य फलान्तरस्य फलान्तरे मुनेः पताका-पदप्रयोगस्याभिनवगुप्ताचार्य्यव्याख्यानेन गौणत्वमुपपाद्य स्वोक्तविरोधं परिहर्त्तुमाह यत्त्विति । तत्र मुनिवचने पताका पताकापदं गौणया वृत्त्या नायकफलं पताकानायकस्य फलान्तरपरं । गौणत्वे हेतुमाह निर्वहणेति ।

प्रासङ्गिकं प्रदेशस्थं चरितं प्रकरी मता।

यथा कुलपत्यङ्के रावणस्य जटायुसंवादः।

प्रकरी नायकस्य स्यान्न स्वकीयं फलान्तरम्।
अपेक्षितन्तु यत्साध्यमारम्भो यन्निबन्धनः॥
समापन्नन्तु यत्सिद्धौ तत्कार्य्यमिति सम्मतम्।

यथा रामचरिते रावणबधः।

अवस्थाः पञ्च कार्य्यस्य प्रारब्धस्य फलार्थिभिः।
आरम्भयत्नप्राप्त्याशानियताप्तिफलागमाः॥

तत्र।

भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये।

यथा रत्नावल्याम्। रत्नावल्यन्तःपुरनिवेशार्थं यौगन्धरायणस्यौत्सुक्यम्। एवं नायकनायिकादीनामप्यौत्सुक्यमाकरेषु बोद्धव्यम्।

प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः॥(फ)

---

(फ) प्रकरीमाह प्रासङ्गिकमिति प्रदेशस्थं एकदेशवृत्ति। प्रासङ्गिकपदव्यावृत्तिमाह प्रकरीति नायकस्य प्रकरीस्वामिनः स्वकीयं फलान्तरं प्रकृतावनुयोगि न प्रकरीत्यनुषङ्गेनान्वयः। यथा जटायोर्मोक्षप्राप्त्यादि कार्य्यमाह अपेक्षितमिति आकाङ्क्षितं नतु प्रासङ्गिकमित्यर्थः। आरम्भ उपाये प्रथमप्रवृत्तिः। यन्निबन्धनः यद्दृष्टाप्रयोज्यः समापन्नं सामग्रीसमवधानं अवस्था अङ्गानि औत्सुक्यमुत्कटरागः नायकस्य नायिकादयश्चेति विग्रहः अतो नैकशेषः।

यथा रत्नावल्याम् । "तहवि ण अत्थि अस्सो दंसणवा-ओत्ति जधा तधा आलिहिअ जधा समीहिदं करइस्सं" ।

इत्यादिना प्रतिपादितो रत्नावल्याश्चित्रलेखनादिर्वत्सराजसङ्गमोपायः । यथा च रामचरिते समुद्रबन्धनादिः

**उपायापायशङ्काभ्यां प्राप्त्याशा प्राप्तिसम्भवः ।**

यथा रत्नावल्यां तृतीयेऽङ्के । वेशपरिवर्त्तनाभिसरणादेः सङ्गमोपायाद्वासवदत्तालक्षणापायशङ्कया च अनिर्द्धारितैकान्तसङ्गमरूपफलप्राप्तिः प्रत्याशा । एवमन्यत्र ।

**अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चिता ।**

अपायाभावान्निर्धारितैकान्तफलप्राप्तिर्नियताप्तिः । यथा रत्नावल्याम् । "राजा । देवीप्रसादनं त्यक्त्वा नान्यमत्रोपायं पश्यामीति" । देवीलक्षणापायस्य प्रसादनेन निवारणान्नियतफलप्राप्तिः सूचिता ।

**सावस्था फलयोगः स्याद्यः समग्रफलोदयः ॥**

(क) यथा रत्नावल्यां रत्नावलीलाभचक्रवर्त्तित्वलक्षणफलान्तरलाभसहितः एवमन्यत्र । (ब)

---

(ब) तहबीति तथापि नास्त्यन्यो दर्शनोपाय इति यथा तथा आलिख्य यथा समीहितं करिष्यामीति सं । उपायस्य अपायस्य प्रतिबन्धकस्य शङ्का च ताभ्यां प्राप्तेः फलप्राप्तेः सम्भवः सम्भावना संशय इति यावत् । सावस्थेति समग्रस्य चानेकफलस्य य उदयः सा फलप्रयोगः फलागमो नामावस्था अन्यत्र वीरचरितादौ सीतालाभादिसहितो रावणवधादिः ।

यथासङ्ख्यमवस्थाभिराभियोगात्तु पञ्चभिः ।
पञ्चधैवेतिवृत्तस्य भागाः स्युः पञ्च सन्धयः ॥

तल्लक्षणमाह ।

अन्तरैकार्थसम्बन्धः सन्धिरेकान्वये सति ।

एकेन प्रयोजनेनान्वितानां कथांशानामवान्तरैकप्रयोजनसम्बन्धः सन्धिः । तद्भेदानाह ।

मुखं प्रतिमुखं गर्भो विमर्श उपसंहृतिः ।
इति पञ्चास्य भेदाः स्युः क्रमाल्लक्षणमुच्यते ॥

यथोद्देशं लक्षणमाह ।

यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा ।
प्रारम्भेण समायुक्ता तन्मुखं परिकीर्त्तितम् ॥

यथा रत्नावल्यां प्रथमेऽङ्के ।

फलप्रधानोपायस्य मुखसन्धिनिवेशिनः ।
लक्ष्यालक्ष्य इवोद्भेदो यत्र प्रतिमुखञ्च तत् ॥

यथा रत्नावल्यां द्वितीयेऽङ्के वत्सराजसागरिकासमागमहेतोरनुरागबीजस्य प्रथमाङ्कोपक्षिप्तस्य सुसङ्गताविदूषकाभ्यां ज्ञायमानतया किञ्चिल्लक्ष्यस्य वासवदत्तया चित्रफलकवृत्तान्तेन किञ्चिदुन्नीयमानेऽस्योद्भेदरूप उद्भेदः ॥

---

(भ) सन्धिमाह यथासंख्यमिति आभिरनन्तरोक्ताभिः अवस्थाभिः क्रमात् उद्देशक्रमात् अर्थो वस्तु रसः शृङ्गारादिः तयोः सम्भवो व्यञ्जनं यत्र । लक्ष्यालक्ष्य इव किञ्चिल्लक्ष्य इत्यर्थः । उद्भेद उद्देशः अनु-

**फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्च न ।**
**गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान्मुहुः ॥**

फलस्य गर्भीकरणाद्गर्भः ॥ यथा रत्नावल्यां द्वितीयेऽङ्के सुसङ्गता । "सहि ! अदक्खिणा दानिसि तुमं जा एवं भट्टिणा हत्थेण गहिदावि कोवं ण मुञ्चसीत्यादौ" समुद्भेदः । पुनर्व्वासवदत्ताप्रवेशे ह्रासः । तृतियेऽङ्के "तद्वार्त्तान्वेषणाय गतः कथञ्चिरयति वसन्तक" इत्यन्वेषणम् । (भ) विदू । ही ही भो ! कोसम्बीरज्जलम्भेणावि ण तादिसो पिअवअस्सस्स परितोसो जातिसो मम सआसादो पियवअणं सुणिअ भविस्सदि इत्यादौ" । उद्भेदः । पुनरपि वासवदत्ताप्रत्यभिज्ञानात् ह्रासः । सागरिकायाः सङ्केतस्थानगमने अन्वेषनम् । पुनर्लतापाशकरणे उद्भेदः । अथ विमर्शः ।

**यत्र मुख्यफलोपाय उद्भिन्नो गर्भतोऽधिकः ।**
**शापाद्यैः सान्तरायश्च स विमर्ष इति स्मृतः ॥**

---

रागरूपबीजस्य सुसंगता सागरिकाया वयस्या प्रागुद्भिन्नस्य प्रतिमुखो दिष्टस्य ह्रासस्तिरोभावः । सहीति सखि अदक्षिणेदानीमसि त्वं या एवं भर्त्रा हस्तेन गृहीतापि कोपं न मुञ्चसीति समः ।

(भ) ही हीति कौशाम्बीराज्यलाभेनापि न तादृशः प्रियवयस्यस्य हृदयपरितोषो यादृशो मम सकाशादस्य प्रियवचनं श्रुत्वा भविष्यतीति समः । शापाद्यैरित्याद्यपदेन भयादिग्रहणम् । सान्तरायो-विघ्नान्वितः अनेन सान्तरायो यथा रत्नावल्यां सागरिकासङ्गमोपायो-

यथा शाकुन्तले चतुर्थाङ्कादौ। "अनुसूया। प्रिअंवदे जइवि गान्धव्वेण विवाहेण णिव्वित्तकल्लाणा पियसही सउन्तला तधावि अणुरूअभत्तिभाइणी सम्वुत्तत्ति णिव्वुदं मे हिअअं"। इत्यत आरभ्य सप्तमाङ्कोपक्षिप्तात् प्रागर्थ-सञ्चयः शकुन्तलाविस्मरणरूपविघ्नालिङ्गितः। अथ निर्व्वहणम्।

**बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम्।**
**एकार्थमुपनीयन्ते यत्र निर्व्वहणं हि तत्॥**

यथा वेण्याम्। "कञ्चुकी। उपसृत्य सहर्षं महाराज! वर्द्धसे। अयं खलु भीमसेनो दुर्य्योधनक्षतजारुणीकृतसर्वशरीरो दुर्लक्ष्यव्यक्तिः"। इत्यादिना द्रौपदीकेशसंयमनादिमुखस-न्ध्यादिवीजानां निजनिजस्थानोपक्षिप्तानामेकार्थयोज-नम्। यथा वा शाकुन्तले सप्तमाङ्के। शकुन्तलाभिज्ञाना-दुत्तरोऽर्थराशिः। एषामङ्गान्याह। (म)

---

वत्सराजानुरागो वासवदत्ताभयेनालिङ्गितः। प्रिअंवदे इति प्रियम्वदे यद्यपि गान्धर्व्वेण (विवाहविधिना निर्वृत्तकल्याणा प्रियसखी शकुन्तला अनुरूपभर्तृभागिनी संवृत्ता तथापि मे न निर्वृतं हृदयमिति शं। मुखादीत्यादिना प्रतिमुखगर्भविमर्षाणां ग्रहणम् मुखादयोऽर्था इति दृश्यभागा विप्रकीर्णा उपक्षिप्ताः यथायथं स्वस्वस्थाने। एकार्थमेक-प्रयोजनं उपनीयन्ते युज्यन्ते ऐक्यार्थमितिपाठे एकवाक्यत्वार्थमुप-नीयन्ते प्रतिपाद्यन्ते इत्यर्थः। मुखसन्ध्यादयश्च वीजश्चेति विग्रहः। एषां मुखादीनाम्।

**उपक्षेपः परिकरः परिन्यासो विलोभनम् ।**
**युक्तिः प्राप्तिः समाधानं विधानं परिभावना ॥**
**उद्भेदः करणं भेद एतान्यङ्गानि वै मुखे ।**

यथोद्देशं लक्षणमाह ।

**काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः ॥**

काव्यार्थ इतिवृत्तलक्षणप्रस्तुताभिधेयः । यथा वेण्यां भीमः ।

"लाक्षागृहानलविषान्नसभाप्रवेशैः
प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्य पाण्डववधूपरिधानकेशान्
स्वस्था भवन्ति मयि जीवति धार्त्तराष्ट्राः" ॥

**समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः ।**

यथा तत्रैव ।

"प्रवृद्धं यद्वैरं मम खलु शिशोरेव कुरुभि-
र्न तत्रार्य्यो हेतुर्न भवति किरीटी न च युवाम् ।
जरासन्धस्योरःस्थलमिव विरूढं पुनरपि
क्रुधा भीमः सन्धिं विघटयति यूयं घटयत" ॥

**तन्निष्पत्तिः परिन्यासः । (य)**

---

(य) द्वादशमुखसन्ध्यङ्गान्याह उपक्षेप इति । समुत्पत्तिः संक्षेपेणोपक्षेपनम् क्वचित् समुत्पत्तिरितिपाठः । लाक्षेत्यादि अत्र वैरप्रकाशनेनात्मसम्भावनया च वैरोद्धारप्रकारस्येति वृत्तस्य सूचनं बाहुल्यमतिशयेन सूचनम् । मम भीमस्य क्रुधा शिशुत्वेनात्मनिर्द्देशः आर्य्यो युधिष्ठिरः युवां नकुलसहदेवौ विरूढं निःसितम् विशालस्य अत्र

यथा तत्रैव ।

"चञ्चद्भुजभ्रमितचण्डगदाभिघात-
संचूर्णितोरुयुगलस्य सुयोधनस्य ।
स्त्यानावनद्धघनशोणितशोणपाणि-
रुत्तंसयिष्यति कचांस्तव देवी भीमः" ॥

(१) अत्र उपक्षेपो नाम इतिवृत्तलक्षणस्य काव्याभिधेयस्य सङ्क्षेपेनोपक्षेपणमात्रम् । परिकरस्तस्यैव बहुलीकरणम् । परिन्यासस्ततोऽपि निश्चयापत्तिरूपतया परितो हृदये न्यसनमित्येषां भेदः । एतानि चाङ्गानि उक्तेनैव पौर्व्वापर्य्येण भवन्ति । अङ्गान्तराणि त्वन्यथापि ।

## गुणाख्यानं विलोभनम् ।

यथा । तत्रैव द्रौपदी । "णाध ! किं दुक्करं तए परिकुविदेण" । यथा वा मम चन्द्रकलायां चन्द्रकला वर्णने । "सेयं तारुण्यस्य विलास इत्यादि" । यत्तु श. कुन्तलादिषु "ग्रीवाभङ्गाभिराममित्यादि" मृगादिगुणवर्णनं तद्वीजार्थसम्बन्धाभावान्न सन्ध्यङ्गम् । एवमङ्गान्तराणामप्यूह्यम् ।

## सम्प्रधारणमर्थानां युक्तिः ।

---

सन्धिविघटनेन वैरोद्धरणप्रकारस्याधिकसूचनम् अस्याधिकसूचितस्य निष्पत्तिर्निश्चयापत्तिः ।

(२) स्त्यानेति स्त्यानेन समूहेन अवनद्धं सम्बद्धं यद्घनं निविड़ं शोणितं तेन शोणः पाणिर्यस्य सः उत्तंसयिष्यति विभूषयिष्यति । आत्तात्यन्तसूचितस्य निश्चयापादनम् उपक्षेपादीनां त्रयाणां भेदं

यथावेण्यां सहदेवो भीमं प्रति। "आर्य्य ! किं महाराजसन्देशोऽव्युत्पन्न एवार्य्येण गृहीत इति" अतः प्रभृति यावद्भीमवचनम् ।

युष्मान् ह्रेपयति क्रोधाल्लोके शत्रुकुलक्षयः ।
न लज्जयति दाराणां सभायां केशकर्षणमिति" ॥

**प्राप्तिः सुखागमः । (ख)**

यथा तत्रैव ।

"मथ्नामि कौरवशतं समरे न कोपात्"

इत्यादि द्रौपदी श्रुत्वा सहर्षम् । "णाध ! अस्सुदपुव्वं क्खु एदं वअनं ता पुणो पुणो भण॥

**बीजस्य गमनं यत्तु तत् समाधानमुच्यते ।**

यथा तत्रैव । नेपथ्ये भो भो ! विराटद्रुपदप्रभृतयः ! श्रूयताम्" ।

"यत्सत्यव्रतभङ्गभीरुमनसा यत्नेन मन्दीकृतं
यद्विस्मर्त्तुमपीहितं शमवता शान्तिं कुलस्येच्छता ।
तद्द्यूतारणिसम्भृतं नृपसुताकेशाम्बराकर्षणैः
क्रोधज्योतिरिदं महत्कुरुवने यौधिष्ठिरं जृम्भते' ॥

---

ह्रेपयति अत्रेत्यादिना किमतिदुष्करं त्वया परिकुपितेनेति सम् । न्यासः प्रकाशः बीजार्थस्य कार्य्यस्य एवमङ्गान्तराणामिति बीजार्थसम्बन्धेऽङ्गत्वं नान्यथेत्यर्थः । युक्तिः कर्त्तव्यत्वनिश्चयः अव्युत्पन्नोऽविचार्य्यः ह्रेपयति लज्जयति ।

( ख ) नाथेति नाथ ! अश्रुतपूर्वं खल्विदं वचनं तत्पुनः पुनर्भण इति सं । आगमनं प्रधाननायकाभिमतत्वेन ज्ञापनम् द्युतमत्तक्रीड़ा

अत्र "सुस्था भवन्ति मयि जीवतीति" आदिबीजस्य प्रधाननायकाभिमतत्वेन सम्यगाहितत्वात् समाधानम्।

**सुखदुःखकृतो योऽर्थस्तद्विधानमिति स्मृतम्।**

यथा बालचरिते।

"उत्साहातिशयं वत्स! तव बाल्यञ्च पश्यतः।
मम हर्षविषादाभ्यामाक्रान्तं युगपन्मनः"॥

यथा वा मम प्रभावत्यां "नयनयुगासेचनकमित्यादि"

**कुतूहलोत्तरा वाचः प्रोक्ता तु परिभावना॥**

यथा वेण्यां द्रौपदी "युद्धं स्यान्न वेति" संशयाना तूर्य्यशब्दानन्तरम्।

"णाध! किं दाणिं एसो पलअजलहरत्थणिदमन्थरो खणे खणे समरदुन्दुभि ताडी अदि"

**बीजार्थस्य प्ररोहः स्यादुद्भेदः।**

यथा तत्रैव। (ल)

द्रौपदी। णाध! पुणोबि तए समासादइदव्वा। भीमः।

---

एव अरणि निर्मन्थनकाष्ठं तेन सम्भृतमुत्पादितम् उत्साहातिशयमिति। श्रीरामं प्रति भार्गवस्योक्तिरियम् बाल्यमविचारितं कर्म्म हरकार्मुकभङ्गरूपं यद्वा बाल्यं बालकत्वं बालकेन सह समरः कर्त्तव्य इति दुःखम्। अत्र भार्गवस्य श्रीरामपराभवोद्यमरूपोऽर्थः सुखदुःखाभ्यां विहितः। कुतूहलोत्तरा कौतुकबहुला। नाथ किमिति नाथ किमिदानीमेष प्रलयजलधरस्तनितमन्थरध्वोषः क्षणे क्षणे समरदुन्दुभिस्ताड्यते इति शब्दः। प्ररोहो भवतुभावत्वेनोद्भावनम्।

"भूयः परिभवक्षान्तिलज्जाबन्धुरिताननम् ।
अनिःशेषितकौरव्यं न पश्यसि वृकोदरम्" ॥

**करणं पुनः ।**

**प्रकृतार्थसमारम्भः ।**

यथा तत्रैव "देवि ! गच्छामो वयमिदानीं कुरुकुलक्षयायेति"

**भेदः संहतिभेदनम् ॥**

यथा तत्रैव । "अत एवाद्य प्रभृति भिन्नोऽहं भवद्भ्यः" । केचित्तु "भेदः प्रोत्साहनेति" वदन्ति । अथ प्रतिमुखाङ्गानि ।

**विलासः परिसर्पश्च विधूतं तापनं तथा ।**
**नर्म नर्मद्युतिश्चैव तथा प्रगमनं पुनः ॥**
**विरोधश्च प्रतिमुखे तथा स्यात् पर्य्युपासनम् ।**
**पुष्पं वज्रमुपन्यासो वर्णसंहार इत्यपि ॥**

तत्र ।

**समीहा रतिभोगार्था विलास इति कथ्यते ।**

रतिलक्षणस्य भावस्य यो हेतुभूतो भोगो विषयः प्रमदा पुरुषो वा तदर्था समीहा विलासः । यथा शाकुन्तले ।

---

(व) नाथेति नाथ पुनरपि त्वया समाश्वासयितव्या इति सं । बन्धुरिताननं नतमुखम् प्रकृतार्थस्य प्रस्तुतकार्य्यस्य सम्यगारम्भः । संहतानामविरुद्धकर्म्मत्वेन मिलितानां भेदनं संघाताच्चालनम् । तयोदशप्रतिमुखाङ्गान्याह विलास इति तदर्थां तदुपभोगार्थां समीहा स्पृहा तस्याः प्रियाया भावः सुरतचेष्टा च दर्शनञ्च ते उन्नमति वाञ्छति । प्रकृ-

"कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते" ॥

**दृष्टनष्टानुसरणं परिसर्पश्च कथ्यते।**

यथा शाकुन्तले राजा। "भवितव्यमत्र तया। तथा हि
"अत्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात्।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा"।

**कृतस्यानुनयस्यादौ विधुतं त्वपरिग्रहः।**

यथा तत्रैव। "अलं वो अन्तःपुरविरहपज्जुस्सुएण राएसिणा उवरुध्वेण" केचित्तु "विधुतं स्यादरतिरिति" वदन्ति ॥

**उपायादर्शनं यत्तु तापनं नाम तद्भवेत्।**

यथा रत्नावल्यां सागरिका ॥ (व)
"दुल्लहजणाणुराओ लज्जा गुरुई परव्वसो अप्पा।
पियसहि! बिसमं पेम्मं मरणं सरणं णवरि एक्कं ॥

---

तार्थे अकृतकार्ये रतिं प्रीतिम् उभयोः प्रियाभावदर्शनयोः प्रार्थना कामना यद्वा तस्या भावो हेवालीलादि तस्य दर्शनं ततोल्लासि प्रियालाभस्तद्भावदर्शनयोः प्रार्थनेच्छा इत्यर्थः। दृष्टस्याभीष्टस्य नष्टस्यानुसरणमन्वेषणम् अवगाढ़ा अतिनिम्ना पदपङ्क्तिः पदचिह्नश्रेणी अलं वो इति अलं वो अन्तः पुरविरहपर्युत्सुकेन राजर्षिणा उपरुद्धेनेति सं। कृतस्यानुनयस्य राजावस्थानानुनयस्य राज्ञा अपरिग्रहः अवधूतिरवज्ञा।

परिहासवचो नर्म

यथा रत्नावल्याम् । "सुसङ्गता । सहि ! जस्स किदे तुमं आअदा सो अयं दे पुरदो चिट्ठदि । सागरिका साभ्यसूयम् । कस्स किदे अहं आअदा ? सुस । अइ अस्सं किदे ! णं चित्तफलअस्स" ।

धृतिस्तु परिहासजा ।

नर्मद्युतिः

यथा तत्रैव । सुसङ्गता । "सहि ! अदक्खिणा दाणिंसि तुमं जा एव्वं भट्टिणा हत्थावलम्बिदावि कोवं ण मुञ्चसि । साग । सभ्रूभङ्गमीषद्विहस्य । "सुसङ्गदे ! दाणिं वि कीलिदुं ण विरमसि । केचित्तु "दोषस्याच्छादनं हास्यं नर्मद्युतिरिति" वदन्ति ।

प्रगमनं वाक्यं स्यादुत्तरोत्तरम् ॥

यथा विक्रमोर्वश्याम् । उर्वशी । "जअदु जअदु महाराओ" राजा ।'मया नाम जितं यस्य त्वया जय उदीर्य्यते इत्यादि'

विरोधो व्यसनप्राप्तिः

यथा चण्डकौषिके राजा । "नूनमसमीक्ष्यकारिणा मयान्धेनेव स्फुरच्छिखाकलापो ज्वलनः पद्भ्यां समाक्रान्तः"

---

(ग) दुल्लहेति दुर्लभजनानुरागो लज्जा गुर्वी परवश आत्मा प्रियसखिविषमं प्रेम मरणं शरणं केवलमेकमिति सं । अवरिअशब्दः केवलार्थो देशी । सहीति सखि यस्य कृते त्वमागता सोऽयमागतः पुरतस्तिष्ठतीति सं । कस्य कृते अहमागतेति सं । अलमन्यशङ्कितेन ननु चित्रफल

कृतस्यानुनयः पुनः ।

स्यात्पर्युपासनं

यथा रत्नावल्याम् । विदू । "भो! मा कुप्य एसा हि कदलीघरन्तरं गदेत्यादि" ।

पुष्पं विशेषवचनं मतम् ॥

यथा तत्रैव राजा । हस्ते गृहीत्वा स्पर्शं नाटयति" । (ग)

विदू । "भो वअस्स ! एवा अउव्वा सिरी तए समासादिदा" ॥

राजा । "वयस्य ! सत्यम्" ।

"श्रीरेषा पाणिरप्यस्याः पारिजातस्य पल्लवः ।

कुतोऽन्यथा स्रवत्येष स्वेदच्छद्मामृतद्रवः" ॥

प्रत्यक्षनिष्ठुरं वज्रम्

यथा तत्रैव राजा । "कथमिह सोऽहं त्वया ज्ञातः" ।

सुसम् । "ण केवलं तुमं समं चित्तफलएण ता जाव गदुअ देवीए णिवेदइस्सं" ।

उपन्यासः प्रसादनम् ।

---

कस्य इति सं । सखि यदस्मिन्निदानीमपि त्वं या एवं भर्त्रा हस्ताव-लम्बितापि कोपं न मुञ्चसीति सं । सुसङ्गते इदानीमपि न विरमसि इति सं । उत्तरसतृतसरतरसत्तरं यस्य तत् । जयति जयति महाराज इति सं । व्यसनस्य विपदः प्राप्तिः । मा कुप्य एषा कदलीगृहान्तरं गतेति सं । एषा सागरिका विशेषस्य प्रकर्षस्य वचनम् ।

(ग) भो वयस्य एषा अपूर्व्वा श्रीस्त्वया समासादिता इति सं । प्रत्यक्षं साक्षान्निष्ठुरं परुषवचनम् वज्रवत् दुःखदत्वादज्रम् । न केवलं त्वं सम-

यथा तत्रैव । सुसम् । भट्टुण अलं सङ्काए मएवि भट्टिणीए पसादेण कीलिदं ज्जेव एदिहिं ता किं कणाभरणेण । अदोवि मे गरुअरो पसादो एसो जं तए अहं एत्थ आलिहिदत्ति कुविदा मे पिअसही सागरिका एसा ज्जेव पसादीअदु ॥ केचित्तु ।

"उपपत्तिकृतो योऽर्थ उपन्यासः स कीर्त्तितः" ।

इति वदन्ति उदाहरन्ति च तत्रैव ! "अदिमुहरा क्खुसा गब्भदासीति" । (ख)

**चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते ॥**

यथा महावीरचरिते तृतीयेऽङ्के ।

"परिषदियमृषीणामेष वीरो युधाजित्
सममृषिभिरमात्यैर्लोमपादश्च वृद्धः ।
अयमविरतयज्ञो ब्रह्मवादी पुराणः
प्रभुरपि जनकानामद्रुहो याजकास्ते" ॥

---

मेव चित्रफलकेन तद्व्यावृत्त्वा देव्यै निवेदयिष्यामीति सं । भर्त्तरलं शङ्कया मयापि भर्त्याः प्रसादेन क्रीड़ितमेव तत् किमेतेन कर्णाभरणेन अतोऽपि मे गुरुतरः प्रसाद एष मत्कथं त्वयाहमत्र आलिखिता इति कुपिता मे प्रियसखी सागरिका एषैव प्रसाद्यतामिति सं । उपपत्तिर्हेतुस्तया कृतः । अतिमुखरा खल्वेषा गर्भदासीति सं । दासीगर्भाज्जाता दासी गर्भदासी ।

(ख) चत्वारो वर्णाश्चातुर्वर्ण्यम् तस्य उपगमनं मेलनम् अतोऽपि मे अयं गुरुतरः प्रसाद इति सं । ननु हस्ते गृहीत्वा प्रसाद्य

इत्यत्र ऋषिप्रभाहीनां वर्णानां मेलनम्। अभिनवगुप्तपादास्तु "वर्णशब्देन पात्राण्युपलक्ष्यन्ते। संहारो मेलनमिति" व्याचक्षते। उदाहरन्ति च रत्नावल्यां द्वितीयेऽङ्के।

अदोवि मे अग्गं गरुओ पसादो इत्यादेरारभ्य णं हत्थे गेह्णिअ पसादेहि णं। राजा। क्वासौ क्वासावित्यादि। अथ गर्भाङ्गानि।

**अभूताहरणं मार्गो रूपोदाहरणे क्रमः।**
**संग्रहश्चानुमानञ्च प्रार्थनाक्षिप्तिरेव च॥**
**त्रोटकाधिबलोद्वेगा गर्भे स्युर्विद्रवस्तथा।**
**अत्र व्याजाश्रयं वाक्यमभूताहरणं मतम्॥**

यथा अश्वत्थामाङ्के।

"अश्वत्थामा हत इति पृथासूनुना स्पष्टमुक्त्वा।
स्वैरं शेषे गज इति किल व्याहृतं सत्यवाचा"॥

**तत्त्वार्थकथनं मार्गः**

यथा चण्डकौशिके राजा। भगवन्!

"गृह्यतामर्जितमिदं भार्य्यातनयविक्रयात्।
शेषस्यार्थे करिष्यामि चाण्डालेऽप्यात्मविक्रयम्"॥

**रूपं वाक्यं वितर्कवत्।**

यथा रत्नावल्यां राजा।

"मनः प्रकृत्यैव चलं दुर्लक्ष्यञ्च तथापि मे।
कामेनैतत्कथं विद्धं समं सर्वैः शिलीमुखैः"॥

---

तावदेनामिति यं। अत्र राजविदूषकसागरिकासुसङ्गतापात्राणां मेलनम्।

**उदाहरणमुत्कर्षयुक्तं वचनमुच्यते ॥ (स)**

यथा अश्वत्थामाङ्के ।

"यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदात् पाण्डवीनाञ्चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम्" ॥

**भावतत्त्वोपलब्धिस्तु क्रमः स्यात्**

यथा शाकुन्तले राजा । "स्थाने खलु विस्मृतनिमेषेण चक्षुषा प्रियामवलोकयामि । तथा हि ।

"उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन" ॥

**संग्रहः पुनः ।**

**सामदानार्थसम्पन्नः ।**

यथा रत्नावल्यां राजा । साधु वयस्य ! इदन्ते पारितोषिकमिति कटकं ददाति । (ह)

---

अथ तयोद्यागभीङ्गान्याह अभूताहरणमिति व्याजाश्रयं छलसम्बन्धम् तत्त्वार्थकथनं यथार्थवचनम् ।

(ह) गर्भशय्यां जरायुम् जगतामन्तकस्य यमस्य निर्विकारात्मके चित्ते भावः प्रथमविक्रियेत्युक्तलक्षणस्य भावस्य तत्त्वोपलब्धिर्यथार्थ्यानुभवः पदानि व्यवसितानि अत्र यद्यपि "भ्रूनेत्रादिविकारैस्तु सम्भोगेच्छाप्रकाशकः भाव एवाल्पसंलक्ष्यविकारो हाव इष्यते" इत्युक्तलक्षणो हाव एव तथापि भावस्य विशेषतया तत्र स्थितिरिति नानुपपत्तिः ।

लिङ्गादूहोऽनुमानता ॥

यथा जानकीराघवे नाटके रामः।

"लीलागतैरपि तरङ्गयतो धरित्रीम्
आलोकनैर्नमयतो जगतां शिरांसि।
तस्यानुमापयति काञ्चन कान्तिगौर-
कायस्य सूर्य्यतनयत्वमधृष्यताञ्च" ॥

रतिहर्षोत्सवानान्तु प्रार्थनं प्रार्थना भवेत्।

यथा रत्नावल्याम्। प्रिये सागरिके!

शीतांशुर्मुखमुत्पले तव दृशौ पद्मानुकारौ करौ
रम्भास्तम्भनिभं तथोरुयुगलं बाहू मृणालोपमौ।
इत्याह्लादकराखिलाङ्गि! रभसान्निःशङ्कमालिङ्ग्य मा
मङ्गानि त्वमनङ्गतापविधुराण्येह्येहि निर्वापय" ॥

इदञ्च प्रार्थनाख्यमङ्गं। यन्मते निर्वहणे इहभूतावसरत्वात् प्रशस्तिनामाङ्गं नास्ति तन्मतानुसारेणोक्तम्। अन्यथाङ्गानां पञ्चषष्टिसंख्यत्वप्रसङ्गात्।

---

सामेति प्रियवचनं साम तेन दानेन चार्थस्य सम्पत्तिरित्यर्थः। इदमिति अत्र सामदानाभ्यां दूतपरितोषद्वारा सागरिकासंघटनादिरूपार्थसम्पादनम् लिङ्गात् व्याप्तिपक्षधर्म्मताभ्यां साधनज्ञानात् ऊहो व्याप्यकतानुभवः।

(च) अनुमानतेति तामप्रत्ययं स्वार्थे तरङ्गयतः कम्पयतः तस्य वत्सस्य अनुमानयति अनुमानविषयीकरोति। अत्र लीलागमनयुक्तपृथ्वीकम्पनादिकं साधनम् प्रार्थनं भिक्षा पद्मानुकारौ पद्मतुल्यौ

**एकस्यार्थस्य तु च्छेदः च्छित्तिः स्यात्**

यथा अश्वत्थामाङ्के।

"एकस्यैव विपाकोऽयं दारुणो भुवि वर्त्तते।
केशग्रहे द्वितीयेऽस्मिन् नूनं निःशेषिताः प्रजाः" ॥

लोटकं पुनः।

**संरब्धवाक्**

यथा चण्डकौशिके कौशिकः।

"आः! पुनः कथमद्यापि न सम्भृताः स्वर्णदक्षिणाः"।

**अधिबलमभिसन्धिश्छलेन यः।**

यथा रत्नावल्यां "काञ्चनमाला। (क)

"भट्टिणि! इयं सा चित्तसालिआ वसन्तअस्स सस्सङ्केतं गच्छमीत्यादि"।

**नृपादिजनिता भीतिरुद्वेगः परिकीर्त्तितः।**

यथा वेण्याम्।

"प्राप्तावेकरथारूढौ पृच्छन्तौ त्वामितस्ततः।
स कर्णारिः स च क्रूरो वृककर्म्मा वृकोदरः" ॥

---

भूतावसरत्वात् प्रार्थनायां प्राप्तविषयत्वात् अन्यथा निर्वहणे प्रशस्तिसत्त्वे पञ्चषष्टिसंख्यत्वे को दोष इतिचेत् सम्प्रदायविरोध इति। एकस्य द्रौपदीकेशग्रहस्य द्वितीये द्रोणसम्बन्धिनि संरब्धस्य रुष्टस्य वाक्। अभिसन्धिरभिप्रायानुसन्धानम्।

(क) भट्टिणि इति भर्त्रि इयं सा चित्रशालिका तदूयावद-

**शङ्काभयत्रासकृतः संभ्रमो विद्रवो मतः ॥**

"कालान्तककरालास्यं क्रोधदृप्तं दशाननम् ।
विलोक्य वानरानीके संभ्रमः कोऽप्यजायत" ॥

अथ विमर्षाङ्गानि ।

**अपवादोऽथ सम्फेटो व्यवसायो द्रवो द्युतिः ।**
**शक्तिः प्रसङ्गः खेदश्च प्रतिषेधो विरोधनम् ।** [redacted]
**प्ररोचना विमर्षः स्यादादानं छादनं तथा ।**
**दोषप्रख्याऽपवादः स्यात्**

यथा वेण्यां युधिष्ठिरः । पाञ्चालक ! कच्चिदासादिता तस्य दुरात्मनः पदवी । पाञ्चालकः । न केवलं पदवी स एव दुरात्मा देवीकेशपाशस्पर्शपातकप्रधानहेतुरुपलब्धः ।

**सम्फेटो रोषभाषणम् ॥**

यथा तत्रैव राजा । अरे रे मरुत्तनय ! वृद्धस्य राज्ञः पुरतो निन्दितमप्यात्मकर्म्म श्लाघसे । शृणु रे !

"कृष्णा केशेषु भार्य्या तव तव च पशोस्तस्य राज्ञस्तयोर्वा

---

घातकस्य संज्ञां ददामीति शं । आदिपदेन किं पक्षस्य रुचं न हन्तीत्यादिश्लोकपर्य्यन्तस्य परिग्रहः । अत्र काञ्चनमालावासवदत्तावेशधारिण्योः सुसंगतासागरिकयोश्छलेन काञ्चनमालावासवदत्ताभ्यां राजविदूषकयोरभिप्रायज्ञानम् । कर्णारिरर्जुनः एकस्य व्याघ्रविशेषस्येव कर्म यस्य सः अत्र दुर्य्योधनस्य भीमार्जुनजनिता भीतिः शङ्का अनिष्टाशंसा त्रासो भयानुकूलव्यापारः सम्भ्रमस्त्वरा । अत्र त्रयोदशविमर्शाङ्गान्याह अपवाद इति । तस्य दुर्य्योधनस्य पदवी उपलब्धा

प्रत्यक्षं भूमतीनां मम भुवनपतेराज्ञया द्यूतदासी ।
तस्मिन् वैरानुबन्धे वद किमपकृतं तैर्हता ये नरेन्द्रा,
बाह्वोर्वीर्य्यातिभारद्रविणगुरुमदं मामजित्वैव दर्पः" ॥
"भीमः सक्रोधं आः पाप! राजा। आः पाप इत्यादि" ।

**व्यवसायश्च विज्ञेयः प्रतिज्ञाहेतुसम्भवः ।**

यथा तत्रैव भीमः ।

"निहताशेषकौरव्यः क्षीबो दुःशासनासृजा ।
भङ्क्ता दुर्योधनस्योर्वोर्भीमोऽयं शिरसा नतः" ॥ (क)

**द्रवो गुरुव्यतिक्रान्तिः शोकावेगादिसम्भवा ॥**

यथा तत्रैव । युधिष्ठिरः । भगवन्! कृष्णाग्रज! सुभद्राभ्रातः!

ज्ञातिप्रीतिर्मनसि न कृता क्षत्रियाणां न धर्मो
रूढं सख्यं तदपि गणितं नानुजस्यार्जुनेन ।
तुल्यः कामं भवतु भवतः शिष्ययोः स्नेहबन्धः
कोऽयं पन्था यदसि विमुखो मन्दभाग्ये मयि त्वम्" ॥

**तर्ज्जनोद्वेजने प्रोक्ता द्युतिः**

---

(क) तत्तनय भीम इत्यत्र राज्ञो धृतराष्ट्रस्य प्रतिज्ञा कार्य्यस्य निर्द्देशः हेतुः साधननिर्द्देशः तयोः सम्भवो मिलनम् भङ्क्ता भञ्जनकर्त्ता । अत्र दुर्यो-धनोरुभञ्जनं कार्य्यं भीमत्वं साधनम् ।

(ख) गुरोः पूज्यस्य व्यतिक्रान्तिरादरवञ्चनम् । ज्ञातिप्रीति-रिति बलदेवयुधिष्ठिरयोश्चन्द्रवंशभवत्वात् ज्ञातित्वम् धर्म्मो न गणित इत्यपेक्षान्वयः । युद्धे प्रणयिनि पक्षपातो नास्तीति क्षत्रियाणां

यथा तत्रैव दुर्य्योधनं प्रति कुमारवृकोदरेणोक्तम् ।

"जन्मेन्दोर्विमले कुले व्यपदिशस्यद्यापि धत्से गदां
मां दुःशासनकोष्णशोणितमधुक्षीवं रिपुं मन्यसे ।
दर्पान्धो मधुकैटभद्विषि हरावप्युद्धतं चेष्टसे
त्रासान्मे नृपशो । विहाय समरं पङ्केऽधुना लीयसे" ।

## शक्तिः पुनर्भवेत् ।

## विरोधस्य प्रशमनं

। यथा तत्रैव ।

"कुर्वन्त्वाप्ता हतानां रणशिरसि जना भस्मसाद्देहभारान्
अश्रून्मिश्रं कथञ्चिद्ददतु जलममी बान्धवा बान्धवेभ्यः ।
मार्गन्तां ज्ञातिदेहान् हतनरगहने खण्डितान् गृध्रकङ्कैः
अस्तं भास्वान् प्रयातः सह रिपुभिरयं संह्रियन्तां बलानि ॥

(ख)

## प्रसङ्गो गुरुकीर्त्तनम् ॥

यथा मृच्छकटिकायां चाण्डालकः । "एसो सागलदत्तस्स सुओ अज्जविस्सदत्तस्स णत्तिओ चालुदत्तो व्यावादिदुं वज्झट्ठाणं णिज्जइ एदेण किल गणिआ वसन्तसेणा सुवण्ण-लोहेण वावादिदत्ति" । चारुदत्तः ।

---

धर्म्मः रूढ़ं प्रसिद्धं अनुजस्य कृष्णस्य शिष्ययोर्भीमदुर्य्योधनयोः असि धत्से अत्र शोकाविष्टचित्तेन युधिष्ठिरस्यादरवञ्चनम् तर्जनं भर्त्सनं उद्वेजनं भयोत्पादनम् व्यपदिशसि कथयसि ख्यापयसि । अत्र भर्त्सन-उद्वेजनम् यथा "भो वङ्गेश्वर दीयतामित्यादि" आप्ता बान्धवाः ।

"मखशतपरिपूतं गोत्रमुद्भासितं यत्
सदसि निविड़चैत्यब्रह्मघोषैः पुरस्तात् ।
मम निधनदशायां वर्त्तमानस्य पापै-
स्तदसदृशमनुष्यैर्घुष्यते घोषणायाम्" ॥

इत्यनेन चारुदत्तवधाभ्युदयानुकूलप्रसङ्गाद् गुरुकीर्त्तनमिति प्रसङ्गः । (ग)

**मनश्चेष्टासमुत्पन्नः श्रमः खेद इति स्मृतः ।**

मनः समुत्पन्नो यथा मालतीमाधवे ।

"दलति हृदयं गाढ़ोद्वेगं द्विधा न तु भिद्यते
वहति विकलः कायो मोहं न मुञ्चति चेतनाम् ।
ज्वलयति तनूमन्तर्दाहः करोति न भस्मसात्
प्रहरति विधिर्मर्म्मच्छेदी न कृन्तति जीवितम्" ॥

एवं चेष्टासमुत्पन्नोऽपि ।

**ईप्सितार्थप्रतिघातः प्रतिषेध इतीष्यते ।**

यथा मम प्रभावत्यां विदूषकं प्रति प्रद्युम्नः । "सखे ! कथमिह त्वमेकाकी वर्त्तसे क्व नु पुनः प्रियसखीजनानुग-

---

(ग) गुरोः पित्रादेः कीर्त्तनम् एष खलु सागरदत्तस्य सुत आर्य्यचारुदत्तस्य नप्ता चारुदत्तो व्यापादयितुं वध्यस्थानं नीयते एतेन किल गणिका वसन्तसेना सुवर्णलोभेन व्यापादितेति सं । निविड़ सामाजिकैर्व्याप्तं चैत्यमायतनं येषां तैर्ब्रह्मघोषैर्वेदपाठकैः । असदृशेति अयोग्यैरित्यर्थः घोषणायामपवादवाद्यध्वनौ ।

(घ) मनसा चेष्टया च समुत्पन्नः । दलति स्फुटति । अन्तरपतिना

श्यमाना प्रियतमा मे प्रभावती। विदूः। असुरवइणा आआरिअ कहिं बिणोदा। प्रद्युम्नः दीर्घं निश्वस्य।

"हा पूर्णचन्द्रमुखि! मत्तचकोरनेत्रे!
मामानताङ्गि! परिहाय कुतो गतासि।
गच्छत्वमद्य ननु जीवित तूर्णमेव
दैवं कदर्थनपरं कृतकृत्यमस्तु॥ *

**कार्य्यात्ययोपगमनं विरोधनमिति स्मृतम्॥**

यथा वेण्यां युधिष्ठिरः।

"तीर्णे भीष्ममहोदधौ कथमपि द्रोणानले निर्वृते
कर्णाशीविषभोगिनि प्रशमिते शल्ये च याते दिवम्।
भीमेन प्रियसाहसेन रभसादल्पावशेषे जये
सर्वे जीवितसंशयं वयममी वाचा समारोपिताः"॥

**प्ररोचना तु विज्ञेया संहारार्थप्रदर्शिनी।**

यथा वेण्यां पाञ्चालकः। "अहं देवेन चक्रपाणिना सहित इत्युपक्रम्य कृतं सन्देहेन।

"पूर्य्यन्तां सलिलेन रत्नकलशा राज्याभिषेकाय ते
कृष्णाऽत्यन्तचिरोज्झिते तु कवरीबन्धे करोतु क्षणम्।
रामे शातकुठारभास्वरकरे क्षत्रद्रुमोच्छेदिनि
क्रोधान्धे च वृकोदरे परिपतत्याजौ कुतः संशयः"॥

---

आकार्य्य कुत्रापि नीतेति समम्। आकार्य्य आहूय "हूतिराकारणाह्वानं

---

* कदर्थनपरं क्लेशदानतत्परं। कृतकृत्यं कृतार्थम्।

## कार्य्यसंग्रह आदानम्

यथा वेण्याम् । "ननु भोः समन्तपञ्चकचारिणः ! नाहं रक्षो न भूतो रिपुरुधिरजलाह्लादिताङ्गः प्रकामं निस्तीर्णोरुप्रतिज्ञाजलनिधिगहनः क्रोधनः क्षत्रियोऽस्मि । भो भो राजन्यवीराः ! समरशिखिशिखाभूक्तशेषाः कृतं वः त्रासेनानेन लीनैर्हतकरितुरगान्तर्हितैरास्यते यत्" ।

अत्र समस्तरिपुवधकार्य्यस्य संगृहीतत्वादादानम् ।

तदाहुश्छदनं पुनः ।

**कार्य्यार्थमपमानादेः सहनं खलु यद्भवेत् ।**

यथा तत्रैव अर्ज्जुनः । आर्य्य !

"अप्रियाणि करोत्येष वाचा शक्तो न कर्म्मणा ।
हतभ्रातृशतो दुःखी प्रलापैरस्य का व्यथा" ॥ (ङ)

अथ निर्व्वहणाङ्गानि ।

**सन्धिर्विबोधो ग्रथनं निर्णयःपरिभाषणम् ।**
**कृतिः प्रसाद आनन्दः समयोऽप्युपगूहनम् ॥**
**भाषणं पूर्व्ववाक्यञ्च काव्यसंहार एव च ।**
**प्रशस्तिरिति संहारे ज्ञेयान्यङ्गानि नामतः ।**

---

कृत्यन्तरः" कार्य्यात्ययस्य उपगमनं ज्ञापनम् संहारार्थस्य उपसंजिहीर्षुभावप्रयोजनस्य प्रदर्शिनी प्रतिपादिका प्रोत्साहना प्ररोचनेत्यर्थः । कृतं व्यर्थं चापलतुल्यम् यत् यस्मात् त्रासात् एष दुर्य्योधनः ।

(ङ) अथ चतुर्दशप्रकाराणि निर्वहणाङ्गान्याह सन्धिरिति बीज-

तत्र

**बीजोपगमनं सन्धिः**

यथा वेण्यां भीमः। "भवति यज्ञवेदिसम्भवे! स्मरति भवती यन्मयोक्तं "चञ्चद्भुजेत्यादि"। अनेन मुखेक्षिप्तबीजस्य पुनरुपगमनमिति सन्धिः।

**विबोधः कार्य्यमार्गणम्॥**

यथा तत्रैव भीमः। "मुञ्चतु ममार्य्यः क्षणमेकम्। युधिष्ठिरः। किमपरमवशिष्टम्। भीमः। सुमहदवशिष्टम् संयमयामि तावदनेन सुयोधनशोणितार्द्रितेन पाणिना पाञ्चाल्या दुःशासनावकृष्टं केशहस्तम्। युधिष्ठिरः। गच्छतु भवाननुभवतु तपस्विनी वेणीसंहारमिति" अनेन केशसंयमनकार्य्यस्यान्वेषणाद्विबोधः।

**उपन्यासस्तु कार्य्याणां ग्रथनं**

यथा तत्रैव भीमः! "पाञ्चालि! न खलु मयि जीवति संहर्त्तव्या दुःशासनविलुलिता वेणिरात्मपाणिभ्यां तिष्ठ स्वयमेवाहं संहरामीति" अनेन कार्य्यस्योपक्षेपाद्ग्रथनम्।

**निर्णयः पुनः।**

**अनुभूतार्थकथनं**

यथा तत्रैव भीमः। "देव। अजातशत्रो! अद्यापि दुर्य्योधन हतकः। मया हि तस्य दुरात्मनः।

---

स्योपगमनमुद्भावनम्। मुखे मुखसन्धौ। केशहस्तं केशसमूहं। मयाहीति

"भूमौ क्षिप्तं शरीरं निहितमिदमसृक् चन्दनाभं निजाङ्गे
लक्ष्मीरार्य्ये निषिक्ता चतुरुदधिपयः सीमया सार्द्धमूर्व्या ।
भृत्या मित्राणि योधाः कुरुकुलमनुजा दग्धमेतद्रणाग्नौ
नामैकं यद्ब्रवीषि क्षितिप तदधुना धार्त्तराष्ट्रस्य शेषम्" ॥*

**परिवादकृतं वाक्यं वदन्ति परिभाषणम् ।**

यथा शाकुन्तले । राजा । "आर्य्ये ! अथ सा तत्रभवती किमाख्यस्य राजर्षेः पत्नी । तापसी । को तस्स धम्मदार-परिच्चाइणो णामं गेण्हिस्सदि" ॥

**लब्धार्थोगमनं कृतिः ।**

यथा वेण्यां कृष्णः । "एते भगवन्तो व्यासवाल्मीकि-प्रभृतयोऽभिषेकं धारयन्तस्तिष्ठन्ति इति" अनेन प्राप्तरा-ज्यस्याभिषेकमङ्गलैः स्थिरीकरणं कृतिः ।

**शुश्रूषादिः प्रसादः स्यात्**

यथा तत्रैव । भीमेन द्रौपद्याः केशसंयमनम् ।

**आनन्दो वाञ्छितागमः ।**

यथा तत्रैव । द्रौपदी । विसुमरिदं एदं वावारं णाधस्स पसादेण पुणोवि सिक्खिस्सं ।

---

तस्य धार्त्तराष्ट्रस्य । कस्तस्य धर्मदारपरित्यागिनो नाम ग्रहीष्यतीति सं ।
लब्धैरर्थैः शमनं शोकादिनाशनं स्थिरीकरणं शोकादिहृता स्थैर्य्यादि-

---

* असृक रुधिरं निहितं अर्पितम् ।

समयो दुःखनिर्याणं

रत्नावल्यां वासवदत्ता। रत्नावलीमालिङ्ग्य समस्स बहीत्थिए समस्सस।

तद्भवेदुपगूहनम्।

यत्स्यादद्भुतसम्प्राप्तिः

यथा मम प्रभावत्यां नारददर्शनात् प्रद्युम्न ऊर्द्ध्वमवलोक्य।

"दधद्विद्युल्लेखामिव कुसुममालां परिमल-
भ्रमद्भृङ्गश्रेणीध्वनिभिरुपगीतां तत इतः।
दिगन्तं ज्योतिर्भिस्तुहिनकरगौरैर्धवलय-
न्नितः कैलासाद्रिः पतति वियतः किं पुनरिदम्"॥

सामदानादिभाषणम्॥ (छ)

यथा चण्डकौशिके। "धर्म्मः। तदेहि धर्म्मलोकमधितिष्ठ"

पूर्ववाक्यन्तु विज्ञेयं यथोक्तार्थोपदर्शनम्।

यथा वेण्यां भीमः। "बुद्धिमतिके! क सा भानुमती परिभवतु सम्प्रति पाण्डवदारान्"।

वरप्रदानसम्प्राप्तिः काव्यसंहार इष्यते।

यथा सर्व्वत्र। "किन्ते भूयः प्रियमुपकरोमीति"।

---

नाशनम् विसर्जनमेवं व्यापारं नावद्य प्रसादेन पुनरपि वियोक्ष्ये इति सं। एवं व्यापारं कथसंयमनरूपम्। समाश्वसित भगिनीति सं।

(छ) तदेहीति प्रियवाक्यं धर्म्मलोकस्य दानञ्च बुद्धिमतीत्यादि

**नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते ॥**

यथा प्रभावत्याम् ।

"राजानः सुतनिर्विशेषमधुना पश्यन्तु नित्यं प्रजा
जीयासुः सदसद्विवेकपटवः सन्तो गुणग्राहिणः ।
शस्यस्वर्णसमृद्धयः समधिकाः सन्तु क्षमामण्डले
भूयादव्यभिचारिणी त्रिजगतो भक्तिश्च नारायणे" ॥*

अत्र च उपसंहारप्रशस्त्योरन्ते एकेन क्रमेणैव स्थितिः ।

"इह च मुखसन्धौ उपक्षेपपरिकरपरिन्यासयुक्त्युद्भेद-समाधानानां प्रतिमुखे च परिसर्पणप्रगमनवज्रोपन्यास-पुष्पाणां गर्भे अभूताहरणमार्गत्रोटकावक्षेपाणां विमर्षे अपवादशक्तिव्यवसायप्ररोचनादानानां प्राधान्यम् ।

"अन्येषाञ्च यथासम्भवं स्थितिरिति केचित् ।

**चतुःषष्टिविधं ह्येतदङ्गं प्रोक्तं मनीषिभिः ॥**

---

दुर्योधनपत्न्या उक्तं भीमेनोपदर्शितम् । सर्वत्र नाटकादौ नृपदेशादी-त्यादिना विद्वद्ब्राह्मणादीनां ग्रहणं शान्तिरनिष्टनिवारणमिष्टप्राप्तिश्च । इह चेति निर्वहणे चेत्यर्थः । तयोः काव्यसंहारप्रशस्त्योः प्राधान्यमि-त्यपेनान्वयः । एवमग्रेऽपि । प्राधान्यख्यापनं तत्तदङ्गानामावश्यक-स्थित्यर्थम् । अनियत इति अन्यसन्ध्यङ्गस्य प्रकृतरसानुकूलस्यान्यसन्धा-

---

*सुतनिर्विशेषं पुत्रतुल्यं पश्यन्तु अवलोकयन्तु जीयासुः जययुक्ता भवेयुः । समधिकाः प्रचुराः शस्यानां स्वर्णानाञ्च समृद्धयः सम्पदः सन्तु भवन्तु । अव्यभिचारिणी अचला ।

कुर्य्यादनियते तस्य सन्धावपि निवेशनम् ॥

रसानुगुणतां वीक्ष्य रसस्यैव हि मुख्यता।

यथा वेणीसंहारे तृतीयाङ्के। दुर्य्योधनकर्णयोर्महत्सम्प्रधारणम्। एवमन्यत्रापि। यत्तु "रुद्रटादिभिर्नियम एवेति" उक्तं तल्लक्ष्यविरुद्धम्। (च)

इष्टार्थरचनाश्चर्य्यलाभो वृत्तान्तविस्तरः।

रागप्राप्तिः प्रयोगस्य गोप्यानां गोपनन्तथा ॥

प्रकाशनं प्रकाश्यानामङ्गानां षड्विधं फलम्।

अङ्गहीनो नरो यद्वन्नैवारम्भक्षमो भवेत् ॥

अङ्गहीनं तथा काव्यं न प्रयोगाय युज्यते।

सम्पादयेतां सन्ध्यङ्गं नायकप्रतिनायकौ ॥

तदभावे पताकाद्यास्तदभावे तथेतरत्।

प्रायेण प्रधानपुरुषप्रयोज्यानि सन्ध्यङ्गानि भवन्ति। किन्तुपक्षेपादित्रयं वीजस्याल्पमात्रसमुद्दिष्टत्वात् अप्रधानपुरुषप्रयोजितमेव साधु।

---

वपि निवेशनं तत्र हेतुः रसस्यैवेति। सम्प्रधारणं युक्तिः मुखसन्ध्यङ्गमन्यत्रापि तद्दर्शितमिति भावः। नियम इति तत्तत्सन्ध्यङ्गस्य तत्तत्सन्धावेव निवेश इत्येवं रूपः लक्ष्यविरुद्धं महाकविप्रयोगविरुद्धम्।

(छ) अङ्गानां फलमाह इष्टार्थेति रागप्राप्तिरनुरागलाभः प्रयोगस्य प्रेक्षकस्य। अङ्गप्रशंसामाह अङ्गहीनमिति। काव्यं रूपकम् प्रयोगाय प्रेक्षकानुरागाय तदभावे सन्ध्यङ्गाभावे पताकाद्या अर्थप्रकृतीः

रसव्यक्तिमपेक्ष्यैषामङ्गानां सन्निवेशनम्।
न तु केवलया शास्त्रस्थितिसम्पादनेच्छया॥

तथा च वेणीसंहारे द्वितीयेऽङ्के दुर्योधनस्य भानुमत्या सह विप्रलम्भो दर्शितस्तत्ताहृशेऽवसरेऽत्यन्तमनुचितम्।

अविरुद्धन्तु यद्वृत्तं रसादिव्यक्तयेऽधिकम्।
तदप्यन्यथयेद्धीमान् न वदेद्वा कदाचन॥

अनयोरुदाहरणं मत्प्रबन्धेष्वभिव्यक्तमेव। अथ वृत्तयः। (छ)

शृङ्गारे कौशिकी वीरे सात्त्वत्यारभटी पुनः।
रसे रौद्रे च बीभत्से वृत्तिः सर्वत्र भारती॥
चतस्रो वृत्तयो ह्येताः सर्वनाट्यस्य मातृकाः।
स्युर्नायकादिव्यापारविशेषा नाटकादिषु॥

तत्र कौशिकी।

या श्लक्ष्णनेपथ्यविशेषचित्रा
स्त्रीसङ्कुला पुष्कलनृत्यगीता।
कामोपभोगप्रभवोपचारा
सा कौशिकी चारुविलासयुक्ता॥

---

स्याद्यैतामित्यन्वयः। आद्यपदेन प्रकरीकार्ययोर्ग्रहणम् इतरद्बीजम्। प्रायेणेत्यस्य व्यावृत्तिमाह क्वचिदिति आदिपदेन परिकरपरिन्यासयो-र्ग्रहणम्। अधिकमनुपयोगि रसोपयोगि यथाशास्त्रं यथावत् अन-योरन्यथाकरणाकरणयोः। नाटकवृत्तीराह अथेति वर्त्तते रसोऽनयेति वृत्तिर्नायकादिचेष्टा।

(छ) शृङ्गार इति शृङ्गारप्रतिपादिका वृत्तिः कौशिकी एव-

नर्म च नर्मस्फूर्जो नर्मस्फोटोऽथ नर्मगर्भश्च ।
चत्वार्य्यङ्गान्यस्याः

तत्र ।

वैदग्ध्यक्रीडितं नर्म ।

इष्टजनावर्जनकृत्तच्चापि त्रिविधं मतम् ।
विहितं शुद्धहास्येन सशृङ्गारभयेन च ।

तत्र केवलहास्येन विहितं यथा रत्नावल्याम् । वासवदत्ता फलकमुद्दिश्य सहासम् । "एसा वि अवरा तव समीवे जा लिहिदा एदं किं अज्ज वसन्तस्स विणाणं" । सशृङ्गारहास्येन यथा शाकुन्तले । राजानं प्रति शकुन्तला । "असन्तुट्ठो उण किं करिस्सदि । राजा इदमिति व्यवसितः । शकु । वक्त्रं ढौकते" । सभयहास्येन यथा रत्नावल्याम् ।

---

मन्यत्रापि । सर्वत्रेति रसे इत्यनुषज्यते । नाटका नाटवदुपजीव्याः । तासां सामान्यस्वरूपमाह स्युरिति आदिना नायिकादीनां ग्रहणम् । नाटकादिष्वित्यादिपदेन प्रकरणभाणादीनां ग्रहणम् तत्र प्रसिद्धा इत्यर्थः । तासां विशेषलक्षणान्याह तत्रेति । श्लक्ष्णेण मनोरमेन नेपथ्यविशेषेण नायकादिभूषणविशेषेण चित्रा शोभातिशयशालिनी । पुष्कलेति सम्पूर्णेत्यर्थः । कामोपभोगः शृङ्गारस्तस्य प्रभव उपचारा अङ्गानि यस्याः सा । उपचारोऽनुष्ठानं वा अङ्गानि भेदाः अस्याः कौशिक्याः वैदग्ध्येन क्रीडितं इष्टजनस्य सामाजिकादेरावर्जनकृत् प्रीतिकारकम् तच्च नर्म च सशृङ्गारभयेनेत्यस्य हास्येनेति समासवि

आलेख्यदर्शनावसरे । "सुसङ्गाणिदो मए एसो वुत्तन्तो ससं चित्तफलएण । ता देवीए गदुअ निवेदइस्सं"। एतद्वाक्यसम्बन्धि नर्मोदाहृतम् । एवं वेशचेष्टासम्बन्ध्यपि । (ज)

**नर्मस्फूर्जः सुखारम्भो भयान्तो नवसङ्गमः ।**

यथा मालविकायां सङ्केतनायकमभिसृतायां नायकः ।

"विसृज सुन्दरि ! सङ्गमसाध्वसं
ननु चिरात्प्रभृति प्रणयोन्मुखे ।
प्रतिगृहाण गते सहकारतां
त्वमतिमुक्तलताचरितं मयि" ॥*

मालविका । भट्टा देवीए भएण अप्पणोवि पिअं कत्तुं ण पारेमि इत्यादि" ॥ अथ नर्मस्फोटः ।

---

छायादन्वयः एषाप्यपरा तव समीपे यथा लिखिता इदं किमार्यवसन्तकस्य विज्ञानमिति सं । वसन्तुष्टः पुनः किं करोतीति सं । असन्तुष्टो मधुकर इति पूर्व्वोक्तेनान्वयः । इदमिति कमलमिति व्यवसितः कृतनिश्चयः ढौकते प्रविशति । व्यवसितमिति पाठे निश्चितमित्यर्थः । वेशसम्बन्धिसभयहास्यकरं नर्म यथा रत्नावल्यां "सुसङ्गता दृष्ट्वा विहस्य अइ कादरे मा भाआहि एसो वानरो अज्ज वसन्तओ क्खु एसो । अयि कातरे मा बिभीहि न भवत्येष वानर आर्य्यवसन्तकः खल्वेष इति सम् ।

(झ) नर्मस्फुर्ज्ज इति सुखमारम्भो यस्य भयमन्तो यस्य भर्त्तर्देव्या भयेनात्मनोऽपि प्रियं कर्त्तुं न पारयामीति सं । भावलेशैरीपत्

---

* सहकारतां रसालतां । अतिमुक्तलतायाः माधवीलतायाश्चरितं चेष्टितं वेष्टनरूपं प्रतिगृहाण मां स्वच्छन्दं कालिङ्गस्व इति भावः ।

**नर्मस्फोटो भावलेशैः सूचितोऽल्परसो मतः ॥**

यथा मालतीमाधवे ।

"गमनमलसं शून्या दृष्टिः शरीरमसौष्ठवम्
श्वसितमधिकं किन्न्वेतत् स्यात् किमन्यदितोऽथवा ।
भ्रमति भुवने कन्दर्पाज्ञा विकारि च यौवनं
ललितमधुरास्ते ते भावाः क्षिपन्ति च धीरताम्" ॥

अलसगमनादिभिर्भावलेशैर्माधवस्य मालत्यामनुरागः स्तोकः प्रकाशितः ।

**नर्मगर्भो व्यवहृतिर्नेतुः प्रच्छन्नवर्त्तिनः ।**

यथा तत्रैव । सखीरूपधारिणा माधवेन मालत्या मरणव्यवसायवारणम् । अथ सात्त्वती ।

**सात्त्वती बहुला सत्त्वशौर्य्यत्यागदयार्जवैः ।**
**सहर्षा क्षुद्रशृङ्गारा विशोका साद्भुता तथा ॥**
**उत्थापकोऽथ संघात्यः संलापः परिवर्त्तकः ।**
**विशेषा इति चत्वारः सात्त्वत्याः परिकीर्तिताः ॥**
**उत्तेजनकरी शत्रोर्वागुत्थापक उच्यते ।**

---

प्रकाशितैर्भावैरल्पं सूचितः सूचितोऽल्पो रसः शृङ्गारो यत्र स व्यापारो नर्मस्फोट इत्यर्थः । गमनमिति माधवस्य पूर्वरागविप्रलम्भवर्णनमिदम् विकारि चित्तविकारकारि ललितमधुरा अतिरमणीयाः वलितमधुरा इत्यपि पाठः भावाः सुरतचेष्टाः नेतुर्नायकस्य बहुला वृत्तिरिति शेषः ।

यथा महावीरचरिते। (झ)

"आनन्दाय च विस्मयाय च मया दृष्टोऽसि दुःखाय वा
वैतृष्ण्यन्तु कुतोऽद्य सम्प्रति मम त्वद्दर्शने चक्षुषः।
यन्माङ्गल्यसुखस्य नास्य विषयः किं वा बहुव्याहृतै-
रस्मिन् विस्मृतजामदग्न्यविजये बाहौ धनुर्जृम्भताम्" ॥

**मन्त्रार्थदैवशक्त्यादेः संहात्यः सङ्घभेदनम्।**

मन्त्रशक्त्या यथा मुद्राराक्षसे राक्षससहायानां चाणक्येन स्वबुद्ध्या भेदनम्। अर्थशक्त्यापि तत्रैव। दैवशक्त्या यथा रामायणे रावणाद्विभीषणस्य भेदः।

**संलापः स्याद्गभीरोक्तिर्नानाभावसमाश्रयः।**

यथा वीरचरिते रामः। "असंशयं किल सपरिवारकार्त्तिकेयविजयावर्जितेन भगवता नीललोहितेन परिवत्सरसहस्रान्तेवासिने तुभ्यं प्रसादीकृतः परशुः। परशुरामः। राम! दाशरथे! स एवायमार्य्यपादानां प्रियः परशुरित्यादि"

**प्रारब्धादन्यकार्य्याणां करणं परिवर्त्तकः।**

यथा वेण्यां भीमः। "सहदेव! गच्छ त्वं गुरुमनुवर्त्तस्व अहमप्यस्त्रागारं प्रविश्यायुधसहायो भवामीति यावत् अथवा आमन्त्रयितव्यैव मया पाञ्चालीति"। अथारभटी।

---

प्रहर्ष सहासा उत्तेजनमुत्साहातिशयजनकं शत्रोः प्रतिनायकस्य वागित्यन्वयः।

(झ) आनन्दाय वेति वालिनं प्रति श्रीरामस्योक्तिरियम् मन्त्रो-मन्त्रणा अर्थो धनम् दैवमदृष्टम् सङ्घभेदनम् सहायानां भेदः रामायणे

**मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः ।**
**संयुक्ता बधबन्धाद्यैरुद्धतारभटी मता ॥**
**वस्तूत्थापनसम्फेटौ संक्षिप्तिरवपातनम् ।**
**इति भेदास्तु चत्वार आरभट्याः प्रकीर्त्तिताः ॥**
**मायाद्युत्थापितं वस्तु वस्तूत्थापनमुच्यते । (ञ)**

यथोदात्तराघवे ।

"जीयन्ते जयिनो निशान्ततिमिरव्रातैर्वियद्व्यापिभि-
र्भास्वन्तः सकला रवेरपि कराः कस्मादकस्मादमी ।
एते चोग्रकबन्धकण्ठरुधिरैराध्मायमानोदरा
मुञ्चन्त्याननकन्दरानलमुचस्तीव्रान्रवान् फेरवा इत्यादि" ॥

**सम्फेटस्तु समाघातः क्रुद्धसत्वरयोर्द्वयोः ।**

यथा मालत्यां माधवाघोरघण्टयोः ।

**संक्षिप्तिर्वस्तु रचना शिल्पैरितरथापि वा ।**
**संक्षिप्तिः स्यान्निवृत्तौ च नेतुर्नेतन्तरग्रहः ॥**

---

रामचन्द्रवर्णना नाटकादौ आवर्जितेन प्रीणितेन अत्र देवविषयरति-
र्मतिर्वीररसानां समाश्रयत्वम् गुरुं युधिष्ठिरम् उद्धता वृत्तिरिति-
शेषः मायादीत्याना इन्द्रजालप्रहणं ।

(ट) जीयन्ते परिभूयन्ते आध्मायमानोदरा दीप्यमानोदराः
पीयमानरुधिराणां श्मशानानलेनेषत्वाज्जठरदाहः फेरवः शृगालाः
अत्र मायोत्थापितं वस्तु इन्द्रजालोत्थापितं वस्तु यथा एष ब्रह्मा
सरोजे रजनिकरकलाशेखरः शङ्करोऽयं दोर्भिर्दैत्यान्तकोऽसौ धरणि-
रसिगदाचक्रचिह्नैश्चतुर्भिः । एषोऽप्यैरावतस्थस्त्रिदशपतिरमीदेवी देवा-

यथा उदयनचरिते किलिञ्जहस्तिप्रयोगः। द्वितीयं यथा वालिनिवृत्त्या सुग्रीवः। यथा वा परशुरामस्यौद्धत्यनिवृत्त्या शान्तत्वापादनम्। "पुण्या ब्राह्मणजातिरिति" ॥

**प्रवेशत्रासनिष्क्रान्तिहर्षविद्रवसम्भवम् ।**
**अवपातनमित्युक्तं**

यथा कृत्यरावणे षष्ठेऽङ्के। "प्रविश्य खड्गहस्तः पुरुष इति" अतः प्रभृति निष्क्रमणपर्य्यन्तम।

**पूर्वमुक्तैव भारती ॥(ट)**

अथ नाट्योक्तयः।

**अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम् ।**
**सर्वश्राव्यं प्रकाशं स्यात्तद्भवेदपवारितम् ॥**
**रहस्यन्तु तदन्यस्य परावृत्त्य प्रकाशते ।**
**त्रिपताकाकरेणान्यानपवार्य्यान्तरा कथाम् ॥**

---

स्तथान्ये वर्त्तन्ते व्योम्नि चैतास्सलचरणरणन्नूपुरा दिव्यनार्य्यः"। इन्द्रजालोत्थापितवस्तुकथनमात्रमेवेदं नारभटीभेदः रौद्रवीभत्सान्यतरस्वकत्वाभावात् इतरथा शिल्पेतरेण नैतन्तरत्वम् व्यक्तिभेदाद्धर्मभेदाच्च। धर्मभेदाच्चैतन्तरत्वमाह यथा परशुरामस्येत्यादि। विद्रवः पलायनम्। प्रवेशादिसम्भवं यत्तु अपपातनमित्यर्थः पूर्वं स्थापककर्त्तव्यकथनावसरे।

(ठ) अश्राव्यं परस्य श्रवणायोग्यम्। परावृत्य स्थानान्तरम् गत्वा। अन्तरा वा ।कथाकथ्यं। अन्योन्यस्य यदामन्त्रणं गुह्यभाषणं जनान्ते जनसमीपे। किं ब्रवीषीत्युक्ता पीतं श्रोतृपाठं श्रुत्वा श्रवणाभिनयं कृत्वा

अन्योन्यामन्त्रणं यत्स्याज्जनान्ते तज्जनान्तिकम् ।
किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते ॥
श्रुत्वेवानुक्तमप्यर्थं तत्स्यादाकाशभाषितम् ।

यः कश्चिदर्थो यस्माद्गोपनीयस्तस्यान्तरत ऊर्द्ध्वं सर्वाङ्गुलिनामितानामिकं त्रिपताकलक्षणं करं कृत्वान्येन सह यन्मन्त्र्यते तज्जनान्तिकं परावृत्यान्यस्य रहस्यकथनमपवारितम् । शेषं स्पष्टम् ।

दत्तां सिद्धाञ्च सेनाञ्च वेश्यानां नाम दर्शयेत् ।
दत्तप्रायाणि वणिजां चेटचेट्योस्तथा पुनः ॥
वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद्भवेत् ।

वेश्या यथा वसन्तसेनादिः । वणिग्विष्णुदत्तादिः । चेटः कलहंसादिः । चेटी मन्दारिकादिः ।

नामकार्य्यं नाटकस्य गर्भितार्थप्रकाशकम् ।

यथा रामाभ्युदयादिः ।

नायिकानायकाख्यानां संज्ञा प्रकरणादिषु ॥

यथा मालतीमाधवादिः ।

नाटिका सट्टकादीनां नायिकाभिविशेषणम् ।

यथा रत्नावलीकर्पूरमञ्जर्य्यादिः । (ठ)

---

दत्तामित्यादि नाम्नश्चरमाङ्गलम् । तेन दत्तान्तादि नाम दत्ताप्रायाणि दत्तान्तरबहुलानि । वसन्तादिषु नान्यस्य कलहंसादेर्यन्नाम तच्चेटस्य चेट्यास्तु सादित्यर्थः । एकशेषाभावश्चिन्त्यः गर्भितो गर्भसन्धिना सूचितो योऽर्थः प्रयोजनं तत्प्रकाशकमित्यर्थः । नायिकया सहितो नायको नायि-

प्रायेण ण्यन्तकः साधिगमेः स्थाने प्रयुज्यते।

यथा शाकुन्तले। ऋषी। गच्छाव इत्यर्थं साधयावस्तावत्।

राजा स्वामीति देवेति भृत्यैर्भट्टेति चाधमैः।
राजर्षिभिर्वयस्येति तथा विदूषकेण च।
राजन्नित्यृषिभिर्वाच्यः सोऽपत्यप्रत्ययेन च॥
स्वेच्छया नामभिर्विप्रैर्विप्र आर्य्येति चेतरैः।
वयस्येत्यथवा नाम्ना वाच्यो राज्ञा विदूषकः॥
वाच्यौ नटीसूत्रधारावार्य्यनाम्ना परस्परम्।
सूत्रधारं वदेद्भाव इति वै पारिपार्श्विकः।
सूत्रधारो मारिषेति हण्डे इत्यधमैः समाः॥
वयस्येत्युत्तमैर्हंहो मध्यैरार्य्येति चाग्रजः।
भगवन्निति वक्तव्याः सर्वैर्देवर्षिलिङ्गिनः॥
वदेद्राज्ञीञ्च चेटीञ्च भवतीति विदूषकः।
आयुष्मन्रथिनं सूतो वृद्धं तातेति चेतरैः॥

---

कानायकः अन्यथैकप्रसङ्गात्। प्रकरणादिष्वित्यादिपदेन भाणादिपरिग्रहः। एतत् प्रायिकम् तेन सौगन्धिकाहरणादिसंज्ञापि।

(ड) प्रायेणेति एतेन सुहं चिट्ठउ अज्जउत्तो अहं गमिस्सं इत्युत्थाय गच्छतीति रत्नावल्यां गमेः प्रयोगोऽपि। राजा वाच्य इत्यन्वयः। स राजा अपत्यप्रत्ययेन च अपत्यप्रत्ययान्तपदेन वेत्यर्थः। यथा दाशरथे पौरवपाण्डव इत्यादि। एतच्च पुत्रादिसम्बन्धिपदोपलक्षणम्। तेन रघुनन्दन इत्यादिनापि। स्वेच्छयेति अपत्यप्रत्ययेन नामभिर्वा विप्रैर्विप्रो वाच्यः इतरैः क्षत्रियादिभिरार्य्येति विप्रो वाच्य इत्यर्थः। तेना·

वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुतः ।
शिष्योऽनुजश्च वक्तव्योऽमात्य आर्य्येति चाधमैः ॥
विप्रैरयममात्येति सचिवेति च भण्यते ।
साधो इति तपस्वी च प्रशान्तश्चोच्यते बुधैः ॥
स्वगृहीताभिधः पूज्यः शिष्याद्यैर्विनिगद्यते ।
उपाध्यायेति चाचार्य्यो महाराजेति भूपतिः ॥
स्वामीति युवराजस्तु कुमारो भर्तृदारकः ।
सौम्य भद्रमुखेत्येवमधमैस्तु कुमारकः ॥
वाच्या प्रकृतिभी राज्ञः कुमारी भर्तृदारिका ।
पतिर्यथा तथा वाच्या ज्येष्ठमध्याधमैः स्त्रियः ॥
हलेति सदृशी प्रेष्या हञ्जे वेश्याऽज्जुका तथा ।
कुट्टिन्यम्बेत्यनुगतैः पूज्या च जरती जनैः ॥

---

नर्घराघवादौ विश्वामित्रेति कौशिकेति कुशिकनन्दनेत्यादिना शतानन्देन विश्वामित्र उक्तः । आर्यनाम्ना आर्यशब्देन नञ्योग्यत्वादार्य्यशब्देनाह्वानं तं पारिपार्श्विकं समा आत्मतुल्याः उत्तमैः समा वयस्येति वाच्याः मध्यो मध्यमैर्हंहो इति समा वाच्याः सर्वैरार्येत्यग्रजो वाच्यः । इतरो युवा बालश्च गोत्रेण अपत्यप्रत्ययान्तेन अयममात्यः । प्रशान्तो वीतरागः ॥ पूज्यो जनः शिष्याद्यैः स्वगृहीताभिधो विनिगद्यते इत्यन्वयः । स्वगृहीतास्वेच्छया प्रयुक्ता अभिधा पूज्यत्वप्रकाशकनाम । भगवन्निति महाभागेत्यादिना यस्य सः । महाराजेति स्वामी वा भूपतिर्विनिगद्यते इत्यन्वयः ॥ युवराजः कुमारो भर्तृदारको वा वाच्यः कुमारको युवराजः । पतिर्यथेति उत्तमेनोत्तमा स्त्री वयस्येति मध्येन मध्यमा हंहो इति अधमेनाधमा

आमन्त्रणैश्च पाषण्डा वाच्याः स्वसमयागतैः ॥
शकादयश्च सम्भाष्या भद्रदत्तादिनामभिः ॥
यस्य यत्कर्म शिल्पं वा विद्या वा जातिरेव वा ।
तेनैव नाम्ना वाच्योऽसौ ज्ञेयाश्चान्ये यथोचितम्
(ड)

अथ भाषाविभागः ।

पुरुषाणामनीचानां संस्कृतं स्यात्कृतात्मनाम् ।
शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम् ॥
आसामेव तु गाथासु महाराष्ट्रीं प्रयोजयेत् ।
अत्रोक्ता मागधीभाषा राजान्तःपुरचारिणाम् ॥
चेटानां राजपुत्राणां श्रेष्ठानां चार्द्धमागधी ।
प्राच्या विदूषकादीनां धूर्त्तानां स्यादवन्तिका ॥

---

हण्डे इति वाच्या इत्यर्थः । सदृशी आत्मतुल्या कुट्टिनी तथा अज्जुका वाच्या । अनुगतैः सेवकैः पूज्या अम्बेति वाच्या । जरती वृद्धा जनैरम्बेति वाच्या । आमन्त्रणैः सम्बोधनपदैः स्वसमयागतैः स्वसङ्केतप्राप्तैः कापालिकेत्यादिभिः । शाक्यादयोऽन्तःपुरसहायाश्च प्रागुक्ताः । कर्म मालाकरणादि शिल्पम् कलादिकर्म । विद्या मीमांसादि जातिर्ब्राह्मणत्वादि । तेनैव तत्कर्मादिप्रकाशकेन मालाकारादिपदेन । असौ मालाकारादिः ज्ञेयाश्चेति अन्ये भित्रादयो भित्रादिपदेन वाच्या इत्यर्थः ।

(ढ) अनीचानामुत्तममध्यमानां कृतात्मनां पण्डितानाञ्चेत्यर्थः । तादृशीनामनीचानां गाथासु श्लोकेषु । अत्र नाटकादौ राजान्तःपुरचारिणां वमानादीनां । चेटानां भृत्यानां । प्राच्या गौडीया । धूर्त्तानामच्छदेवि-

योधनागरिकादीनां दाक्षिणात्या हि दीव्यताम्
शकाराणां शकादीनां शाबरीं सम्प्रयोजयेत् ॥
वाह्लीकभाषा दिव्यानां द्राविड़ी द्रविड़ादिषु ।
आभीरेषु तथाभीरी चाण्डाली पुक्कसादिषु ॥
आभीरी शाबरी चापि काष्ठपत्रोपजीविषु ।
तथैवाङ्गारकारादौ पैशाची स्यात्पिशाचवाक् ॥
चेटीनामप्यनीचानामपि स्यात् शौरसेनिका ।
बालानां षण्डकानाञ्च नीचग्रहविचारिणाम् ॥
उन्मत्तानामातुराणां सैव स्यात संस्कृतं क्वचित् ।
ऐश्वर्य्येण प्रमत्तस्य दारिद्र्योपद्रुतस्य च ।
भिक्षुबन्धधरादीनां प्राकृतं सम्प्रयोजयेत् ॥
संस्कृतं सम्प्रयोक्तव्यं लिङ्गिनीषूत्तमासु च ॥
देवीमन्त्रिसुतावेश्यास्वपि कैश्चित्तथोदितम् ।
यद्देश्यं नीचपात्रन्तु तद्देश्यं तस्य भाषितम् ॥
कार्य्यतश्चोत्तमादीनां कार्य्यो भाषाविपर्य्ययः ॥

---

नाम् । दाक्षिणात्या वैदर्भी । पिशाचवाक् चेटीनामपीत्यन्वयः । अनीचानामुत्कृष्टचेटीनान्तु शौरसेनी । ग्रहविचारिणो दैवज्ञाः । सैव शौरसेनी एव । प्राकृतं शौरसेन्यादिद्राविडीपर्य्यन्तानामन्यतमं महाराष्ट्रीं वा । लिङ्गिनीषु सन्न्यासादिचिह्नधारिणीषु । कार्य्यत इति उत्तमस्य राजान्तःपुरचारित्वे मागधी न तु संस्कृतमेवमन्यत्रापि । अतएवानर्घराघवादौ राजपुत्रस्यापि रामचन्द्रादेरुत्तमकार्य्यकारित्वेन संस्कृतेनैव व्यवहारो

योषित्सखीबालवेश्याकितवाप्सरसां तथा।
वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा॥

एषामुदाहरणान्याकरेषु बोद्धव्यानि। भाषालक्षणानि मम तातपादानां भाषार्णवे। (क)

षट्त्रिंशल्लक्षणान्यत्र नाट्यालङ्कृतयस्तथा।
त्रयस्त्रिंशत् प्रयोज्यानि वीथ्यङ्गानि त्रयोदश॥
लास्याङ्गानि दश यथा लाभं रसव्यपेक्षया।

यथा लाभं प्रयोज्यानीति सम्बन्धः। अत्रेति नाटके। तत्र लक्षणानि।

भूषणाक्षरसंघातौ शोभोदाहरणं तथा।
हेतुसंशयदृष्टान्तास्तुल्यतर्कः पदोच्चयः॥
निदर्शनाभिप्रायौ च प्राप्तिर्विचार एव च।
दिष्टोपदिष्टे च गुणातिपातातिशयौ तथा॥
विशेषणनिरुक्ती च सिद्धिभ्रंशविपर्ययौ।
दाक्षिण्यानुनयौ मालाऽर्थापत्तिर्गर्हणं तथा॥

---

वर्णितो न लघुभागध्या। वैदग्ध्यार्थं वैदग्ध्यज्ञापनार्थं अन्तरान्तरा तत्तद्भाषायां मध्ये। एषां भाषाविशेषाणाम्। आकरेषु नाटकादिषु भाषार्णवे बोध्यानीति पूर्वेणान्वयः।

(ख) यथालाभं यथायोग्यम्। रसव्यपेक्षया रसाकाङ्क्षया। यस्मिन् रसे यदाकाङ्क्षितं योग्यञ्च भवति तत्तस्मिन् वर्णनीयमिति भावः। गुणैर्माधुर्यौजः प्रसादैः यमकोपमाद्यलङ्कारसहितैः योगः परस्परमेलकः। आक्षिपन्ति निन्दन्ति। कोषो बीजं कोषो भाण्डारञ्च दण्डो-

**इच्छा प्रसिद्धिः सारूप्यं सङ्क्षेपो गुणकीर्त्तनम्।**
**लेशो मनोरथोऽनुक्तसिद्धिः प्रियवचस्तथा।**

तत्र।

**लक्षणानि गुणैः सालङ्कारैर्योगस्तु भूषणम्।**

यथा।

"आक्षिपन्त्यरविन्दानि मुग्धे! तव मुखश्रियम्।
कोषदण्डसमग्राणां किमेषामस्ति दुष्करम्"॥

**वर्णनाक्षरसंघातश्चित्रार्थैरक्षरैर्मितैः॥**

यथा शाकुन्तले राजा "कच्चित् सखीं विनाऽतिबाधते शरीरसन्तापः। प्रियम्वदा। सम्पदं लद्धोसहो उवसमं गमिस्सदि"॥

**सिद्धैरर्थैः समं यत्राप्रसिद्धोऽर्थः प्रकाशते।**
**श्लिष्टलक्षणचित्रार्था सा शोभेत्यभिधीयते॥**

यथा।

"सद्वंशसम्भवः शुद्धः कोटिदोऽपि गुणान्वितः।
कामं धनुरिव क्रूरो वर्जनीयः सताम्प्रभुः॥" (ग)

---

नालं चतुर्थोपायस्य। अत्रारविन्दानामचेतनतया निन्दा न सम्भवतीति उपमा कल्प्यते इति निदर्शना। एवञ्च निदर्शनार्थान्तरन्यासस्य पालङ्कारसहिताभ्यां माधुर्यप्रसादाभ्यां योगः। चित्रो विदग्धमनोरमोऽर्थो निरीक्ष्यश्च। कोटिः संख्याविशेषोऽपञ्च गुणः शौर्यादि मौर्वी च। क्रूरः कुटिनः कठिनश्च। अत्र सिद्धैरन्वयादिभिः समभेदादेव प्रसिद्धो वेणवादिरर्थो भाषते।

**यत्र तुल्यार्थयुक्तेन वाक्येनाभिप्रदर्शनात् ।**
**साध्यतेऽभिमतश्चार्थस्तदुदाहरणं मतम् ॥**

यथा ।

"अनुयान्त्या जनातीतं कान्तं साधु त्वया कृतम् ।
का दिनश्रीर्विनार्केण का निशा शशिना विना" ॥

**हेतुर्वाक्यं समासोक्तमिष्टकृद्धेतुदर्शनात् ।**

यथा वेण्यां भीमं प्रति चेटी । एवं मए भणिदम् । भाणुमदि ! तुह्माणं अमुक्केसु केसहत्थेसु कधं अह्माणं देवीए केसा संयमीअन्तित्ति । (एवं मया भणितम् । भानुमति ! युष्माकममुक्तेषु केशहस्तेषु कथमस्माकं देव्याः केशाः संयम्यन्त इति ।)

**संशयोऽज्ञाततत्त्वस्य वाक्ये स्याद्यदनिश्चयः ।**

यथा ययातिविजये ।

"इयं स्वर्गाधिनाथस्य लक्ष्मीः किं यक्षकन्यका ।
किञ्चास्य विषयस्यैव देवता किमु पार्व्वती" ॥

**दृष्टान्तो यस्तु पक्षार्थसाधनाय निदर्शनम् ।**

यथा वेण्यां भीमः । "आर्य्ये ! उचितमेवैतत् तस्याः यतो दुर्य्योधनकलत्रं" हि सेत्यादि" ।

(त) अभिप्रदर्शनात् वक्तुरभिप्रायज्ञापनात् साध्यते ज्ञाप्यते । अभिमतो बोधयितुमिष्टः । अनुयान्त्येति कान्तमरणेन दुःखमनुभवन्त्या उक्तिरियम् । अत्रार्कं विना दिनश्रीरिव शशिनं विना कान्तं विना योषिदशोभनैवेति प्रतीयते । समासेन संक्षेपेण उक्तमिष्टवदभीष्टार्थबोधकम् । एवं भणितं मया भानुमति युष्माकं केशेषु अमुक्तेषु कथं देव्याः केशाः संयम्यते इति यम् । अत्र द्रौपदी-

**तुल्यतर्को यदर्थेन तर्कः प्रकृतिगामिना ।**

यथा तत्रैव ।

"प्रायेणैव हि दृश्यन्ते कामं स्वप्नाः शुभाशुभाः ।
शतसङ्ख्या पुनरियं सानुजं स्पृशतीव माम्" ॥

**सञ्चयोऽर्थानुरूपो यः पदानां स पदोच्चयः ।**

शाकुन्तले यथा । (त)

"अधरः किशलयरागः कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्" ॥

अत्र पदपदार्थयोः सौकुमार्य्यं सदृशमेव ।

**यत्रार्थानां प्रसिद्धानां क्रियते परिकीर्त्तनम् ।**
**परपक्षव्युदासार्थं तन्निदर्शनमुच्यते ॥**

---

केशासंयमनस्य हेतुर्भानुमतीकेशाकर्षं तद्दर्शनेन दुर्योधनवधे सत्येव देव्याः केशबन्धनं भविष्यतीति अभिमतार्थबोधः । अज्ञाततत्त्वस्य अज्ञानविशेषस्य । यदित्यस्य यं य इत्यर्थः । वि यस्य दे [illegible] । दृष्टान्त इति पक्षेऽर्थस्य साध्यस्य साधनाय ज्ञापनाय निदर्शनं [illegible]म् । तस्या भानुमत्याः । सा भानुमती । अर्थेन वस्तुना तर्को [illegible]व्ययस्तर्कः [illegible]म् । प्रकृतिगामिना प्रकृतेन न तु प्रकृतिविपर्य्यासरूपेण अद्भुतेन । प्रायेणैव इति स्वप्नदर्शनस्य प्रकृतत्वज्ञापनायेदम् । सञ्चयः समूहः । अर्थानुरूपोऽभिधेयसदृशः । सुकुमारार्थे सुकुमारपदसञ्चयस्य उद्धतार्थे उद्धतपदसञ्चयस्य प्रयोग इत्यर्थः ।

(थ) अधर इति । विटपानुकारिणौ शाखासदृशौ । यथा-या प्रागप्राप्तनिशुम्भशाम्भवधनुर्द्वैधाविधाविर्भवत् क्रोधप्रेरितभीमभार्गवभुजस्तम्भापविद्धः क्षणात् । उज्ज्वालः परशुर्भवत्यशिथिलस्तु-

यथा ॥

"क्षात्रधर्मोचितैर्धर्मैरलं शत्रुवधे नृपाः ।
किन्नु वालिनि रामेण मुक्तो वाणः पराङ्मुखे" ॥

**अभिप्रायस्तु सादृश्यादद्भुतार्थस्य कल्पना ।**

यथा शाकुन्तले ।

"इदं किलाव्याजमनोहरं वपु-
स्तपः क्षमं साधयितुं य इच्छति ।
ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति ॥

**प्राप्तिः केनचिदंशेन किञ्चिदूयत्रानुमीयते ॥**

यथा मम प्रभावत्याम् । "अनेन खलु सर्वतश्चरता चञ्चरीकेणावश्यं विदिता भविष्यति प्रियतमा मे प्रभावती" ।

**विचारो युक्तिवाक्यैर्यदप्रत्यक्षार्थसाधनम् ।**

यथा मम चन्द्रकलायां "राजा । नूनमियमन्तः पिहितऽमदनविकारा वर्त्तते । यतः ।
हसति परितोषरहितं निरीक्ष्यमाणापि नेक्षते किञ्चित् ।
सख्यामुदाहरन्त्यामसमञ्जसमुत्तरं दत्ते" ॥

---

कण्ठपीठातिथिर्येनानेन जगत् सुखण्डपरशुर्देवो हरः ख्याप्यते । शाग-शाम्नविशुम्भेति शागशाम्नविशु नेत्यर्थः । अत्र शब्दार्थयोरुद्भटत्वं स्पष्टम् । यत्रार्थानामिति पञ्चमतम् । किन्नु इति यथेत्यर्थे । पराङ्मुखे अन्यासक्ते । अत्र क्षत्रधर्मव्युदासार्थं परासक्तवालिनि श्रीरामस्य वाण-मोचः प्रसिद्धोऽर्थः कीर्त्तितः । अभूतार्थस्य असम्भाविनो वस्तुनः । अव्याजेन स्वभावेन मनोहरं ऋषिः कण्वः व्यवस्यति इच्छति । उत्पल॰

देशकालस्वरूपेण वर्णनादिष्टमुच्यते ।

यथा वेण्यां सहदेवः ।

"यद्वैद्युतमिव ज्योतिरार्य्ये क्रुद्धेऽद्य सम्भृतम् ।
तत्प्रावृडिव कृष्णेयं नूनं संवर्द्धयिष्यति" ।

उपदिष्टं मनोहारि वाक्यं शास्त्रानुसारतः ।

यथा शाकुन्तले । (थ)

"शुश्रूषस्व गुरून् कुरु प्रियसखीवृत्तिं सपत्नीजने ।
भर्त्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गम इत्यादि" ॥

गुणातिपातः कार्य्यं यद्विपरीतं गुणान् प्रति ।

यथा मम चन्द्रकलायां चन्द्रं प्रति । "जइ संहरिज्जइ तमो घेप्पइ सअलेहिं ते पाओ वससि सिरे पसुवइणो तहवि इत्थीअ जीअं हरसि" ।

यः सामान्यगुणोद्रेकः स गुणातिशयो मतः ।

---

पत्रधारया शमीलताच्छेदनमिव शकुन्तलाशरीरेण तपः साधनमसम्भवि । प्राप्निरिति अंशेन विशेषणेन । चञ्चरीकेन भ्रमरेण । अत्र सर्वतश्चरतेति विशेषणेन भ्रमरस्य स्वप्रियतमाघ्राणं नायकेनानुमीयते। विचार इति युक्तिवाक्यैर्हेतु बोधकवाक्यैः । अप्रत्यक्षस्य साधनं ज्ञापनम् । असमञ्जसम-योग्यम् । देशकालेति देशकालयोः स्वरूपेण साधर्म्येण प्रावृडिव वर्षा-काल इव ।

(द) शुश्रूषस्वेति पतिगेहं गच्छन्तीं शकुन्तलां प्रति कण्वस्योप-देशोऽयम् । गुणान् प्रतीति गुणानामित्यर्थः । जइ इति यदि संह्रियते तमो गृह्यते सकलैस्ते पादः । वससि शिरसि पशुपतेस्तथापि हा स्त्रिया-

यथा तत्रैव राजा चन्द्रकलायां मुखं निर्दिशन् ।

"असावन्तश्चञ्चद्विकचनवनीलाब्जयुगल-
स्तलस्फूर्ज्जत्कम्बुर्विलसदलिसङ्घात उपरि ।
विना दोषासङ्गं सततपरिपूर्णाखिलकलः ।
कुतः प्राप्तश्चन्द्रो विगलितकलङ्कः सुमुखि ! ते" ॥

**अर्थान् सिद्धान् बहूनुक्त्वा विशेषोक्तिर्विशेषणम् ॥**

यथा । (ट)

"तृष्णापहारी विमलो द्विजावासो जनप्रियः ।
ह्रदः पद्माकरः किन्तु बुधस्त्वं स जडाशयः" ॥

**पूर्वसिद्धार्थकथनं विरुक्तिरिति कीर्त्तितम् ।**

यथा वेण्याम । "निहताशेषकौरव्य इत्यादि" ।

**बहूनां कीर्त्तनं सिद्धिरभिप्रेतार्थसिद्धये ।**

---

जीवनं हरसीति च । तत्र चन्द्रस्य स्त्रीवधस्तमोहरणादिगुणविपरीतं कार्य्यम् । सामान्यगुणेभ्यः उपमानोपमेयवृत्तिसाधारणधर्मेभ्यः । उद्रेक आधिक्यमुपमेयस्य । तले अधोभागे स्फुर्जन दीप्यमानः कम्बुः कण्ठरूपो यस्य सः । दोषासङ्गं विना दोषरहित इत्यर्थः । अथ च दोषा रात्रिः तस्याः सङ्गं विना । कलाः कलाभास्तानि षोड़शभागाश्च कलाह्लादकत्वादिसाधारणधर्मेभ्यो नीलाब्जयुगलादिसम्बन्धादाधिक्यं मुखस्य । अर्थानिति सिद्धान् प्रसिद्धान् विशेषोक्तिर्भेदकथनम् । तृष्णेति ह्रदस्त्वञ्चैतादृशः किन्तु त्वं बुधः स ह्रदो जड़ाशयः सलिलवान् जाड्य-युक्तश्च ।

(ट) तृष्णा धनेच्छा पिपासा च । मलः पापं पङ्कश्च । द्विजा विप्राः पक्षिणश्च । पद्माकरः पद्मानामाधारश्च । अत्रान्त्यपादे विशेषकथनमु व्यतिरेकालङ्कारोऽयम् । पूर्वेति चौवो मत्तः भङ्क्ता भञ्जनकर्त्ता बहूना-

यथा।

"यद्वीर्य्यं कूर्म्मराजस्य यश्च शेषस्य विक्रमः।
पृथिव्या रक्षणे राजन्नेकत्र त्वयि तत् स्थितम्"॥

**इष्टादीनां भवेद्भ्रंशो वाच्यादन्यतरद्वचः।**

वेण्यां कञ्चुकिनं प्रति दुर्य्योधनः।

"सहभृत्यगणं सबान्धवं सहमित्रं ससुतं सहानुजम्।
स्वबलेन निहन्ति संयुगे न चिरात् पाण्डुसुतः सुयोधनम्"॥

**विचारस्यान्यथाभावः सन्देहात्तु विपर्य्ययः।**

यथा।

"मत्वा लोकमदातारं सन्तोषे यैः कृता मतिः।
त्वयि राजनि ते राजन् तथा व्यवसायिनः"॥

**दाक्षिण्यं चेष्टया वाचा परचित्तानुवर्त्तनम्।**

वाचा यथा।

"प्रसाधय पुरीं लङ्कां राजा त्वं हि विभीषण।
आर्य्येणानुगृहीतस्य न विघ्नाः सिद्धिमन्तरा"॥

**वाक्यैः स्निग्धैरनुनयो भवेदर्थस्य साधनम्।**

---

मिति एतदनेकोपलक्षणम्। तेन नोक्तोदाहरणासंग्रहः। एकस्मिन् बहूनां गुणकथनमित्यर्थः। यद्वीर्य्यमिति अत्र राज्ञः पृथिवीपालनभारसहिष्णुतातिशयबोधाय तदुभयकीर्त्तनम्। इष्टादीनामित्यादिपदेन हृष्टदुःखितादीनां ग्रहणम्। वाच्याद्वक्तुमिष्टादन्यतरद्विपरीतम् न चिरादिति चिरान्न हन्तीति वक्तुमिष्टं अचिराद्धन्तीत्यन्यथा जातम् विचारस्य तत्त्वनिश्चयस्यान्यथाभावोऽभावः। सन्तोषे धनतृष्णागमजन्य-

एवं चेष्टयापि ।

यथा वेणाम् अश्वत्थामानं प्रति कृपः । "दिव्यास्त्रग्राम-कोविदे भारद्वाजतुल्यपराक्रमे किं न सम्भाव्यते त्वयि" ।

**माला स्याद्यदभीष्टार्थं नैकार्थप्रतिपादनम् ।**

यथा शाकुन्तले राजा । (ध)

"किं शीकरैः क्लमविरोधिभिरार्द्रवातम् ।
सञ्चारयामि नलिनीदलतालवृन्तैः
अङ्के निवेश्य चरणावुत पद्मताम्रौ ।
संवाहयामि करभोरु ! यथा सुखं ते" ॥

**अर्थापत्तिर्यदन्यार्थोऽर्थान्तरोक्तेः प्रतीयते ।**

यथा वेणाम् । द्रोणोऽश्वत्थामानं राज्येऽभिषेक्तुमिच्छतीति कथयन्तं कर्णं प्रति "राजा । साधु अङ्गराज साधु" कथमन्यथा ।

---

सुखेन तथा व्यवसायिनो न दातृत्वनिश्चयवन्तः । अत्र भवद्विधे दातरि दातृत्वनिश्चयाभाव एव विचाराभावः । परचित्तस्यानुवर्त्तनं प्रीणनम् स्वार्थेण श्रीरामेण अन्तरा मध्ये । चेष्टया यथा शाकुन्तले तदहमेनाम-न्वणां करोमित्यङ्गुरीयकं ददाति । अत्राङ्गुरीयदानरूपचेष्टया शकु-न्तलाचित्तप्रीणनम् । वाक्यैरिति अर्थस्य प्रयोजनस्य । भारद्वाजो-द्रोणः । मालेति अभीष्टार्थं स्वाभीष्टसिद्ध्यै नैकार्थप्रतिपादनम् अनेकका-र्यस्य ज्ञापनम् ।

(ध) शीकरैरम्बुकणैरार्द्रः शीतलो वातो यस्य तत् सञ्चार-यामि नलिनीदलमेव तालवृन्तं वृन्तैरिति पाठे शीकरैः सह नलिनी-दलतालवृन्तैरार्द्रवातं सञ्चारयामि स्वल्पशरीरं प्रापयामि । उत

"दृष्टवाऽभयं सोऽतिरथो बध्यमानं किरीटिना।
सिन्धुराजमुपेक्षेत नैवं चेत्कथमन्यथा" ॥

दूषणोद्‌घोषणायां यत्तु भर्त्सना गर्हणं तु तत्।

यथा तत्रैव कर्णं प्रति "अश्वत्थामा। निर्वीर्यं गुरुशाप-भासितवशात् किं मे तवैवायुधमित्यादि"।

अभ्यर्थनापरैर्वाक्यैः पृच्छाऽर्थान्वेषणं मतम् ॥

यथा तत्रैव "सुन्दरकः! अज्जा! अज्ज अवि णाम सारधि-दुदिओ दिट्ठो तुम्हेहिं महाराओ दुय्योधण ण वत्ति"।

प्रसिद्धिर्लोकसिद्धार्थैरुत्कृष्टैरर्थसाधनम्।

यथा विक्रमोर्व्वश्यां "राजा। (न)
सूर्य्याचन्द्रमसौ यस्य मातामहपितामहौ।
स्वयं वृतः पतिर्द्वाभ्यामुर्वश्या च भुवा च यः" ॥

---

दुष्मन्तस्य सुरतरूपस्वाभोगसिद्ध्यर्थं शकुन्तलायां समीरसञ्चारपादस्य वाहनकार्य्ययोज्ञापनम्। अर्थापत्तिरिति कुरुराजेति कर्णसम्बोधनम् कथमन्यथेति भवता वक्तव्येतिशेषः। स द्रोणः सिन्धुराजं जयद्रथम्। एवं पुत्राभिषेकाभिप्रायः अन्यथा प्रकारान्तरेण। अत्र सिन्धुराजोपेक्षा-रूपार्थान्तरोक्त्या द्रोणस्य पुत्राभिषेकाभिप्रायः प्रतीयते। दूषणोद्‌घो-षणायामिति कृतायामिति शेषः। अभ्यर्थनापरैः सविनयैः। अज्जा इतिआर्य्याः अपि नाम सारथिद्वितीयो दृष्टोयुष्माभिर्महाराजदुर्य्योधनो न वेति सम्। लोकसिद्धार्थैर्लोकव्याख्यातवस्तुभिः अर्थः साधनं पदार्थ-परिचयः।

(प) सूर्य्याचन्द्रमसाविति अत्र सूर्य्यादिभिः प्रसिद्धार्थैः पुरुरवस

**सारूप्यमभिभूतस्य सारूप्यात् चोभवर्त्तनम् ॥**

यथा वेण्याम्। दुर्य्योधनभ्रान्त्या भीमं प्रति "युधिष्ठिरः। दुरात्मन् दुर्य्योधनहतकेत्यादि" ॥

**संक्षेपो यत्तु संक्षेपादात्मान्यार्थे प्रयुज्यते।**

यथा मम चन्द्रकलायाम्। "राजा! प्रिये। अङ्गानि खेदयसि किं शिरीषकुसुमपरिपेलवानि मुधा"।

आत्मानं निर्द्दिश्य।

"अयमीहितकुसुमानां सम्पादयिता तवास्ति दासजनः"।

**गुणानां कीर्त्तनं यत्तु तदेव गुणकीर्त्तनम्।**

यथा तत्रैव। नेत्रे खञ्जन इत्यादि"।

**स लेशो भण्यते वाक्यं यत्सादृश्यपुरःसरम्।**

यथा वेण्याम्। "राजा।

"हते जरति गाङ्गेये पुरस्कृत्य शिखण्डिनम्।

या श्लाघा पाण्डुपुत्राणां सैवास्माकं भविष्यति"।

**मनोरथस्त्वभिप्रायस्योक्तिर्भङ्ग्यन्तरेण यत्।**

यथा। (प)

---

परिचयः। अनुरूपस्य सदृशस्य सारूप्यात् सादृश्यजनितभ्रमात्। अनुभूतस्येति पाठे सादृश्यादनुभूतस्य भ्रमविशेषस्येत्यर्थः। संक्षेपादविशेषात् अन्यार्थे अर्थान्तरस्थाने प्रयुज्यते निर्द्दिश्यते। अयमिति अत्रायमित्यनेनात्मा अन्यो वेति न विशेषकथनम्। अत एवार्थान्तरस्थाने आत्मनः प्रयोगः। सादृश्यपुरःसरं सादृश्यतात्पर्य्यकम्। गाङ्गेये भीष्मे। सैवेति तत्तुल्यश्लाघायां तात्पर्य्यम् यत्रा दृढस्य छलेन हनने श्लाघानुपयुक्ता

"रतिकेलिकलः किञ्चिदेषो मन्मथमन्थरः ।
पश्य सुभ्रु ! समाश्वस्तां कादम्बश्चुम्बति प्रियाम्" ॥

**विशेषार्थोऽतिविस्तारोऽनुक्तसिद्धिरुदीर्य्यते ॥**

यथा वृहद्वृत्तवाटिकायाम् ।
"दृश्येते तन्वि ! यावेतौ चारुचन्द्रमसं प्रति ।
प्राज्ञे कल्याणनामानावुभौ तिष्यपुनर्वसू" ॥

**स्यात्प्रमाणयितुं पूज्यं प्रियोक्तिर्हर्षभाषणम् ।**

यथा शाकुन्तले ।
"उदेति पूर्वं कुसुमं ततः फलं
घनोदयः प्राक् तदनन्तरं पयः ।
निमित्तनैमित्तकयोरयं विधि-
स्तव प्रसादस्य पुरस्तु सम्पदः" ॥

अथ नाट्यालङ्काराः ।

**आशीराक्रन्दकपटाक्षमागर्वोद्यमाश्रयाः ।**
**उत्प्रासनं स्पृहाक्षोभपश्चात्तापोपपत्तयः ॥**

---

तथा अस्माकमपि बालकस्यैकाकिनोऽभिमन्योर्बहुभिर्हनने भविष्यतीति भावः । उक्तिश्चोपगमम् भङ्ग्यन्तरेण सहृशदर्शनादिना ।

(फ) रतिकेलिं कलयति सः । यद्वा रतौ केलिकला यस्य सः । समानत्वादादराधिक्यात् । कादम्बः कलहंसः । अत्र प्रियायै कादम्बस्य प्रियाचुम्बनं दर्शयन्नायकः स्वस्य प्रियाचुम्बनाभिप्रायः सूचितः । विशेषेति रूपलावण्याद्यतिशयज्ञापनम् विशेषस्तस्मै प्रयोजनं विशेषार्थः अहविस्तारस्तर्कातिशयः । दृश्येते इति ग्रहोपवने विश्वामित्रसमीपे

आशंसाध्यवसायौ च विसर्पोल्लेखसञ्ज्ञितौ ।
उत्तेजनं परीवादो नीतिरर्थविशेषणम् ॥
प्रोत्साहनञ्च साहाय्यमभिमानोऽनुवर्त्तनम् ।
उत्कीर्त्तनं तथा याञ्चा परीहारो निवेदनम् ॥
प्रवर्त्तनाख्यानयुक्तिप्रहर्षाश्चोपदेशनम् ।
इति नाट्यालङ्कृतयो नाट्यभूषणहेतवः ॥

आशीरिष्टजनाशंसा

यथा शाकुन्तले । (क)

"ययातेरिव शर्म्मिष्ठा पत्युर्बहुमता भव ।
सुतं त्वमपि सम्राजं सेव पूरुमवाप्नुहि" ॥

आक्रन्दः प्रलपितं शुचा ।

यथा वेण्याम् । "कञ्चुकी । हा देवि ! कुन्ति ! राजभवनपताके इत्यादि" ।

---

श्रीरामलक्ष्मणौ दृष्ट्वा सीतां सम्बोध्य तत्सखीनां वितर्कवर्णनमिदम् । अत्र चन्द्रादीनां पृथिव्यामसम्भवे वितर्कातिशयः । प्रमाणयितुं प्रमाणं कर्त्तुं, हर्षजनकं भाषणं हर्षभाषणम् । निमित्तनैमित्तिकयोर्हेतुफलयोः कार्यं पौर्व्वापर्य्यरूपो विधिः क्रमः । नाट्यालङ्कारमाह आशीरिति । अलङ्कृतिपदस्य योगार्थमाह नाट्यभूषणहेतव इति । इष्टजनस्य बन्धोराशंसा अभिमतप्राप्तीच्छा ।

(क) सम्राजं राजसमूहस्य शास्तारम् । सेव शर्म्मिष्ठेव । अत्र कण्वस्य शकुन्तलायाः अभीष्टलाभेच्छा । विभाव्यते प्रकाश्यते । तेन मारीचेन । अवमेति खलस्यापि परिभवस्यासहनमित्यर्थः । भो इत्यादि

**कपटं मायया यत्र रूपमन्यद्विभाव्यते।**

यथा कुलपत्यङ्के।

"मृगरूपं परित्यज्य विधाय कपटं वपुः।
नीयते रक्षसा तेन लक्ष्मणो युधि संशयम्"॥

**अक्षमा सा परिभवः स्वल्पोऽपि नाभिसह्यते।**

यथा शाकुन्तले। "राजा। भोः सत्यवादिन् अभ्युपगतं तावदस्माभिः। किं पुनरिमामभिसन्धाय! लभ्यते। शार्ङ्गरवः। विनिपात इत्यादि"।

**गर्वोऽवलेपजं वाक्यं**

यथा तत्रैव "राजा। ममापि नाम सत्त्वैरभिभूयन्ते गृहाः"।

**कार्य्यस्यारम्भ उद्यमः।**

यथा कुम्भे "रावणः। पश्यामि शोकविवशोऽन्तकमेव तावत्"।

**ग्रहणं गुणवत्कार्य्यहेतोराश्रय उच्यते।**

यथा विभीषणनिर्भर्त्सनाङ्के। "विभीषणः। राममेवाश्रयिष्यामीति"।

---

लभ्यत इत्यन्तं दुष्मन्तस्य वचनं। शार्ङ्गरवः कण्वशिष्यः व्याहेतिशेषः। विनिपात इति लभ्यत इत्यनेनान्वेति। अत्र राजकृतस्याल्पस्यापि परिभवस्य शार्ङ्गरवेणासहनं। अवलेपजमहङ्कारजन्यम्। सत्त्वैः प्राणिभिः पश्यामीति अत्र समरोद्यमः सूचितः। गुणवदिति उत्कृष्टेत्यर्थः। राम-

**उत्प्रासनन्तूपहासो योऽसाधौ साधुमानिनि ।**

यथा शाकुन्तले । "शार्ङ्गरव । राजन् अथ पुनः पूर्ववृत्तान्तमन्यसङ्गाद्विस्मृतो भवान् तत्कथमधर्म्मभीरोर्दारपरित्याग इत्यादि" ।

**आकांक्षा रमणीयत्वाद्वस्तुनो या स्पृहा तु सा ।**

यथा तत्रैव "राजा ।

चारुणा स्फुरितेनायमपरिक्षतकोमलः ।
पिपासतो ममानुज्ञां ददातीव प्रियाधरः" ॥

**अधिक्षेपवचः कारी चोभः प्रोक्तः स एव तु ।**

यथा ।

"त्वया तपस्विचाण्डाल ! प्रच्छन्नबधवर्त्तिना ।
न केवलं हतो वाली स्वात्मा च परलोकतः" ॥

**मोहावधीरितार्थस्य पश्चात्तापः स एव तु ।**

यथाऽनुतापाङ्के । "रामः । किं देव्या न विचुम्बितोऽस्मि बहुशो मिथ्याभिशप्तस्तदेति" ।

---

मैवेति अत्र विभीषणस्य स्वराज्यप्राप्तिरूपोत्कृष्टकार्य्यस्य हेतुः श्रीरामाश्रयः । आत्मनं साधुं मन्यते साधुमानी तस्मिन् । अथ पुनरिति वितर्के । पूर्ववृत्तान्तं शकुन्तलाया गान्धर्वविवाहरूपम् । अन्यसङ्गात् भार्य्यान्तरसंसर्गात् । तत्कथमिति अन्यथा कथमित्यर्थः । अपरिक्षतोनायकेनादष्टः अत एव कोमलः । अधिक्षेपो भर्त्सनवाक्यं । चोभश्चित्तव्यथा । स एव चोभनामालङ्कार एव । प्रच्छन्नबधवर्त्तिना अलक्षितहिंसाकारिणा । मोहेनावधीरितस्यावज्ञातस्य अर्थस्य प्रयोजनस्य । स एव पश्चा-

उपपत्तिर्मता हेतोरुपन्यासोऽर्थसिद्धये ।

यथा वध्यशिलायाम् । (ब)

"म्रियते म्रियमाणे या त्वयि जीवति जीवति ।
तां यदीच्छसि जीवन्तीं रक्षात्मानं ममाऽसुभिः" ॥

आशंसनं स्यादाशंसा ॥

यथा श्मशाने "माधवः । तत्पश्येयमनङ्गमङ्गलगृहं भूयोऽपि तस्या मुखमिति" ।

प्रतिज्ञाध्यवसायकः ।

यथा मम प्रभावत्यां वज्रनाभः ।

"अस्य वक्षः क्षणेनैव निर्मथ्य गदयानया ।
लीलयोन्मूलयाम्येव भुवनद्वयमद्य वः" ॥

विसर्पो यत्समारब्धं कर्मानिष्टफलप्रदम् ।

यथा वेण्याम् । "एकस्य तावत्पाकोऽयमित्यादि" ।

कार्य्यग्रहणमुल्लेखः ।

---

त्तापालङ्कार एव । देव्याः सीताया मिथ्याभिशस्तो मिथ्यादत्तपरिवादः । अत्र मोहेनावधीरिते चुम्बनकार्य्ये पश्चात्तापः ।

(भ) म्रियत इति अत्र तस्याजीवनहेतुस्तव शरीररक्षणं । स्याद-मनमिति अत्र स्वस्याभीष्टलाभेच्छा । आशीरलङ्कारे तु वस्तुनमस्येति भेदः । तस्या मालत्याः कार्य्यस्य कर्त्तव्यत्वेन निर्द्देशः प्रतिज्ञा । एकस्य द्रौपदीकेशग्रहस्य परिपाकः फलं अयं राजसमूहक्षयरूपः । द्वितीये द्रोणसम्बन्धिनी निःशेषीकर्त्तुमारब्धा निःशेषिताः । प्रसादगुरोः कण्वस्य मनुमालिनीतीरं आश्रित्याख्यनदीतीरे । नवेदिति यद्यावां स्वसि-

यथा शाकुन्तले । राजानं प्रति "तापसौ । समिदाहरणाय प्रस्थितावावाम् । इह चास्मद्गुरोः कण्वस्य साधिदैवत इव शकुन्तलयानुमालिनीतीरमाश्रमो दृश्यते न चेदन्यः कार्य्यातिपातः प्रविश्य गृह्यतामतिथिसत्कार इति" ॥

उत्तेजनमितीष्यते ।
स्वकार्य्यसिद्धयेऽन्यस्य प्रेरणाय कठोर वाक् ॥

यथा

"इन्द्रजिच्चण्डवीर्य्योऽसि नाम्नैव बलवानसि ।
धिक् धिक् प्रच्छन्नरूपेण युद्धसेऽस्मद्भयाकुलः" ॥

भर्त्सना तु परीवादः

यथा सुन्दराङ्के "दुर्य्योधनः । धिक् धिक् सूत ! किं कृतवानसि वत्सस्य मे प्रकृतिदुर्ललितस्य पापः पापं विधास्यति इत्यादि" ।

नीतिः शास्त्रेण वर्त्तनम् ।

यथा शाकुन्तले दुष्मन्तः "विनीतवेशप्रवेश्यानि तपोवनानीति" ।

उक्तस्यार्थस्य यत्तु स्यादुत्कीर्त्तनमनेकधा ।
उपालम्भस्वरूपेण तस्यादर्थविशेषणम् ॥

---

दाहरणाय न प्रस्थितौ अन्यथा तदा कार्य्यस्य होमस्यातिपातोऽनुपपत्तिः । प्रेरणाय प्रवृत्तये नाम्नैव न तु कर्मणा । अत लक्ष्मणेन इन्द्रजिद्वधाय प्रकाशयुद्धे तस्य वर्त्तनम् । प्रकृत्या स्वभावेन दुर्ललि-

यथा शाकुन्तले राजानं प्रति "शार्ङ्गरवः । आः कथमिदं नाम किमिदमुपन्यस्तमिति । ननु भवानेव नितरां लोकवृत्तान्ते निष्णातः" ॥ (म)

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।
अतः समीपे परिणेतुरिष्यते
प्रियाप्रिया वा प्रमदा स्वबन्धुभिः" ॥

**प्रोत्साहनं स्यादुत्साहगिरा कस्यापि योजनम् ।**

यथा बालरामायणे ।

"कालरात्रिकरालेयं स्त्रीति किं विचिकित्ससि ।
तज्जगत्त्रितयं त्रातुं तात ! ताड़य ताडकाम्" ।

**साहाय्यं सङ्कटे यत् स्यात् सानुकूल्यं परस्य च ।**

यथा वेण्यां कृपं प्रति "अश्वत्थामा । त्वमपि तावद्राज्ञः पार्श्ववर्त्ती भव । कृपः । वाञ्छाम्यहमद्य प्रतिकर्त्तुमित्यादि" ।

**अभिमानः स एव स्यात्**

---

तस्य दुर्विलसितस्य पापो दुष्कर्म्मा प्रापमनिष्टं शास्त्रे या शास्त्रानुसारेण वर्त्तनं कर्म्मानुष्ठानम् । उत्कीर्त्तनं सूचनम् । उपालम्भविशेषेण प्रतिकूलोक्तिखण्डनेन क्वचिदुपलम्भस्वरूपेणेति पाठः । आः कथमिदं नामेति उक्तिरिति शेषः । लोकवृत्तान्तनिष्णातः लोकचरित्रविज्ञः ।

(म) ज्ञातिकुलैकसंश्रयां पित्रादिगृहमात्रवर्त्तिनीम् । अन्यथा भर्तृमतीमुपपतियुक्तां यद्वा सतीमपि अन्यथा असतीं विशङ्कते । अत उक्तदोषात् परिणेतुः पत्युः अत्र किमिदमुपन्यस्तमिति राज्ञः प्रति-

यथा तत्रैव । "दुर्य्योधनः । तातः ! किमप्यसदृशं कृपणं वचस्त इत्यादि" ।

प्रश्रयादनुवर्त्तनम् ॥

अनुवृत्तिः (म)

यथा शाकुन्तले राजा शकुन्तलां प्रति । "अयि ! तपो बर्द्धते । अनुसूया । दाणिं अदिधिविसेसलाहेणेत्यादि" ॥

भूतकार्य्याख्यानमुत्कीर्त्तनं मतम् ।

यथा बालरामायणे ।

"अत्रासीत् फणिपाशबन्धनविधिः शक्त्या भवेद्देवरे ।
गाढं वक्षसि ताड़िते हनुमता द्रोणाद्रिरत्राहृत इत्यादि" ॥

याञ्चा तु क्वापि याञ्चायाः स्वयं दूतमुखेन वा ।

यथा ॥

"अद्यापि देहि वैदेहीं दयालुस्त्वयि राघवः ।
शिरोभिः कन्दुकक्रीड़ां किं कारयसि वानरान्" ॥

---

कूटोक्तिखण्डनेन आः कथमिदमित्यादिवाक्यत्रयेण तदिदानीमापन्नसत्त्वेयं रह्यतां सहधर्मचरणायेति स्वोक्तोऽर्थः शार्ङ्गरवेण युक्तः सूचितः । विचिकित्ससि बध्या नवेति सन्देहाश्रयो भवसि यद्वा स द्वेष्यो भवसि । तातेति सप्रेमसम्बोधनम् । आनगुण्यमनुकूलाचरणम् । स एव अभिमानाहङ्कार एव । कृपणं क्षुद्रम् अत्र मातुराक्षेपेणाहङ्कारः प्रतीयते । प्रश्रयाद्विनयात् अनुवृत्तिः प्रत्युत्तरादिना सत्कारः ।

(य) दाणिं इति इदानीमातिथिविशेषलाभेनेति सं । अत्र भवत् देवरे लक्ष्मणे अत्र सीतां प्रति भूतकार्य्यं श्रीरामेणाख्यातम् स्वयं याचनं

परिहार इति प्रोक्तः कृतानुचितमार्जनम्।

यथा।

"प्राणप्रयाणदुःखार्त्त उक्तवानस्म्यनक्षरम्।

तत् क्षमस्व विभो! किञ्च सुग्रीवस्ते समर्पितः"॥

अवधीरितकर्त्तव्यकथनन्तु निवेदनम्।

यथा राघवाभ्युदये "लक्ष्मणः।! आर्य्य समुद्राभ्यर्थनया गन्तुमुद्यतोऽसि किमेतत्"।

प्रवर्त्तनन्तु कार्य्यस्य यत्स्यात्साधुप्रवर्त्तनम्।

यथा वेण्यां "राजा। कञ्चुकिन्! देवस्य देवकीनन्दनस्य बहुमानाद्वत्सस्य भीमसेनस्य विजयमङ्गलाय प्रवर्त्त्यन्तां तत्रोपचिताः समारम्भाः।

आख्यानं पूर्ववृत्तोक्तिः

यथा तत्रैव। "देशः सोऽयमरातिशोणितजलैर्यस्मिन् ह्रदाः पूरिता इत्यादि"॥

युक्तिरर्थावधारणम्।

यथा तत्रैव।

"यदि समरमपास्य नास्ति मृत्यो-

र्भयमिति युक्तमितोऽन्यतः प्रयातुम्।

---

यथा "भो लङ्केश्वर दीयतां जनकजा रामः स्वयं याचते" इत्यादि। दूतमुखेन याचनमाह पश्चादपीति रावणं प्रत्यङ्गदस्योक्तिरियम् कृतं यदनुचितं कर्म तस्य मार्ज्जनं तज्जन्यापराधक्षमापणम्। मार्ष्वेति विभो

अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः कुरुध्वम्" ॥

प्रहर्षः प्रमदाधिक्यं

यथा शाकुन्तले "राजा । तत्किमिदानीमात्मानं पूर्णमनोरथं नाभिनन्दामि" ।

शिक्षा स्यादुपदेशनम् । (र)

यथा तत्रैव । "सहि ! ण जुत्तं अस्समवासिणो जणस्स अकिदसक्कारं अदिधिविसेसं उज्झिअ सच्छन्ददो गमणं" । एषाञ्च लक्षणं नाट्यालङ्काराणां सामान्यत एकरूपत्वेऽपि भेदेन व्यपदेशो गड्डलिकाप्रवाहेण । एषु च केषाञ्चिद् गुणालङ्कारभावसन्ध्यङ्गविशेषान्तर्भावेऽपि नाटके प्रयत्नतः कर्त्तव्यत्वात्तद्विशेषोक्तिः । एतानि च ।

"पञ्चसन्धि चतुर्वृत्ति चतुःषष्ट्यङ्गसंयुतम् ।
षट्त्रिंशल्लक्षणोपेतमलङ्कारोपशोभितम् ॥
महारसं महाभोगमुदात्तरचनान्वितम् ।
महापुरुषसञ्चारं साध्वाचारं जनप्रियम् ॥

---

श्रीराम । अवधीरतेति अवज्ञातेत्यर्थः । अर्थस्य प्रयोजनस्य अवधार्य्यं कर्त्तव्यत्वनिश्चयः । इतः समरात् । अत्र समरः कर्त्तव्य एव इत्यर्थावधारणम् ।

(र) सहि इति सखि न युक्तमाश्रमवासिनो जनस्याकृतसत्कारमतिथिविशेषमुज्झित्वा स्वच्छन्दतो गमनमिति सं । अत्र शकुन्तलां प्रति तत्सख्या उपदेशोक्तिरियम् । ननु भूषणादीनि यानि लक्षणान्युक्तानि

सुश्लिष्टसन्धियोगञ्च सुप्रयोगं सुखाश्रयम्।

मृदुशब्दाभिधानञ्च कविः कुर्य्याच्च नाटकम्" ॥

इति मुनिनोक्तत्वात् नाटकेऽवश्यं कर्त्तव्यान्येव। वीथ्यङ्गानि वक्ष्यन्ते।

लास्याङ्गान्याह।

गेयपदं स्थितपाठ्यमासीनं पुष्पगण्डिका।

प्रच्छेदकस्त्रिगूढञ्च सैन्धवाख्यं द्विगूढकम् ॥

उत्तमोत्तमकञ्चान्यदुक्तप्रत्युक्तमेव च।

लास्ये दशविधं ह्येतदङ्गमुक्तं मनीषिभिः ॥(व)

तत्र च।

तन्त्रीभाण्डं पुरस्कृत्योपविष्टस्यासने पुरः ॥

---

तानि नाट्यभूषणहेतुत्वरूपसामान्यधर्मयोगेन नाट्यालङ्कारमध्य एवान्तर्भवितुमर्हन्ति तदेषां भिन्नत्वेन उपादानमनतिप्रयोजनमित्यभिप्रायेणाह एषाञ्चेति गड्डुरिकाप्रवाहेण गतानुगतिकन्यायेन। ननु भूषणस्य यथायथं गुणेऽलङ्कारे च शोभायाः श्लेषे विशेषणस्य विशेषोक्त्यलङ्कारे एवमाशीरादिनाट्यालङ्काराणामाशीराद्यलङ्कारेषु एवं युक्त्यादीनां युक्त्यादिसन्ध्यङ्गेषु चान्तर्भावे सिद्धे पुनरुपादानमनर्थकमित्यत आह एष्विति लक्षणनाट्यालङ्कारेष्वित्यर्थः। एतानि लक्षणादीनि नाटकेऽवश्यकर्त्तव्यानीत्यपेक्षान्वयः। भोगो भावादिः सहायो वा रचनाया उदात्तत्वं विलासशर्यादियुक्तत्वं महापुरुषस्य धीरोदात्तनायकस्य सत्कारोऽनुवर्णनं यत्र। साधुरविगीत आचारो वैदिकं कर्म यत्र।

(व) तन्त्रीभाण्डं वीणावाद्यं पुरस्कृत्य गानोपाययोगित्वेनादृत्य

शुष्कं गानं गेयपदं

यथा गौरीगृहे वीणां वादयन्ती मलयवती।

"उत्फुल्लकमलकेसरपरागगौरद्युते! मम हि गौरि!।

अभिवाञ्छितं प्रसिध्यतु भगवति! युष्मत्प्रसादेन"॥

स्थितपाठ्यं तदुच्यते।

मदनोत्तापिता यत्र पठति प्राकृतं स्थिता॥

अभिनवगुप्तपादास्त्वाहुः। "उपलक्षणञ्चैतत्। क्रोधोद्भ्रान्तस्यापि प्राकृतपठनं स्थितपाठ्यमिति"।

निखिलातोद्यरहितं शोकचिन्तान्विताबला।
सुप्रसारितगात्रं यदासीदासीनमेव तु॥
आतोद्यमिश्रितं गेयं छन्दांसि विविधानि च।
स्त्रीपुंसयोर्विपर्य्यासचेष्टितं पुष्पगण्डिका॥

---

अन्यासक्तं पतिं मत्वा प्रेमविच्छेदमन्युना।
वीणापुरःसरं गानं स्त्रियाः प्रच्छेदको मतः॥
स्त्रीवेशधारिणां पुंसां नाट्यं श्लक्ष्णं त्रिगूढकम्।

यथा मालत्याम्। "मकरन्दः। एषोऽस्मि मालती संवृत्तः।

---

आतोद्यं वादित्रम् अप्रसाधितगात्रमनलङ्कृतशरीरम् एतत् त्रयं क्रियाविशेषणम्। विपर्य्यासेन वैपरीत्येन चेष्टा अभिनयो यत्र गेये तत्। मन्युः शोकः सङ्केतस्थाने अनागमने नायिकाया नायकोऽन्यासक्तो भवति। चतुरस्राणि विदग्धमनोहराणि पदानि यत्र यदा चतुरस्रपदं

कश्चन भ्रष्टसङ्केतः सुव्यक्तकरणान्वितः ।
प्राकृतं वचनं वक्ति यत्र तत्सैन्धवं विदुः ॥

करणं वीणादिक्रिया ।

चतुरस्रपदं गीतं मुखप्रतिमुखान्वितम् ।
द्विगूढं रसभावाढ्यमुत्तमोत्तमकं पुनः ॥
कोपप्रसादजमधिक्षेपयुक्तं रसोत्तरम् ।
हावहेलान्वितं चित्रश्लोकबन्धमनोहरम् ॥
उक्तिप्रत्युक्तिसंयुक्तं सोपालम्भमलीकवत् ।
विलासान्वितगीतार्थमुक्तप्रत्युक्तमुच्यते ॥

स्पष्टान्युदाहरणानि ।

एतदेव यदा सर्वैः पताकास्थानकैर्युतम् ॥
अङ्कैश्च दशभिर्धीरा महानाटकमूचिरे ॥

एतदेव नाटकं यथा बालरामायणम् । (ल)

अथ प्रकरणम् ।

भवेत्प्रकरणे वृत्तं लौकिकं कविकल्पितम् ।

---

पूर्णसप्रस्वरं सुखप्रतिमुखान्वितं उक्तिप्रत्युक्तिसहितम् कोपप्रसादज-मित्यादिविशेषणपञ्चकमनुषक्तस्य गीतस्य विशेषणम् । उक्तिप्रत्युक्तिसंयुक्त-मिति गीतमित्यनुषज्यते । सोपालम्भं सभर्त्सनम् । अलीकवत् अप्रिय-मिव ।

(व) नाटकवदुक्ता प्रकरणमाह कथेति वृत्तं मार्गणीयं नायकचरितं

शृङ्गारोऽङ्गी नायकस्तु विप्रोऽमात्योऽथवा वणिक्
सापायधर्मकामार्थपरो धीरप्रशान्तकः ।

विप्रनायकं यथा मृच्छकटिकम् ॥ अमात्यनायकं मालतीमाधवम् । वणिङ्नायकं पुष्पभूषितम् ।

नायिका कुलजा क्वापि वेश्या क्वापि द्वयं क्वचित् ।
तेन भेदास्त्रयस्तस्य तत्र भेदस्तृतीयकः ॥
कितवद्यूतकारादिविटचेटकसङ्कुलः ॥

कुलस्त्री पुष्पभूषिते । वेश्या तु रङ्गवृत्ते । द्वे अपि मृच्छकटिकायाम् । अस्य नाटकप्रकृतित्वात् । शेषं नाटकवत् । अथ भाणः ।

भाणः स्याद्धूर्त्तचरितो नानावस्थान्तरात्मकः ।
एकाङ्क एक एवात्र निपुणः पण्डितो विटः ॥
रङ्गे प्रकाशयेत् स्वेनानुभूतमितरेण वा ।
सम्बोधनोक्तिप्रत्युक्ती कुर्य्यादाकाशभाषितैः ॥
सूचयेद्वीरशृङ्गारौ शौर्य्यसौभाग्यवर्णनैः ।

---

लौकिकं लोकचरित्रमात्मप्रसिद्धमत एव कविकल्पितं नतु पुराणादिप्रसिद्धम् । धर्मस्य स्वर्गसाधनत्वेन कामस्य पुत्रपश्वादिविषयकत्वेन अर्थस्य भोगसाधनत्वेन सापायत्वम् । तेन नायिकाभेदेन तस्य प्रकरणस्य विना विशेषं सर्वेषां लब्धा नाटकवज्ज्ञातमिति प्रकरणादौ नाटकधर्म्मातिदेशात् नाटकस्य प्रकृतित्वम् । भाणमाह भाणः स्यादिति धूर्त्तस्य

तत्रेतिवृत्तमुत्पाद्यं वृत्तिः प्रायेण भारती ॥
मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च।

तत्र आकाशभाषितरूपं परवचनमपि स्वयमेवानुवदन्नुत्तरमत्युत्तरं कुर्य्यात्। शृङ्गारवीररसौ च सौभाग्यशौर्य्यवर्णनया सूचयेत्। प्रायो भारती कौशिक्यपि वृत्तिर्भवति। लास्याङ्गानि गेयपदादीनि। उदाहरणं लीलामधुकरः। अथ व्यायोगः।

ख्यातेतिवृत्तो व्यायोगः स्वल्पस्त्रीजनसंयुतः।
हीनो गर्भविमर्षाभ्यां नरैर्बहुभिराश्रितः॥
एकाङ्कश्च भवेदस्त्रीनिमित्तसमरोदयः।
कैशिकीवृत्तिरहितः प्रख्यातस्तत्र नायकः॥
राजर्षिरथ दिव्यो वा भवेद्धीरोद्धतश्च सः।
हास्यशृङ्गारशान्तेभ्य इतरेऽत्राङ्गिनो रसाः॥

यथा सौगन्धिकाहरणम्। अथ समवकारः। (व)

वृत्तं समवकारे तु ख्यातं देवासुराश्रयम्।

---

नायकस्य चरितं यत्र सः। कार्य्यसाधर्म्यमवस्था निरुक्ता प्रारम्भादिपञ्चविधावस्थातिरिक्तावस्थालाभायान्तरपदम्। शौर्य्यवर्णनया वीरं सौभाग्यवर्णनया शृङ्गारं सूचयेदित्यन्वयः। तत्र भाणे इतिवृत्तं वर्णनीयं वस्तु उत्पाद्यं कविभिः कल्पनीयम् नतु पुराणादिप्रसिद्धम्। व्यायोगमाह ख्यातेति वृत्त इति ख्यातं पुराणादिप्रसिद्धमितिवृत्तं यत्र गर्भविमर्षौ तृतीयचतुर्थसन्धी। स नायकः।

(व) तत्र व्यायोगे समवकारमाह वृत्तमिति। आदिमे प्रथ-

सन्धयो निर्विमर्षास्तु त्रयोऽङ्कास्तत्र चादिमे ॥
सन्धी द्वावन्त्ययोस्तद्वदेक एको भवेत्पुनः ।
नायका द्वादशोदात्ताः प्रख्याता देवदानवाः ॥
फलं पृथक् पृथक् तेषां वीरमुख्योऽखिलो रसः ।
वृत्तयो मन्दकैशिक्यो नात्र विन्दुप्रवेशकौ ॥
वीथ्यङ्गानि च तत्र स्युः यथालाभं त्रयोदश ।
गायत्र्युष्णिङ्मुखान्यत्र छन्दांसि विविधानि च ॥
त्रिशृङ्गारस्त्रिकपटः कार्य्यश्चायं त्रिविद्रवः ॥
वस्तु द्वादशनाडीभिर्निष्पाद्यं प्रथमाङ्कगम् ॥
द्वितीयेऽङ्के च तिसृभिर्द्वाभ्यामङ्के तृतीयके ।

नाडिका घटिकाद्वयमुच्यते । विन्दुप्रवेशकौ च नाटकोक्तावपि नेह विधातव्यौ ॥ तत्र ।

धर्मार्थकामैस्त्रिविधः शृङ्गारः कपटः पुनः ।
स्वाभाविकः कृत्रिमश्च दैवजो विद्रवः पुनः ॥
अचेतनैश्चेतनैश्च चेतनाचेतनैः कृतः ।

---

मात् द्वौ मुखप्रतिमुखाख्यौ अन्त्ययोर्द्वयोरन्तयोः एक एकः सन्धिरित्यन्वयः । उदात्ता धीरोदात्ताः देवमानवा दिव्याः यद्वा दिव्याश्च मानुषाश्च देवदानवा इति कचित् पाठः । तेषां नायकानाम् । मन्दकौशिक्यः कौशिकीहीनाः । अत्र समवकारे । विद्रवो गर्भसन्ध्यङ्गं स च महाभयत्रासकृतः सम्भ्रमः । नाटकप्रकृतिकत्वादेव विद्रवप्राप्तौ प्रकार·

तत्र शास्त्राविरोधेन कृतो धर्म्मशृङ्गारः। अर्थलाभार्थकल्पितः अर्थशृङ्गारः। प्रहसनशृङ्गारः कामशृङ्गारः। तत्र कामशृङ्गारः प्रथमाङ्क एव। अन्ययोस्तु न नियम इत्याहुः। चेतनाचेतना गजादयः। समवकीर्य्यन्ते बहवोऽर्था अस्मिन्निति समवकारः। यथा समुद्रमथनम्।

अथ डिमः।

मायेन्द्रजालसंग्रामक्रोधोद्भ्रान्तादिचेष्टितैः।
उपरागैश्च भूयिष्ठो डिमः ख्यातोऽतिवृत्तकः॥
अङ्गी रौद्ररसस्तत्र सर्व्वेऽङ्गानि रसाः पुनः।
चत्वारोऽङ्का मता नेह विष्कम्भकप्रवेशकौ॥
नायका देवगन्धर्व्वयक्षरक्षोमहोरगाः।
भूतप्रेतपिशाचाद्याः षोडशात्यन्तमुद्धताः॥
वृत्तयः कैशिकीहीना निर्व्विमर्षाश्च सन्धयः।
दीप्ताः स्युः षड्रसा शान्तहास्यशृङ्गारवर्जिताः॥

अत्रोदाहरणञ्च। "त्रिपुरदाह" इति महर्षिः।

अथेहामृगः। (अ)

ईहामृगो मिश्रवृत्तश्चतुरङ्कः प्रकीर्त्तितः।

---

त्रयस्यावश्यकत्वार्थमिदं वचनम्। निषिद्धकाले निषिद्धयोषिति वा कृतः शृङ्गारः शास्त्रविरुद्धस्तदितरो धर्म्मः शृङ्गारः समवकीर्य्यन्ते निबध्यन्ते। डिममाह मायेन्द्रजालेति इह डिमे दीप्ता विभावादिसामग्रीवशेन झटिति प्रतीयमानाः।

(अ) ईहामृगमाह ईहामृग इति। मिश्रवृत्तः ख्याताख्यातेः-

मुखप्रतिमुखे सन्धी तत्र निर्वहणं तथा ॥
नरदिव्यावनियमौ नायकप्रतिनायकौ ।
ख्यातौ धीरोद्धतावन्यो गूढभावादयुक्तकृत् ॥
दिव्यस्त्रियमनिच्छन्तीमपहारादिनेच्छतः ।
शृङ्गाराभासमप्यस्य किञ्चित्किञ्चित्प्रदर्शयेत् ॥
पताकानायका दिव्या मर्त्या वापि दशोद्धताः ।
युद्धमानीय संरम्भं परं व्याजान्निवर्त्तते ॥
महात्मानो बधप्राप्ता अपि बध्याः स्युरत्र नो ।
एकाङ्को देव एवात्र नेतेत्याहुः परे पुनः ॥
दिव्यस्त्रीहेतुकं युद्धं नायकाः षडितीतरे ।

मिश्रं ख्याताख्यातम् । अन्यः प्रतिनायकः । पताकानायकास्तु नायकप्रतिनायकयोर्मिलिता दश । नायको मृगवदलभ्यां नायिकामत्र ईहते वाञ्छतीतीहामृगः । यथा कुसुमशेखरविजयादि । अथाङ्कः ।

उत्सृष्टिकाङ्क एकाऽङ्को नेतारः प्राकृता नराः ।
रसोऽत्र करुणः स्थायी बहुस्त्रीपरिदेवितम् ॥

---

तिवृत्तः नरदिव्यौ नायकप्रतिनायकौ इति क्रमनिषेधार्थमाह अनियमाविति यद्वा कचिद्दिव्ययोः कचिन्नरयोर्वा प्राप्त्यर्थमिदम् अन्यः प्रतिनायकः गूढभावात् गोपनेन अपहारो बलात्कारः । आदिना छलादिपरिग्रहः । परं प्रतिनायकम् । संरम्भमानीयक्रोधं प्रापय्य स्थितस्य नायकस्य व्याजात् कार्य्यान्तरच्छलात् युद्धं निवर्त्तेत इत्यर्थः ।

प्रख्यातमितिवृत्तञ्च कविर्बुद्ध्या प्रपञ्चयेत्।
भाणवत्सन्धिवृत्ताङ्गान्यस्मिन् जयपराजयौ॥
युद्धञ्च वाचा कर्त्तव्यं निर्वेदवचनं बहु।

इमञ्च केचित् "नाटकाद्यन्तःपात्यङ्कपरिच्छेदार्थम् उत्सृष्टिकाङ्कनामानम्" आहुः। अन्ये तु "उत्क्रान्ता विलोमरूपा सृष्टिर्यत्रेति" उत्सृष्टिकाङ्कः। यथा शर्म्मिष्ठाययातिः। अथ वीथी। (ष)

वीथ्यामेको भवेदङ्कः कश्चिदेकोऽत्र कल्प्यते।
आकाशभाषितैरुक्तैश्चित्रां प्रत्युक्तिमाश्रितः॥
सूचयेद्भूरिशृङ्गारं किञ्चिदन्यान् रसानपि।
मुखनिर्वहणे सन्धी अर्थप्रकृतयोऽखिलाः॥

कश्चिदित्युत्तमो मध्यमोऽधमो वा। शृङ्गारबहुलत्वाच्चास्याः कौशिकीवृत्तिबहुलत्वम्।

अस्यास्त्रयोदशाङ्गानि निर्दिशन्ति मनीषिणः।

---

निवर्त्तयेदिति पाठे परं युद्धस्थानमानीय संरम्भं निवर्त्तयेदित्यर्थः। महात्मन इति प्रतिनायकानां वध्यो पुराणादिप्रसिद्धे स न वर्णनीय इति भावः। अत ईहामृगे। अङ्कमाह उत्सृष्टिकाङ्क इति। अङ्कस्यैव नामान्तरमेतत्। प्रकृता नातिकोविदाः स्यायो स्थिरतरः। प्रपञ्चयेत् बहुलीकुर्य्यात्। भाणवदिति भाणे यथा मुखनिर्वहणे सन्धी कौशिकी भारत्यौ वृत्ती दश लास्याङ्गानि तथात्रापीत्यर्थः। अस्मिन्नङ्के जयपराजयौ वर्णनीयौ। इत्यस्य अङ्कस्य।

(ष) वीथीमाह वीथ्यामिति एकोऽद्वितीयो नायक इति शेषः।

**उद्घात्यकावलगिते प्रपञ्चस्त्रिगतं छलम् ॥**
**वाक्केल्यधिबले गण्डमवस्यन्दितनालिके ।**
**असत्प्रलापव्याहारमृदवानि च तानि तु ।**

तत्रोद्घात्यकावलगिते प्रस्तावनाप्रस्तावे सोदाहरणं लक्षिते ।

**मिथो वाक्यमसद्भूतः प्रपञ्चो हास्यकृन्मतः ।**

यथा विक्रमोर्वश्याम् । वड़भीस्थविदूषकचेट्योरन्योन्य-वचनम् । (ख)

**त्रिगतं स्यादनेकार्थयोजनं श्रुतिसाम्यतः ।**

यथा तत्रैव राजा ।

"सर्वक्षितिभृतां नाथ! दृष्टा सर्व्वाङ्गसुन्दरी ।
रामा रम्ये वनान्तेऽस्मिन् मया विरहिता त्वया ॥
नेपथ्ये तत्रैव प्रतिशब्दः । राजा कथं दृष्टेत्याह" ।

अत्र प्रश्नवाक्यमेवोत्तरत्वेन योजितम् । "नटादित्रितय-विषयमेवेदमिति" कश्चित् ।

---

कल्प्यते कल्पयित्वा वर्ण्यते । अर्थप्रकृतयो वीजादयः । पञ्च अवस्था वीथ्याः । प्रपञ्चमाह मिथ इति परस्परमित्यर्थः । असद्भूतं मिथ्यास्वरूपम् । वड़भीत्यट्टावस्थितकाष्ठविशेषः ।

(ख) त्रिगतमाह त्रिगतमिति सर्वक्षितिभृतां नाथेति प्रश्नपक्षे पर्वत उत्तरपक्षे राजा सम्बोध्यः । राजात्र पुरूरवाः । रामा उर्वशी मया विरहिता त्वया दृष्टेति प्रश्नः त्वया विरहिता मया दृष्टेत्युत्तरम् । त्रिगतपदव्युत्पत्तिमाह नटादीति । आदिना नटीप्रतिनटयोर्ग्रहणम्

**प्रियाभैरप्रियैर्वाक्यैर्विलोभ्य छलनाच्छलम् ।**

यथा वेण्यां "भीमार्जुनौ ।

कर्त्ता द्यूतच्छलानां जतुमयशरणोद्दीपनः सोऽभिमानी
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रम् ।
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवा यस्य दासाः
क्वास्ते दुर्य्योधनोऽसौ कथयतु न रुषा द्रष्टुमभ्यागतौ स्व" ॥

**अन्येत्वाहुश्छलं किञ्चित्कार्य्यमुद्दिश्य कस्यचित् ।**
**उदीर्य्यते यद्वचनं वञ्चना हास्यरोषकृत् ॥ (ङ)॥**
**वाक्केलिर्हास्यसम्बन्धो द्वित्रिप्रत्युक्तितो भवेत् ।**

द्वित्र्युपलक्षणं यथा ।

"भिक्षो ! मांसनिषेवणं प्रकुरुषे किन्तेन मद्यं विना
मद्यञ्चापि तव प्रियं प्रियमहो ! वाराङ्गनाभिः सह ।
वेश्याप्यर्थरुचिः कुतस्तव धनं द्यूतेन चौर्य्येण वा
चौर्य्यद्यूतपरिग्रहोऽपि भवतो नष्टस्य कान्या गतिः" ॥

"केचित् प्रक्रान्तवाक्यस्य साकांक्षस्यैव निर्वृत्तिर्वाक्केलिरित्याहुः" अन्ये च "अनेकस्य प्रश्नस्यैकमुत्तरम्" ।

---

ङ्दं त्रिगतम् । छलनाह प्रियाभैरिति प्रियतुल्यैरित्यर्थः । छलना वञ्चना । जतुमयशरणोद्दीपनः जतुग्टहदाहकः । अङ्गराजस्य कर्णस्य । कृष्णा द्रौपदी तस्याः केशोत्तरीययोराकर्षणे पटुः । स्वौ भवाव स्वात्रामिति शेषः ।

(च) वाक्केलिमाह वाक्केलिरिति द्वे वा तिस्रो वा प्रत्युक्तयस्ताभ्यः । समासप्रत्ययानामनित्यत्वादत्र डप्रत्ययाभावः । अनेकवाक्यस्यैकमुत्तरमित

**अन्योन्यवाक्याधिक्योक्तिः स्पर्द्धयाधिबलं मतम् ।**

यथा मम प्रभावत्यां "वज्रनाभः ।

अस्य वक्षः क्षणेनैव निर्म्मथ्य गदयानया ।
लीलयोन्मूलयिष्यामि भुवनद्वयमद्य वः ॥

प्रद्युम्नः । अरेरे असुरापसद ! अलममुना बहुप्रलापेन मम खलु ।

अद्य प्रचण्डभुजदण्डसमर्पितोरु-
कोदण्डनिर्गलितकाण्डसमूहपातैः ।
आस्तां समस्तदितिजक्षतजोक्षितेयं
क्षोणिः क्षणेन पिशिताशनलोभनीया" ॥ (च)

**गण्डं प्रस्तुतसम्बन्धि भिन्नार्थं सत्वरं वचः ।**

यथा वेण्यां "राजा ।

अध्यासितुं तव चिराज्जघनस्थलस्य
पर्य्याप्तमेव करभोरु ! ममोरुयुग्मम्" ।

अनन्तरं प्रविश्य कञ्चुकी । "देव ! भग्नं भग्नमित्यादि"
अत्र रथकेतनभङ्गार्थं वचनमूरुभङ्गार्थे सम्बन्धे सम्बद्धम् ।

**व्याख्यानं स्वरसोक्तस्यान्यथावस्यन्दितं भवेत् ।**

---

वाक्कोक्तिरित्याहुरित्यन्वयः । अधिबलमाह अन्योन्येति वाक्याधिक्येन वाक्यातिशयेनोक्तिः । अस्य प्रद्युम्नस्य । वो देवानाम् ।

(क) गण्डमाह प्रस्तुतसम्बन्धि प्रस्तुतार्थसम्बद्धम् । पर्य्याप्तं सामर्थ्य सम्बद्धे प्रयुते । अवस्यन्दितमाह व्याख्यानमिति स्वरसोक्तस्य वाक्यस्येति शेषः । जाद्दइति पुत्तकल्यं खलु उपाध्यायेन गन्तव्यं तत्र स

यथा छलितरामे “सीता । जाद कालं क्खु अयोज्झाए गन्तव्वं तहिं सो राआ विणएण पणमिदव्वो ।
लवः । अथ किमावाभ्यां राजोपजीविभ्यां भवितव्यम् ।
सीता । जाद ! सो तुह्माणं पिदा । लवः । किमावयो रघुपतिः पिता । सीता । साशङ्कं मा अण्णधा संकिधं ण क्खु तुह्माणं सअलाए ज्जेव पुहवी एत्ति” ॥ (क)

**प्रहेलिकैव हास्येन युक्ता भवति नालिका ।**

संवरणकार्युत्तरं प्रहेलिका । यथा रत्नावल्याम् ।
सुसङ्गता । सहि ! जस्स किदे तुमं आअदा सो इध ज्जेव चिट्ठदि । सागरिका । कस्स किदे अहं आअदा । सुसं । णं चित्तफलअस्स” । अत्र त्वं राज्ञः कृते आगतेत्यर्थः संवृतः ।

**असत्प्रलापो यद्वाक्यमसम्बद्धं तथोत्तरम् ।**
**अगृह्णतोऽपि मूर्खस्य पुरो यच्च हितं वचः ॥**

तत्राद्यं यथा मम प्रभावत्याम् । “प्रद्युम्नः । सहकारवल्लीमवलोक्य सानन्दम् । अहो कथमिहैव ।

---

राजा विनयेन प्रणमयितव्यः । पुत्र स खलु युष्माकं पितेति सं । मा अन्यथा शङ्कध्वं न खलु युष्माकं सकलाया एव पृथिव्या इति सं । अत्र सीतया युवयोर्जनकः श्रीराम इत्यभिप्रायेणोक्तं वाक्यं पाठक इत्यन्यथा व्याख्यातम् ।

(ख) नालिकामाह । प्रहेलिकैवेति सहि इति सखि यस्य कृते त्वमागता स इत एव तिष्ठतीति सम् । कस्य कृते अहमागता ननु खलु चित्रफलकस्येति सं । इयं हास्ययुक्तत्वमसान्द्रतादस्याभेदः । असत्

अलिकुलमञ्जुकेशी परिमलबहुला रसावहा तन्वी ।
किशलयपेशलपाणिः कोकिलकलभाषिणी प्रियतमा मे" ॥

एवमसम्बद्धोत्तरेऽपि । तृतीयं यथा वेण्यां दुर्य्योधनं प्रति गान्धारीवाक्यम् ।

**व्याहारो यत्परस्यार्थे हास्यक्षोभकरं वचः ।**

यथा मालविकाग्निमित्रे । लास्यप्रयोगावसाने मालविका निर्गन्तुमिच्छति । "विदूषकः । मा दाव उपदेसुसुद्धा गमिस्ससि इत्युपक्रमेण । दासः । विदूषकं प्रति आर्य्य ! उच्यतां यस्त्वया क्रमभेदो लक्षितः । विदूषकः । पढमं बह्मणपूआ भोदि सा इमाए लङ्घिदा । मालविका "स्मयत" इत्यादिना नायकस्य विशुद्धनायिकादर्शनप्रयुक्तेन हासलोभकारिणा वचसा व्याहारः । ( ख )

**दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत् ।**

क्रमेण यथा ।

"प्रिय ! जीवितता क्रौर्य्यं निःस्नेहत्वं कृतघ्नता ।
भूयस्तद्दर्शनादेव ममैते गुणतां गताः ॥

---

प्रलापमाह असत्प्रलाप इति असम्बद्धं वाक्यमुत्तरं वा इत्यर्थः । अलिकुलेति अवाच्यतायां स्वप्रियारोप इति वाक्यमसम्बद्धम् ।

(ख) व्याहारमाह व्याहार इति । परस्य नायकादेरर्थे प्रयोजने मा दाव इति मा तावदुपदेशशुद्धा गमिष्यसीति सं । प्रथमं ब्राह्मणपूजा भवति सा अनया लङ्घितेति सं ।

(ग) मृदवमाह दोषा इति । प्रियेति जीवितता क्रौर्य्यं जीवन-

तस्यास्तद्रूपसौन्दर्य्यं भूषितं यौवनश्रिया।
सुखैकतायनं जातं दुःखायैव ममाधुना" ॥

इति चाङ्गानि नाटकादिषु सम्भवन्त्यपि वीथ्यामवश्यं विधेयानि। विस्पष्टतया नाटकादिषु विनिविष्टान्यपोह्योद्धृतानि वीथी च। नानारसानाञ्चात्र मालारूपतया स्थितत्वाद्वीथीयत्। यथा मालविका। (ग)

अथ प्रहसनम् ॥

**भाणवत्सन्धिसन्ध्यङ्गलास्याङ्गाङ्कैर्विनिर्मितम्।**
**भवेत्प्रहसनं वृत्तं निन्द्यानां कविकल्पितम्॥**

अत्र नारभटी नापि विष्कम्भकप्रवेशकौ।

**अङ्गी हास्यरसस्तत्र वीथ्यङ्गानां स्थितिर्न वा।**

तत्र

**तपस्विभगवद्विप्रप्रभृतिष्वत्र नायकः।**
**एको यत्र भवेद्धृष्टो हास्यं तच्छुद्धमुच्यते॥**

---

काठिन्यं त्वद्विरहे मम स्नेहसत्त्वे मरणमेव स्यादित्येवं तदा मरणमेव प्रत्युपकारस्तदनाचरणात् कृतघ्नता। एते जीवनक्रौर्य्यादयः। यद्वा जीवितता जीवनमेव क्रौर्य्यादयः तद्विरहे मम जीवनेनैव क्रौर्य्यादयः सुव्यक्ता इति भावः। तस्या इति विरहिणोनायकस्योक्तिरियम् एतानि चेति वीथ्यङ्गानां नाटकाङ्गतया नाटक एव वक्तुं युक्तत्वम्। तथा सति प्रकरणादौ तल्लाभे सिद्धे यत्तेषामिह कीर्त्तनं तदत्र तेषामावश्यकत्वमन्यत्रानियतत्वमिति भावः।

(घ) प्रहसनमाह भाणवदिति। भाणे यथा मुखनिर्व्वहणे सन्धी नानासन्ध्यङ्गानि दश लास्यानि एकोऽङ्कस्तथात्रापीत्यर्थः। तपस्वीति।

यथा कन्दर्पकेलिः ।

**आश्रित्य कञ्चन जनं सङ्कीर्णमिति तद्विदुः ।(घ)**

यथा धूर्त्तचरितम् ।

**वृत्तं बहूनां धृष्टानां सङ्कीर्णं केचिदूचिरे ।**
**तत्पुनर्भवति द्व्यङ्कमथवैकाङ्कनिर्मितम् ॥**

यथा नाटकमेलकादि ॥ मुनिस्त्वाह ।

"वेश्याचेटनपुंसकविटधूर्त्ता बन्धकी च यत्र स्युः ।
अविकृतवेशपरिच्छदचेष्टितकरणान्तु सङ्कीर्णमिति" ॥

**विकृतन्तु विदुर्यत्र षण्डकञ्चुकितापसाः ।**
**भुजङ्गचारणभटप्रभृते र्वेशवाग्युताः ॥**

इदन्तु सङ्कीर्णेनैव गतार्थमिति मुनिना पृथङ्नोक्तम् ॥

अथोपरूपकाणि । तत्र ।

**नाटिका कॢप्तवृत्ता स्यात् स्त्रीप्राया चतुरङ्किका ।**
**प्रख्यातो धीरललितस्तत्र स्यान्नायको नृपः ॥**
**स्यादन्तःपुरसम्बन्धा सङ्गीतव्यापृताऽथवा ॥**

---

अत्र प्रहसने तपस्व्यादिषु मध्ये कश्चिन्नायको वाच्यः । भगवान् सन्यासी प्रहसनस्य शुद्धसङ्कीर्णविकृतत्वभेदेन त्रैविध्यमाह एक इति । धृष्टः प्रगल्भः नायक इत्यनुषज्यते । हास्यं प्रहसनम् कञ्चन धृष्टभिन्नं नायकमाश्रित्य यत् प्रहसनं क्रियते तत् सङ्कीर्णमित्यर्थः ।

(ङ) वृत्तमिति यत्र तदिति पूरणीयम् । तत् सङ्कीर्णप्रहसनम् । यत्र वेश्यादयो वर्णनीयाः स्युस्तदविकृतवेषादीनां करणमनुकरणं प्रह-

नवानुरागा कन्यात्र नायिका नृपवंशजा ॥
सम्प्रवर्त्तेत नेताऽस्यां देव्यास्त्रासेन शङ्कितः।
देवी पुनर्भवेज्ज्येष्ठा प्रगल्भा नृपवंशजा ॥
पदे पदे मानवती तद्वशः सङ्गमो द्वयोः।
वृत्तिः स्यात् कैशिकी स्वल्पविमर्षाः सन्धयः पुनः

द्वयोर्नायकनायिकयोः। यथा रत्नावलीविद्धशालभञ्जिकादिः। (ङ)

अथ त्रोटकम्।

सप्ताष्टनवपञ्चाङ्कं दिव्यमानुषसंश्रयम्।
त्रोटकं नाम तत् प्राहुः प्रत्यङ्कं सविदूषकम् ॥

प्रत्यङ्कं सविदूषकत्वादेवात्र शृङ्गारोऽङ्गी। सप्ताङ्कं यथा स्तम्भितरम्भम्। पञ्चाङ्कं यथा विक्रमोर्व्वशी। अथ गोष्ठी।

प्राकृतैर्नवभिः पुंभिर्दशभिर्वाप्यलङ्कृता।
नोदात्तवचना गोष्ठी कैशिकीवृत्तिशालिनी ॥
हीना गर्भविमर्षाभ्यां पञ्चषड्योषिदन्विता।
कामशृङ्गारसंयुक्ता स्यादेकाङ्कविनिर्मिता ॥

---

सनं सङ्कीर्णमित्यर्थः। इदन्तु विज्ञतमहृसनन्तु। नाटिकामाह नाटिकेति क्लृप्तवृत्ता कविकल्पितनायकचरिता स्त्रीप्राया नटीबहुला प्रख्यातो लोके सुप्रसिद्धः। तत्र नाटिकायां स्वल्पविमर्षा विमर्षहीनाः नायकनायिकयोरित्यकथेषाभावश्चिन्त्यः।

(ङ) त्रोटकमाह सप्तेति सप्तादीनामन्यतमा अङ्का यत्र दिव्यमानुषसंश्रयं दिव्यादिव्यनायकम्। गोष्ठीमाह प्राकृतैरिति नातिवि-

यथा रैवतमदनिका । अथ सट्टकम् ।

सट्टकं प्राकृताशेषपाठ्यं स्यादप्रवेशकम् ।
न च विष्कम्भकोऽप्यत्र प्रचुरश्चाद्भुतो रसः ॥
अङ्का जवनिकाख्याः स्युः स्यादन्यन्नाटिकासमम् ।

यथा कर्पूरमञ्जरी । (च)

अथ नाट्यरासकम् ।

नाट्यरासकमेकाङ्कं बहुताललयस्थितिः ।
उदात्तनायकं तद्वत् पीठमर्दोपनायकम् ॥
हास्योऽङ्गयत्र सशृङ्गारो नारी वासकसज्जिका ।
मुखनिर्वहणे सन्धी लास्याङ्गानि दशापि च ॥
केचित्प्रतिमुखं सन्धिमिह नेच्छन्ति केवलम् ।

तत्र सन्धिद्वयवती यथा नर्मवती । सन्धिचतुष्टयवती यथा विलासवती । अथ प्रस्थानम् ।

प्रस्थाने नायको दासो हीनः स्यादुपनायकः ।
दासी च नायिका वृत्तिः कैशिकी भारती तथा
सुरापानसमायोगादुद्दिष्टार्थस्य संहृतिः ।

---

दग्धैरित्यर्थः । पञ्चभिः षड्भिर्वा योषिद्भिरन्विता । उपत्ययस्यानित्यत्वात्तद्रूपसिद्धिः । कामशृङ्गारः प्रागुक्तः । सट्टकमाह सट्टकमिति प्राकृतं संस्कृतभिन्नमशेषं पाठ्यं श्लोकादिकं यत्र अन्यदङ्कसंख्यादि ।

(च) नाट्यरासकमाह नाट्यरासकमिति । "तालः कालक्रियामानं लयः साम्यमित्यमरः" पीठमर्दलक्षणं प्रागुक्तम् । नारी नायिका

अङ्कौ द्वौ लयतालादिर्विलासो बहुलस्तथा ॥

यथा शृङ्गारतिलकम् । ( छ )

अथोल्लाप्यम् ।

उदात्तनायकं दिव्यवृत्तमेकाङ्कभूषितम् ।
शिल्पकाङ्गैर्युतं हास्यशृङ्गारकरुणै रसैः ॥
उल्लाप्यं बहुसंग्रामं त्र्यस्त्रगीतिमनोहरम् ।
चतस्रो नायिकास्तत्र त्रयोऽङ्का इति केचन ॥

शिल्पकाङ्गानि वक्ष्यमाणानि । यथा देवीमहादेवम् ।

अथ काव्यम् ।

काव्यमारभटीहीनमेकाङ्कं हास्यसङ्कुलम् ।
खण्डमात्रा द्विपदिका भग्नतालैरलंकृतम् ॥
वर्णमात्राच्छड्डुणिकायुतं शृङ्गारभाषितम् ।
नेता स्त्री चाप्युदात्तात्र सन्धी आद्यौ तथान्तिमः ॥

---

वासकसज्जिका प्रागुक्ता । प्रस्थानमाह प्रस्थान इति संहृतिः समापनम् ।

( ज ) उल्लाप्यमाह उदात्तेति दिव्यनायकोचितचरितं यत्र । त्र्यस्त्रसमस्तमुल्लाप्यमाह उल्लाप्यमिति त्र्यस्त्रगीतेन त्रिपदीगीतेन मनोहरं । काव्यमाह काव्यमिति खण्डमात्रादयो गीतप्रभेदाः । वर्णमात्राछड्डुणिके छन्दोविशेषौ । शृङ्गारभाषितं शृङ्गाररसूचकम् । नेता उदात्तः नायिकाप्युदात्तेत्यन्वयः । प्रेङ्खणमाह गर्भविमर्षेति । अवमर्षो विमर्षाख्यसन्धिः हीननायकं नीचनायकं । सम्फेटो रोषभाषणम् । ननु सूत्रधाररहितत्त्वे-

यथा यादवोदयः। अथ प्रेङ्खणम् ।

गर्भावमर्षरहितं प्रेङ्खणं हीननायकम् ।
असूत्रधारमेकाङ्कमविष्कम्भप्रवेशकम् ॥
नियुद्धसम्फेटयुतं सर्ववृत्तिसमाश्रितम् ।
नेपथ्ये गीयते नान्दी तथा तत्र प्ररोचना ॥

यथा वालिवधः ॥ (ज)

अथ रासकम् ।

रासकं पञ्चपात्रं स्यान्मुखनिर्वहणान्वितम् ।
भाषाविभाषाभूयिष्ठं भारतीकैशिकीयुतम् ॥
असूत्रधारमेकाङ्कं सवीथ्यङ्गं कलान्वितम् ।
श्लिष्टनान्दीयुतं ख्यातनायिकं मूर्खनायकम् ॥
उदात्तभावविन्याससंश्रितं चोत्तरोत्तरम् ।
इह प्रतिमुखं सन्धिमपि केचित्प्रचक्षते ॥

यथा मेनकाहितम् । अथ संलापकम् ।

संलापकेऽङ्काश्चत्वारस्त्रयो वा नायकः पुनः ।
पाषण्डः स्याद्रसस्तत्र शृङ्गारकरुणेतरः ॥

---

नान्दी केन पाठ्या प्ररोचना वा कार्य्या इत्यत आह नेपथ्येति। गीयते पठ्यते तत्र नेपथ्ये प्ररोचना च भारत्या इत्तेरङ्गविशेषः । सा च कविपरिषदादीनां प्रशंसया सामाजिकानामुन्मुखीकरणम्। तथा चात्र नेपथ्यस्थेन नायकेनापि नटेन नान्दी पाठ्या प्ररोचना च कर्त्तव्येति भावः।

(क) रासकमाह रासकमिति उदात्तभावस्य नायकमहत्त्वस्य विन्या-

भवेयुः पुरसंरोधच्छलसंग्रामविद्रवाः।
न तत्र वृत्तिर्भवति भारती न च कैशिकी॥

यथा मायाकापालिकम्। (झ)

अथ श्रीगदितम्।

प्रख्यातवृत्तमेकाङ्कं प्रख्यातोदात्तनायकम्।
प्रसिद्धनायिकं गर्भविमर्शाभ्यां विवर्जितम्।
भारतीवृत्तिबहुलं श्रीतिशब्देन संयुतम्।
मतं श्रीगदितं नाम विद्वद्भिरुपरूपकम्॥

यथा क्रीडारसातलम्।

"श्रीरासीना श्रीगदिते गायेत् किञ्चित्पठेदपि।
एकाङ्को भारतीप्राय इति केचित् प्रचक्षते"॥

ऊह्यमुदाहरणम्। अथ शिल्पकम्।

चत्वारः शिल्पकेऽङ्काः स्युश्चतस्रो वृत्तयस्तथा।
अशान्तहास्याश्च रसा नायको ब्राह्मणो मतः॥
वर्णनात्र श्मशानादेर्हीनः स्यादुपनायकः।
सप्तविंशतिरङ्गानि भवन्त्यस्य तानि तु॥

---

शेन वर्णनेन संमितम्। संलापकमाह संलापक इति मिथाभेदमिथै-र्वाक्यैर्विलोभ्य छलना छलमित्युक्तलक्षणं छलम्। "शङ्काभयत्रासकृतः सम्भ्रमो विद्रवो मतः" इत्युक्तलक्षणो विद्रवः।

(ञ) श्रीगदितमाह प्रख्यातेति श्री इति शब्देन संयुतं बहुलम् श्रीर्लक्ष्मीवेशधारिणी नटी। शिल्पकमाह चत्वार इति श्मशाना-

आशंसातर्कसन्देहतापोद्वेगप्रसक्तयः ।
प्रयत्नग्रथनोत्कण्ठावहित्थाप्रतिपत्तयः ॥
विलासालस्यवाष्पाणि प्रहर्षाश्वासमूढताः ।
साधनानुगमोच्छ्वासविस्मयाः प्राप्तयस्तथा ॥
लाभविस्मृतिसम्फेटा वैशारद्यं प्रबोधनम् ।
चमत्कृतिश्चेत्यमीषां स्पष्टत्वाल्लक्ष्म नोच्यते ॥

सम्फेटग्रथनयोः पूर्व्वमुक्तत्वादेव लक्ष्म सिद्धम् । यथा कनकावतीमाधवः ।

अथ विलासिका ।

शृङ्गारबहुलैकाङ्का दशलास्याङ्गसंयुता ।
विदूषकविटाभ्याञ्च पीठमर्देन भूषिता ॥
हीना गर्भविमर्षाभ्यां सन्धिभ्यां हीननायका ।
स्वल्पवृत्ता सुनेपथ्या विख्याता सा विलासिका ॥

केचित्तत्र विलासिकास्थाने "लासिकेति" पठन्ति तस्यास्तु "दुर्म्मल्लिकायामन्तर्भाव" इत्यन्ये । (ञ)

अथ दुर्म्मल्लिका ।

---

देरित्यादिना ग्रथनादेर्ग्रहणम् । एतस्य शिल्पकस्य सम्फेटो रोषभाषणम् उपन्यासस्तु कार्य्याणां ग्रथनमित्युक्तलक्षणे सम्फेटग्रथने । विलासिकामाह शृङ्गारेति स्वल्पवृत्तं स्तोक इति वृत्तं वा यत्र तस्याश्च विलासिकायाश्च ।

(ञ) दुर्म्मल्लिकामाह दुर्म्मल्लीति नाडिकाघटिकाद्वयमिति प्रागे-

दुर्मल्ली चतुरङ्का स्यात् कौशिकी भारती तथा ।
अगर्भा नागरनरा न्यूननायकभूषिता ॥
त्रिनालिः प्रथमोऽङ्कोऽस्यां विटक्रीडामयो भवेत् ।
पञ्चनालिर्द्वितीयोऽङ्को विदूषकविलासवान् ॥
षण्नालिकस्तृतीयस्तु पीठमर्दविलासवान् ।
चतुर्थो दशनालिः स्यादङ्कः क्रीड़ितनायकः ॥

यथा बिन्दुमती । अथ प्रकरणिका ।

नाटिकैव प्रकरणी सार्थवाहादिनायका ।
समानवंशजा नेतुर्भवेद्यत्र च नायिका ॥

मृग्यमुदाहरणम् । अथ हल्लीशः ॥

हल्लीश एव एकाङ्कः सप्ताष्टौ दश वा स्त्रियः ।
वागुदात्तैकपुरुषः कौशिकीवृत्तिसंकुलः ॥
मुखान्तिमौ तथा सन्धी बहुताललयस्थितिः ।

यथा केलिरैवतकम् । अथ भाणिका ।

भाणिका श्लक्ष्णनेपथ्या मुखनिर्वहणान्विता ।
कौशिकीभारतीवृत्तियुक्तैकाङ्कविनिर्मिता ॥
उदात्तनायिका मन्दपुरुषाऽत्राङ्गसप्तकम् ।
उपन्यासोऽथ विन्यासो विबोधः साध्वसं तथा ॥

---

बोक्तम् । प्रकरणिकामाह नाटिकैवेति सार्थवाहो वणिक् । हल्लीशमाह

समर्पणं निवृत्तिश्च संहार इति सप्तमः ।

उपन्यासः प्रसङ्गेन भवेत्कार्य्यस्य कीर्त्तनम् ॥

निर्वेदवाक्यव्युत्पत्तिर्विन्यास इति स स्मृतः ।

भ्रान्तिनाशो विबोधः स्यान्मिथ्याख्यानन्तु साध्वसम् ।

सोपालम्भवचः कोपपीड़येह समर्पणम् ।

निदर्शनस्योपन्यासो निवृत्तिरिति कथ्यते ।

संहार इति च प्राहुर्यत्कार्य्यस्य समापनम् ॥

स्पष्टान्युदाहरणानि । यथा कामदत्ता । एषां सर्वेषामपि नाटकप्रकृतिकत्वेऽपि यथौचित्यं यथालाभं नाटकोक्तविशेषपरिग्रहः । यत्र च नाटकोक्तस्यापि पुनरुपादानं तत्र तत्सद्भावस्य नियमः । (ट)

अथ श्रव्यकाव्यानि ।

श्रव्यं श्रोतव्यमात्रं तत्पद्यगद्यमयं द्विधा ।

तत्र पद्यमयान्याह ॥

छन्दोबद्धपदं पद्यं तेनैकेन च मुक्तकम् ।

द्वाभ्यान्तु युग्मकं सन्दानितकं त्रिभिरिष्यते ॥

कलापकं चतुर्भिश्च पञ्चभिः कुलकं मतम् ।

---

ऽथीय इति एकपुरुष एकमटः । भाणिकामाह भाणिकेति । मन्दपुरुषा हीननायिका । तेषां नाटिकादीनाम् ।

(ठ) दृश्यकाव्यमुक्त्वा श्रव्यमाह श्रव्यमिति । मात्रपदेन दृश्यव्यवच्छेदः

अत्र मुक्तकं यथा मम ।

"सान्द्रानन्दमनन्तमव्ययमजं यद्योगिनोऽपि क्षणं
साक्षात्कर्त्तुमुपासते प्रतिमुहुर्ध्यानैकतानाः परम् ।
धन्यास्ता मथुरापुरीयुवतयस्तद्ब्रह्म याः कौतुकाद्
आलिङ्गन्ति समालपन्ति शतधा कर्षन्ति चुम्बन्ति च" ॥

युग्मकं यथा मम ।

"किं करोषि करोपान्ते कान्ते ! गण्डस्थलीमिमाम् ।
प्रणयप्रवणे कान्ते ऽनैकान्ते नोचिताः क्रुधः ॥
इति यावत् कुरङ्गाक्षीं वक्तुमीहामहे वयम् ।
तावदाविरभूच्चूते मधुरो मधुपध्वनिः" ॥

एवमन्यत्रापि । (ठ)

**सर्गबन्धो महाकाव्यं तत्रैको नायकः सुरः ।**
**सद्वंशः क्षत्रियो वापि धीरोदात्तगुणान्वितः ॥**
**एकवंशभवा भूपाः कुलजा बहवोऽपि वा ।**
**शृङ्गारवीरशान्तानामेकोऽङ्गी रस इष्यते ॥**

---

छन्दो गायत्र्यादि तच्च छन्दःशास्त्रप्रसिद्धलक्षणम् । तेन पद्येन मुक्तेन पद्यान्तरनिरपेक्षेण एकेन तेनैकेन च मुक्तकमिति क्वचित्पाठः । द्वाभ्यां परस्परापेक्षाभ्यां पद्याभ्यामेवमग्रेऽपि । पञ्चभिरिति न्यूनसंख्याव्यवच्छेदः तेन माघादौ दशादिभिः श्लोकैः कुलकं सङ्गच्छते क्षणं क्षणमपि ध्यानैकतानाः ध्यानैकाग्रचित्ताः आकर्षयन्ति क्रीडार्थमाहरन्ति अनैकान्ते अव्यभिचारिणि स्वस्मात्परायत्ते इत्यर्थः ।

(ठ) महाकाव्यमाह सर्गबन्ध इति सर्गैरवान्तरार्थदर्शनैरुपलक्षितो बन्धः पद्यप्रबन्ध इत्यर्थः । अत्र महाकाव्ये बहवो नायका इत्यर्थः ।

अङ्गानि सर्वेऽपि रसाः सर्वे नाटकसन्धयः ।
इतिहासोद्भवं वृत्तमन्यद्वा सज्जनाश्रयम् ॥
चत्वारस्तस्य वर्गाः स्युस्तेष्वेकञ्च फलं भवेत् ।
आदौ नमस्क्रियाशीर्वा वस्तु निर्देश एव वा ॥
क्वचिन्निन्दा खलादीनां सताञ्च गुणकीर्त्तनम् ।
एकवृत्तमयैः पद्यैरवसानेऽन्यवृत्तकैः ॥
नातिस्वल्पा नातिदीर्घाः सर्गा अष्टाधिका इह ।
नानावृत्तमयः क्वापि सर्गः कश्चन दृश्यते ॥
सर्गान्ते भाविसर्गस्य कथायाः सूचनं भवेत् ।
सन्ध्यासूर्य्येन्दुरजनीप्रदोषध्वान्तवासराः ॥
प्रातर्मध्याह्नमृगयाशैलर्त्तुवनसागराः ।
सम्भोगविप्रलम्भौ च मुनिस्वर्गपुराध्वराः ॥
रणप्रयाणोपयममन्त्रपुत्रोदयादयः ।
वर्णनीया यथा योगं साङ्गोपाङ्गा अमी इह ॥
कवेर्वृत्तस्य वा नाम्ना नायकस्येतरस्य वा ।
नामास्य सर्गोपादेयकथया सर्गनाम तु ॥

---

नाटकसन्धयो मुखप्रतिमुखगर्भविमर्षनिर्वहणाख्याः । इतिहासोद्भवं भारतादिप्रसिद्धम् अन्यल्लोकप्रसिद्धम् चत्वारो वर्गा धर्म्मार्थकाममोक्षाः तेषु चतुर्षु वर्गेषु मध्ये एकश्चेति चकारो वार्थः । फलं वर्गः क्वादौ आरम्भे वस्तुनो वर्णनीयनायकस्य नाम्ना निर्देशो वस्तुनिर्देशः एक-

सन्ध्यङ्गानि यथालाभमत्र विधेयानि । अवसानेऽन्यवृत्तकैरिति बहुवचनमविवक्षितम् । साङ्गोपाङ्गा इति जलकेलिमधुपानादयः । यथा रघुवंशशिशुपालबधनैषधादिः । यथा वा मम राघवविलासादिः ।

**अस्मिन्नार्षे पुनः सर्गा भवन्त्याख्यानसंज्ञकाः ।**

अस्मिन् महाकाव्ये । यथा महाभारतम् ।

**प्राकृतैर्निर्मिते तस्मिन् सर्गा आश्वाससंज्ञकाः ।**
**छन्दसा स्कन्दकेनैतत् क्वचिद्गलितकैरपि ॥**

यथा सेतुबन्धः । यथा वा मम कुवलयाश्वचरितम् ।

**अपभ्रंशनिबन्धेऽस्मिन् सर्गाः कडवकाभिधाः ।**
**तथापभ्रंशयोग्यानि छन्दांसि विविधान्यपि ॥**

यथा कर्णपराक्रमः । (ढ)

**भाषाविभाषानियमात्काव्यं सर्गसमुज्झितम् ।**

---

वृत्तमयैरेकजातीयपद्यैरुपलक्षिताः अष्टाधिका अष्टान्यूनाः इह महाकाव्ये उपयमो विवाहः यथायोगं यथासम्भवम् एतेन नयेन केनाप्यङ्गेन हीनमपि काव्यं न दुष्टमिति भावः । वृत्तस्य वर्णनीयचरित्रस्य अस्य महाकाव्यस्य कविनामकं महाकाव्यं माघभारविप्रभृति वृत्तनामकं कुमारसम्भवादि नायकनामकं रघुप्रभृति । इतरनामकं भट्टिप्रभृति । महाभारतादौ गद्यसत्त्वेऽपि पद्यप्राचुर्य्यादेव महाकाव्यत्वव्यवहारः अस्मिन्महाकाव्ये एतत् प्राकृतकृतं महाकाव्यम् । गलितकानि छन्दोविशेषाः ।

(ढ) काव्यमाह भाषेति भाषा संस्कृतादिः विभाषा अपभ्रंशादिः

एकार्थप्रवणैः पद्यैः सन्धिसामग्र्यवर्जितम् ॥

यथा भिक्षाटनम् आर्य्याविलासश्च ।

खण्डकाव्यं भवेत् काव्यस्यैकदेशानुसारि च ।

यथा मेघदूतादि ।

कोषः श्लोकसमूहस्तु स्यादन्योन्यानपेक्षकः ।
व्रज्याक्रमेण रचितः स एवातिमनोरमः ॥

सजातीयानामेकत्र सन्निवेशो व्रज्या । मुक्तावल्यादि ।

अथ गद्यकाव्यानि । तत्र गद्यम् ।

वृत्तबन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च ।
भवेदुत्कलिकाप्रायं चूर्णकञ्च चतुर्विधम् ॥
आद्यं समासरहितं वृत्तभागयुतं परम् ।
अन्यद्दीर्घसमासाढ्यं तुर्य्यञ्चाल्पसमासकम् ॥

मुक्तकं यथा । "गुरुर्व्वचसि पृथुरुरसीत्यादि" । वृत्तगन्धि यथा मम । "समरकण्डूयननिबिडभुजदण्डकुण्डलीकृतकोदण्डशिञ्जिनीटङ्कारोज्जागरितवैरिनगर" । अत्र कुण्डलीकृतकोदण्डेत्यनुष्टुब्वृत्तस्य पादः । समरकण्डूनेति च प्रथमाक्षरद्वयरहितस्तस्यैव पादः । उत्कलिकाप्रायं यथा ममैव । (ढ)

---

एकार्थप्रवणैः एकवाक्यतापन्नैः यावत्सन्धिरहितं यत्तत् काव्यमित्यर्थः । खण्डकाव्यमाह खण्डेति काव्यस्यानन्तरनिरूपितस्य एकदेशानुसारि यत्किञ्चिल्लक्षणहीनं । तेनात्र भाषाविभाषानियमो नास्ति एकार्थप्रवणैः

"अणिस विसुमर णिसिददरसरविसरविदलितसमर-परिगदपवरपरबलेत्यादि"। चूर्णकं यथा मम। गुणरत्न-सागर जगदेकनागर कामिनीमदनजन रञ्जनेत्यादि"

कथायां सरसं वस्तु गद्यैरेव विनिर्मितम्।
क्वचिदत्र भवेदार्य्या क्वचिद्वक्त्रापवक्त्रके॥
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्त्तनम्।

यथा कादम्बर्य्यादि।

आख्यायिका कथावत्स्यात्कवेर्वंशादिकीर्त्तनम्॥
अस्यामन्यकवीनाञ्च वृत्तं पद्यं क्वचित् क्वचित्।
कथांशानां व्यवच्छेद आश्वास इति बध्यते॥
आर्य्या वक्त्रापवक्त्राणां छन्दसा येन केनचित्।
अन्यापदेशेनाश्वासमुखे भाव्यर्थसूचनम्।

यथा हर्षचरितादि

"अपि त्वनियमो दृष्टस्तत्राप्यन्यैरुदीरणात्"।

इति दण्ड्याचार्य्यवचनात् केचित् "आख्यायिका नायके-

---

संस्कृतवृत्तबन्धोज्झितमिति पाठे पद्यबन्धरहितमित्यर्थः। वृत्तस्य गन्धेन लवेनापि उज्झितं श्रव्यकाव्यं गद्यं आद्यं मुक्तकम् वृत्तस्य छन्दसो भागः पादः परं वृत्तगन्धि अन्यदुत्कलिकाप्रायं तुर्यं कुलकम्।

(ख) अनेष इति अनिशविस्मरनिशितशरविसरविदलितसमर-परिगतप्रवरपरबलेति छं। गद्यकाव्यप्रभेदयोः कथाख्यायिकयोर्विशेष-माह कथायामिति पद्यानां विशेषमाह क्वचिदिति वक्त्रापवक्त्रके

नैव निबद्धव्या।" इत्याहुस्तदयुक्तम् । आख्यानादयश्च कथाख्यायिकयोरेवान्तर्भावान्न पृथगुक्ताः ॥ यदुक्तं दण्डिनैव ॥

"अत्रैवान्तर्भविष्यन्ति शेषाश्चाख्यानजातय इति" ।

एषामुदाहरणं पञ्चतन्त्रादि ॥ अथ गद्यपद्यमयानि ॥

**गद्यपद्यमयं काव्यं चम्पूरित्यभिधीयते ।**

यथा देशराजचरितम् ।

**गद्यपद्यमयी राजस्तुतिर्विरुदमुच्यते ॥**

यथा विरुदमणिमाला ।

**करम्भकन्तु भाषाभिर्विविधाभिर्विनिर्मितम् ।**

यथा मम षोडशभाषामयी प्रशस्तिरत्नावली । एवमन्येऽपि भेदा उद्देशमात्रप्रसिद्धत्वादुक्तभेदानतिक्रमाच्च न पृथग्लक्षिताः । (या)

इति साहित्यदर्पणे दृश्यश्रव्यकाव्यनिरूपणो नाम षष्ठः परिच्छेदः ॥

---

छन्दोविशेषौ पद्यैरित्युभयत्र सम्बध्यते । आख्यायिकामाह आख्यायिकेति । कथावदिति यथा कथायां पद्यैर्नमस्कारखलवृत्तकीर्त्तनसरसवस्तुवर्णनास्तथात्रापीत्यर्थः । विशेषमाह कवेरिति अस्यामाख्यायिकायां । वृत्तं चरितम् । दण्ड्याचार्यवचनादिति हेतुस्तदयुक्तमित्यत्रान्वेति । एषामाख्यायिकादीनाम् । गद्यपद्यमयानि श्रव्यकाव्यानीत्यर्थः । भेदाः श्रव्यकाव्यविशेषाः । उद्देशमात्रप्रसिद्धत्वात् नाममात्रेण ख्यातत्वात् । तथा च तेषां संज्ञयैव भिन्नत्वं नतु वस्तुत इति भावः ।

इति श्रीरामचरणतर्कवागीशकृतायां साहित्यदर्पणविवृतौ षष्ठः प्रकाशः ।

---

## सप्तमः परिच्छेदः ।

इह प्रथमतः काव्ये दोषगुणरीत्यलङ्काराणामवस्थितिक्रमो दर्शितः । सम्प्रति के त इत्यपेक्षायामुद्देशक्रमप्राप्तानां दोषाणां स्वरूपमाह ।

रसापकर्षका दोषाः

(अस्यार्थः प्रागेव स्फुटीकृतः । तद्विशेषानाह ।

ते पुनः पञ्चधा मताः ।

पदे तदंशे वाक्येऽर्थे सम्भवन्ति रसेऽपि यत् ॥(क)

---

(क) काव्यं निरूप्य तदीयदोषादीन्निरूपयंस्तस्य प्रकृतत्वं दोषनिरूपणस्य प्राथमिकत्वञ्च उपपादयति इह हीति प्रथमतो दोषादिनिरूपणात् प्राक् काव्ये काव्यलक्षणे रीतेस्तन्द्रोऽनुरोधेन पश्चान्निर्देशेऽपि वक्ष्यमाणयुक्त्यालङ्कारनिरूपणात् प्रागेव तां निरूपयिष्यतीति तस्या अलङ्कारात् प्रागिह निर्देशः । ते दोषादयः । हेयहानिपूर्वकमुपादेयोपादानमिति सूचयितुं दोषनिरूपणस्य प्राथमिकत्वमित्यपरे । दोषाणां सामान्यलक्षणमाह । रसापकर्षका इति । अत्रोक्तयुक्त्या रसपदेन विभावादयोऽप्युच्यन्ते तदपकर्षकस्यापि दोषत्वेनोदाहरिष्यमाणत्वात् । दूषयति काव्यमिति दोषपदेन दुःश्रवत्वादिरुच्यते भावसाधनेन तु काव्यापकर्ष एव काव्यापकर्षश्च त्रिधा रसादिप्रतीतिप्रतिबन्धो रसादिप्रकर्षप्रतीतिप्रतिबन्धो रसादिप्रतीतिविलम्बनञ्च तच्च दोषविशेषोदाहरणेष्वनुभेयं । ननु एतल्लक्षणं श्रुतिदुष्टापुष्टार्थत्वादावव्याप्तं तस्य शब्दार्थदोषत्वेन रसापकर्षकत्वाभावादत आह अस्यार्थ

तत्र ।

दुःश्रवत्रिविधाश्लीलानुचितार्थाप्रयुक्तताः ।
ग्राम्योऽप्रतीतसन्दिग्धनेयार्थनिहतार्थताः ॥
अवाचकत्वं क्लिष्टत्वं विरुद्धमतिकारिता ।
अविमृष्टविधेयांशभावश्च पदवाक्ययोः ॥
दोषाः केचिद्भवन्त्येषु पदांशेऽपि पदेऽपरम् ।
निरर्थकासमर्थत्वे च्युतसंस्कारता तथा ॥

परुषवर्णतया श्रुतिदुःखावहत्वं दुःश्रवत्वम् । (ख)

यथा ।

"कार्त्तार्थ्यं यातु तन्वङ्गी कदानङ्गवशंवदा" ।

अश्लीलत्वं व्रीडाजुगुप्साऽमङ्गलव्यञ्जकत्वात्त्रिधा ।

---

इति प्रागेव प्रथमपरिच्छेद एव श्रुतिदुष्टत्वादेः शब्दार्थापकर्षकद्वारेण रसापकर्षकत्वमिति नाव्याप्तिरिति भावः । तद्विशेषान् दोषविभागान् । मी दोषाः तदंशे पदांशे दोषविशेषान्निर्दिशति ।

(ख) दुःश्रव इति अयं भावप्राधान्यो निर्देशः दुःश्रवत्रिविधाश्लीलेति समस्तपाठे भावप्रत्ययस्य सर्वत्रान्वयः । एषूक्तदोषेषु । उद्देशक्रमेण दुःश्रवत्वादिलक्षणं । सोदाहरणमाह परुषेति केषाञ्चित् स्पष्टत्वात् उदाहरणस्यैव दर्शनं श्रुतिपतितमात्रं यद्वै रसं मावहति तत्पदं सर्वथा न देयमिति प्रथमं तदुपन्यास इत्यन्ये । वर्णानां पारुष्यं गुणपरिच्छेदे व्यक्तीभविष्यति श्रोतॄणां श्रोत्रावच्छेदेन दुःखजनकत्वं श्रुतिदुःखावहत्वं श्रुतिपतितं सत् दुःखावहं श्रुतिदुःखावहं तत्त्वं वा ।

(ग) कार्त्तार्थ्यमिति अत्र तथयोरेफयोर्योगेन पारुष्यं तत्प्रयुक्तं पदस्य दुःश्रवत्वं स्वाश्रयपदसम्बन्धित्वेन प्रत्यासन्नस्य शृङ्गाररसस्य प्रकर्ष-

क्रमेणोदाहरणम्।

"दृप्तारिविजये राजन्! साधनं सुमहत्तव।

प्रससार शनैर्वायुर्विनाशे तन्वि! ते तदा"।

अत्र साधनवायुविनाशशब्दा अश्लीलाः।

"शूरा अमरतां यान्ति पशुभूता रणाध्वरे"।

अत्र पशुपदं कातर्य्यमभिव्यनक्तीत्यनुचितार्थत्वम्। अप्रयुक्तत्वं तथा प्रसिद्धावपि कविभिरनादृतत्वम्। यथा।

"भाति पद्मः सरोवरे"। अत्र पद्मशब्दः पुंलिङ्गः। (ग)

---

प्रतीतिं प्रतिबध्नाति द्रुतमेव श्रुतिकटुरित्यभिधीयते। नन्वेतत् पदांशपारुष्यमेव न तु तदपारुष्यमिति चेन्न वाक्यघटकद्वित्वादिपदपारुष्यप्रयुक्तवाक्यदुःश्रवत्ववत् पदघटकद्वित्वादिवर्णपारुष्यप्रयुक्तपददुःश्रवत्वस्य स्वीकारात्। असभ्यार्थान्तरव्यञ्जकमश्लीलं तस्य भावस्तथा। पदांशाश्लीलत्वन्तु असभ्यस्मृतिहेतुत्वमेव। जुगुप्साव्रीडा अमङ्गलमङ्गलाशङ्का व्यञ्जकत्वमिह जनकत्वमेव अत्रेति सैन्ये प्रयुक्तः साधनशब्दो मेढ्रव्यञ्जकतया श्रोतुर्व्रीडाजननेन राजविषयरतिभावस्य समोरणे प्रयुक्तो वायुशब्दः पायुवायुव्यञ्जकतया श्रोतुर्जुगुप्साजननेन अदर्शने प्रयुक्तो विनाशशब्दश्च मृत्युव्यञ्जकतयामङ्गलाशङ्काजननेन शृङ्गारस्य प्रकर्षप्रतिबन्धकः अनुचितार्थत्वं क्वचिद्वाच्यार्थदोषप्रतिपादकत्वेन क्वचिदर्थासम्भवेन क्वचित् असत्समर्थकत्वेन तदाद्यमाह शूरा इति पशुभूताश्छेद्यस्वरूपाः अत्र वाच्यार्थस्य शूरस्य कातर्य्यं दोषस्तस्य व्यञ्जकत्वात् पशुपदस्यानुचितार्थत्वं। द्वितीयं यथा। "प्रज्वलज्जलधारावत्निपतन्ति शरास्तव"। अत्र प्रज्वलदिति पदमनुचितार्थं तृतीयं यथा "दिवाकराद्रक्षति यो गुहासु लीनं दिवाभीतमिवान्धकारं। क्षुद्रेऽपि नूनं शरणं प्रपन्ने ममत्वमुच्चैः शिरसामतीव"। अत्राषद्भूतस्यान्धकारभयस्य समर्थकं द्वितीया-

ग्राम्यत्वं। यथा।

"कटिस्ते हरते मनः"। । अत्र कटिशब्दो ग्राम्यः। अप्रतीतत्वमेकदेशमात्रप्रसिद्धत्वम्। यथा। "योगेन दलिताशयः"। अत्र योगशास्त्र एव वासनार्थं आशयशब्दः।

"आशीः परम्परां वन्द्यां कर्णे कृत्वा कृपां कुरु"।

अत्र वन्द्यामिति किं वन्दीभूतायामुत वन्दनीयायामिति सन्देहः। नेयार्थत्वं रूढिप्रयोजनाभावादशक्तिकृतं लक्ष्यार्थप्रकाशनम्। (घ)

यथा।

"कमले चरणाघातं मुखं सुमुखि! तेऽकरोत्"।

---

त्वं मनुचितार्थं एवमन्यदपि ज्ञेयं। तथा प्रसिद्धावपि तेन रूपेण प्रसिद्ध्यभावेऽपि पुंलिङ्ग इति अप्रयुक्त इति शेषः। हालिकसाधारणप्रसिद्धार्थकशब्दो ग्राम्यः।

(घ) कटिरिति अत्र टकारस्य गूढत्वशतवारुत्वाभावात् प्रकर्षप्रीतिप्रतिरोधः। योगेन प्रकृतिपुरुषयोर्भेदचिन्तनेन दलितः खण्डित आशयो वासना यस्य सः। आशयशब्दोऽप्रतीत इति शेषः। अत्र योगशास्त्रानुशीलिनामाशयपदार्थानभिज्ञानां योगिविषयभावबोधविलम्बकरत्वमप्रतीतत्वं। प्रकरणाद्यभावेन श्लेषादिनाऽर्थसन्देहजनकः शब्दः सन्दिग्धः आशीरिति कर्णे कृत्वा श्रुत्वा अत्रेति वन्द्यामिति पदस्य सन्दिग्धत्वं शाब्दबोधविलम्बेन राजविषयरतिभावबोधस्य विलम्बकृत् अशक्तिकृतं कवेरसामर्थ्यप्रयुक्तं असामर्थ्यप्रमवाव्युत्पत्तिः।

(ङ) चरणाघातेन चरणाघातपदेन निर्ज्जितत्वं पराभवः। कमलस्य चरणासम्भवात् तदा घातस्यापि असम्भव इत्यन्वयानुपपत्तिः। पद्मजन्यचरणाघातपराभवः सजन्यवृत्तिपराभवत्ववत्वं लक्ष्यलक्षणयोः

अत्र चरणाघातेन निर्ज्जितत्वं लक्ष्यम्। निहतार्थत्वमुभयार्थस्य शब्दस्याप्रसिद्धेऽर्थे प्रयोगः। (ङ)

यथा। "यमुनाशम्बरमम्बरं व्यतानीत्"। शम्बरशब्दो दैत्ये प्रसिद्ध इह तु जले निहतार्थः। "गोत्रेषु कर्णमादत्ते"। आङ्पूर्वो दाञ् धातुर्दानार्थेऽवाचकः। यथा वा।

---

सम्बन्धः। अत्र रूढिप्रयोजनव्यतिरेकनिश्चयेन कवेरशक्तिनिश्चयः ततो लक्ष्योपस्थितिः ततः शाब्दबोध इति तद्विलम्बेनैव रसबोधविलम्बनमतद्दूषकताबीजं। केचित्तु निर्जितत्वातिशयस्य प्रयोजनस्यैवोपस्थितेरत्र कथं नेयार्थतेति चेन्न रूढिप्रयोजनाभावपदस्य मुख्यार्थयद्बाधाभावोपलक्षणपरतया प्रकृते तत एव नेयार्थत्वाभ्युपगमात् पद्मनिर्जितत्वं हि शोभैव जनितं न तु चरणाघातेनेति तयोर्जन्यजनकभावसम्बन्धाभाव इत्याहुः तन्न अत्र हि लक्षणया अन्वयबोधानन्तरं सादृश्यप्रतीतिरेवानुभवसिद्धा न तु निर्जितत्वातिशयप्रतीतिस्तात्पर्य्याभावात् मुख्यलक्ष्ययोरुपदर्शितसम्बन्धसत्त्वाच्च न चात्र सादृश्यप्रतीतिरेव प्रयोजनमिति वाच्यं पद्मादिवैशिष्ट्यविषयार्थव्यञ्जनयैव तस्याजननात् लक्षणाप्रयोजनस्य तु लक्षणामूलव्यञ्जनाजन्यत्वनियमात्। सादृश्यस्य च लक्ष्यार्थतद्वृत्तिधर्म्मान्यतरसम्बन्धित्वाभावात् प्रयोजनस्य तदन्यतरवृत्तित्वनियमात्। उभयार्थस्य प्रसिद्धाप्रसिद्धोभयवाचिनः।

(च) यमुनाशम्बरं यमुनाजलं व्यतानीत् व्याप्नवत्। दैत्ये दैत्यविशेषे। अत्र विलम्बेन पदार्थोपस्थापकत्वं यमुनाविषयरतिभावबोधविलम्बकृत्। आङ्पूर्व इति न च दाधातोर्दानेऽभिधासत्त्वेन कथमवाचकत्वमिति वाच्यं धात्वर्थबाधकोपसर्गरहितदाधातोरेव दानेऽभिधाकल्पनात्। एतदस्वीकारे तदुदाहरणान्तरमाह यथावेति दिनमिति दिनपदस्य सूर्य्यावच्छिन्नयामचतुष्टयेऽभिधा। अत्र उद्गारप्रतीतिविल-

"दिनं मे त्वयि सम्प्राप्ते ध्वान्तच्छन्नापि यामिनी" ।

अत्र दिनमिति प्रकाशमयार्थेऽवाचकम् । क्लिष्टत्वमर्थ-प्रतीतेर्व्यवहितत्वम् । (च)

"क्षीरोदजावसतिजन्मभुवः प्रसन्नाः" । अत्र क्षीरोदजा लक्ष्मीस्तस्या वसतिः पद्मं तस्य जन्मभुवो जलानि । "भूतयेऽस्तु भवानीशः" । अत्र भवानीशशब्दो भवान्याः पत्यन्तरप्रतीतिकारित्वाद्विरुद्धमवगमयति ।

"स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः किमेभिर्भुजैः" ।

अत्र वृथात्वं विधेयं तच्च समासे गुणीभावादनुवाद्यत्व

त्वेन दूषकताबीजं । इत्यादिसत्त्वे वाचकपदप्रयोगेऽवाचकत्वं तदसत्त्वे तु नेयार्थत्वमिति भेदः । निरुढलक्षणादौ शाब्दबोधविलम्बाभावाच्च-रसादिबोधविघटनमिति नास्यावसर इत्यवधेयम् । "हा धिक् सा किल तामसी शशिमुखी दृष्टा मया यत्र सा तद्विच्छेदरुजान्धकारितमिदं दग्धं दिनं कल्पितमित्यादौ" प्रकाशमये दिनपदप्रयोगदर्शनाद्रूढिः । प्रकाशा-तिशयप्रतीतिः प्रयोजनं वा एवमन्यत्रापि बोध्यं केचित्तु भ्रमोत्पादक-सत्त्वेऽवाचकत्वं तदसत्त्वे नेयार्थत्वमिति वदन्ति । तन्न दिनमित्यादौ दिनपदस्य प्रकाशमयेऽर्थे अभिधाभ्रमजनकाभावात् वचोवाच्यत्वमागता इत्यादिवक्ष्यमाणनेयार्थोदाहरणे भ्रमोत्पादकसत्त्वेऽप्यवाचकत्वानङ्गी-काराच्च । अर्थप्रतीतेः पदार्थोपस्थितेः व्यवहितत्वं व्यवधानेन जन-कत्वं पदगतक्लिष्टत्वस्य समासगतत्वेनैव दोषत्वं लभ्यते समासेऽन्विताऽन्वय-लभ्यानतिप्रसक्तविशेष्यतावच्छेदककल्पनेन विलम्बो हि व्यवधानं वाक्यक्लिष्टत्वस्थले तु आसत्तिकल्पनेन विलम्बः ।

(च) क्षीरोदजेति तत्राऽन्विताऽन्वयलभ्यानां क्षीरोदजत्वक्षीरोद-जावसतित्वक्षीरोदजावसतिजन्मस्थानत्वानां व्याप्यानि लक्ष्मीत्वपद्मत्व जलत्वानि प्रकृतोपयोगित्वप्रतिसन्धानेन कल्पनीयानि ततः शाब्दबोध

प्रतीतिकृत्। यथा वा "रक्षांस्यपि पुरःस्थातुमलं रामानुजस्य मे"। अत्र रामस्येति वाच्यम्। (क) यथा वा। "आसमुद्रक्षितीशानाम्"। अत्रासमुद्रमिति वाच्यम्। यथा वा।

"यत्र ते पतति सुभ्रु! कटाक्षः षष्ठबाण इव पञ्चशरस्य।

अत्र षष्ठइवेत्युत्प्रेक्ष्यम्। यथा वा।

"अमुक्ता भवता नाथ! मुहूर्त्तमपि सा पुरा"!

अत्रामुक्तेत्यत्र नञः प्रसज्यप्रतिषेधत्वमिति विधेयत्वमेवोचितम्। यदाहुः।

---

इति रसादिबोधविलम्बनमप्यत्र दूषकताबीजं। भूतय इति भवस्य पत्नी भवानी तस्या ईशः पतिः अत्र देवविषयकरतिभावप्रकर्षबोधप्रतिरोधः। अविमृष्टेति अविमृष्टः प्राधान्येनानिर्दिष्टो विधेयांशो यत्र तत्त्वं पदार्थानां मध्ये विधेयांशस्य उपादेयत्वेन प्राधान्यं तस्य च प्राधान्येन निर्देशएवोचितस्तद्विपर्य्ययश्च कचित् समासेन कचिदुद्देश्यविधेयपदयोः पौर्वापर्य्यविपर्य्ययेण तत्राद्ये पददोषत्वं द्वितीये वाक्यदोषता। अनुवाद्यत्वमुद्देश्यत्वं। अलं समर्थानि अत्र काकुस्वरवशादसमर्थत्वं व्यज्यते राक्षसविनाशे रामसम्बन्धित्वस्यैवोपयोगित्वमिति। तस्यैवोपादेयत्वमिति भावः।

(ज) आसमुद्रेति रघुवंशाधिकारस्य समुद्रपर्य्यन्तत्वमुपादेयं। तत्रोत्प्रेक्षितं योग्यम्। नञ्समासगतमविमृष्टविधेयांशत्वमाह अमुक्तेति प्रसज्यप्रतिषेधत्वमिति विधेरप्रधानत्वादिति भावः। विधेयत्वमिति तदर्थस्येतिशेष अप्राधान्यमिति यत्र वाक्ये विधेः पदार्थान्तरस्य अप्राधान्यं उद्देश्यतयाऽमुख्यत्वं प्रतिषेधे नञर्थे प्रधानता विधेयतया मुख्यत्वं यत्र यदर्थे क्रियया समभिव्याहृतपदार्थतावच्छेदकेन सम्बन्धस्तत्र वाक्ये असौ नञ्प्रसज्यप्रतिषेध इत्यर्थः। उदाहरति यथेति

"अप्राधान्यं विधेर्यत्र प्रतिषेधे प्रधानता ।
प्रसज्यप्रतिषेधोऽसौ क्रियया सह यत्र नञ्" ॥

यथा ।

"नवजलधरः सन्नद्धोऽयं न दृप्तनिशाचरः" । (ज)

---

नवजलधर इति गन्धर्वेणोर्वश्यां हृतायां पुरूरवसस्तद्विरहे नवजलधरादौ निशाचरत्वादिप्रतीतिवर्णनमिदं अयं सन्नद्धो न नवजलधरः दृप्तनिशाचर इत्ययं नवजलधरत्वाभाववान् इत्यर्थः । अत्रेदं पदार्थस्य उद्देश्यत्वं नञर्थस्याभावस्य विधेयत्वं समभिव्याहृतपदार्थतावच्छेदकेन सह नञर्थस्य सम्बन्धः न च विधेर्भावपदार्थस्य इति व्याख्येयं अभावो न जातिमान् इत्याद्यसंग्रहापत्तेः क्रिययेति यथाश्रुतार्थविवक्षणे तु अयं न पाकवानित्यादिसंग्रहेऽप्युक्तोदाहरणाद्यसंग्रहप्रसङ्गः न च नञर्थस्य क्रियान्वयित्वाभावेनोक्तोदाहरणादौ नञः प्रसज्यप्रतिषेधत्वमेव नास्तीति वाच्यं तत्र विधेर्विधेयत्वाभावेन पर्युदासत्वासम्भवात् तृतीयप्रकारानभिधानाच्च प्रसज्यप्रतिषेधत्वस्यैवावश्यं वाच्यत्वात् । अत एव अव्ययीभावसमासप्रकरणे गोयीचन्द्रेणोक्तं धर्म्माभावे प्रसज्यप्रतिषेधे माभूत् ब्राह्मणोऽयं न भवति ब्राह्मणत्वं धर्मोऽत्र निषिध्यते इति सुनिरवन इत्यादौ तु समासलुप्तविद्यमानादिपदार्थैकदेशे नञर्थस्य सम्बन्धः वस्तुतस्तु घटो गृहे न चत्वरे धनं चैत्रस्य न मैत्रस्य इत्यादौ क्रियाकारकेण सह नञर्थस्यान्वयेऽपि प्रसज्यप्रतिषेधत्वं वाच्यं नञर्थस्य विधेयत्वेनैव तत्स्वीकारात् क्रियान्वयित्वस्यानियतत्वाच्च एवञ्च घटो न पट इत्यादावुत्तरपदार्थेन पटादिना नञर्थस्य भेदस्य सम्बन्धसत्वेऽपि विधेयत्वमात्रेण प्रसज्यप्रतिषेधत्वं न चात्र पटत्वाभाव एव विधेयो न तु पटभेद इति वाच्यं पटभेदस्यापि विधेयत्वेन नञर्थस्य विधेयत्वेनैव तत्स्वीकारात् क्रियान्वयित्वस्यानियतत्वाच्च बाधकाभावात् । न च भेदबोधकस्य नञो नित्यसमासविधानमेव बाधकमिति वाच्यं "यजतिषु च यजामहं कुर्वीत नानुयाजेष्वित्यादौ" व्यभिचारदर्शनात् काबापानां

उक्तोदाहरणे तत्पुरुषसमासे गुणीभावे नञः पर्य्युदासतया निषेधस्य विधेयतानवगमः । यदाहुः ॥

"प्रधानत्वं विधेर्यत्र प्रतिषेधेऽप्रधानता ।
पर्युदासः स विज्ञेयो यत्रोत्तरपदे न नञ्" ॥

तेन ।

"जुगोपात्मानमत्रस्तो भेजे धर्म्ममनातुरः ।
अगृध्नुराददे सोऽर्थानसक्तः सुखमन्वभूत्" ॥

अत्रात्रस्ततामनभ्यात्मगोपनाद्येव विधेयमिति नञः पर्य्युदासतया गुणीभावो युक्तः । (भ)

---

नित्यसमासविधानस्यायुक्तत्वात् नित्यसमासवादिमतेऽपि अयमब्राह्मण इत्यादौ ब्राह्मणभेदस्य विधेयत्वमवश्यं वाच्यं न चात्रापि ब्राह्मणत्वाभाववानित्येवार्थ इति वाच्यं समस्यमानपदार्थयोरन्वयाभावे तत्पुरुषानङ्गीकारात् ।

(भ) नन्वेवं प्रकृते किं त्वनुपपन्नमित्यतमाह उक्तोदाहरणेत्विति अमुक्तेत्यादावित्यर्थः पर्युदासतया पर्य्युदासवदनुवाद्यत्वप्रतीतिकारितया विधेयतानवगमो विधेयताया न स्पष्टावगमः । यथाश्रुतार्थत्वेऽत्र नञः प्रसज्यप्रतिषेधत्वमिति प्रागुक्तेन सह विरोधः स्यात् । विधेर्विधेयत्वाभावे पर्य्युदासासङ्गतिश्च स्यात् । पर्युदासस्यानुवाद्यत्वमुपपादयति यदाहुरिति यत्र वाक्ये विधेः पदार्थान्तरस्य प्रधानत्वं विधेयतया मुख्यत्वं प्रतिषेधे नञर्थेऽप्रधानता उद्देश्यतावच्छेदकतया अमुख्यत्वं यत्र यदर्थे उत्तरपदेन उत्तरपदार्थेन सह सम्बन्धस्तत्र वाक्ये स नञपर्युदासोविज्ञेय इत्यर्थः । रात्रौ श्राद्धं न कुर्वीत इत्यादौ न रात्राविति प्रयोजनया रात्रानित्यस्योत्तरपदत्वमुपपद्यं उदाहरति तेनेति जुगोप पालयामास अगृध्नुस्तृष्णाशून्यः स दिलीपः असक्तोऽनासक्तः अत्रस्तताद्वि त्रस्तभिन्नत्वादि अनूद्य उद्देश्यतावच्छेदकीकृत्य तत्पुरुष-

नन्वश्राद्धभोजी ब्राह्मणः, असूर्य्यम्पश्या राजदारा इत्यादिवत् अमुक्त्वात्रापि प्रसज्यप्रतिषेधो भविष्यतीति चेन्न । अत्रापि यदि भोजनादिरूपक्रियांशेन नञः सम्बन्धः स्यात्तदैव तत्र प्रसज्यप्रतिषेधत्वं वक्तुं शक्यम् । न च तथा । विशेष्यतया प्रधानेन तद्भोज्यार्थेन कर्त्रंशेनैव नञः सम्बन्धात् । यदाहुः ।

"श्राद्धभोजनशीलो हि यतः कर्त्ता प्रतीयते ।
न तद्भोजनमात्रं तु कर्त्तरीनेर्व्विधानत इति" ॥

अमुक्त्वात्र तु क्रिययैव सह सम्बन्ध इति दोष एव । एते च क्लिष्टत्वादयः समासगता एव पददोषाः । (ञ)

---

समासे नात्यन्ताभावानभिधानात् तत्त्वाभावादेरत्रनोद्देश्यतावच्छेदकत्वमित्यवगन्तव्यं । एवञ्च नञः प्रसज्यप्रतिषेधत्वं पर्य्युदासत्वञ्च विधेयोद्देश्यभावविवक्षाधीनं न तु नियतं । गुणभावो गौणार्थप्रतिपादकत्वम् ।

(ञ) ननु अश्राद्धभोजीति समस्तेनापि नञा भोजनाद्यभावविधेयत्वस्य स्पष्टावगमे कथमविमृष्टविधेयांशत्वमिति भावः । तद्भोज्यर्थेन श्राद्धभोज्यादिरूपार्थेन कर्त्रर्थेनैवेति भोजनार्थाद्यंशेन तत्सम्बन्धस्वीकारे निराद्यर्थस्य कर्त्तुरनन्वयापत्तेः तदुपस्थापितस्य कर्त्तुर्धात्वर्थेनैवान्वयस्य व्युत्पत्तिविरुद्धत्वात् । अतः श्राद्धभोजिपदात्तद्भोजनमात्रं श्राद्धभोजनमात्रं प्रतीयते इत्यमुक्त्वा क्रिययैव सम्बन्ध इति भवतृकर्त्तृकमोचनाभावप्रतीतिर्बोधस्याद्भावसिद्धत्वादिति भावः । दोष एवाविमृष्टविधेयांशत्वमेव एतन्मते समस्समानपदार्थैकदेशे नञर्थान्वयेऽपि समासस्वीकारः यदि पुनः क्त्वाप्रत्ययार्थस्य कर्मणोऽन्वयापत्त्या क्रियया सह नञर्थस्य सम्बन्धमनङ्गीकृत्य मोचनकर्मणैव सम्बन्धः स्वीक्रियते तदा पुनरयमब्राह्मण इत्यादिवदत्रापि मोचनकर्मभेदस्यैव विधेयत्वं बोध्यम् । किन्तु नञः समस्ततया [illegible] इति अविमृष्टविधेयांशत्वमित्यवग-

( वाक्ये दुःश्रवत्वं यथा ।
"स्मरार्त्तोऽन्धः कदा लप्स्ये कार्त्तार्थ्यं विरहे तव ।
कृतप्रवृत्तिरन्यार्थे कविर्वान्तं समश्नुते" ॥

---

नव्यम् । अत्रापि रसादिप्रतीतिविलम्बनं दूषकताबीजं एते चेति चादिपदात् विरुद्धमतिकारित्वविधेयाविमर्शयोर्ग्रहणं विना समासं तेषामसम्भवादिति भावः ।

(ट) संप्रति वाक्यदुःश्रवादीनुदाहरति वाक्ये इति स्मरार्त्त इति अत्रानेकपदस्य परुषवर्णघटितत्वाद्वाक्यदुःश्रवत्वं वाक्यगतं व्रीडा-व्यञ्जकमश्लीलत्वं यथा न साधनोन्नतिर्या स्यात् कलत्रावर्तिदायिनी । जुगुप्साव्यञ्जकमश्लीलत्वमुदाहरति कृतप्रवृत्तिरिति अन्यार्थे अन्य-कविपर्यवसितवाक्यार्थे कृतप्रवृत्तिः कृतकाव्यबन्धः । अत्र वान्तप्रवृत्तिशब्दौ जुगुप्साव्यञ्जकौ । अमङ्गलाश्लीलत्वं वाक्यगतं यथा "पितृवसतिमहं व्रजामि तां सह परिवारजनेन यत्र मे । भवति सपदि पावकान्वये हृदयमशेषित शोकशोकशल्यकं" । अत्र पितृवसतिपावकशब्दौ जनक-वेश्मपवित्रकारिवाचकौ श्मशानतदङ्गिरूपामङ्गलव्यञ्जकौ । अनुचितार्थं यथा "कुविन्दस्त्वं तावत् पटयसि गुणग्राममभितो यशो गायन्त्येते दिशिदिशि च नग्नास्तव विभो । शरत् ज्योत्स्नागौरस्फुटविकटसर्वाङ्ग-सुभगा तथापि त्वत्कीर्त्तिर्भ्रमति विगताच्छादनमिह" । कुविन्दः कृत्स्नपृथिवीकः दोषपक्षे तन्तुवायः नग्नाः स्तुतिपाठकाः पक्षे दिगम्बराः अत्र कुविन्दादिशब्दोऽर्थान्तरं प्रतिपादयन् स्तुत्यस्य तिरस्कारं व्यनक्ती-त्यनुचितार्थत्वं अप्रयुक्तत्वं यथा "स रातु वो दुश्च्यवनो भावुकानां पर-म्परां । अनेडमूकताद्यैश्च द्युतु दोषैरसम्मतान्" । अत्र राधातुर्दाने दुश्च्यवन इन्द्रे भावुकं मङ्गले अनेडमूकौ वधिरे दोधातुः खण्डने प्रसिद्धा अपि कविभिरनादृतत्वादप्रयुक्ताः । अनुत्तमं पद्य इत्यत्रानुत्तमपदस्य उत्तमवाचकत्ववदनेडमूकपदस्य एडमूकवाचकत्वं । ग्राम्यत्वं यथा "ताम्बूलभृतगल्लोऽयं भल्लं जल्पति मानुषः । करोति खादनं पानं सदैव

अत्र जुगुप्साव्यञ्जकाश्लीलता । (ठ)

। "उदयत्कमललौहित्यैर्वक्त्राभिर्भूषिता तनुः" ।

---

"यथा तथा" । गल्लः कपोलः भल्लं भद्रं अत्र गल्लभल्लादिशब्दात्मकपा-मरशब्दाः ग्राम्याः । "अप्रतीतत्वं यथा तस्याधिमात्रोपायस्य तीव्रसंवे-गिताजुषः । दृढभूमिः प्रियप्राप्तौ यत्नः स फलितः सखे" । अधिमात्र-मात्राक्रियाविशेष उपायोः यस्य तस्य तीव्रसंवेगिता समाधिविशेषः दृढभूमिर्दृढाभ्यासदायो प्रियप्राप्तौ तत्त्वज्ञानलाभे । अत्राधिमात्रादयः शब्दाः योगशास्त्रमात्रप्रयुक्तत्वादप्रतीताः । सन्दिग्धत्वं यथा "सुराल्यो-ल्लासपरः प्राप्तपर्याप्तवधूजनः । मार्गणप्रवणो भास्वद्भूतिरेषा विलो-क्यताम्" । अत्र सुरालयनमार्गणप्रभृतिशब्दाः किं देवसेनाशरविभूत्यर्थाः किंवा मदिरालयलम्पटयाचनभस्मार्थाः इति सन्देहः ।

(ठ) नेयार्थत्वमाह उदयदिति अत्र हि उत्पूर्वस्य इनधातोरुदयगिरि-शेखरारोहणं मुख्योऽर्थस्तस्य पद्मरागे बाधात्तज्जन्यप्रकाशे लक्षणा । अत्र दरिद्रत्वेऽपि पद्मरागप्रकाशस्योदयाजन्यत्वान्मुख्यार्थयोगाभावान्ने-यार्थत्वमवगन्तव्यं अन्यदपि नेयार्थत्वमुपपादयति अत्रेति पद्मरागपदस्य परित्यागस्यहत्वात् कमलपदस्य पद्मशब्दे लौहित्यपदस्य च रागशब्दे वक्त्रा-पदस्य वामाशब्दे लक्षणा । लक्षितैः पद्मादिभिः पदैरभिधाया पद्मरागवा-चकानुपस्थितिर्यथा द्विरेफपदेन बहुव्रीहिलक्षणयोपस्थापिताद्रेफद्वय-युक्तभ्रमरपदादभिधयैव षट्पदोपस्थितिरत्र रूढिरस्ति प्रकृते तु रूढिप्रयो-जनाभावान्नेयार्थत्वं इयमेव लक्षितलक्षणेत्युच्यते । न च लक्षणाद्वया-भावात् कथमियं लक्षितलक्षणेति वाच्यं यत्र लक्षिताच्छब्दादर्थाभिधानं तत्रैव लक्षितलक्षणायाः परिभाषितत्वात् ननु द्विरेफपदस्य रेफद्वययुक्त-भ्रमरशब्द एवार्थस्तथा सति द्विरेफं पश्येत्यादौ द्वितीयार्थकर्मताया भ्र-मरेऽन्वयः । तथा हि प्रकृत्यर्थान्वितस्वार्थबोधकत्वं प्रत्ययानामिति नियमादिति चेन्न प्रकृत्यर्थाभिन्नत्वे नाध्यासितस्यापि प्रकृत्यर्थत्वात् अत-एव मुखचन्द्रं पश्येत्यादौ चन्द्राभिन्नत्वे नाध्यासिते मुखे कर्मताया

अत्र कमललौहित्यं पद्मरागः । वक्राभिः वामाभिः ।(ठ)

"धम्मिल्लस्य न कस्य प्रेक्ष्य निकामं कुरङ्गशावाक्ष्याः ।
रज्यत्यपूर्वबन्धव्युत्पत्तेर्मानसं शोभाम्" ॥

अत्र धम्मिल्लस्य शोभां प्रेक्ष्य कस्य मानसं न रज्यतीति

---

अन्वयः तथा हि द्विरेफशब्दाद्भ्रमरशब्दस्य द्वितीयान्तस्य कर्मतायाः लक्षित भ्रमरशब्दाङ्कुरस्य चोपस्थितौ भृङ्गे भ्रमरशब्दाभेदं कर्मतायाश्चावगाहमान आर्थिकाध्यारोपरूपो बोधो जायते । शब्दतदर्थयोरभेदारोपश्च हिरण्यपूर्वं कशिपुं प्रचक्षते इत्यादौ दृष्टः । नैयायिकास्तु द्विरेफपदस्य भ्रमरशब्दे लक्षणालक्षितभ्रमरवाच्यत्वसम्बन्धेन भृङ्गे वा परम्परया ततश्च प्रकृत्यर्थे भृङ्गे कर्मतान्वयबोधः इत्याहुस्तन्न रूढ्युद्धरितशब्दादावृत्तिं विना कासिकबोधाननुभावात् । जनितान्वयबोधस्य शब्दस्यावृत्त्यभावात् । आवृत्तौ च द्वितीयाया अन्यावृत्तौ प्रथमोक्तद्वितीयाया अन्वयानुपपत्तेः अरुन्धतीरीतेः मुखचन्द्रं पश्येत्यत्रावश्यमाश्रयणीयत्वाच्चेत्यास्तां विस्तरः । निहतार्थं यथा सायकसहायबाहोः मकरध्वजनियमितक्षमाधिपतेः । अब्जरुचिभास्वरस्ते भातितरामवनिप श्लोकः । अत्र सायकमकरध्वजक्षमाब्जश्लोकशब्दाः शरकामक्षान्तिपद्मपद्येषु प्रसिद्धा अप्रसिद्धेषु खड्गाब्धिभूमिचन्द्रयशःसुप्रयुक्ताः । अवाचकत्वं यथा नमन्नृपतिमकुटमौलिकुटचन्द्रिकादुर्दिनस्फुरच्चरणपल्लवप्रतिपदोक्तदोःसम्पदः । अनेन सर्वजेतरां तुरगसेव सकलभ्रमत्तुरङ्गखुरचन्द्रकप्रकरदन्तुरा मेदिनी । अत्र चन्द्रिकाशब्दः किरणसामान्ये दुर्दिनशब्दश्च घनमात्रे सम्पच्छब्दश्चरणसम्पदादाववाचकः ।

( ड ) क्लिष्टत्वमाह धम्मिल्लस्येति अपूर्वबन्धस्य व्युत्पत्तिनैपुण्यं यस्याः । विरुद्धमतिकारित्वं यथा "श्रितक्षमारक्तभुवः शिवालिङ्गितमूर्त्तयः । विग्रहक्षपणेनाद्य शेरते ते गतासुखाः" । गतासुखा गत-

सम्बन्धः क्लिष्टः। "न्यक्कारो ह्ययमेव मे यदिति" अत्र चाय-मेव न्यक्कार इति न्यक्कारस्य विधेयत्वं विवक्षितम् तच्च शब्दरचनावैपरीत्येन गुणीभूतम्। रचना च पद-द्वयस्य विपरीतेति वाक्यदोषः। (ड)

"आनन्दयति ते नेत्रे योऽसौ सुभ्रु ! समागतः"।

इत्यादिषु "यत्तदोर्नित्यः सम्बन्धः" इति न्यायादुपक्रा-न्तस्य यच्छब्दस्य निराकाङ्क्षत्वप्रतिपत्तये तच्छब्दसमा-नार्थतया प्रतिपाद्यमाना इदमेतददः शब्दा विधेया एव भवितुं युक्ताः। अत्र तु यच्छब्दनिकटस्थतया अनुवाद्यत्व-प्रतीतिकृत्तच्छब्दस्यापि यच्छब्दनिकटस्थितस्य प्रसिद्धपरा-मर्षित्वमात्रम्। यथा।

---

दुष्टाः। पञ्चे गतानि असवः खानि इन्द्रियाणि च येषां ते तथा। अत्र क्षमादिगुणयुक्ताः सुखमासते इति विवक्षिते इता इति विरु-द्धार्थप्रतीतिः। अविमृष्टविधेयांशत्वमाह न्यक्कार इति तच्चेति अनु-वाद्यमनुक्त्वैव न विधेयमुदीरयेदिति न्यायादितिभावः।

(ड) उदाहरणान्तरमाह आनन्दयतीति नित्यः सम्बन्धः इति अवश्यमन्योऽन्यापेक्षितत्वमित्यर्थः। स च सम्बन्धः शाब्द आर्थश्च भवति द्वयोरुपादाने शाब्दार्थोभयोरुपादाने आर्थः क्रमेणोदाहरिष्यति उपक्रा-न्तस्य अनुवाद्यत्वबोधकस्य प्रतिपाद्यमानाः प्रयुज्यमानविधेया विधेयत्व-बोधकाः। नन्वत्र किंबाधकमत आह अत्रत्विति उक्तोदाहरणेत्वित्यर्थः। अदःशब्द इति विशेषः। प्रसिद्धपरामर्शित्वमात्रं। प्रसिद्धबोधकत्वमेव न तु विधेयत्वबोधनेन निराकाङ्क्षत्वबोधकप्रतिपादकत्वं। तदुक्तं ख्यातार्थमनुभूतार्थं प्रक्रान्तार्थञ्च तत्पदं। यत्पदाक्षेपयाहीनं न विधेयत्वबोधकदिति। यत्र तु प्रसिद्धादिपरामर्शिनोऽपि तच्छब्दस्य

यः स ते नयनानन्दकरः सुभ्रु ! स आगतः" ।

यच्छब्दव्यवधानेन स्थितास्तु निराकाङ्क्षत्वमवगमयन्ति ।
यथा । "आनन्दयति ते नेत्रे योऽधुनासौ समागतः" ॥

एवमिदमादिशब्दोपादानेऽपि । यत्र च यत्तदोरेकस्यार्थत्वं सम्भवति तत्रैकस्योपादानेऽपि निराकाङ्क्षत्वप्रतीतिरीति न क्षतिः । तथा हि यच्छब्दस्योत्तरवाक्यगतत्वेनोपादाने सामर्थ्यात् पूर्ववाक्ये तच्छब्दस्यार्थत्वम्" । (ढ)

यथा

"आत्मा जानाति यत्पापम्" । एवम् ॥

"यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे । भास्वन्ति रत्नानि महौषधीश्च" इत्यादावपि । तच्छब्दस्य प्रक्रान्तप्रसिद्धानुभूतार्थत्वे यच्छब्दस्यार्थत्वम् । क्रमेण यथा ।

---

यत्पदेन सम्बन्धः सम्भवति तत्र विधेयत्वप्रतीतिकारित्वमस्यैव क्रमेण यथा "करबदरसदृशमखिलं यत्प्रसादतः कवयः । पश्यन्ति सूक्ष्ममतयः सा जयति सरस्वती देवी । यदङ्गलावण्यमनङ्गभङ्गदं यदाननं निन्दति बिम्बमैन्दवं । समञ्चयं मुञ्चति मानसं न या विहायतां क्वन्न शान्तिरस्ति मे । रसैः कथा यस्य सुधावधीरिणी नलः स भूजानिरभूत् गुणाद्भुतः" । स्थिता इति तदादयः शब्दा इत्यनुषज्यते स्वार्थत्वसर्थवशलभ्यत्वमाध्यात् परस्पराकाङ्क्षानैयत्यात् एतेनोत्तरवाक्यस्थं यत्पदं तत्पदनिराकाङ्क्षमिति हेयं ।

(ढ) आत्मेति तदात्मा जानाति यत्पापमस्ति इत्यर्थः । यमिति स हिमालयोऽस्तीति पूर्ववाक्ये तच्छब्दस्यार्थत्वं उत्तरवाक्यस्थयत्पदस्य पूर्ववाक्यस्थतत्पदेन साकाङ्क्षः सम्बन्धोऽपि यथा चन्यास्तागुण-

"स हत्वा वालिनं वीरस्तत्पदे चिरकांक्षिते ।
धातोः स्थान इवादेशं सुग्रीवं संन्यवेशयत्" ॥
"स वः शशिकलामौलिस्तादात्म्यायोपकल्पताम्" ।(ण)
"तामिन्दुसुन्दरमुखीं हृदि चिन्तयामि" ॥

यत्र च यच्छब्दनिकटस्थितानामपीदमादिशब्दानां भिन्नलिङ्गविभक्तित्वं तत्रापि निराकाङ्क्षत्वमेव । क्रमेण यथा ।

"विभाति मृगशावाक्षी येदं भुवनभूषणम् ।
इन्दुर्विभाति यस्तेन दग्धाः पथिकयोषितः" ॥

क्वचिदनुपात्तयोर्द्वयोरपि सामर्थ्यादवगमो यथा ।

"न मे शमयिता कोऽपि भारस्येत्युर्वि ! मा शुचः ।
नन्दस्य भवने कोऽपि बालोऽस्त्यद्भुतपौरुषः" ॥

अत्र योऽस्ति स ते भारस्य शमयितेति बुध्यते ।

"यद्यद्विरहदुःखं मे तत् को वापहरिष्यति" ॥

---

एवरोहणभुव इत्यादि एवं पूर्ववाक्यस्थयत्पदस्योत्तरवाक्ये प्रतीयमान तत्पदापेक्षा यथा "यस्त्वां विसृजते मर्त्य आत्मानं प्रियमीश्वरम् । विपर्य्ययेन्द्रियार्थार्थं विषमत्त्यमृतं त्यजेत्" । सहत्वेति यः सुग्रीवप्रियकारीत्यर्थतोऽवगम्यते । स व इति यः शिवोलोके पूज्यते इत्यर्थः ।

(ण) तामिति या रूपलावण्यपूर्णा इत्यर्थतोऽवगम्यते । एवमेव चण्डीदासादयः । तेषामयमाशयः प्रक्रान्तादिपरामर्शकस्य तत्पदस्य यत्पदनिराकाङ्क्षत्वे यत्तदोर्नित्यः सम्बन्ध इति नियमभङ्गस्स्यात् । एवञ्च यत्पदापेक्षया हीनमिति प्रागुक्तं उपस्थिताकाङ्क्षाविरह परम् । सहत्वेत्यादौ स क इत्युत्थाप्याकाङ्क्षयैव सङ्गतिरिति नियमे न यत्पदसन्निहितत्वेन यत्पदमसिद्धार्थकं तत्पदं तद्भेदो निवेशनीय

इत्यत्रैको यच्छब्दः साकाङ्क्ष इति न वाच्यम्। तथा हि यद्यदित्यनेन येन केनचिद्रूपेण स्थितं सर्व्वात्मकं वस्तु विवक्षितम्। तथाभूतस्य तस्य तच्छब्देन परामर्शः। एवमन्येषामपि वाक्यगतत्वेनोदाहरणं बोध्यम्। पदांशे श्रुतिकटुर्यथा। (त)

"तद्गच्छ सिद्ध्यै कुरु देवकार्य्यम्"। धातुमत्तां गिरिर्धत्ते"। अत्र मत्ताशब्दः क्षीवार्थे निहितः।

"वर्ण्यते किं महासेनो विजेयो यस्य तारकः"ः

अत्र विजेय इति कृत्यप्रत्ययः क्तप्रत्ययार्थेऽवाचकः।

"पाणिः पल्लवपेलवः"। पेलवशब्दस्याद्याक्षरे अश्लीले।

"संग्रामे निहताः शूरा वचोबाणत्वमागताः"।

---

इति। द्वयोर्यत्तत्पदयोः सामर्थ्यादाकाङ्क्षातः। ननु यत्र पूर्व्ववाक्ये यत्पदद्वयं तत्र कथमेकतत्पदेन निराकाङ्क्षत्वप्रतीतिस्तत्रस्तत्पदद्वयस्यैव वक्तुं योग्यत्वात् यथा यं यं कामयते कामं तन्तमाप्नोति लीलयेत्यत आह यद्यदिति एक इति उत्तरवाक्ये एकतत्पदप्रयोगादिति भावः। सर्व्वात्मकमिति विरहदुःखत्वेन सामान्येन सर्व्वं विरहदुःखमित्यर्थः। तथाभूतस्य विरहदुःखत्वावच्छिन्नस्य तथा च वीप्सायां वक्तृतात्पर्य्यमेव नियामकं सामान्यरूपेण उपस्थापने वक्तृतात्पर्य्ये सति यत्तत्पदे वीप्सा तत्तद्व्यक्तित्वेन उपस्थापने तात्पर्य्ये सति एतत्पदे वीप्सा। क्वचित्तु तत्पद एव वीप्सा न तु यत्पदे यथा ते ते सत्पुरुषाः परार्थघटकाः स्वार्थस्य बाधेन ये एवमिति अन्येषामनुचितार्थत्वादीनां तत्त्वं मया दर्शितमेव।

(थ) दोषाः केचिद्भवन्त्येषु पदांशेऽपि पदेऽपि च इति यदुक्तं तदुदाहरणमाह तद्गच्छेति अश्लीले इति व्रीडाव्यञ्जके जुगुप्साव्यञ्जकं

अत्र वचःशब्दस्य गोःशब्दवाचकत्वे नेयार्थत्वम्। तथा तत्रैव बाणस्थाने शरेति पाठे अत्र पदद्वयमपि न परिवृत्तिसहम्। जलध्यादौ तूत्तरपदं वाडवानलादौ पूर्वपदम्। एवमन्येऽपि यथासम्भवं पदांशदोषा ज्ञेयाः। निरर्थकत्वादीनां त्रयाणाञ्च पदमात्रगतत्वेनैव लक्ष्ये सम्भवः। यथा "मुञ्चमानं हि मानिनि"। अत्र हिशब्दो वृत्तिपूरणमात्रप्रयोजनः। "कुञ्जं हन्ति कृशोदरी"। अत्र हन्तीति गमनार्थे पठितमपि न तत्र समर्थम्। "गाण्डीवी कनकशिलानिभं भुजाभ्यामाजघ्ने विषमविलोचनस्य वक्षः"। "आङोयमहनः (पा० १।३।२८) स्वाङ्गकर्म्मकाच्चेति" (पा० १।३।२८। सू० वा० ) अनुशासनबलादाङ्पूर्वस्य हनः स्वाङ्गकर्म्मकस्यैवात्मने पदं नियमितम्। (थ)

---

यथा पूरयत इति अत्र पूयशब्दः अमङ्गलव्यञ्जकं यथा अभिप्रेत इति अत्र प्रेतशब्दः। वचोवाणत्वं गीर्वाणत्वं गोःशब्दवाचकत्वे इति अत्रवाया गोःशब्दप्रतिपादकत्वे इत्यर्थः। तथा नेयार्थत्वं तत्रैव गीर्वाणशब्द एव परिवृत्तिसहं श्रुतशब्दपरित्यागेन तत्पर्य्यायशब्दान्तरदानेऽपि तदर्थबोधकम्। उत्तरपदं इति न परिवृत्तिसहमित्यनुषङ्गः। एवमन्येऽपि। एवमिति प्रकटितमित्यादौ कटिशब्दो ग्राम्यः। सम्भवन्ति पदे परे इति यदुक्तं तदुदाहर्त्तुमाह निरर्थकत्वादीनामिति आदिना असमर्थत्वच्युतसंस्कारयोर्ग्रहणं अत्र गमनार्थेन समर्थं न प्रतिपादितमम्। तल्लङ्घितमिति अनुशासनमन्यथाकृतमित्यर्थः। एत. द्वय इति अप्रयुक्तस्य अप्रयुक्तत्वस्य पदगतत्वं न तु पदांशगतत्वम्।

इह तु तल्लङ्कितमिति व्याकरणलक्षणहीनत्वात् च्युतसंस्कारत्वम् । नन्वत्र "आजघ्न" इति पदस्य स्वतो न दुष्टता अपि तु पदान्तरापेक्षायैवेत्यस्य वाक्यदोषता । मैवम् । तथा हि गुणदोषालङ्काराणां शब्दार्थगतत्वेन व्यवस्थितेस्तदन्वयव्यतिरेकानुविधायित्वं हेतुः । इह तु दोषस्य "आजघ्न" इति पदमात्रस्यैवान्वयव्यतिरेकानुविधायित्वम् । पदान्तराणां परिवर्त्तनेऽपि तस्य तादवस्थ्यादेवेति पददोष एव तथा । यथेहात्मनेपदस्य परिवृत्तावपि न पददोषः तथा हन्प्रकृतेरपीति न पदांशदोषः । एवं "पद्म" इत्यत्राप्रयुक्तस्य पदगतत्वं बोध्यम् । एवं प्राकृतादिव्याकरणलक्षणहानावपि च्युतसंस्कारत्वमूह्यम् । इह शब्दानां सर्वथा प्रयोगाभावेऽसमर्थत्वं विरलप्रयोगे निहतार्थत्वम् । निहतार्थत्वमनेकार्थशब्दविषयम् । अप्रतीतत्वे त्वेकार्थस्यापि शब्दस्य सार्वत्रिकप्रयोगविरहः । (द)

---

(द) इदानीं केषाञ्चिद्दोषाणां परस्परभेदं दर्शयति इहत्विति सर्वथेति यत्र ज्ञापकं नास्ति तत्रैव प्रयोगाभावः ज्ञापकसत्त्वे तु प्रयोगोऽस्त्येव यथा हनधातोर्गतौ जङ्घापद्धतिरित्यादिप्रयोगः अत्र यत्नलोपपञ्चशब्दौ ज्ञापकौ कुटिलं गम्यतेऽनया इति जङ्घा पद्भ्यां गम्यतेऽत्रेति पद्धतिः एतदर्थमेव हनधातोर्गतौ पाठः केचित्तु पुनःपुनः गम्यतेऽनया इति यनोवाक्यं कुर्व्वन्ति तन्न गत्यर्थधातोरत्यर्थे पौनःपुन्ये च यन् प्राप्त्यभावात् । विरलेति श्लेषादौ प्रयोगो न त्वन्यत्र एतेनासामर्थ्यनिहतार्थयोर्भेदो दर्शितः । निहतार्थत्वाप्रतीतत्वयोर्भेदमाह निहतार्थत्वमिति ।

अप्रयुक्तत्वमेकार्थशब्दविषयम्। असमर्थत्वमनेकार्थशब्दविषयम्। असमर्थत्वे हन्त्यादयोऽपि गमनार्थे पठिताः। अवाचकत्वे दिनादयः प्रकाशमयाद्यर्थे न तथेति परस्परभेदः। एवं पददोषसजातीया वाक्ये दोषा उक्ताः सम्प्रति तद्विजातीया उच्यन्ते।

वर्णानां प्रतिकूलत्वं लुप्ताहतविसर्गते।
अधिकन्यूनकथितपदताहतवृत्तताः॥
पतत्प्रकर्षता सन्धौ विश्लेषाश्लीलकष्टताः।
अर्द्धान्तरैकपदता समाप्तपुनरात्तता॥
अभवन्मतसम्बन्धाक्रमामतपरार्थताः।
वाच्यस्यानभिधानञ्च भग्नप्रक्रमता तथा॥
त्यागः प्रसिद्धेरस्थाने न्यासः पदसमासयोः।
सङ्कीर्णता गर्भितता दोषाः स्युर्वाक्यमात्रगाः (घ)

वर्णानां रसानुगुण्यविपरीतत्वं प्रतिकूलत्वम्। यथा मम। "ओवट्टइ उल्लट्टइ सअणे कहिम्पि मोट्टाअइ णो

---

(घ) अप्रयुक्तत्वासमर्थयोर्भेदमाह अप्रयुक्तत्वमिति असमर्थत्वावाचकत्वयोर्भेदमाह असमर्थत्वे इति न तथा पठिता। तद्विजातीयाः पददोषविजातीयाः वाक्यदोषा उच्यन्ते इत्यनुषङ्गेनान्वयः। लुप्तेति लुप्तविसर्गता आहतविसर्गता च एवमधिकपदतान्यूनपदता कथितपदता च। सन्धाविति सन्धिविश्लेषः सन्ध्यश्लीलता सन्धिकष्टता च। रसानुगुण्यविपरीतत्वञ्च प्रकृतरसविरोधि रसगतगुणव्यञ्जकत्वेन।

(न) ओवट्टइ इति उद्वर्त्तयति उल्लोटयति शयने कस्मिन्नपि मोट्टयति

परिहट्टइ। हिअएण फिट्टइ लज्जाइ खुट्टइ दिहीए सा।
अत्र टकाराः शृङ्गाररसपरिपन्थिनः केवलं शक्तिप्रदर्शनाय निबद्धाः। एषाञ्चैकद्वित्रिचतुः प्रयोगेण न तादृग्रसभङ्ग इति न दोषः। (न)

"गता निशा इमा बाले"। अत्र लुप्तविसर्गाः। आहता ओत्वं प्राप्ता विसर्गा यत्र। यथा। "धीरो वरो नरो यातीति"। "पल्लवाकृतिरक्तोष्ठी"। अत्राकृतिपदमधिकम्। एवं "सदाशिवं नौमि पिनाक-

---

नो। परिघट्टयति हृदयेन स्फिटयति लज्जायाः खुट्टयति धृतेः सा। इति सं। विप्रलम्भवर्णनमिदं। उद्वर्त्तयति देहमुत्तानीकरोति उल्लोटयति पार्श्वपरिवृत्तिं करोति सोट्टायितभावं न करोति स्फिटयति भ्रश्यति खुट्टयति कुण्ठिता भवति। शृङ्गाररसपरिपन्थिनः शृङ्गारविरुद्धवीरबीभत्सरौद्रगतौजोगुणव्यञ्जकत्वेन शृङ्गारप्रकर्षबोधप्रतिबन्धकाः। एषामतिकूलवर्णानां तादृक्वर्णप्रतिकूलत्वनिबन्धनो रसभङ्गः रसप्रकर्षबोधप्रतिबन्धः दुःश्रवत्वनिबन्धनस्तु वर्त्तत एव अतएव निर्बन्धं पत्युर्मुखमित्यत्र रेफयुक्तस्य वर्णत्रयस्य सत्त्वेऽपि नायं दोषः दुःश्रवत्वन्तु वर्त्तत एव। ननूक्तोदाहरणे दुःश्रवत्वमेव दोष इति चेदुदाहरणान्तरं बोध्यं। यथा "वृन्दारकप्रकरमव्यकरोस्यगङ्गमानन्दयामि मुनिवृन्दममन्दमङ्ग। भङ्गं भुजङ्गमगणस्य भयं नयामि त्वामन्तकातिथिमसन्तमहं विधाय"। रावणं प्रति श्रीरामस्योक्तिरियं। अत्र माधुर्य्यव्यञ्जकवर्णप्राचुर्य्यं वीररसस्य परिपन्थि।

(प) गता इति इयमदिवङ्गशः पात एव दोषः विसर्गस्थितिवाङ्छयं दुःश्रवत्वमेव यथा सरः खरः खलः कान्तः इति अधिकमनुपयुक्तार्थं पदं यत्र तत्वं। अत्राकृतिपदमिति शिलापुत्रस्य शरीरमितिवत् पल्लवाकृतेः पल्लवानतिरिक्तत्वादाकृतिपदमनुपयुक्तार्थमिति भावः। अन्ये तु

पाणिमिति" विशेषणमधिकम् । "कुर्य्यां हरस्यापि पिनाकपाणेरिति" अत्र तु विशेषप्रतिपत्त्यर्थमुपात्तत्वाद्युक्तमेव । (प)

यथा वा "वाचमुवाच कौत्सः" । अत्र वाचमित्यधिकम्, उवाचेत्यनेनैव गतार्थत्वात् । क्वचित्तु विशेषणदानार्थं तत्र प्रयोगो युज्यते । यथा । "उवाच मधुरां वाचमिति" । केचित्त्वाहुः । "यत्र विशेषणस्यापि क्रियाविशेषणत्वं सम्भवति तत्रापि तत्प्रयोगो न घटते" यथा । "उवाच मधुरं धीमानिति" ।

"यदि मय्यर्पिता दृष्टिः किं ममेन्द्रतया तदा" ।

अत्र प्रथमे त्वयेति पदं न्यूनम् ।

"रतिलीलाश्रमं भिन्ते सलीलमनिलो वहन्" ।

लीलाशब्दः पुनरुक्तः । एवं "जहुर्विसं धृतविकाशि-

---

आकृतिः संस्थानं तच्च संयोगस्वरूपमेव तत्र रत्नत्वस्य बाधादधिकपदमित्याहुस्तन्न वाधेऽभवन्मतयोगत्वस्यैव प्रसक्तेर्न त्वधिकपदत्वस्य । प्रभातवाता इव कम्पिताकृतिरित्यादिप्रयोगादाकृतिशब्दस्य शरीरवाचकत्वाच्च । अन्यथा तत्र संयोगकल्पनानुपपत्तेरित्यपरे । कुर्य्यामिति पिनाकपाणेरपि धैर्य्यच्युतिकरणेनात्मनः शौर्य्यातिशयः प्रतिपादितः ।

(फ) वाचमिति यथा देवं यजति गन्धं जिघ्रति इत्यादौ सम्भेदेनान्यतरवैयर्थ्यमिति न्यायेन यजादेः पूजाग्रहणमात्रार्थता तथात्रापि वचधातोरुच्चारणमात्रार्थत्वं न तु वचनोच्चारणार्थत्वमन्यथा पौनरुक्त्यं स्यात् एवञ्च तादृशकल्पनमेवात्र शाब्दबोधविलम्बनकदिति दोषत्वमस्य गतार्थत्वादिति वचधातुनैव वागुच्चारणस्य प्रतिपादनाद्वाचमित्यस्य प्रयोगोऽनुपयुक्त एव प्रत्युतार्थान्तरकल्पनाकर इति भावः ।

विसप्रसूना"। अत्र विसशब्दस्य धृतपरिस्फुटतत्प्रसूना इति सर्वनाम्नैव परामर्शो युक्तः। (फ)

हतं वृत्तं लक्षणानुसरणेऽप्यश्रव्यं रसाननुगुणमप्राप्त-गुरुभावान्तलघु च। क्रमेण यथा। "हन्त सततमेतस्या-हृदयं भिन्ते मनोभवः कुपितः"। "अयि! मयि मानिनि! मा कुरु मानम्"। इदं वृत्तं हास्यरसस्यैवानुकूलम्। "विकसितसहकारभारहारिपरिमल एष समागतो वसन्तः"। यत्पादान्ते लघोरपि गुरुभाव उक्तस्तत् सर्वत्र द्वितीयचतुर्थपादविषयं। प्रथमतृतीयपादविषयन्तु वसन्त-

---

न्यूनमनुपादेयमप्युपात्तं पदं यावकपदं यत्र तच्च इत्यर्थः। वाचकेति विशेषणाद्द्योत्यानभिधानादस्य भेदो दर्शितः तस्य द्योतकपदानभिधानस्व-रूपत्वात्। केचित्त्वध्याहारपूरणीयं पदं न्यूनपदं वाच्यानभिधाने त्वध्याहारस्यैवासम्भवादनयोर्भेदस्तथाहि "व्यतिक्रमलवं कं मे वीक्ष्य वामाक्षि कुप्यसि इत्यत्र" व्यतिक्रमलवयोः समासत्वेऽध्याहार्यापिकारे-णापि व्यतिक्रमीयस्यूनभागसमुच्चयस्यासम्भवात्। किन्तु वस्त्वन्तर-स्यैव समुच्चयादित्याहुस्तन्न गुणगतमपि दोषः कश्चिदेकोऽतिहद्यः क्षप-यति यदि नान्यस्तद्विरोधी गुणोऽस्तीत्यादौ गुणगतयोः समासत्वे-ऽप्यधिकारेणैकस्य दिगुणसमुच्चयस्य दर्शनात्। कथितमर्थपौनरुक्त्याभावे-ऽपि द्विरुपात्तं पदं यत्र तत्त्वम्। एकस्यैवार्थस्यैकशब्देन द्विरुपा-दाने किमिदं पदं नानार्थत्वेनार्थान्तरबोधकमुत तस्यैवार्थस्य प्रति-पादकमिति प्रतिसन्धान प्रसङ्गेनशाब्दबोधविलम्बनं दूषकतावीजमत्र बोध्यम्।

(व) हतवृत्तस्य त्रैविध्यमाह हतमिति अप्राप्तगुरुभावमन्तलघु-यत्र तत्। हन्तेति अत्र प्रथमद्वितीयगणौ भकारसकारौ अनयोः सान्निध्यमश्रव्यं तच्च संख्यानानुभवसिद्धम्। गुरुभाव उक्त इति

तिलकादेरेव । अत्र प्रमुदितसौरभ आगतो वसन्त इति पाठो युक्तः । यथा वा । (ब)

"अन्यास्ता गुणरत्नरोहणभुवो धन्या मृदन्यैव सा
सम्भाराः खलु तेऽन्य एव विधिना यैरेष सृष्टो युवा ।
श्रीमत्कान्तिजुषां द्विषां करतलात् स्त्रीणां नितम्बस्थलात्
दृष्टे यत्र पतन्ति मूढमनसामस्त्राणि वस्त्राणि च" ॥

अत्र वस्त्राणि चेति बन्धस्य स्नथत्वस्रुतिः । "वस्त्राण्य-पीति" पाठे तु दार्ढ्यमिति न दोषः । "इदमप्राप्तगुरु-भावान्तलघ्विति" काव्यप्रकाशकारः । वस्तुतस्तु "लक्षणा-नुसरणेऽप्यश्रव्यमिति" अन्ये ।

"प्रोज्ज्वलज्ज्वलनज्वालाविकटोरुसटाच्छटः ।
श्वासक्षिप्तकुलक्ष्माभृत् पातु वो नरकेशरी" ॥

---

"सानुस्वारश्च दीर्घश्च विसर्गी च गुरुर्भवेत् । वर्णः संयोगपूर्वश्च तथा पादान्तगोऽपिवा" इत्यादिना इति शेषः । द्वितीयचतुर्थपाद-विषयमिति इह प्रथमपादान्तस्य गुरुत्वाप्राप्तेर्दोष इति भावः । पतत् प्रकर्षत्वञ्च द्विविधं बन्धस्य पूर्वापेक्षया उत्तरोत्तरत्र शैथिल्यादनुप्रास-पाताच्च निकर्षविशेषः । तदुक्तं पतत्प्रकर्षं बन्धस्य शैथिल्य दुत्तरोत्तरं । पूर्वानुसरतं कोऽपि निकर्षो यत्र जायत इति ।

(भ) क्रमेणोदाहरति अन्यास्ता इति गुणरत्नस्य रोहणभुवो जन्म-स्थानानि स्रतृशरीरारम्भकपृथिवी सम्भावा उपकरणानि अन्ये विल-क्षणा यैरिति प्रागुक्तत्रितयपरामर्शः कचिल्लिङ्गविभक्त्योरित्यनुशासनात् । यत्पदस्य परलिङ्गवचनग्राहित्वं अन्यथा तत्पदतयाकांक्षिपूरणं न स्यात् यत्र यूनि दृष्टे सति द्विषां करतलादस्त्राणि स्त्रीणां नितम्बस्थलाद्व-स्त्राणि च पतन्तीत्यर्थः । श्रीमदित्यादिमूचे इत्यादि च विशेषणमुभयेषां मोहस्यैकत्र भानेनान्यत्र कामेन लक्षणानुसरणेऽपि चतुर्थपादान्तस्य

अत्र क्रमेणानुप्रासप्रकर्षः पतितः।

"दलिते उत्पले एते अक्षिणी अमलाङ्गि ! ते"।

एवंविधसन्धिविश्लेषस्यासकृत्प्रयोग एव दोषः। अनुशासनमुल्लङ्घ्य वृत्तभङ्गभयमात्रेण सन्धिविश्लेषस्य तु सकृदपि यथा। (भ)

"वासवाशामुखे भाति इन्दुश्चन्दनविन्दुवत्"।

चलण्डामरचेष्टित इति" अत्र सन्धौ जुगुप्साव्यञ्जकमश्लीलत्वम्।

"उर्व्यसावत्र तर्वाली मर्व्वन्ते चार्ववस्थितिः"।

अत्र सन्धौ कष्टत्वम्।

"इन्दुर्विभाति कर्पूरगौरैर्धवलयन् करैः।
जगन्मा कुरु तन्वङ्गि ! मानं पादानते प्रियः"॥

---

लघोर्गुरुत्वप्रापकशासनसत्त्वेऽपि। सटासिंहशिरोरुहः छटासमूहः। क्रमेणेति प्रथमपादे संयुक्तवर्णत्रयेण चानुप्रास इत्यन्तमुत्कृष्टः द्वितीयपादे टकारत्रयेणैवेति तदपेक्षयापकृष्टः। तृतीयपादे तु चकारद्वयेनैवेति ततोऽप्यपकृष्टश्चतुर्थपादे मृदुवर्णद्वयेनैवेति सर्वापकृष्ट इत्यर्थः। अत्र चतुर्थपादस्य शैथिल्येनापिनिष्कर्षो बोध्यः। विसन्धिकमुदाहरति दलिते इति विकसिते इत्यर्थः। एवम्विधेति अनुशासनसिद्धेत्यर्थः सकृदपीति सकृत्प्रयोगेऽपि दोष इत्यन्वयः।

(भ) वासवाशामुखे पूर्वदिशि अत्र नित्यं संहितैकपदवत् पादेष्वर्द्धान्तवर्जमित्यनुशासनात् पद्ये सन्धेर्नित्यत्वमिति तल्लङ्घनाद्दोष इत्यर्थः। चलमिति "वेगादुड्डीयगगने चलण्डामरचेष्टितः। अयमुड्डीयते पक्षी ततोऽत्रैव रुचिं कुरु"। चलं यथा स्यात्तथेत्यर्थः। डामरमुद्भटं चेष्टितं यस्य सः अत्रेति चलण्डामरेत्यर्थः। सन्धावुत्पन्नलण्डाशब्दस्याप-

अत्र जगदिति प्रथमार्द्धे पठितुमुचितम् ।

"नाशयन्तो घनध्वान्तं तापयन्तो वियोगिनः ।
पतन्ति शशिनः पादा भासयन्तः क्षमातलम्" ॥

अत्र चतुर्थपादो वाक्यसमाप्तावपि पुनरात्तः । अभवन्मतसम्बन्धो यथा । (म)

"या जयश्रीर्मनोजस्य यया जगदलङ्कृतम् ।
यामेणाक्षीं विना प्राणा विफला मे कुतोऽद्य सा" ॥

---

अंशविधया पुरीषव्यञ्जकत्वाज्जुगुप्सा । रुचिं कुर्वित्यत्र स्त्रीगुह्याङ्गव्यञ्जकचिह्नशब्दात् मत्त्या व्रीडा । अमङ्गलाश्लीलसन्धिस्तु भजते ध्रुवमृतमित्यत्र बोध्यः । ऋतं सत्यं भजत इति सन्धिप्रसादमङ्गलम् । उर्व्याशाविति उर्वी महती नर्वाङ्गी दृश्चश्रेणी सर्वन्ते निर्जलभूस्यन्ते चारुवरस्थितिर्यस्याः सा । अर्द्धान्तरे भिन्नवाक्यघटितपद्यार्द्धे एकमेव पदं यस्य यत्र पद्यार्थो घटकत्वं तथा च यद्घटकमेकमेवपदं भिन्नवाक्यघटितपद्यार्द्धे वर्त्तते तत्त्वम् । तच्चोत्तरार्द्धादौ पूर्वार्द्धान्ते च सम्भवति तत्राद्यमुदाहरति इन्दुरिति अन्त्यं यथा "जगत्प्रकाशयन्निन्दुः करैः शुभ्रैर्विभाति मा । मानमायतनेत्रान्ते कुरु पादानते प्रिये" । अत्र मेतिपदमुत्तरार्द्धे पठितुमुचितम् । अत्रार्द्धान्तरोक्तपदस्य यथायथमुत्तरत्र पूर्वत्र वा वाक्ये निराकाङ्क्षत्वप्रतिसन्धानेन शाब्दबोधविलम्बनमेव दूषकतावीजं समाप्तमन्वयबोधजननान्निराकाङ्क्षमपि विशेष्यं पुनर्विशेषणान्तराकांक्षया उक्तं यत्र तत्त्वं तदुदाहरति नाशयन्त इति अत्राकांक्षान्तरकल्पनेन शाब्दबोधविलम्बनं दूषकतावीजम् । अभवन्न सम्भवन्मत इष्टः सम्बन्धो यत्र तत्त्वं विवक्षितान्वया सम्बन्ध इति यावत् । स च कचिन्निराकांक्षतया कचिदयोग्यतया ।

(य) या जयश्रीरिति कुतः कुत्र । अन्येषां यत्पदानां नोपपद्यते इति भिन्नविभक्तिकत्वादित्यर्थः । यत्र यया एणाक्षीमित्यन्वयो निरा-

अत्र यच्छब्दनिर्दिष्टानां वाक्यानां परस्परनिरपेक्षत्वात्तदेकान्तःपातिना एणाक्षीशब्देन अन्येषां सम्बन्धः कवेरभिमतो नोपपद्यत एव।

"यां विनामी वृथा प्राणा एणाक्षी सा कुतोऽद्य मे"।

इति तच्छब्दनिर्दिष्टवाक्यान्तःपातित्वे तु सर्वैरपि यच्छब्दनिर्दिष्टवाक्यैः सम्बन्धो घटते। यथा वा।

"ईक्षसे यत् कटाक्षेण तदा धन्वी मनोभवः"।

अत्र यदित्यस्य तदेत्यनेन सम्बन्धो न घटते। "ईक्षसे चेदिति" तु युक्तः पाठः। यथा वा।

"ज्योत्स्नाचयः पयः पूरस्तारकाः कैरवानि च।
राजति व्योमकासारे राजहंसः सुधाकरः"॥

राजति व्योमकासारशब्दस्य समासे गुणीभावात्तदर्थस्य सर्वैः संयोगः। विधेयाविमर्षे यदेवाविमृष्टं तदेव दुष्टम्। इह तु प्रधानस्य कासारपदार्थस्य प्राधान्येनाप्रतीतेः सर्वोऽपि पयःपूरादिपदार्थस्तदङ्गतया न प्रतीयते इति सर्ववाक्यार्थविरोधावभास इत्युभयोर्भेदः।

---

काङ्क्षत्वादसम्भवः। विभक्तिविपरिणामेनात्रान्वयः सम्भवतीत्यसन्तोषादाह यथा वेति। अत्रेति यदिति पदं न कालार्थकं तदेति तु कालार्थकं तयोरभेदान्वयो योग्यताविरहाच्च सम्भवतीति भावः। ननु यदित्यव्ययं यदार्थकमप्यस्ति तथापि तदेत्यस्यान्वयः सम्भवतीत्यरुचेराह यथा वेति कासारः सरः। अत्र वाक्यत्रय एव कासारशब्दस्य योगः कवेरभिमतः स तावत् समभिव्याहारविशेषरूपाकांक्षाविरहान्न घटते

"अनेन छिन्दता मातुः कण्ठं परशुना तव ।
बद्धस्पर्द्धः कृपाणोऽयं लज्जते मम भार्गव" ॥ (य)

अत्र "भार्गवनिन्दायां प्रयुक्तस्य मातृकण्ठच्छेदनकर्तृत्वस्य परशुना सह सम्बन्धो न युक्त इति" प्राञ्चः। "परशुनिन्दामुखेन भार्गवनिन्दाधिक्यमेव वैदग्ध्यं द्योतयतीति" आधुनिकाः। अक्रमता यथा।

"समय एव करोति बलाबलं
प्रणिगदन्त इतीव शरीरिणाम्।
शरदि हंसरवाः परुषीकृत-
स्वरमयूरमयू रमणीयताम्" ॥

अत्र परामृश्यमानवाक्यानन्तरमेवेतिशब्दप्रयोगो युज्यते न तु प्रणिगदन्त इत्यनन्तरम्। एवम्। (र)

---

इत्याह अत्रेति गुणीभावाद्विधेयत्वेनान्विततया विश्लेषाभावात् तदर्थस्य कासारशब्दस्य सर्वैः पयःपूरादिभिः व्योमसरसः इति तु युक्तः पाठः। विधेयाविमर्षस्य भेदं दर्शयति विधेयेति।

(र)भार्गवनिन्दायामिति प्रतिपाद्यायामित्यर्थः। मातृकण्ठच्छेदनस्य मातृकण्ठच्छेदनकर्तृत्वस्य परशौ च्छेदनस्य करणत्वमेव न तु कर्तृत्वं यद्वा परशौ मातुरित्यस्य सम्बन्धाभावादविशिष्टस्य सम्बन्धो न सम्भवति प्राञ्चः प्राचीनाः। आधुनिका इति। अयमाशयः तवेत्यनुषङ्गेन मातुरित्यस्य सम्बन्धः स्थाली पचतीतिवत् करणस्यापि कर्तृत्वारोपः परशोरारोपितेनापि स्त्रीवधकर्तृत्वेन पातकं सम्भाव्यते तव तु मुख्येनैव मातृवधकर्तृत्वेन सुतरामतिपातकमिति अस्य शाब्दबोधविघटकत्वं दूषकताबीजम्। अक्रमतेति अविद्यमानं स्वार्थान्वितार्थकपदप्रत्यासत्तिरूपं क्रमो यत्र तत्त्वमित्यर्थः। वाचकपदसान्निध्यक्रमाभावेऽस्थानस्थपदत्वमिदन्तु तदितर-

"इयं गतं सम्प्रति शोचनीयताम्
समागमप्रार्थनया कपालिनः ।
कला च सा कान्तिमती कलावत-
स्त्वमस्य लोकस्य च नेत्रकौमुदी" ॥

अत्र त्वमित्यनन्तरमेव चकारो युक्तः । अमतपरार्थता यथा ।

"राममन्मथशरेणेत्यादि" । अत्र शृङ्गाररसस्य व्यञ्जको द्वितीयोऽर्थः प्रकृतरसविरोधित्वादनिष्टः ।

वाच्यस्यानभिधानं यथा ।

"व्यतिक्रमलवं कं मे वीक्ष्य वामाक्षि ! कुप्यसि" ।

अत्र व्यतिक्रमलवमपीत्यपिरवश्यं वक्तव्यो नोक्तः । न्यूनपदत्वे वाचकपदस्यैव न्यूनता विवक्षिता । अपेस्तु न तथात्वमित्यनयोर्भेदः । एवमन्यत्रापि । (ल)

---

पदस्यैवेति ततोऽस्य भेदः । समय इति प्रहर्षीकृतस्वरमयूरं यथा स्यात्तथा रमणीयतां ययुः प्राप्नुवन्त इत्यर्थः ।

(ल) इयमिति शिवप्राप्त्यर्थं तपस्यन्तीं पार्वतीं प्रति ब्रह्मचारिरूपधारिणः शिवस्योक्तिरियम् । पिनाकिनः शिवस्य कलावतश्चन्द्रस्य नेत्रकौमुदी नयनानन्दजनिका । अस्य प्रत्यासत्तिकल्पनेन शाब्दबोधविलम्बनं दूषकताबीजम् । अमतः प्रकृतविरुद्धः प्रकृतरसविरोधिरसव्यञ्जकः परः श्लेषादिना प्रतीयमानो द्वितीयोऽर्थो यत्र तत्त्वम् । रामेति व्याख्यातमिदं प्राक् । प्रकृतेति प्रकृतो वीभत्सरसस्तद्विरोधित्वात्तद्विरोधिशृङ्गारव्यञ्जकत्वात् । अस्य प्रकृतरसापकर्षकत्वं दूषकताबीजम् । वाच्यस्यावश्यवक्तव्यस्यानभिधानम् । न्यूनपदत्वादस्य भेदं दर्शयति

यथा वा ।

"चरणानतकान्तायास्तन्वि ! कोपस्तथापि ते" ।

अत्र "चरणानतकान्तासीति" वाच्यम् ।

भग्नप्रक्रमता यथा ।

"एवमुक्तो मन्त्रिमुख्यै रावणः प्रत्यभाषत" ।

अत्र वचधातुना प्रक्रान्तं प्रतिवचनमपि तेनैव वक्तुमुचितं तेन "रावणः प्रत्यवोचतेति" पाठो युक्तः । एवञ्च

---

न्यूनेति न तथात्वं न च वाचकत्वं पदान्तरप्रत्यासत्तिं विना स्वार्थबोधनासामर्थ्यादित्यर्थः ।

(व) वन्यूनपदत्वे वाचकत्वाविवक्षायां पुनरुक्तोदाहरणं तस्यैवेत्युदाहरणान्तरमाह यथा वेति अत्र चरणेति तथापीत्यस्य भिन्नवाक्यार्थसापेक्षत्वादिति भावः । पूर्वत्रापेरध्याहारेण शाब्दबोधविलम्बनमुत्तरत्र तथापीत्यन्वयेन शाब्दबोधविलम्बनं दूषकतावीजम् । भग्नप्रक्रमतेति भग्नो विच्छिन्नः प्रक्रमः प्रस्तावो यस्य तत्त्वं प्रस्तावस्थातोकांक्षितप्रकारकोऽर्थः । यद्येन प्रकारेण प्राङ्निर्दिष्टं तस्य तत्प्रकारेणानुक्तिरेव भङ्गः तथा च प्रथमोत्थिताकांक्षाविषयीकृतेन प्रकारेण पश्चादनुक्तिः क्रमभङ्ग इति फलितम् । एवमुक्त इति अत्र वमुक्त इति साकांक्षवाक्येनोत्थापिता प्रतिवचनस्याकांक्षा सा च पूर्वोक्तशब्दविशिष्टमेव प्रतिवचनं विषयी करोति अत्र आकांक्षिताया वचधातुरूपप्रकृतेः प्रकारस्य भाषधातुनिर्देशात् भङ्गः । तेनैव वक्तुमुचितमिति तथा सति प्रथमोत्थापिताकांक्षापूरणं भवतीति भावः । ननु प्रत्यवोचतेति पाठे कथितपदत्वदोषप्रसङ्ग इत्यत आह एवञ्च सतीति एवं सतीत्यर्थः । तस्य कथितपदत्वस्य उद्देश्यप्रतिनिर्देश्यभावे तु कथितपदत्वं गुण एव । तदुक्तं प्रक्रमस्यान्यथाभावे स एव तु महान् गुणः इति स एव कथितपदत्वदोष एव । उद्देश्य प्रतिनिर्देश्यभावश्च त्रिविधः एकविधेयार्थमुद्दिष्टस्य

सति न कथितपदत्वदोषः। तत्रोद्देश्यप्रतिनिर्देश्यव्यतिरिक्तविषयत्वम्। यथा। (ब)

"उदेति सविता ताम्रस्ताम्र एवास्तमेति च"।

इत्यत्र यदि पदान्तरेण स एवार्थः प्रतिपाद्यते तदान्योऽर्थ इव प्रतिभासमानः प्रतीतिं स्थगयति। यथा वा।

"ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम्"॥

सिद्धञ्चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः"।

अत्र "अस्मा इति" इदमा प्रक्रान्तस्य तेनैव तत्समाना-

---

विधेयान्तरे प्रतिनिर्देश इत्येकः यथा उदेति इति अत्रोदयकालीनताम्रत्वविधावुद्दिष्टस्य सवितुरस्तमयकालीनताम्रत्वविधावुद्दिश्यतया प्रतिनिर्देशः। एकोद्देशेन विहितस्योद्देश्यान्तरे विधेयतया प्रतिनिर्देश इत्यपरो यथा एवमुक्त इति अत्र सन्निकृष्टोद्देशेन विहितस्य वचनस्य रावणोद्देशेन विधेयतया प्रतिनिर्देशः प्रतिवचनेऽपि वचनत्वसत्त्वादेवत्वं एतदेव दर्शयति इदृहीति। एकोद्देशेन विहितस्य विधेयान्तरे उद्देश्यतया प्रतिनिर्देश इति तृतीयो यथा मिताभूः पत्यपां स च पतिरपां योजनशतमिति अत्र पृथिव्युद्देशेन विहितस्यापां पत्युर्योजनशतविधावुद्देश्यतया प्रतिनिर्देशः। चण्डीदासस्तु उद्देश्योऽनूद्यः स एव प्रतिनिर्देश्यः प्रतीतिनान्यर्थ्यपरिहारार्थं पुनरभिधेयो यत्र स तयोक्त इत्याहुस्तेषाम् अयमाशयः उद्देश्यपदं प्राङ् निर्दिष्टोद्देश्य विधेयान्यतरपरं प्रतिनिर्देश्यपदञ्च चरमनिर्दिष्टोद्देश्य विधेयान्यतरपरं तथा सति सर्वं समञ्जसम्।

(ब) उद्देश्य प्रतिनिर्देश्यभावे एकशब्दस्य पुनः प्रयोगे दोषाभावमुदाहरणदर्शनेन प्रमाणयति उदेतीति अत्र ताम्रपर्यायरक्तशब्ददाने भग्नप्रक्रमत्वं प्रदर्श्य तत्र दूषकताबीजं प्रदर्शयति अत्र हीति अन्योऽर्थ इवेति नशोऽस्ति प्रत्ययो बोके यत्र कालो न भासते। न

श्यामेतद्दः शब्दाभ्यां वा परामर्शो युक्तो न तच्छब्देन ।
यथा वा । (ग्र)

"उदन्वच्छिन्ना भूः स च पतिरपां योजनशतम्" ।

अत्र "मिताभूः पत्यापां स च पतिरपामिति" युक्तः पाठः । एवम् ।

"यशोऽधिगन्तुं सुखलिप्सया वा
मनुष्यसंख्यामतिवर्त्तितुं वा ।
निरुत्सुकानामभियोगभाजां
समुत्सुकेवाङ्कमुपैति सिद्धिः" ॥

---

सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते" । इति नियमात्साम्बरक्त-शब्दरूपविशेषणभेदादन्यार्थवद्भासमानत्वं तथा सति "सम्पत्तौ च विपत्तौ च महतामेकरूपतेति" उत्तरार्द्धस्य शाब्दबोधविलक्षणमिति भावः । सर्वनामपदस्य प्रक्रमभङ्गं दर्शयति ते हिमालयमामन्त्र्य इति यद्यपि सर्वनाम्ना प्रतिनिर्देशे दोषो नास्तीति प्रसिद्धं तथाप्यनुभवबलेनासर्व-नामनिर्दिष्टस्य सर्वनाम्ना प्रतिनिर्देशे तद्बोध्यं सर्वनामनिर्दिष्टस्य नेति बोध्यम् । इदमा इदमशब्देन तेनैव इदमैव समानाभ्यां समा-नार्थाभ्यां एतदादिशब्दत्रयस्य समानार्थकत्वं सुप्रसिद्धमिति शब्दभेदे-ऽपि न तु तद्दूषणावकाश इति भावः ।

(ग्र) उद्देश्यप्रतिनिर्देश्यभावस्य तृतीयं प्रकारं दर्शयति उदन्न-दिति उदन्वच्छिन्ना समुद्रपरिच्छिन्ना । मनुष्यसंख्यां सामान्यमनुष्येषु गणनां अतिवर्त्तितुमतिक्रमितुं निरुत्सुकानामनुत्कण्ठितचित्तानां अभियोगः उद्योगः । अत्रेच्छार्थकतुमन्प्रत्ययेनोपक्रमस्तत्र तत्समा-नार्थकसन्प्रत्ययेन भङ्गः यशोऽधिगमनोद्देशेन विहिताया इच्छायाः सुखलोभोद्देशेनापि विधेयतया निर्देशः दर्शितोदाहरणानां विशेषमाह

अत्र सुखमोहितमित्युचितम् । अत्राद्ययोः प्रकृति-विषयः प्रक्रमभेदः । तृतीये पर्य्यायविषयः चतुर्थे प्रत्यय-विषयः । एवमन्यत् । प्रसिद्धित्यागो यथा । "घोरो वारि-मुचां रवः" । (ष)

अत्र मेघानां गर्ज्जितमेव प्रसिद्धम् । यदाहुः ।
"मञ्जीरादिषु रणितप्रायं पक्षिषु तु कूजितप्रभृति ।
स्तनितमणितादिसुरते मेघादिषु गर्ज्जितप्रमुखमित्यादि" ।

अस्थानस्थपदता यथा ।

"तीर्थे तदीये गजसेतुबन्धात्
प्रतीपगामुत्तरतोऽस्य गङ्गाम् ।

---

अत्राद्ययोरिति एषूदाहरणेषु आद्ययोः एवमुक्त इति ते हिमालय-मित्येतयोः । तृतीये उदन्वच्छिन्नेत्यादौ चतुर्थे यशोऽधिगन्तुमित्यादौ । एवमन्यत्रेति कारकोपसर्गादावपि प्रक्रमभङ्गो बोध्यव्य इत्यर्थः । तत्र कारकविषयो यथा "गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितम् । छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु । विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिपल्वले विश्रामं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः" । अत्र प्रत्ययोक्तकर्त्तृकारकोपक्रमस्य क्रियतामित्यत्र भङ्गः कर्म्मकारकस्योक्तत्वात् । परे तु कर्त्तृकारकाणां प्रथमोपक्रमस्य वराहपतिभिरिति तृतीयायां भेदः । विस्रब्धा रचयन्तु शूकरवरा मुस्ताक्षतिं पल्वले इति युक्तः पाठः । उपसर्गविषयो यथा "चपलाचपलास्वेव नापत्सु विकलो भवेत् । विपत्सु धीरता यस्य भाजनं स हि सम्पदः" । चपलाचपलासु विद्युच्चञ्चलासु । अत्रापत्स्वित्यत्र आङुपसर्गोपक्रमस्य विपत्स्वित्यत्र वैरूपादानाद्भङ्गः ।

(ष) मेघानामिति मेघानां शब्दे गर्ज्जितमेव गर्ज्जितादिशब्द एव तत्परित्यागाद्रवादिप्रकर्षबोधप्रतिरोधः । प्रसिद्धमाह मञ्जीरादिष्विति

अयत्नबालव्यजनीबभूवु-
हँसा नभोलङ्घनलोलपक्षाः" ॥

अत्र तदीयपदात् पूर्वं गङ्गामित्यस्य पाठो युक्तः। एवं "हितान् न यः संशृणुते स किं प्रभुः"। अत्र संशृणुत इत्यतः पूर्वं नञः स्थितिरुचिता। अत्र च "पदमात्रस्याऽस्थाने निवेशेऽपि सर्वमेव वाक्यं विवक्षितार्थप्रत्यायने मन्थरमिति" वाक्यदोषता। एवमन्यत्रापि। इह केऽप्याहुः "पदशब्देन वाचक एव प्रयोगो निगद्यते न च नञो वाचकता निर्विवादात् स्वातन्त्र्येणार्थबोधनविरहादिति" यथा "हयं गतं इत्यादौ" त्वमित्यनन्तरं चकारानुपादानादक्रमता तथात्रापीति। अस्थानस्थसमासता यथा।

"अद्यापि स्तनशैलदुर्गविषमे सीमन्तिनीनां हृदि
स्थातुं वाञ्छति मान एष धिगिति क्रोधादिवालोहितः।
प्रोद्यद्दूरतरप्रसारितकरः कर्षत्यसौ तत्क्षणात्
फुल्लत्कैरवकोषनिःसरदलिश्रेणीकृपाणं शशी" ॥

---

आदिना रसादीनां ग्रहणं रणितप्रायमिति प्रायशब्द आद्यर्थः तेन शिञ्जितादीनां ग्रहणं। मञ्जिरादिशब्देषु रणितादिशब्दः प्रयोक्तव्य एवमन्येऽपि मेघादिष्वित्यादिना हस्त्यादिपरिग्रहः प्रभृत्यमित्यनेन रवादिग्रहणं एवं भ्रमरादिषु गुञ्जितादिमण्डूकादिषु रवादि हयेषु हेषितादि हस्तिषु बृंहितादि एवमन्यदपि बोद्धव्यं। तदीये गङ्गास्वस्थिति। ननु पदमात्रस्यास्थानस्थितिः पददोष एव कथमस्य वाक्यदोषत्वमत आह अत्र पदमात्रस्येति यथा औडुम्बरी ताम्रप्रतिमा वेष्टयितव्येतिवत् सर्वपदमत्रावयवसमुदायपरं मन्थरं विलम्बवह। स्वातन्त्र्येण पदान्तरसमभिव्याहारविरहेण तदर्थगुणविरहादिति इति हेतौ व्यञ्जकस्य समा

अत्र कोपिन उक्तौ समासो न कृतः कवेरुक्तौ कृतः ।

वाक्यान्तरपदानां वाक्यान्तरेऽनुप्रवेशः सङ्कीर्णत्वम् । यथा ।

"चन्द्रं मुञ्च कुरङ्गाक्षि ! पश्य मानं नभोऽङ्गणे" ।

अत्र नभोऽङ्गणे चन्द्रं पश्य मानं मुञ्चेति युक्तम् ।

"क्लिष्टत्वमेकवाक्यविषयमिति" अस्माद्भिन्नम् । वाक्यान्तरे वाक्यान्तरानुप्रवेशो गर्भितता यथा । ( ह )

"रमणे चरणप्रान्ते प्रणतिप्रवणेऽधुना ।
वदामि सखि ! ते तत्त्वं कदाचिन्नोचिता क्रुधः" ॥

अर्थदोषानाह ।

**अपुष्टदुष्क्रमग्राम्यव्याहताश्लीलकष्टताः ।**
**अनवीकृतनिर्हेतुप्रकाशितविरुद्धताः ॥**

---

सख तद्रसाव्यञ्जकस्यानपातोऽस्थानस्थसमासत्वं अद्यापीति सन्ध्याकाले स्फुटतः कैरवकोरकाद्भिःसरतामलीनां श्रेणीरूपं कृपाणं शशी कर्षति कोषपदस्य श्लेषात् कुड्मलस्य खड्गपिधानत्वं व्यङ्ग्यं कीदृशः दूरे प्रसारितः करो रश्मिरेव करो हस्तो यस्य सः किमर्थं कृपाणकर्षणमित्यत आह अद्यापीति सन्ध्योदयकालेऽपीत्यर्थः । अन्यदा त्विदमाश्रित्य तिष्ठतु सन्ध्योदये सत्यपि स्थातुं वाञ्छति तन्मां धिगिति क्रोधादिवालोहितः । कोपिन उद्गीर्णचितक्रोधस्य शशिन दीर्घसमासो हि रौद्ररसव्यञ्जकत्वादुर्वर्णनस्थानं कुड्मस्य उक्तिर्न तु कवेरुक्तिरिति भावः । अत्र नभोऽङ्गन इति नन्वत्र व्यवहितान्वयत्वात् क्लिष्टत्वमेवेदमित्यत आह क्लिष्टत्वमिति सङ्कीर्णत्वन्तु वाक्यद्वयविषयमिति अस्मात् संकीर्णात् तस्य भेद इत्यर्थः ।

( ह ) प्रणतिप्रवणे प्रणाम परायणे कान्ते कदाचिदपि क्रुधो नोचिताः अधुना प्रणतिसमये पुनः सुतरां नोचिता इति तत्त्वं

सन्दिग्धपुनरुक्तत्वे ख्यातिविद्याविरुद्धते ।
साकाङ्क्षतासहचरभिन्नतास्थानयुक्तता ॥
अविशेषे विशेषश्चानियमे नियमस्तथा ।
तयोर्विपर्य्ययो विध्यनुवादायुक्तते तथा ॥
निर्मुक्तपुनरुक्तत्वमर्थदोषाः प्रकीर्त्तिताः ।

तद्विपर्य्ययो विशेषेऽविशेषो नियमेऽनियमः । अत्रापुष्टत्वं मुख्यानुपकारित्वम् । यथा ।

"विलोक्य वितते व्योम्नि विधुं मुञ्च रुषं प्रिये" ! ।

अत्र विततशब्दो मानत्यागं प्रति न किञ्चिदुपकुरुते । अधिकपदत्वे पदार्थान्वयप्रतीतेः समकालमेव बाधप्रति-

---

हितं वारं तेऽहं वदामीत्यन्वयः अनयोः प्रत्यासत्त्यभावेन शाब्दबोधो न जायते इति शाब्दबोधविघटत्वं दूषकताबीजम् ॥ उद्देशक्रमप्राप्तानर्थदोषान् निरूपयति अपुष्टेति ख्यातिविरुद्धता विद्याविरुद्धता च । तयोरविशेषविशेषानियमनियमयोः विपर्य्ययौ विशेषाविशेषनियमानियमौ विध्ययुक्तता अनुवादायुक्तता च मुख्यार्थेति विशेषणादीनां पर्य्यवसितार्थोत्कर्षकत्वमित्यर्थः । विततशब्द इति स्वार्थबोधद्वारेति शेषः । एतदुपलक्षणं व्योमवृत्तित्वमपि विशेषणमपुष्टं अरोहीपकत्वेन [illegible] भासकस्य चन्द्रस्य दर्शनमेव मानत्यागस्य मुख्यांशस्य उपकारि न तु तस्य व्योमवृत्तित्वं व्योम्नोविततत्वं वा । नन्वेवं पदद्वयमत्राधिकमित्यधिकपदत्वमेवात्र दोषः किमपुष्टत्वस्य दोषत्वस्वीकारेणेत्यतोऽस्य भेदं दर्शयति अधिकेति बाधप्रतिभासः मुख्यार्थोपकारविरहप्रत्ययः ॥ दुष्क्रमतेति "प्राग्वाच्य उच्यते पश्चात् पश्चाद्वाच्योऽपवाच्यतः । कविना शक्तिवैकल्याद्द्वयोऽर्थस्तं दुष्क्रमं विदुः"

भासः इह तु पश्चादिति विशेषः । दुष्क्रमता यथा ।

"देहि मे वाजिनं राजन् गजेन्द्रं वा मदालसम्" ।

अत्र गजेन्द्रस्य प्रथमं याचनमुचितम् । (छ)

"स्वपिहि त्वं समीपे मे स्वपिम्येवाधुना प्रिय" ॥

अत्रार्थो ग्राम्यः । कस्यचित् प्रागुत्कर्षमपकर्षं वाभिधाय पश्चात्तदन्यप्रतिपादनं व्याहतत्वम् । यथा ।

"हरन्ति हृदयं यूनां न नवेन्दुकलादयः ।

वीक्ष्यते यैरियं तन्वी लोकलोचनचन्द्रिका" ॥

अत्र येषामिन्दुकला नानन्दहेतुस्तेषामेवानन्दयातन्व्याश्चन्द्रिकात्वारोपः । (च)

---

इत्युक्तलक्षणा दुष्क्रमता । अत्रेति बहुमूल्यं वस्तु प्रथमं याच्यते तदप्राप्तिसम्भावनायामल्पमूल्यं वस्तु याच्यते इति याचनक्रमः तदभावादत्र दुष्क्रमत्वम् । अनयोरर्थस्यापुष्टत्ववद्दुष्क्रमत्वप्रतिसन्धानेन रसादिप्रतीतिविलम्बनमेव दूषकताबीजम् । एवमन्येऽपि यथायथं ज्ञेयम् ॥

(च) ग्राम्यत्वमुदाहरति स्वपिहीति "स ग्राम्यः खरिरंसायां ग्रामरैर्यत्र कथ्यते । वैदग्ध्यवक्रिमत्वयं हित्वैव वनितादिषु" । तयः सम्बन्धः । इत्युक्तलक्षणा ग्राम्यता । कस्यचिदिति प्रतिपादितोत्कर्षाप्रतिपादनं प्रतिपादितापकर्षस्य उत्कर्षप्रतिपादनं व्याहतत्वं तत्र प्रथमं यथा "कान्ते तव मुखाम्भोजं सुतरां हृदयङ्गमम् । जितानि येन पद्मानि वसन्ति सलिले सदा" ॥ अत्र मुखेपद्मत्वारोपणेनोत्कर्षकथनं पश्चान्मुखेन पराभवादपकर्षकथनम् । द्वितीयमाह हरन्तीति नवेन्दुकलायाः प्रागपकर्षाभिधानं पश्चान्नायिकाया उत्कर्षार्थं चन्द्रकलाकिरणरूपचन्द्रिकात्वमारोपितम् ।

"हन्तुमेव प्रवृत्तस्य स्तब्धस्य विवरैषिणः ।
यथाशु जायते पातो न तथा पुनरुन्नतिः" ॥

अत्रार्थोऽश्लीलः ।

"वर्षत्येतदहर्पतिर्न तु घनो धामस्थमच्छं पयः
सत्यं सा सवितुः सुता सुरसरित्पूरो यया प्लावितः ।

---

(क) अश्लीलत्वमाह हन्तुमेवेति हन्तुं गन्तुं मारयितुं स्तब्धस्य अस्त्रक्षेपकुण्ठस्य विवेकरहितस्य वा विवरैषिणः परच्छिद्राभिलाषिणः पातोऽभिभवः उन्नतिर्जयः । अथानन्तरन्तु हननं वात्स्यायनादि प्रसिद्ध निर्घातादि स्तब्धस्याहङ्लिङ्गस्य विवरं योनिच्छिद्रं तद्गामिनः पातोरत्युत्तरं नम्रता उन्नतिः पुनरुद्गमः । अत्र प्रकरणाद्बोधविशेषो लक्ष्यते अहङ्लिङ्गरूपद्वितीयार्थस्त्वर्थवशादेवेत्यर्थदोषत्वमस्य । अश्लील इति पुंव्यञ्जकप्रकाशकत्वादिति शेषः । इदं व्रीडाव्यञ्जकं जुगुप्सामङ्गलव्यञ्जकयोरुदाहरणमूह्यम् । कष्टत्वमाह वर्षत्येतदिति आसत्यादिसत्वेऽपि विलम्बबोध्यत्वं कष्टत्वम् । विलम्बबीजन्तु तात्पर्यग्राहकाभावः । अहर्पतिः सूर्यः घनानां जलाधारत्वमात्रं न तु वृष्टिकर्त्तृत्वं धामस्थं चन्द्रमण्डलस्थं सुरसरिद्गङ्गा तस्याः पूरो जलप्रवाहः प्लावितो वर्द्धितः उक्तं अर्थं प्रमाणयति व्यासस्येति व्यासस्योक्तिषु पुराणेषु तथापि सूर्यकिरणानां जलप्रत्ययहेतुत्वस्योचितत्वेऽपि सुग्रेति जलप्रत्ययाभावे हेतुः । भास्वन् मरीचिषु सूर्यकिरणेषु तथा च विष्णुपुराणे "विवस्वानष्टभिर्मासैरादायापो रसात्मिकाः वर्षत्यम्बु ततस्तस्मात् अन्नाद्यप्यखिलं जगत् । विवस्वानंशुभिस्तीक्ष्णैरादाय जगतो जलम् । सोमं पुष्यत्यथेन्दुःस वायुनाड़ीमयैर्दिवि । नालैर्विक्षिपतेऽभ्रेषु धूमाग्न्यनिलमूर्त्तिषु । न भ्रश्यन्ति ततस्तेभ्यो जलान्यभ्राणि तान्यतः । अभ्रस्थाः प्रपतन्त्यापो वायुना समुदीरिताः । संस्कारं कालजनितं मैत्रेया साद्यनिर्मलाः

व्यासस्योक्तिषु विश्वसित्यपि न यः श्रद्धा न कस्य श्रुतौ ।
न प्रत्येति तथापि मुग्धहरिणी भास्वन्मरीचिष्वपः" ॥ (क)

अत्र यस्मात् सूर्य्याद्दृष्टेर्यमुनायाश्च प्रभवस्तस्मात्तयोर्जल-मपि सूर्य्यप्रभवम् । ततश्च सूर्य्यमरीचीनां जलप्रत्ययहेतु-त्वमुचितम् । तथापि मृगीभ्रान्तत्वात्तत्र जलप्रायं न करोत्ययमप्रस्तुतोऽप्यर्थो दुर्बोधः दूरे चास्मत्प्रस्तुतार्थबोध इति कष्टार्थत्वम् । (ख)

"सदा चरति खे भानुः सदा वहति मारुतः ।
सदा धत्ते भुवं शेषः सदा धीरोऽविकत्थनः" ॥

अत्र सदेत्यनवीकृतम् अत्रास्य पदस्य पर्य्यायान्तरेणो-

---

इति । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः । इति स्मृतिरपि । सूर्य्यस्य पत्नी संज्ञाभूत्तनया विश्वकर्मणः । मनुर्यमो यमी चैव तदप-त्यानि वै मुने" । इति विष्णुपुराणम् । यमी यमुना । कष्टत्वमुपपाद-यति ।

(ख) अत्रेति तयोर्दृष्टियमुनयोः । वाक्येनसूर्य्यस्य दृष्टियमुना-हेतुत्वमेव प्रतिपाद्यते तस्मादित्याद्यर्थस्तु तात्पर्य्यवशात् प्रतीयते तस्य तात्पर्य्यस्य ग्राहकाभावाद्विलम्बेन इति भावः । अस्मत् प्रस्तुतार्थ-बोधः सन्निधानां प्रस्तुतार्थबोधः तस्मादिति पाठे व्यक्त एवार्थः । मुग्धहरिणीकाया नायकात् स्वाभीष्टलाभप्रत्ययः प्रस्तुतः । अत्र तात्-पर्य्यप्रतिसन्धानविलम्बेन शाब्दबोधविलम्बनं दूषकताबीजम् ।

(ग) अनवीकृतत्वमाह सदेति । बहुशः प्रतिपादनीयार्थस्य भङ्गी-परावृत्तिं विना एकयैव भङ्ग्या प्रतिपाद्यत्वं तच्च अविकत्थनोऽनात्म-श्लाघाकरः । अत्रैकशब्देन बहुशः प्रतिपादनीयोऽर्थः पुरातनवज्ञायमानः रसादेरपकर्षकः । ननु कथितपदत्वादस्य कोभेद इत्यत आह अत्रास्येति

पादानेऽपि यदि नान्यद्विच्छित्त्यन्तरं तदास्य दोषस्य सद्भाव इति कथितपदत्वाद्भेदः । (ग)

नवीकृतत्वं यथा

"भानुः सकृद्युक्ततुरङ्ग एव रात्रिन्दिवं गन्धवहः प्रयाति ।
बिभर्त्ति शेषः सततं धरित्रीं षष्ठांशवृत्तेरपि धर्म्म एषः" ।

"गृहीतं येनासीः परिभवभयान्नोचितमपि
प्रभावाद्यस्याभून्न खलु तव कश्चिन्न विषयः ।
परित्यक्तं तेन त्वमपि सुतशोकान्न तु भयाद्
विमोक्ष्ये शस्त्र ! त्वामहमपि यतः स्वस्ति भवते" ॥

अत्र द्वितीयशस्त्रमोचने हेतुर्नोक्त इति निर्हेतुत्वम् । (घ)

---

अस्यानवीकृतार्थबोधकस्य उपादानेऽपीत्यपिना तच्छब्दोपादाने च अन्यत् पूर्वपदविभक्तिसमासादिप्रतिपादितभिन्नं विच्छित्त्यन्तरं विभक्तिसमासादिप्रतिपादितार्थविशेषः । यस्य अनवीकृतत्वस्य तथा चोक्तविच्छित्तिविशेषसद्भाव एव कथितपदत्वदोषः । नवीकृतत्वपदं विना अनवीकृतत्वप्रतीतिर्न जायते इति ।

(घ) नवीकृतमाह नवीकृतमिति भङ्ग्यन्तरेण प्रतिपादने नूतनवद्भासमानमित्यर्थः । षष्ठांशवृत्तेराद्य एव सदायुक्ततुरङ्गत्वादिरूपः । निर्हेतुत्वमुदाहरति गृहीतमिति हेत्वाकाङ्क्षासत्त्वे तदनभिधानं तत्त्वं । कर्णं प्रतिक्रोधात्सज्यमानमस्त्रं संबुध्य अश्वत्थाम्न उक्तिरियं हे अस्त्र येन मम पित्रा द्रुपदकृतपराभवभयान्नोचितमपि ब्राह्मणजात्यनुचितमपि त्वं गृहीतमासीः यस्य मम पितुः प्रभावात्तव विषयः कश्चिन्नाभूत् अपि तु सर्व एव तेन मम पित्रा सुतशोकान्मृतत्वेन मिथ्याश्रुतस्य मम शोकात् त्वं परित्यक्तमसि भयात्तु न अहमपि त्वां विमोक्ष्ये त्यक्ष्यामि यतो मोक्षणाद्भवते स्वस्तीत्यर्थः । अत्र हेतोरप्रसिद्धत्वेनाकाङ्क्षा ।

"कुमारस्ते नराधीश! श्रियं समधिगच्छतु"।

अत्र त्वं म्रियस्वेति-विरुद्धार्थप्रकाशनात् प्रकाशित-विरुद्धत्वम्।

"अचला अबला वा स्युः सेव्या ब्रूत मनीषिणः"॥

अत्र प्रकरणाभावाच्छान्तशृङ्गारिणोः को वक्तेति निश्चयाभावात् सन्दिग्धत्वम्।

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।
वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः"॥

अत्र द्वितीयार्द्धं व्यतिरेकेण द्वितीयपादस्यैवार्थ इति पुनरुक्तता। प्रसिद्धिविरुद्धता यथा।

"ततश्चचार समरे शितशूलधरो हरिः"।

अत्र हरेः शूलं लोकेऽप्रसिद्धम्। यथा वा।

"पदाघातादशोकस्ते सञ्जाताङ्कुरकण्टकः"

अत्र पादाघातादशोकेषु पुष्पमेव जायत इति प्रसिद्धं

---

(ङ) प्रकाशितविरुद्धत्वमाह कुमार इति प्रकाशितं पर्यालोचनया व्यञ्जितं विरुद्धं प्रकृतविरुद्धं येन तत्त्वं। स्तवेति राज्ञो मङ्गलं प्रकरणन्तु तद्विरुद्धं अन्तार्थेन विरुद्धार्थव्यञ्जनमनुचितार्थत्वपदेनेति ततो भेदः। सन्दिग्धत्वमुदाहरति अचला इति वक्त्रभिप्रेतव्यङ्ग्यार्थस्य तात्पर्यविषयत्वसन्देहात् सन्देहविषयत्वं तच्च मनीषिण इति सम्बोधनं अचलसेवाया वक्तुरभिमतत्वे शान्तः अबलासेवायास्तु शृङ्गारो व्यङ्ग्यः अनयोरेकतरस्मिंस्तात्पर्य्यनिश्चयाभावादसनिश्चयप्रतिबन्धः शान्तशृङ्गारियोरिति निर्द्धारणे षष्ठी सप्तमी वा पुनरुक्तत्वमुदाहरति सहसेति पदं कारणं वृणुते प्राप्नुवन्ति विमृश्यकारिणं विचार्य्यकर्त्तारं द्वितीयार्द्धं

न त्वङ्कुर इति कविसमयख्यातिविरुद्धता ॥ "अधरे करजक्षतं मृगाक्ष्याः"। अत्र शृङ्गारशास्त्रविरुद्धत्वाद्विद्याविरुद्धता। एवमन्यशास्त्रविरुद्धत्वमपि। (ङ)

"ऐशस्य धनुषो भङ्गं क्षत्रस्य च समुन्नतिम्।
स्त्रीरत्नञ्च कथं नाम मृष्यते भार्गवोऽधुना" ॥

अत्र स्त्रीरत्नमुपेक्षितुमित्याकाङ्क्षति।

"सज्जनो दुर्गतौ मग्नः कामिनी गलितस्तनी।
खलः पूज्यः समज्यायां तापाय मम चेतसः" ॥

---

द्वितीयार्द्धार्थः व्यतिरेकेन वैपरित्येन यथा अधर्मो दुःखसाधनमित्युक्ते धर्मस्य सुखसाधनत्वमुपलभ्यते तथात्रापीति भावः। ख्यातिविरुद्धतामुदाहरति मयिद्धीति लोककविसम्प्रदाय वैपरित्यं तत्त्वं शितेति शापिनीत्यर्थः। ते कामिन्याः अङ्कुर एव कण्टको रोमोद्गमः कविसमयः कविसम्प्रदायसिद्धान्तः। विद्याविरुद्धतामाह अधर इति करजक्षतं नखाघातः।

(च) साकांक्षतामाह ऐशस्येति शिवसम्बन्धिन इत्यर्थः। मृष्यते न द्वेष्टि चलेति द्वेषयोग्य एवेति युक्तिरुपपद्यते स्त्रीरत्नञ्च न द्वेषयोग्यमित्यतस्तदुपेक्षायां द्वेषयोग्यतायां आकाङ्क्षेत्यत आह उपेक्षितुमिति इति ननु न्यूनपदत्वादस्य को विशेष इति चेत्तत्र शब्दाध्याहार इह त्वर्थाध्याहार इति विशेषः वस्तुतस्तु अनन्वयित्वभ्रमेण प्रयुक्तस्य पदार्थस्यानुपपत्तिपदार्थसाकांक्षत्वं तत्त्वं। न्यूनपदे तु नेदृशोभ्रमः। सहचरभिन्नतामाह सज्जन इति उत्कृष्टैः सह निकृष्टस्य निकृष्टैः सह उत्कृष्टस्य चैकान्वयित्वेन निर्द्देशस्तत्त्वं। तत्राद्यं यथा सज्जन इति समज्यायां सभायां। द्वितीयं यथा "दुःसङ्गेन दौःशिल्यं व्यसनेन तथा विपत्। अपथ्य चर्य्यया व्याधिर्विद्याभ्यासेन वर्द्धते" अत्र दौःशिल्यविपद्व्याधयो हेयत्वान्निकृष्टाः विद्योपादेयत्वादुत्कृष्टा। अस्यात युक्ततामाह आशेति

अत्र सज्जनः कामिनी च शोभनी तत्सहचरः खलो-ऽशोभन इति सहचरभिन्नत्वम्। (च)

"आज्ञा शक्रशिखामणिप्रणयिनी शास्त्राणि चक्षुर्नवं
भक्तिर्भूतपतौ पिनाकिनि पदं लङ्केति दिव्या पुरी।
उत्पत्तिर्द्रुहिणान्वये च तदहो नेदृग्वरो लभ्यते
स्याच्चेदेष न रावणः क्व नु पुनः सर्व्वत्र सर्व्वे गुणाः"॥

---

अनुपयुक्तस्थाने समापितवाक्यार्थत्वं अस्थानयुक्तता तच्च द्विविधं वाक्यार्थस्याधिक्योपयोगे समापनं समापनोपयोगे चाधिक्यं तदुक्तं "युक्ताधिक्ये विसर्गः स्यादाधिक्यञ्च समापने। अर्थे प्रकल्पते यत्र सोऽस्थाने स्यात् समुज्झितः" इति तत्राद्यं यथा "मातुलो माधवो यस्य पिता यस्य धनञ्जयः। स शेते समरे क्षीणस्त्वभिमन्युर्महावलः"। अत्र नियतिः केन बाध्यते इत्यधिकं वक्तुं योग्यम्।

(च) द्वितीयमुदाहरति आज्ञेति रावणपुरोहितेन रावणार्थं सीताप्रार्थने कृते जनकपुरोहितस्य शतानन्दस्य रावणस्य प्रशंसापूर्वकमुपेक्षावीजप्रदर्शनमिदं प्रश्नस्य वाक्ये तु यस्येति बोध्यं प्रणयिणी सहचरी शक्रस्य शिरोमणिरिव रावणाज्ञा धार्य्यते इत्यन्वयः। एतेनास्य वीरत्वं सूचितं। तच्च स्त्रीणामभिमतं। शास्त्राण्येव नवमधिकं चक्षुः। शास्त्रस्याकर्णकत्वात् एतेन धीमत्वं सूचितं युवा धीमान् जनप्रिय इत्यनेन वरगुणत्वमास्य उक्तत्वात्। भूतानामीश्वरे पिनाकिनि शिवे एतेन सम्पदैश्वर्य्यप्रजाभोगित्वं सूचितं सम्पदादीनां शिवसेवाफलत्वेनोक्तत्वात् तेन धनवत्त्वमपि वरगुणो लभ्यते। "माता वरयते वित्तं पिता वरयते कुलं। कन्या वरयते रूपं सौभाग्यमितरे जनाः"। इति सौभाग्यं जनप्रियत्वं। पदं स्थानं द्रुहिणस्य ब्रह्मणोऽन्वये कुले एतेन सत्कुलजातत्वं वरगुणः सूचितः उपेक्षावीजमाह स्याच्चेदेष इति रावयति पीड़नेन लोकान् आतुरान् करोतीति रावणः एष यदि दुष्टत्वेन ख्यातनामा न स्यात्तदा ईदृग्वरो न लभ्यते इति एतेन

अत्र न रावण इत्येतावतैव समाप्यम् । (छ)

"हीरकाणां निधेरस्य सिन्धोः किं वर्णयामहे" ।

अत्र रत्नानां निधेरित्यविशेष एव वाच्यः ॥

"आवर्त्त एव नाभिस्ते नेत्रे नीलसरोरुहे ।

तरङ्गा वलयस्तेन त्वं लावण्याम्बुवापिका" ॥

अत्रावर्त्त एवेति नियमो न वच्यः ।

"यान्ति नीलनिचोलिन्यो रजनीष्वभिसारिकाः" ॥

अत्र तमिस्रास्विति रजनीविशेषो वाच्यः ।

"आपातसुरसे भोगे निमग्नाः किं न कुर्व्वते" ।

अत्र आपात एवेति नियमो वाच्यः । ननु वाच्यस्यानभिधाने "व्यतिक्रमलवम्" इत्यादावपेरभावः इह चैवकारस्येति कोऽनयोर्भेदः । अत्राह । नियमस्यावचनमेव

---

जनभियत्वस्य वरगुणस्य वैकल्यं दर्शितं । वरगुणवत्त्वं कुत्रापि नास्तीत्याह कस्मिन्निति कुत्र जगति सर्वत्र पुरुषे सर्वे वरगुणाः सन्ति न कुत्रापीत्यर्थः । अत्र पुंसां प्रातिस्विकरूपेण सर्वगुणाभाववत्त्वं यावत्त्वे न तु सर्वगुणसद्भाव एव । यद्वा सर्वेषु पुरुषेषु मध्ये कुत्र पुरुषे सर्वे वरगुणाः न कुत्रापीत्यर्थः । एतच्च न रावणोपेक्षावीजं इत्येतत्पर्य्यन्तमस्यानं तत्र वाक्यार्थसमापनमयुक्तमित्याह अत्रेति ।

(ज) सामान्येन वक्तव्ये विशेष्याभिधानमविशेषे विशेषस्तमुदाहरति हीरकाणामिति । अनियमेन वक्तव्ये नियमाभिधानमनियमे नियमस्तमुदाहरति आवर्त्त एव इति भङ्गास्तरङ्गा वलयस्त्रीवल्यः । विशेष्यवक्तव्ये सामान्येनाभिधानं विशेषे विशेषस्तमुदाहरति यान्तीति नीलनिचोलिन्यो नीलप्रच्छदपटावृताः तमिस्रासु तमोयुक्तरात्रिषु ज्योत्स्नीष्वभिसारिकाणां शुक्लपटावरणमेवोचितं । नियमो निर्धारणं तेन

पृथग्भूतं नियमपरिवृत्तेर्विषय इति । तन्न । तथासत्यपि द्वयोः शब्दार्थदोषतायां नियमकाभावात् । तत् का गतिरिति चेत् "व्यतिक्रमलवमित्यादौ" शब्दोच्चारणानन्तरमेव दोषप्रतिभासः इह त्वर्थप्रत्ययानन्तरमिति भेदः । (ज)

एवञ्च शब्दपरिवृत्तिसहत्वासहत्वाभ्यां पूर्वैरादृतोऽपि शब्दार्थदोषविभाग एवं पर्य्यवस्यति । यो दोषः शब्दपरिवृत्त्यसहः स शब्ददोष एव । यश्च पदार्थान्वयप्रतीतिपूर्व्वबोध्यः सोऽपि शब्ददोषः । यश्चार्थप्रतीत्यनन्तरबोध्यः सोऽर्थाश्रय इति । एवं चानियमपरिवृत्तत्वादेरप्यधिकपदत्वादेर्भेदो बोद्धव्यः । असमतपरार्थत्वे तु "रामसन्मथशरेणेत्यादौ" नियमेन वाक्यव्यापित्वाभिप्रायाद्वाक्यदोषता । अश्लीलत्वादौ तु न नियमेन वाक्यव्यापित्वम् ।

---

वक्तव्यं अनियमेनाभिधानं नियमानियमः तमुदाहरति आपातेति भोगे विप्रयोपभोगे निमग्ना एकान्तमासक्ताः । वाच्यानभिधानान्नियमपरिवृत्तेर्भेदम् निरूपयितुमाह नन्विति पृथगभूतं विशेषः एवञ्च नियमद्योतकपदानभिधानं नियमपरिवृत्तिस्तदितरद्योतकपदानभिधानन्तु वाच्यानभिधानस्य विषय इति भेदः गतिः सिद्धान्तः ।

(झ) निरुक्तभेदे प्राचीनस्वरसमप्याह एवञ्चेति पर्य्यवस्यतीति परिवृत्तिःपर्य्याये शब्दान्तरदानं स्वार्थबोधेन निवृत्तिसहेतिभावः । नन्वेवमसमतपरार्थत्वादौ पदार्थबोधानन्तरमेव दोषप्रतिभासादर्थदोषत्वमेव कथं वाक्यदोषत्वमत आह असमतेति नियमेन वाक्यव्यापित्वात् वाक्यान्वयव्यतिरेकानुविधायित्वात् । अश्लीलत्वादौ त्विति हन्तुमित्यादावर्थाश्लीलत्वे हनधात्वादेः पारिभाषिकनिघातादिबोधकत्वं नियमतो नोपपद्यते

"आनन्दितस्वपक्षोऽसौ परपक्षान् हनिष्यति"।
अत्र परपक्षं हत्वा स्वपक्षमानन्दयिष्यतीति विधेयम् ॥।
"चण्डीशचूडाभरण ! चन्द्र ! लोकतमोपह ।
विरहिप्राणहरण ! कदर्थय न मां वृथा" ॥
अत्र विरहिण उक्तौ तृतीयपादस्यार्थो नानुवाद्यः। (ञ)
"श्लग्नं रागावृताङ्ग्या सुदृढमिह ययैवासि यष्ट्यारिकण्ठे
मातङ्गानामपीहोपरि परपुरुषैर्या च दृष्टा पतन्ती।
तत्सक्तोऽयं न किञ्चिद्गणयति विदितं तेऽस्तु तेनास्मि दत्ता
भृत्येभ्यः श्रीनियोगाद्गदितुमिति गतेवाम्बुधिं यस्य कीर्त्तिः" ॥

---

परन्तु समभिव्याहारवशात् तात्पर्य्यपर्य्यालोचनया तदर्थकत्वकल्पनेनेति भावः। विधेयतापर्य्याप्त्ययोग्ये तात्पर्य्यारोपणं विध्ययुक्तता। तामुदाहरति आनन्दितेति अत्रेति परपक्षहननस्वपक्षानन्दनयोर्द्वयोरपि विधेयत्वेपि परपक्षहननानन्तरमेव स्वपक्षानन्दनविधानेव विधेयता पर्य्याप्तिरुचिता परपक्षहननविधौ तत्करणाद्दोषः। नन्वत्र विधेयाविमर्श एव दोष इति चेत् आनन्द्य स्वपक्षं स्वपरपक्षं हनिष्यतीति पाठपरिवर्त्तनेनास्योदाहरणं वेदितव्यं। अनुवाद्यविशेषणस्य विधिविरोधित्वमननुवादाद्युक्तता तामुदाहरति चण्डीशेति नानुवाद्यः अनुवाद्यविशेषणत्वेन नोपादेयः विरहिणा स्वकदर्थनस्य वृथात्वे विधीयमाने विरहिप्राणहरस्य अनुवाद्यचन्द्रविशेषणस्य तद्विधिविरोधित्वादिति भावः। आकाङ्क्षितस्य कारकस्य क्रियान्वयेन समाप्तावपि पुनस्तत्कारकोपादानं निर्मुक्तपुनरुक्तत्वं समाप्तपुनरुक्तत्वन्तु विशेष्यानुषङ्ग एव इत्यनयोर्भेदः।

(ञ) उदाहरति श्लग्नमिति रागेण रक्तेन आवृतं लिप्तमङ्गं यस्यास्तया पक्षे च रागेण सुरतेच्छया आवृतं व्याप्तं शरीरं यस्यास्तया। मातङ्गानां हस्तिनामथ च कामशास्त्रोक्त पुरुषविशेषाणां पर-

अत्र विदितं तेऽस्त्वित्यनेन समापितमपि वचनं तेने-त्यादि पुनरुपात्तम् । अथ रसदोषानाह ।

रसस्योक्तिः स्वशब्देन स्थायिसञ्चारिणोरपि ।
परिपन्थिरसाङ्गस्य विभावादेः परिग्रहः ॥
आक्षेपः कल्पितः कृच्छ्रादनुभावविभावयोः ।
अकाण्डे प्रथनच्छेदौ तथा दीप्तिः पुनः पुनः ॥
अङ्गिनोऽननुसन्धानमनङ्गस्य च कीर्त्तनम् ।
अतिविस्तृतिरङ्गस्य प्रकृतीनां विपर्य्ययः ।
अर्थानौचित्यमन्यच्च दोषा रसगता मताः ॥

रसस्य स्वशब्दो रसशब्दः शृङ्गारादिशब्दश्च । क्रमेण यथा ।

"तामुद्वीक्ष्य कुरङ्गाक्षीं रसो न कोऽप्यजायत ।
चन्द्रमण्डलमालोक्य शृङ्गारे मग्नमन्तरम्" ॥

स्थायिभावस्य स्वशब्दवाच्यत्वं यथा ।

"अजायत रतिस्तस्यास्त्वयि लोचनगोचरे" ॥

व्यभिचारिणः स्वशब्दवाच्यत्वं यथा ।

"जाता लज्जावती मुग्धा प्रियस्य परिचुम्बने" ॥

---

पुरुषैः षन्मुभिः स्वामिभिश्चैव तत्पक्षस्ताहशाखिलतासक्तः । पतेति गमयतीति पर्य्यन्तस्य कर्मकारकस्य विदितक्रियान्वयेन समाप्तावपि तेना-श्रीत्यादेः पुनरुपादानादिति भावः । स्थायिसञ्चारिणोरिति स्वश-ब्देनोक्तिरित्यनुषक्तेनान्वेति अकाण्डे अकाले प्रथनादित्रयं रसस्यैव प्रकृतीनां नायकोचितधर्म्माणां विपर्य्ययोऽन्यथावर्णनं इदमेकमनौचित्यं अन्यत्प्रकृतिविपर्य्ययभिन्नं । कोऽप्यनिर्वचनीयस्वभावः । व्यभिचा-

अत्र प्रथमे पादे "आसीन्मुकुलिताक्षी सेति" लज्जाया अनुभावमुखेन कथने युक्तः पाठः ।

"मानं मा कुरु तन्वङ्गि ! ज्ञात्वा यौवनमस्थिरम् ।

अत्र यौवनास्थैर्य्यनिवेदनं शृङ्गाररसस्य परिपन्थिनः शान्तरसस्याङ्गं शान्तस्यैव च विभाव इति शृङ्गारे तत्परिग्रहो न युक्तः । (ञ)

"धवलयति शिशिररोचिषि भुवनतलं लोकलोचनानन्दे ।
ईषत्क्षिप्तकटाक्षा स्मेरमुखी सा निरीक्ष्यतां तन्वी" ॥

अत्र रसस्योद्दीपनालम्बनविभावावनुभावपर्य्यवसायिनौ स्थिताविति कष्टकल्पना ।

"परिहरति रतिं मतिं लुनीते
स्खलतितरां परिवर्त्तते च भूयः ।
इति बत विषमा दशास्य देहं
परिभवति प्रसभं किमत्र कुर्म्मः" ॥

---

रिणां स्वातन्त्र्येणोपादाने एव स्वशब्दवाच्यत्वं दोषः रसव्यञ्जनार्थमुपादाने तु न दोषः यथा लज्जानम्रमुखीति भयविह्वलमुखेति च । स्वशब्दवाच्यत्वं रसादिप्रकर्षबोधप्रतिबन्धकं । विरोधिरसाङ्गपरिग्रहमुदाहरति मानमिति शान्तस्यैवचेति च शब्दो हेतौ विभाव उद्दीपनविभावः तत्परिग्रहो यौवनवतृस्य स्थैर्य्यनिवेदनवर्णनं ।

(ञ) अनुभावस्य कष्टाक्षेपमाह धवलयतीति शिशिररोचिषि चन्द्रे याऽतिप्रयत्नेनाप्यभग्नमाना सेत्यर्थः । अत्रेति आलम्बनं नायिका उद्दीपनविभावश्चन्द्रकटाक्षमन्दहासा एषां बहुत्वेप्युद्दीपनविभावत्वेनैकत्वमिति द्विवचनोपपत्तिः अनुभावपर्य्यवसायिनौ प्रणिधानेनानुभावस्य नायकचक्षुःप्रसारणस्य बोधकौ नायकस्य शृङ्गारित्वनिश्चायकाभावा-

अत्र रतिपरिहारादीनां कारुण्यादावपि सम्भवात् कामिनीरूपो विभावः कष्टकल्पनयाक्षेप्यः। अकाण्डे प्रथमं यथा। वेणीसंहारे द्वितीयेऽङ्के प्रवर्त्तमानानेकवीरक्षये काले दुर्योधनस्य भानुमत्या सह शृङ्गारप्रथनम्। छेदो यथा वीरचरिते। राघवभार्गवयोर्द्धाराधिरूढे संग्रामे "कङ्कणमोचनाय गच्छामीति" राघवोक्तिः। पुनःपुनर्दीप्तिर्यथा। कुमारसम्भवे रतिविलापे। अङ्गिनोऽननुसन्धानं यथा। रत्नावल्यां चतुर्थेऽङ्के बाभ्रव्यागमने सागरिकाया विस्मृतिः। अनङ्गस्य कीर्त्तनं यथा। कर्पूरमञ्जर्यां राजनायिकयोः स्वयं कृतं वसन्तस्य वर्णनमनादृत्य वन्दिवर्णितस्य प्रशंसा। अङ्गस्यातिविस्तृतिर्यथा। किराते सुराङ्गनाविलासादिः। (ट)

---

इत्यनुभावस्य नायिकायां चक्षुः प्रसादणस्य कष्टकल्पनया आक्षेपः नायकस्याङ्गारित्वे दर्शनाभावस्यापि सम्भवात् तादृशसमये वाहशनायिकायां मुनेरपि प्रायो मनःक्षोभो भवतीत्यौत्सर्गिकमेव चक्षुःप्रसारचलितं कष्टकल्पना। विभावस्य कष्टकल्पनामाह परिहरतीति कलायन्निवि कर्त्तृपदमूह्यं रतिर्वस्त्वन्तराभिलाषं स्खलिततरां भूमौ स्वयं पतति परिवर्त्तते पार्श्वपरिवृत्तिं करोति विषमा दुष्प्रतिकारा दशा अवस्था कष्टेनाक्षेप्य इति प्रकरणादिप्रतिसन्धानेनैव तल्लभ्यम्। प्रवर्त्तमानः स्वपुत्रादिरूपानेकवीराणां क्षयो यत्र तस्मिन्। द्वारादिरूढे आरब्धे। रतिविलाप इति विललाप विकीर्णमूर्द्धजा इत्युपक्रम्य धारावाहिककरुणरसे प्रवर्त्तिते पुनर्वसन्तागमने तमवेक्ष्य रुरोद सा भृशं स्तनसंबाधमुरोजघान सा इत्यादिना तदुद्दीपनं कृतम्। अङ्गिनः प्रधानस्य बाभ्रव्या गमन इति सागरिकायाः पितृस्नेहादागतः कञ्चुकी बाभ्रव्यः। अनङ्गस्य रसानुपकारकस्य। अङ्गस्याप्रधानस्य।

प्रकृतयो दिव्या अदिव्या दिव्यादिव्याश्चेति। तेषां धीरोदात्तादिता तेषामप्युत्तमाधममध्यमत्वम्। तेषु च यो यथाभूतस्तस्या यथावर्णने प्रकृतिविपर्ययो दोषः। यथा। धीरोदात्तस्य रामस्य धीरोद्धतवत् छद्मना वालिवधः। यथा वा कुमारसम्भवे। उत्तमदेवतयोः पार्वतीपरमेश्वरयोः सम्भोगशृङ्गारवर्णनम्। "इदं पित्रोः सम्भोगवर्णनमिवात्यन्तमनुचितम्" इत्याहुः। अन्यदनौचित्यं देशकालादीना-

---

(ठ) प्रकृतिविपर्ययमुदाहर्त्तुं प्रकृतिराह प्रकृतय इति नायका इत्यर्थः। दिव्या देवासुरयक्षगन्धर्वराक्षसादयः। अदिव्या इतरे मानुषादयः दिव्यादिव्याः प्रागेवोक्ताः तेषां दिव्यादिनायकानां धीरोदात्तादिता उत्तममध्यमाधमत्वमपि प्रकृतिरित्यर्थः। दिव्यादीनामनुचितवर्णनं प्रकृतिविपर्यासस्तज्ज्ञापनाय तेषामुचितं वर्णनीयं वर्णयामि यथा "रतिस्तथैव हासश्च शोक आश्चर्यमेव च। दिव्यानामुचितं वर्ण्यमदिव्योत्तमनेतृवत्। किन्तु सम्भोगशृङ्गारो वर्ण्यो नोत्तमदेवयोः। सद्यः फलप्रदः क्रोधो भ्रुकुट्यादिविवर्जितः। उत्साहः स्वर्गपातालगत्यब्धिलङ्घनादिषु। दिव्यानामेव नेतॄणां वर्ण्यन्ते उचितो बुधैः। ख्यातं लोकपुराणादौ यच्चान्यत् स्यादबाधितं। वर्णनीयमदिव्यानामन्येषामनूभयं बुधैः। पूज्यादौ तु तत्र भवन् भगवन्निति चोच्यते। भट्टारकेति राजादौ परमेशेति चोच्यते। इत्याद्युचितमेतेषां विरुद्धं दूषणं भवेत्"। अन्येषां दिव्यादिव्यानां उभयं दिव्यसाधर्म्यमदिव्यसाधर्म्यञ्च उचितमित्यर्थः। यथा अर्जुनस्य स्वःपातालादिलङ्घनोत्साहः। भ्रूकुट्यादिरहितः क्रोधश्च देशकालादीनामिति देशोऽद्रिवनराष्ट्रादिः कालो रात्रिन्दिवर्त्तवः। तदनौचित्यं क्रमेण यथा "कर्पूरपादपामर्शी सुरभिर्मलयानिलः। कलिङ्गवनसम्भूता मृगप्रायामतङ्गजाः। चोलाः कालागुरुश्यामाः कावेरीतीरभूमयः"। अत्र मलये कर्पूरवृक्षस्य कलिङ्गवने हस्त्युत्पत्तेश्चो

अन्यथा यद्वर्णनम्। तथा सति हि काव्यस्यासत्यताप्रतिभासेन विनेयानामुन्मुखीकारासम्भवः। (ठ)

**एभ्यः पृथगलङ्कारदोषाणां नैव सम्भवः।**

एभ्यः उक्तदोषेभ्यः। तथा हि उपमायामसादृश्यासम्भवयोरुपमानस्य जातिप्रमाणगतन्यूनत्वाधिकत्वयोरर्थान्तरन्यासे उत्प्रेक्षितार्थसमर्थने चानुचितार्थत्वम्। क्रमेण

यथा।

"ग्रथ्नामि काव्यशशिनं विततार्थरश्मिम्"।

"प्रज्वलज्जलधारावत् निपतन्ति शरास्तव"।

"चण्डाल इव राजासौ संग्रामेऽधिकसाहसः"।

---

लेषु कालागुरूणां असम्भवादनौचित्यम्। "पद्मिनी नक्तमुन्निद्रा स्फुटत्यह्नि कुमुद्वती। मधुरुत्फुल्लनिचुलो निदाघो मेघदुर्दिनः। श्रव्यहंसगिरो वर्षा शरदो मत्तबर्हिणः। हेमन्तो निर्मलादित्यः शिशिरः श्लाघ्यचन्दनः। आदिपदेन लोकजातिवयःप्रभृतीनां ग्रहणम्। चराचराणां भूतानां प्रवृत्तिर्लोकसञ्ज्ञिता। तदनौचित्यं यथा। "आधूतकेशरो हस्ती तिग्मशृङ्गस्तुरङ्गमः। गुरुसारोऽयमेरण्डो निःसारः खदिरद्रुम इत्याद्यनौचित्यस्य न केवलं रसापकर्षकत्वं दूषकतावीजं काव्यस्य प्रवृत्तिनिवृत्त्युपदेशपरत्वव्याघातकत्वमपीत्याह तथा सतीति अयथावर्णने सतीत्यर्थः असत्यताप्रतिभासेन अप्रामाण्यप्रतिपत्त्या विनेयानां धर्मादिजिज्ञासूनां काव्याध्ययने प्रवृत्तिरूपोन्मुखीकारः।

(ठ) ननु सादृश्यादीनामलङ्कारदोषाणां परम्परया रसापकर्षकत्वेनाकाव्यदोषत्वसम्भवात् काव्यदोषाणां पञ्चविधत्वमनुपपन्नमतस्तानुक्तदोषेषु यथा यथमन्तर्भावयति एभ्य इति निरुक्तकाव्यदोषेभ्य इत्यर्थः। पृथगभिमतानां तथा चोक्तदोषेष्वेवासादृश्यादीनामन्तर्भाव इति भावः।

"कर्पूरखण्ड इव राजति चन्द्रबिम्बम्"।
"हरवन्नीलकण्ठोऽयं विराजति शिखावलः"। (ढ)
"स्तनावद्रिसमानौ ते"।

"दिवाकराद्रक्षति यो गुहासु
लीनं दिवाभीतमिवान्धकारम्।
क्षुद्रेऽपि नूनं शरणं प्रपन्ने
ममत्वमुच्चैः शिरसामतीव"॥

एवमादिषूत्प्रेक्षितार्थस्यासम्भूततयैव प्रतिभासनं स्वरूपमित्यनुचितमेव तत्समर्थनम्। यमकस्य पादत्रयगतस्याप्रयुक्तत्वं दोषः। यथा।

---

अन्तर्भावप्रकारमाह तथाहीति उपमायामसादृश्यासम्भवयोरनुचितार्थत्वं पर्य्यवस्यतीति अध्याहृतेनान्वयः। एवमग्रेऽपि साधारणधर्म्माप्रसिद्धिरसादृश्यमुपमानाप्रसिद्धिरसम्भवः। ग्रथ्नामीति आनुपूर्व्या निवेशयामीत्यर्थः। काव्यं यशीवेत्युपमाने समासः एवमग्रेऽपि। न चात्र रूपकसम्भवोऽपीति वाच्यं तत्रापि सादृश्यमूलकत्वेन तत्रापि तद्दोषतादवस्थ्यात् अत्र काव्ययशसोरर्थरश्म्योश्च कश्चित् साधारणो धर्म्मो न प्रसिद्धः काव्ययशसोराह्लादकत्वरूपैकधर्मसम्भवेऽप्यर्थरश्म्योर्न तादृशधर्मः सम्भवतीत्यवधेयं। उपमानासम्भवमुदाहरति प्रज्वलदिति तत्र वह्निकर्मणो ज्वलनस्य जले बाधात् तद्विशिष्टानां तासामसम्भवः। उपमानस्य जातिन्यूनत्वमुदाहरति चण्डाल इवेति अत्र चण्डालपदमुपमेयस्यातिनीचत्वं व्यञ्जयतीत्यनुचितार्थत्वम्। उपमानस्य प्रमाणन्यूनत्वमुदाहरति कर्पूरेति अत्रोपमेयस्य चन्द्रबिम्बस्यातिक्षुद्रत्वव्यञ्जकं कर्पूरखण्डपदं। उपमानस्य जात्यधिकत्वमुदाहरति हरवदिति शिखावलो मयूरः।

(ढ) उपमानस्य प्रमाणाधिकत्वमुदाहरति स्तनाविति अत्र स्तनयोरतिमहत्वव्यञ्जकमद्रिपदमनुचितार्थम्। उत्प्रेक्षितार्थसमर्थनमुदाहरति

"सहसालिङ्गनैः स्निग्धैः सहसा कुञ्जमन्दिरम्।
उदिते रजनीनाथे सहसा याति सुन्दरी"॥

उत्प्रेक्षायां यथाशब्दस्योत्प्रेक्षाद्योतकत्व ऽवाचकत्वम्। यथा "एष मूर्त्तो यथा धर्म्मः क्षितिपो रक्षति क्षितिम्"।

एवमनुप्रासे वृत्तिविरुद्धस्य प्रतिकूलवर्णत्वम् यथा।

"ओवट्टइ उल्लट्टइ इत्यादौ"। उपमायाञ्च साधारणधर्म्मस्याधिकन्यूनत्वयोरधिकपदत्वं न्यूनपदत्वञ्च। क्रमेणोदाहरणम्।

"नयनज्योतिषा भाति शम्भुर्भूतिसितद्युतिः।
विद्युतेव शरन्मेघो नीलवारिदखण्डधृक्"॥

अत्र भगवतो नीलकण्ठत्वस्याप्रतिपादनाच्चतुर्थपादोऽधिकः।

"कमलालिङ्गितस्तारहारहारी मुरं द्विषन्।
विद्युद्विभूषितो नीलजीमूत इव राजते"॥

अत्रोपमानस्य सबलाकत्वं वाच्यम्। अस्यामेवोपमा-

---

दिवाकरादिति उत्प्रेक्षितार्थस्याचेतनान्धकारत्वास्यासम्भूततया सम्भावनाविषये वस्त्वन्यवृत्तितया उत्प्रेक्षितार्थस्याचेतनस्यान्धकारत्वास्य प्रतिभासनस्वरूपमारोपणमात्रमुचितमेवेति समर्थनं। न मिथ्येत्यनुपपादनं तच्चासद्भूते वस्तुनि न सम्भवतीति भावः। पादत्रयगतस्य पादत्रयमात्रवृत्तित्वस्य अप्रयुक्तत्वं नाम दोषःस्वरूपमिति पूर्वेणान्वयः। सहसा अविचारेण सह सार्द्धं या प्रसिद्धा सहसा हासयुक्ता। वृत्तिविरुद्धत्वस्य प्रकृतरसविरोधिरसानुगुणवर्णघटितत्वस्य ओ वट्टइ इति अत्र शृङ्गारविरोधि वीराद्यनुगुणटकारघटितत्वमनुप्रासस्य। भगवतः शम्भोः अप्रतिपादनात् अप्रतियोगात्। तत्प्रयोगे तु तदुपयोगसम्भवाच्चाधि-

नोपमेययोर्लिङ्गवचनभेदस्य कालपुरुषविध्यादिभेदस्य च भग्नप्रक्रमत्वम् । क्रमेणोदाहरणम् । "सुधेव विमलश्चन्द्रः" "ज्योत्स्ना इव सिताकीर्त्तिः" । (ढ)

"काप्यभिख्या तयोरासीद्‌व्रजतोः शुद्धवेशयोः ।
हिमनिर्मुक्तयोर्योगे चित्राचन्द्रमसोरिव" ॥

अत्र तथाभूतचित्राचन्द्रमसोः शोभा न खल्वासीत् अपि तु सर्वदापि भवति । "लतेव राजसे तन्वि" । अत्र लता राजते त्वं तु राजसे ।

"चिरं जीवतु ते सूनुर्मार्कण्डेयमुनिर्यथा" ।

अत्र मार्कण्डेयमुनिर्जीवत्येव न खल्वे तदस्य जीवत्वित्यनेन विधेयम् । इह तु यत्र लिङ्गवचनभेदेऽपि न साधा-

---

कत्वं तारहारहारी शुद्धहारहारी सुरं द्विषन् श्रीकृष्णः वाच्यं वक्तुं योग्यं तदकथनान्न्यूनपदत्वमित्यर्थः । अस्यामेव उपमायामेव सुधेव विमल इति अत्र पुंलिङ्गस्य विमलस्य सुधायामन्वयासम्भवाल्लिङ्गव्यत्ययेनान्वय एवञ्च प्रक्रान्तलिङ्गभङ्गः । वचनभेदमाह ज्योत्स्ना इवेति अत्र वचन व्यत्ययेन प्रक्रान्तवचनभङ्गः ।

(ढ) कालभेदमुदाहरति कापीति अभिख्या शोभा तयोः सुदक्षिणादिलीपयोः । अत्रोपमानेऽतीतकालस्य बाधाद्वर्त्तमानोहेनान्वय इति प्रक्रान्तकालभङ्गः । पुरुषभेदमुदाहरति लतेवेति अत्रोपमाने मध्यमपुरुषान्वयस्य बाधात् प्रथमपुरुषोहेनान्वयमुपपादयति लताराजत इति अत्र प्रक्रान्तपुरुषभङ्गः । विधिभेदमाह चिरमिति एतज्जीवनं अस्य मार्कण्डेयस्य विधेयं विधिविषयः प्रमादिप्रदर्शाज्ञायाः अभीष्टाशंसनरूपाया आशिष एव भेदो न तु प्रैष्यादिनिर्णयसंकल्पभेदोऽप्येष्टाभ्युपायता । प्रवृत्त्यापारभेदो वा कार्यभेदोऽथवा विधिः इत्युक्तप्रकृविधस्य

रणधर्मस्यान्यथाभावस्तत्र न दोषः। कर्मणोदाहरणम्।
"मुखं चन्द्र इवाभाति"। (ण)

"तद्वेशोऽसदृशोऽन्याभिः स्त्रीभिर्मधुरता भृतः।
दधते स्म परां शोभां तदीया विभ्रमा इव"॥

पूर्वोदाहरणेषूपमानोपमेययोरेकस्यैव साधारणधर्मेणान्वयसिद्धेः प्रक्रान्तस्यार्थस्य स्फुटोऽनिर्वाहः। एवमनुप्रासे वैफल्यस्यार्थत्वम्। यथा।

"अनणुरणन्मणिमेखलमविरलसिञ्जानमञ्जु मञ्जीरम्।
परिसरणमरुणचरणे! रणरणकमकारणं कुरुते"॥

---

विधेरसम्भवात् विधिभेदस्योदाहरणमेवं बोध्यं "चमूरियं दूरं विमुक्तभङ्गा गङ्गेव मे योधमनुप्रयातु। ययारिपुज्याविभटाः प्रकामं नद्यन्त्यवस्था इव खेदसाध्याः"। अत्र गङ्गाप्रयाति चमूःप्रयातु इति प्रक्रान्तविधिभङ्गः। साधारणधर्मस्य निर्दिश्यमानसामान्यस्य अन्यथाभाव उपमानान्वयानुपयोगित्वं न दोषो नोपमादोषः। भग्नप्रक्रमत्वस्य तु प्रसक्त्यभावेन तन्निषेधस्यात्र न सम्भवः। मुखमिति चन्द्राभातीति उपमानेनाप्यन्वेति। वचनभेदेनापि।

(त) दोषाभावमाह तद्वेश इति तस्याः वेशः परां शोभां दधते स्म धारयति स्म दधधारणे आत्मनेपदी एकवचनान्तः वेशः तदीयः अन्याभिः स्त्रीभिरसदृशोऽसाधारणः मधुरतया सौन्दर्येण भृतः पूरितः विभ्रमाः स्मरविलासाः अपि च परां शोभां दधते धारयन्ति डुधाञ्धारणपोषणयोः बहुवचनान्तः ते तदीयाः अन्याभिः स्त्रीभिरसदृशोऽसाधारणाः अत्र क्विबन्तः सदृकशब्दोऽजसन्तः तथा मधुरतां बिभर्तीति मधुरताभृतः क्विबन्तस्य जसि रूपम् अत्रासदृश इत्यादिपदानां द्वयोः समानान्वययोगित्वं। एतदुदाहरणानां पूर्वोदाहरणापेक्षया वैलक्षण्यं दर्शयितुं पूर्वोदाहरणेषु भग्नप्रक्रमत्वं दर्शयति पूर्वे इति

एवं समासोक्तौ साधारणविशेषणवशात् परार्थस्य प्रतीतावपि पुनस्तस्य शब्देनोपादानस्याप्रस्तुतप्रशंसायां व्यञ्जनयैव प्रस्तुतार्थावगतेः शब्देन तदभिधानस्य च पुनरुक्तत्वम्। क्रमेणोदाहरणम्। (त)

"अनुरागवन्तमपि लोचनयोर्दधतं वपुः सुखमतापकरम्।
निरकासयद्रविमपेतवसुं वियदालयादपरदिग्गणिका"।

अत्रापरदिगित्येतावतैव तस्या गणिकात्वं प्रतीयते।

---

एकस्यैव उपमेयस्यैव साधारणधर्मान्वयमिद्धेरितियोग्यत्वादिति शेषः। प्रक्रान्तार्थस्य आकाङ्क्षितसाधारणधर्मस्य अनिर्वाहः उपमानेनान्वयस्यानुपपत्तिरयोग्यत्वादिति शेषः। लिङ्गव्यत्ययादिना योगत्रसामान्याधिकरण्योपपादने प्रथमोत्थापिताकाङ्क्षाविषयीकृतेन प्रकारेण पश्चादनुक्तिरिति भग्नप्रक्रमत्वमिति भावः। अतोभयान्वयाभिप्रायेण प्रयुक्तस्यैकतरान्वयसम्भवेऽभवन्मतयोगत्वमित्यपरे। अनुप्रासस्य वैकल्यं रसाद्युत्कर्षानाधायकत्वं तच्च मुख्यार्थानुपकारित्वरूपापुष्टार्थत्वे पर्य्यवस्यति तदुदाहरति अनन्विति वेश्याविरक्तस्य वचनमिदं हे अरुणचरणे तव परिसरणं सर्वतो गमनं पुंसां रणरणकं कामचिन्तासङ्कारणं कुरुते चिन्तारणरणञ्च तदिति कोषः। कीदृशं अनन्तु अनल्पं यथास्यात्तथा चञ्चली मणिमेखला यत्र अविरलं घनं शिञ्जानं शब्दायमानं मञ्जुमञ्जीरं यत्र तादृशं। मधुरेफ लकारादिघटितानुप्रासस्य माधुर्य्यातिशयव्यञ्जनेन शृङ्गारादेरेवोपकारित्वमत्र पुनः पर्य्यवसितार्थस्य वेश्याविरागस्य न किञ्चिदुपकारित्वमित्यपुष्टार्थत्वम्। परार्थस्य रूपकस्य उपमानस्य वा।

(थ) अनुरागवन्तमपीति अनुरागो रक्तिमा प्रेम च निरवकाशयद्वीपान्तरं प्रापयामास अथ दूरं चकार अपेतवसुं निष्किरणं निर्धनञ्च अपरदिक् पश्चिमदिक् अतेति यथा रविर्बिम्बं ...

"आहूतेषु विहङ्गमेषु मशको नायात् पुरो वार्यते
मध्ये वा धुरि वा वसंस्तृणमणिर्धत्ते मणीनां धुरम् ।
खद्योतोऽपि न कम्पते प्रचलितुं मध्येऽपि तेजस्विनां
धिक् सामान्यमचेतसं प्रभुमिवानामृष्टतत्त्वान्तरम्" ॥

अत्राचेतसः प्रभोरभिधानमनुचितम् । एवमनुप्रासे प्रसिद्धाभावस्य ख्यातविरुद्धत्वम् यथा । (थ)

"चक्राधिष्ठिततां चक्री गोत्रं गोत्रभिदुच्छ्रितम् ।
वृषं वृषभकेतुश्च प्रायच्छदस्य भूभुजः" ॥

---

प्रतीयते तथैवेति भावः । आहूतेष्विति कत्र यत्तदर्थयोराकांक्षया लाभः । तमचेतसं सदसद्विवेचनारूपचेतनारहितं सामान्यं जनं धिक् अनामृष्टमनाकलितं तत्त्वान्तरं वस्तुनां विशेषो येन तादृशं प्रभुमिवेति सदसद्विवेचनरहितत्वं दर्शयति आहूतेष्विति विहङ्गमेषु आहूतेषु हंसकोकिलादिषु अहमपि विहायो गमनादिहङ्गम इति मत्वा पुर आयात् आगच्छन् मशको येन न वार्यते यस्य धुरि यानमुखे । मध्ये वा अर्थादुपस्थितस्य यानस्यैव मध्ये वा वसंस्तृणमणिर्व्याकर्षको मणिरत्नमणिर्यानशोभाजनकमहामणीनां धुरं साम्यं धत्ते यानस्य पश्चाद्भागस्तावत्तृणमणेः स्थानं तद्भिन्ने मध्यादौ तद्विन्यासात्तत् स्वामिनोऽविवेकत्वमिति भावः । धूः स्त्री क्लीबे यानमुखमिति कोषः मध्ये वा धुरि वा वसन्निति पाठो न रमणीयः अन्वयात् खद्योतोऽपीति पुर इत्यनुषज्यते यस्य पुरः खद्योतोऽपि तेजस्विनामपि मध्ये प्रचलितं गन्तुं न कम्पते न बिभेतीत्यर्थः । अत्राप्रस्तुतेन तादृशसामान्येनैव विशेषस्याचेतनस्य प्रभोरभिव्यक्तिरिति तदभिधानमनुचितमित्यभिप्रायेणाह अत्रेति एवमिति प्रसिद्धभावस्य अनुप्रासितपदार्थयोर्विवक्षितेऽन्वये लोकतः शास्त्रतो वा प्रसिद्धिविरहस्य ।

(थ) चक्राधिष्ठिततामिति मण्डलाधिकारित्वमित्यर्थः । चक्री विष्णुः

उक्तदोषाणाञ्च क्वचिददोषत्वं क्वचिद्गुणत्वमित्याह ।

वक्तरि क्रोधसंयुक्ते तथा वाच्ये समुद्धते ।
रौद्रादौ तु रसेऽत्यन्तं दुःश्रवत्वं गुणो भवेत् ॥

एषु चास्वादस्वरूपविशेषात्मकतया मुख्यगुणप्रकर्षोपकारित्वाद्गुण इति व्यपदेशो भाक्तः । क्रमेण यथा । (ध)

"तद्विच्छेदकृशस्य कण्ठलुठितप्राणस्य मे निर्दयं
क्रूरः पञ्चशरः शरैरतिशितैर्भिन्दन् मनो निर्भरम् ।
शम्भोर्भूतकृपाविधेयमनसः प्रोद्दामनेत्रानल-
ज्वालाजालकरालितः पुररसावास्तां समस्तात्मना" ॥

---

गोत्रं वंशं गोत्रभिदिन्द्रः उच्छ्रितं उन्नतं वृषं पुण्यं वृषभकेतुः शिवः मायच्छद्दत्तवान् । अत्र कर्त्तृकर्मनियमेन स्तुतिरनुप्रासानुबोधेनैव प्रतिपादिता न पुनः पुराणेतिहासादिषु तथा प्रतीतिरिति प्रसिद्धिविरहः । सम्प्रति दोषाणां नित्यत्वानित्यत्वप्रतिपत्त्यर्थमनित्यदोषानाह उक्तदोषाणामिति क्वचिदिति यत्र रसादीनामपकर्षकत्वं प्रकर्षकत्वञ्च नास्ति तत्रेत्यर्थः । यत्र तु रसादीनामपकर्षकत्वं नास्ति प्रत्युत प्रकर्षकत्वमेव तत्र गुणत्वं तत्र दोषोऽहेयत्वमेव यथा सम्भवं तान् दर्शयति वक्तरीति क्रोधयुक्ते वक्तरि उद्धते प्रतिपाद्ये च सति दुःश्रवत्वं गुणः । रौद्रादिरसे पुनरत्यन्तं गुण इत्यर्थः । आदिशब्दात् वीरवीभत्सयोर्ग्रहणं । ननु गुणानां रसधर्मत्वं त्रिविधत्वञ्च वक्ष्यति दुःश्रवत्वादीनां तदुभयाभावात् कथं गुणत्वमित्यत आह एषु चेति दुःश्रवत्वादिष्वित्यर्थः । आस्वादानां रसानां स्वरूपविशेषात्मकाः साधर्म्यविशेषरूपा ये मुख्यगुणा माधुर्यादयः तद्गतो यः प्रकर्षो रसाद्युत्कर्षस्तस्योपकारित्वात् अनुकूलत्वात् व्यपदेशो गौणव्यवहारः ।

(ध) तद्विच्छेदेति भूतेषु जन्तुषु या कृपा तदा यत्तन्मनसः करा-
ल्मितो दग्धः असौ पञ्चशरः [illegible]

अत्र शृङ्गारे कुपितो वक्ता।

"मूर्द्धव्याधूयमानध्वनदमरधुनीलोलकल्लोलजालो-

द्भूताम्भःक्षोदहृश्यात् प्रसभमभिनभः क्षिप्तनक्षत्रलक्षम्

ऊर्द्ध्वन्यस्ताङ्घ्रिदण्डभ्रमिभवरभसोद्यन्नभस्वत्प्रवेश-

भ्रान्तब्रह्माण्डखण्डं प्रवितरतु शिवं शाम्भवं ताण्डवं वः" ॥

अत्रोद्धतताण्डवं वाच्यम्। इमे पद्ये मम। रौद्रादिरसेष्वतिद्दीप्ततयापेक्षयापि दुःश्रवत्वमत्यन्तं गुणः। यथा।

"उत्कृत्योत्कृत्य कृत्तिमित्यादि"। अत्र वीभत्सो रसः।

---

दग्धम् इदानीं तस्य लिङ्गशरीरमपि दह्यतामिति भावः। अत्र क्रोधस्यास्वाद्यमानत्वेऽपि प्राकरणिकतया प्रधानत्वेन रतेरास्वाद्यमानत्वात् शृङ्गारत्वमेव न तु रौद्रत्वं अतएवाह अत्र शृङ्गार इति। वाच्यस्योद्धतत्वे दुःश्रवत्वं गुणमुदाहरति मूर्द्धेति मूर्ध्नि व्याधूयमाना कम्पमाना ध्वनन्ती शब्दायमाना या अमरधूनीगङ्गा तस्यालोलं चञ्चलं यत् कल्लोलजालं महातरङ्गसमूहस्तस्मादुद्भूता उत्क्षिप्ता ये अम्भःक्षोदा जलविन्दवः तेषां दृश्याच्छलात् अभिनभो नभसि क्षिप्तं नक्षत्रलक्षं तारासमूहो यत्र तत ऊर्द्ध्वं न्यस्तोऽङ्घ्रिदण्डस्तस्य भ्रमिभरेण भ्रमणातिशयेन यो रभसो वेगस्तस्मादुद्यन् जायमानो यो नभस्वान् वायुस्तस्य प्रवेशेन भ्रान्तं कुलालचक्रवत् भ्रमिमापन्नं ब्रह्माण्डखण्डं यत्र तत् अत्र ताण्डवस्य लोकसंहारकारित्वादुद्धतत्वं। एतदुद्दीप्ततयापेक्षया क्रुद्धवक्तृवक्तव्यतावाच्यापेक्षया। रौद्रे दुःश्रवत्वं यथा मम "क्षिप्तोपक्षत्रपक्षेमयि सति सुतरां क्षत्रडिम्भेन शम्भोश्चापाचार्य्यस्य चण्डध्वनिधनुरधुना ध्वंसितं धिक् तितिक्षां। संघत्त्वा कुण्ठधारं कठिनमतितरां तस्य कण्ठे कुठारं व्रीड़ा पीड़ाम्बुराशेः परिभवसरितस्याद्य पारं प्रपद्ये" अत्र क्रोधस्यास्वाद्यमानतया भार्गवस्य वक्तुः क्रुद्धतया च सुतरां दुःश्रवत्वस्य गुणत्वं। सर्वथा आस्वादरहिते काव्याभ्यासे दुःश्रवत्वा-

**सुरतारम्भगोष्ठ्यादावश्लीलत्वं तथा पुनः।**

तथा पुनरिति गुण एव। यथा। (घ)

"करिहस्तेन सम्बाधे प्रविश्यान्तर्विलोडिते।
उपसर्पन् ध्वजः पुंसः साधनान्तर्विराजते"॥

अत्र हि सुरतारम्भगोष्ठ्यां "द्व्यर्थैः पदैः पिशुनयेच्च रहस्य वस्त्विति" कामशास्त्रस्थितिः। आदिशब्दात् शमकथाप्रभृतिषु बोद्धव्यम्।

---

दीनां न दोषत्वं न वा गुणत्वं काव्यधर्म्माणां दोषगुणानां तत्राप्रवेशात् अश्लीलत्वस्य गुणत्वमाह सुरतेति सुरतस्यारम्भश्चेष्टा यस्यास्ताद्दशगोष्ठी आदिर्यस्य तत्र।

(न) करिहस्तेनेति साधनस्य सेनाया अन्तर्मध्ये प्रविश्योपसर्पन् गच्छन् पुंसोध्वजः केतुर्विराजते कीदृशे सम्बाधे नराश्वादिनैविड्येन दुष्प्रवेशे प्रवेशोपायमाह करिहस्तेनेति करिणां हस्तेन शुण्डया विलोड़िते विस्फारिते अत्र पुंलिङ्गच व्यञ्जनस्यापि प्रतीत्याश्लीलत्वं। तथा हि साधनस्य भगस्यान्तर्मध्ये प्रविश्य उपसर्पन् गतागतं कुर्वन् पुंसोध्वजोमेहनं विराजते कीदृशे सम्बाधे संकुचिते तत् प्रवेशोपायमाह करीति करिहस्तेन कामशास्त्रोक्तहस्तविशेषलिङ्गेन विलोड़िते तच्च संश्लिष्टाग्रतर्जन्यनामिकापृष्ठारूढ़मध्यमानामिका। तदुक्तं "तर्ज्जन्यनामिका युक्ता मध्यमापृष्ठतो यदि। करिहस्त इति प्रोक्तः कामशास्त्रविशारदैरिति" इदं व्रीड़ाव्यञ्जकमश्लीलत्वं। गुणत्वमुपपादयति अत्र हीति। पिशुनयेत् सूचयेत्। रहस्यं गोप्यं कामशास्त्रस्य स्थितिर्नियमः रहस्य व्यञ्जनस्य सुरतोद्रेकानुकूलत्वाद्गुणत्वमिति भावः। शमकथाप्रभृतिष्विति प्रभृतिशब्दाद्वैराग्योत्पादककथाप्रसङ्गं तत्र यथा "उत्तानोच्छूनमण्डूकपाटितोदरसन्निभे। क्लेदिनि स्त्रीव्रणे सक्तिरकृमेः कस्य जायते"। अत्र जुगुप्साश्लीलत्वस्य गुणत्वं।

**स्यातामदोषौ श्लेषादौ निहतार्थाप्रयुक्तते।**

यथा। (न)

"पर्वतभेदि पवित्रं जैत्रं नरकस्य बहुमतङ्गहनम्।
हरिमिव हरिमिव हरिमिव सुरसरिदम्भः पतन्नमत" ॥

अत्रेन्द्रपक्षे पवित्रशब्दो निहतार्थः। सिंहपक्षे मतङ्गशब्दो मातङ्गार्थेऽप्रयुक्तः।

**गुणः स्यादप्रतीतत्वं ज्ञत्वं चेद्वक्तृवाच्ययोः।**

यथा।

"त्वामामनन्ति प्रकृतिं पुरुषार्थप्रवर्त्तिनीम्।
तद्दर्शनमुदासीनं त्वामेव पुरुषं विदुः" ॥

---

प्रभृतिशब्दात् छद्मकथादीनां ग्रहणम्। छद्मकथा छलोक्तिः। अमङ्गलाश्लीलत्वस्य गुणत्वं छद्मकथायां यथा निर्वाणवैरदहना इति कृष्णामङ्गलसूचनं नटस्य वचनमिदम्। अत्र प्रशमादयः शब्दा मरणरूपामङ्गलसूचका अपि छद्मोक्तौ गुणा एव।

(प) पर्व्वतेति हे जनाः पृथिव्यां पतत्सुरसरिदम्भो गङ्गाजलं यूयं नमत। कीदृशं पर्वतभेदि हिमालयभेदकरं। पवित्रं पावनं। नरकस्य पारलौकिकदुःखस्य जैत्रं विनाशकम्। बहुमितं पूजितम्। गहनं महावेगित्वात् दुरवगाहम्। हरिमिव विष्णुमिव। पर्वतभेदी गोवर्द्धनोद्धारी स चासौ पवित्रश्चेति तम्। नरकस्य नरकनाम्नोऽसुरस्य जैत्रं विनाशकं पराजयकरं गहनं दुर्ब्बोधतत्त्वम्। हरिमिव इन्द्रमिव पर्वतानां पक्षच्छेदकत्वात् पर्वतभेदी पविं वज्रं त्रायते धारयति पवित्रः स चासौ स चेति तम्। जैत्रं जयशीलं नरकस्य मनुष्यस्य बहुमतं भृशं पूजितं गहनं दुर्जयम् हरिमिव सिंहमिव मृगाणाञ्च मृगेन्द्रोऽहमिति स्मरणात् सिंहस्य वन्दनीयत्वम्। पर्वतभेदो गिरिगह्वरसा-

**स्वयं वापि परामृषेत् ।**

अप्रतीतत्वं गुण इत्यनुषज्यते । यथा । (फ)

"युक्तः कलाभिस्तमसां विवृद्धै-
 क्षीणश्च ताभिः क्षतये य एषाम् ।
शुद्धं निरालम्बपदावलम्बं
 तमात्मचन्द्रं परिशीलयामि" ॥

**कथितञ्च पदं पुनः ।**

**विहितस्यानुवाद्यत्वे विषादे विस्मये क्रुधि ॥**

**दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने ।**

**अर्थान्तरसंक्रमितवाच्ये हर्षेऽवधारणे ॥**

---

अयत्नेन सोऽस्मास्तीति पवित्रो देवरूपत्वात् नरकस्य मनुष्यस्य जैत्रं बहून् मतङ्गान् हन्तीति तम् । अत्र सङ्केताभिन्नत्वम् । त्वामिति अत्र प्रकृतिपदं प्रधानवाचकं योगशास्त्र एव प्रयोगप्राचुर्येण प्रसिद्धम् । प्रधानं प्रकृतिः स्त्रियामिति सङ्केताभिज्ञत्वे तु गुण एव । एवं पुरुषपदं परमात्मवाचकं योगशास्त्र एव प्रसिद्धं चेतज्ञ आत्मा पुरुष इति सङ्केताभिज्ञत्वे तु गुण एव ।

(फ) युक्त इति कलाभिः पृथिव्यादितत्त्वैः तमसामज्ञानानां ताभिः कलाभिः । एषां तमसां शुद्धं कामादिदोषरहितं निरालम्बपदं शिरःस्थाधोमुखकमलकर्णिकामध्यं तदवलम्बं तदाश्रयम् । चन्द्रपक्षे कलाभिः षोडशभागैः क्षीणो हीनस्तमसां तिमिराणां विवृद्धौ यो भवति यश्च ताभिर्युक्तः एषां तमसां क्षतये भवति तं शुद्धं शुभ्रप्रकाशं निरालम्बपदमाकाशमवलम्बो यस्य तम् । अत्र कला निरालम्बपदात्मपदानां तत्त्वादिवाचकत्वं योगशास्त्र एव प्रसिद्धमात्ममात्रप्रतीतेरहेयत्वादस्य गुणत्वम् । विहितस्येति उद्देश्यप्रतिनिर्देश्यस्थले उक्तपदप्रयोगादर्थान्तर-

गुण इत्येव यथा। "उदेति सविता ताम्र इत्यादि"।

अत्र विहितानुवादः। (फ)

"हन्त हन्त गतः कान्तो वसन्ते सखि! नागतः"।

अत्र विषादः।

"चित्रं चित्रमनाकाशे कथं सुमुखि! चन्द्रमाः"।

---

प्रतीत्यभावेन झटित्येव शाब्दबोधस्ततो रसादिधीरविलम्बेनैव इति अत्र कथितपदत्वस्य गुणत्वम्। विषाद इत्याद्युपलक्षणम्। यत्र यत्र द्विरुक्तं पदं तत्तदर्थान्तरबोधकम्। तत्रापि कथितपदत्वं गुणः। अतएव वक्ष्यति एवमन्यत्रापीति। तेन हट्टे हट्टे व्यपपुरम्भ्रिवर्गमित्यत्र द्विरुक्तं हट्टपदं सकले वाच्यविकस् पार्वत्यां सर्वजनानुरागं व्यञ्जयति। "पीत्वा पीत्वा सुरभिमदिरामादरात् कान्तदत्तां कण्ठं तस्य प्रविशु रभसाद्बाहु-पाशद्वयेन। वक्त्रं दन्तव्रणक्षितकलङ्काकुलं कारयेन्दुं मत्तानान्तु व्रजति गुणतां दातरापत्रमदत्वम्"। अत्र द्विरुक्तपीत्वेति पदं पौनः पुण्यव्यञ्जकमत्र रूढ़िरेव। "रक्ष रक्ष रघुव्याघ्र भयात्त्रायमनाथवत्। घोरदंष्ट्रो करवाक्षो रक्षो वधिति मामिदम्"। अत्र रक्षेति द्रुते लाक्षणिकस् भयातिशयं व्यञ्जयति। "याहि याहि सुमुखि प्रियधाम-त्वाहि कान्तमशरीरशराधेः"। बन्धुरेव विपदः प्रतिकारे सन्दधाति सुतरामुपयोगम्। अत्र याहि याहीति पदं द्रुते लाक्षणिकम्। त्वरातिशयं व्यञ्जयति। इत्यादावपि कथितपदत्वं गुणः। पदानुप्रास एव लाटानुप्रासो वक्ष्यते। तस्य शब्दवैचित्र्यद्वारा रसाद्युपकारकत्वमिति गुणत्वमेव। अर्थान्तरसंक्रमितवाच्यो ध्वनिप्रभेदस्तत्रार्थविशेष-व्यञ्जकत्वमिति गुणत्वम्।

(ब) हन्त हन्तेति अत्र द्विरुक्तं पदं वाच्यस्य विषादस्यातिशयं व्यञ्जयति। एवं चित्रचित्रमित्यत्र वाच्यस्य विस्मयस्यातिशयम्। सुखवर्णनमिदं क्वचि यथा "यात यात किमनेन तिष्ठता सुह्य सुह्य सखि सादरं

अत्र विस्मयः ।

"सुनयने नयने निधेहीति"

अत्र लाटानुप्रासः । "नयने तस्यैव नयने चेति" आदावर्थान्तरसंक्रमितवाच्यो ध्वनिः । एवमन्यत्र ।

सन्दिग्धत्वं तथा व्याजस्तुतिपर्य्यवसायि चेत्

गुण इत्येव यथा । (ब)

---

वचः । पामरीवचनलोलुपो युवा नैष वेत्ति कुलजाधरासवम् । अत्र द्विरुक्तं पदं समभिव्याहृतपदार्थस्य योगव्यवच्छेदं लक्षयति क्रोधातिशयं व्यञ्जयति । क्रोधेनोक्तावप्यर्थान्तराव्यञ्जकत्वात् कथितपदत्वं दोष एव । यथा तद्विच्छेदकृशस्य इत्यादौ स्तनः पदम् । दैन्ये यथा "देहि देहि नृपमेव तरित्तं"। अत्र द्विरुक्तं पदं दानप्रयुक्तिं पौनः पुनयं लक्षयत् दैन्यातिशयं व्यञ्जयति । अनुकम्पायां यथा "दीन रे वस्त्र गृहाण गृहाण" । अत्र द्विरुक्तं पदं ग्रहणप्रयुक्तिं पौनः पुनयं लक्षयदनुकम्पातिशयं व्यञ्जयति । प्रसादने यथा "मुञ्च मुञ्च सखि नेत्रयुग्मं न क्षमा मयि पदानते क्षमा" । नयने इति अत्र द्वितीयनयनपदं भाग्यवत्त्वादिगुणविशिष्टनयनबोधकत्वात् गुणः । हर्षे यथा "कथय कथय दूत क्व गतो रामभद्रः । यद्वा । "हन्त हन्तागतः कान्तः श्रीमानद्य मदाश्रयम्" । अवधारणमयोगव्यवच्छेदोऽन्ययोगव्यवच्छेदश्च तत्रायोगव्यवच्छेदे "हन्ति हन्ति रिपुं वीरः" । अन्ययोगव्यवच्छेदे यथा "तदवनाहितमतिर्बहुचाटुगर्भं कार्य्योन्मुखः खलु जनः कृतकं ब्रवीति । तत्साधवो न न विदन्ति विदन्ति किन्तु कर्त्तुं वृथाप्रणयमस्य न पारयन्ति" । अत्र विदन्तीति द्वितीयं पदं साधव एव विदन्तीत्यन्ययोगव्यवच्छेदपरम् । अयोगव्यवच्छेदस्तु नञ्द्वयेनैव प्रतीयते ।

"पृथुकार्त्तस्वरपात्रं भूषितनिःशेषपरिजनं देव।
विलसत्करेणुगहनं सम्प्रति सममावयोः सदनम्" ॥

**वैयाकरणमुख्ये तु प्रतिपाद्येऽथ वक्तरि।**
**कष्टत्वं दुःश्रवत्वं वा**

गुण इत्येव। यथा।

"दीधीवेवीसमः कश्चिद् गुणवृद्ध्योरभाजनम्।
क्विप्प्रत्ययनिभः कश्चिद्यत्र सन्निहिते न ते" ॥

अत्रार्थः कष्टः वैयाकरणश्च वक्ता। एवमस्य प्रतिपाद्यत्वेऽपि। (भ)

---

(भ) पृथुकार्त्तेति राज्ञि दरिद्रस्योक्तिरियम्। हे देव सम्प्रत्यावयोः सदनं गृहं समं त्वत्तोधनलाभे तु मद्गृहमनेवं भावात् पश्चात् समं न भवतीत्यर्थः पृथूनि कार्त्तस्वरस्य सुवर्णस्य पात्राणि यत्र भूषिताः रत्नाद्यलङ्कारमण्डिताः निःशेषपरिजना यत्र विलसन्तीभिः करेणुभिर्गहनं दुर्गमं राजसदनमीदृशं दरिद्रसदनन्तु पृथुकानां शिशूनां क्षुधया आर्त्तस्वरस्य पात्रं भुवि उषिताः सुप्ताः निःशेषपरिजना यत्र। शयनास्तरणाभावात् तथा विले गर्त्ते कुत्सितसतां मूषिकपिपीलिकादीनां रेणुभिर्गहनं व्याप्तम्। कुत्सायां कः। अत्र विशेषणपदानां सन्देहयोगत्वेऽपि व्याजस्तुतिपर्य्यवसानात् गुणत्वम्। वैयाकरणमुख्ये वैयाकरणादौ। आदिपदात् शुष्कतर्कादिपरिग्रहः। वैयाकरणे कर्त्तरि कष्टत्वं गुणमुदाहरति दीधीवेवीति। कश्चिज्जनो गुणवृद्ध्योः शौर्य्याभ्युदययोरभाजनमनाश्रयः। दीधीवेवी धातुभ्यामिड़ागमेन च समः। तेषां व्याकरणे गुणवृद्धिनिषेधात्। कश्चिज्जनः। क्विप्प्रत्ययनिभो विनष्ट एव। अत्र ते गुणवृद्धी न सन्निहिते नस्तः। अत्र दीधीवेवीटां गुणवृद्धिनिषेधानभिज्ञानां क्विप्प्रत्ययस्य सर्वलोपित्वानभिज्ञानाञ्च

"अत्रास्मार्षमुपाध्याय ! त्वामहं न कदाचन" ।

अत्र दुःश्रवत्वम् । वैयाकरणे वाच्यः । एवमस्या वक्तृत्वेऽपि ।

**ग्राम्यत्वमधमोक्तिषु ।**

"गुण इत्येव । यथा मम ।

"एसो ससहरबिम्बो दीसइ हेअङ्गबीणपिण्डो व्व ।
एदे अस्स मऊहा पड़न्ति आसासु दुद्धधार व्व" ॥

इयं विदूषकोक्तिः ।

**निर्हेतुता तु ख्यातेऽर्थे दोषतां नैव गच्छति ।**

यथा ।

"सम्प्रति सन्ध्यासमयश्चक्रद्वन्द्वानि विघटयति" ।

**कवीनां समये ख्याते गुणः ख्यातविरुद्धता ।**

---

झटिति प्रतीतिर्न भवतीत्यर्थस्य कष्टत्वम् । एतदेवाह श्रुतेरिति । एवमिति अस्य वैयाकरणस्य यथा "आत्मनेपदसंयोगि यजिकर्त्तागुरो भवान्" । आत्मनः स्वर्गार्थं यागं करोषीत्यर्थः कष्टः ।

(म) वैयाकरणे वाच्ये दुःश्रवत्वं गुणमुदाहरति अत्रास्मार्षमिति । अत्रातापर्षमिति क्वचित् पाठः । अस्य वैयाकरणस्य दुःश्रवत्वं गुण इत्यनुषज्यते । यथा "सोऽध्यैष्टवेदां स्त्रिदशानयष्ट" इति । शुष्कतार्किकवक्तृत्वे कष्टत्वं गुणो यथा "न्यायानुमानविगुणं कुयशस्ते महीपते । हेत्वाभासवदुन्नाव्यं विदुषो यान्तिनिग्रहम्" । अत्रापञ्चावयवन्यायप्रयोगे दुष्टहेतुप्रयोगवादिनिग्रहकर इत्यर्थः एतदभिज्ञानां कष्टः । एवमन्यस्य बोध्यत्वेऽपि बोध्यम् । अधमोक्तिषु अविदग्धवाक्येषु । एषो इति एष शशधरबिम्बो दृश्यते हैयङ्गवीनपिण्ड इव । एते चांशुसमूहाः पत-

कविसमयख्यातानि च।

मालिन्यं व्योम्नि पापे यशसि धवलता वर्ण्यते हासकीर्त्त्योः रक्तौ च क्रोधरागौ सरिदुदधिगतं पङ्कजेन्दीवरादि। तोयाधारेऽखिलेऽपि प्रसरति च मरालादिकः पक्षिसङ्घो ज्योत्स्ना पेया चकोरैर्जलधरसमये मानसं यान्ति हंसाः॥ (म)

पादाघातादशोकं विकसति वकुलं योषितामास्यमद्यैर्यूनामङ्गेषु हाराः स्फुटति च हृदयं विप्रयोगस्य तापैः। मौर्वी रोलम्ब-

---

न्याणास्तु दुग्धधारा इव इति सं। अत्र दुग्धपदं ग्राम्यमपि वक्तृ-त्वभमत्वप्रतीतिकरत्वाद्गुण एव। सुग्धासुग्धांधयेत्यादावनुप्रासविशेषादौ ग्राम्यत्वस्यादोषत्वं बोध्यम्। सम्प्रतीति सन्ध्यायां चक्रवाकद्वन्द्वस्य विघटनं सुप्रसिद्धमिति न तत्र हेत्वपेक्षा। कवीनामिति समये सिद्धान्ते। मालिन्यमिति तेऽप्याकाशमसिद्धामम्। कलङ्कमालिन्यमिषेण चन्द्रमा इधात्ययं पान्यवधूवधोङ्कनम्। दुर्यशसि च मालिन्यं ज्ञेयम्। यथा "असानि तत्तेन निजायशो युगं द्विफालवद्धाश्चिकुराः शिरः स्थितमिति"। एवमादीन्यधास्युदाहरणानि बोध्यानि। यशः कीर्त्त्योर्भेदः "खड्गादिप्रभवा कीर्त्तिर्विद्यादिप्रभवं यशः" इति केषाञ्चिद्दर्शनादुपपत्तेः।

(य) पादाघातादिति योषितामित्यनेन सम्बन्धः। "पादेन नापैक्षत सुन्दरीनामित्यादिदर्शनात्"। स्फुटति विदीर्णं भवति

माला धनुरथ विशिखाः कौसुमाः पुष्पकेतोर्भिन्नं स्यादस्य वाणैर्युवजनहृदयं स्त्रीकटाक्षेण तद्वत् ॥ अह्न्यम्भोजं निशायां विकसति कुमुदं चन्द्रिका शुक्लपक्षे मेघध्वानेषु नृत्यं भवति च शिखिनां नाप्यशोके फलं स्यात् । न स्याज्जाती वसन्ते न च कुसुमफले गन्धसारद्रुमाणामित्याद्युन्नेय-मन्यत् कविसमयगतं सत्कवीनां प्रबन्धे ॥

एषामुदाहरणान्याकरेषु स्पष्टानि ।

धनुर्ज्यादिषु शब्देषु शब्दास्तु धनुरादयः ।

आरूढत्वादिबोधाय यथा ।

"पूरिता रोदसी ध्वानैर्धनुर्ज्यास्फालनोद्भवैः" ।

अत्र ज्याशब्देनापि गतार्थत्वे धनुःशब्देन ज्याया धनु-र्व्याततीकरणं बोध्यते । आदिशब्दात् "भाति कर्णावतंसस्ते" । अत्र कर्णस्थितत्वबोधनाय कर्णशब्दः । एवं

---

रोलम्बमाला भ्रमरश्रेणी । "अलिपङ्क्तिरनेकशस्त्वया गुणकृत्ये धनुषो नियोजितत्यादिदर्शनात्" । धनुरथेत्यथशब्दश्चार्थः । तेन पुष्पकेतोः कामस्य धनुः कौसुमं विशिखाश्च कौसुमा इत्यर्थः । अस्य पुष्प-केतोः । अह्न्यम्भोजमिति दिवा तु पद्मादिसत्त्वेऽपि तत्र तत्प्रकाशो वर्णनीयः । चन्द्रिकेति यत्र रात्रिभागे चन्द्रिका नास्ति तत्रापि वर्णनीयेति भावः । गन्धसारद्रुमाणां चन्दनवृक्षाणाम् इत्यादीति तेन कौशादेर्मौर्वाद्य परिपर्यं [illegible] पुष्पमञ्जर्याय वर्ण्यते । पुनरुक्तस्य

श्रवणकुण्डलशिरःशेखरप्रभृतिः। एवं निरुपपदो माला-शब्दः पुष्पस्रजमेवाभिधत्त इति स्थितावपि। पुष्पमाला विभाति ते"। अत्र पुष्पशब्द उत्कृष्टपुष्पबुद्ध्यै। एवं मुक्ताहार इत्यत्र मुक्ताशब्देनान्यरत्नामिश्रितत्वम्।

**प्रयोक्तव्याः स्थिता अमी।**

धनुर्ज्यादयः सत्काव्यस्थिता एव निबद्धव्याः न लक्षिता जघनकाञ्चीकरकङ्कणादयः।

**उक्तावानन्दमग्नादेः स्यान्न्यूनपदता गुणः।**

यथा। (र)

"गाढ़ालिङ्गनवामनीकृतकुचप्रोद्भिन्नरोमोद्गमा
सान्द्रस्नेहरसातिरेकविगलच्छ्रीमन्नितम्बाम्बरा।
मा मा मानद! माति मामलमिति क्षामाक्षरोल्लापिनी
सुप्ता किं नु मृता नु किं मनसि मे लीना विलीना नु किम्"॥

अत्र पीड़येति न्यूनम्।

**क्वचिन्न दोषो न गुणः**

---

गुणत्वमाह धनुरिति ज्याशब्देनैव धनुर्गुणयोभानेऽतः शब्दो निरर्थकोऽपि आरूढ़त्वबोधनाद्गुणः। शेखरपदं शिरोभूषणं किरीटं वक्ति। काव्यस्थिता महाकविप्रयोगेषु स्थिता। जघनेति निबद्धव्या इति शेषः। आनन्दमग्नादेरित्यादिना दुःखमग्नादेर्ग्रहणम्।

(र) गाढ़ेति सख्या रतिवृत्तान्तकथनमिदं। गाढ़ालिङ्गनेन वामनीकृतकुचाचासौ प्रोद्भिन्नरोमोद्गमा चेति समासः। गाढ़ालिङ्गवामनीकृतकुचयोः प्रोद्भिन्नो रोमोद्गमो यस्य इति समासो न युक्तः। कुचे रोमोद्गमासम्भवात्। सान्द्रस्नेहरसातिरेकेण विगलत् श्रीमतो

न्यूनपदत्वमित्येव। यथा।

"तिष्ठेत्कोपवशात् प्रभावपिहिता दीर्घं न सा कुप्यति
स्वर्गायोत्पतिता भवेन्मयि पुनर्भावार्द्रमस्या मनः।
तां हर्त्तुं विबुधद्विषोऽपि न च मे शक्ताः पुरोवर्त्तिनीम्
सा चात्यन्तमगोचरं नयननीर्यातेति कोऽयं विधिः"॥

अत्र "प्रभावपिहितेति" "भवेदिति" चेत्यनन्तरं "नैतद्यत" इति पदानि न्यूनानि। (र)

एषां पदानां न्यूनतायामप्येतद्वाक्यव्यङ्ग्यस्य वितर्काख्यव्यभिचारिभावस्योत्कर्षाकरणान्न गुणः दीर्घं न सेत्यादि वाक्यजन्यया च प्रतिपत्त्या तिष्ठेदित्यादिवाक्यप्रतिपत्तेर्बाधः स्फुटमेवावभासत इति न दोषः।

---

नितम्बादम्बरं यस्याः सा। हे मानद मा मां मा पीड़य मां माति पीड़य अलं बहुव्यापारेणेति चामस्याल्पस्याचरस्योल्लापिनी। पीड़येत्यादेरनुक्तत्वादल्पत्वमचरस्य मानदस्य पीड़ाकरत्वमनुपपन्नमित्यवगमाय तत्पदेन सम्बोधनम्। एते तावन्निषेधाभावाविधिषु पर्य्यवसन्नाः। निष्पन्दत्वेन किं सुप्तेति वितर्कचतुष्टयं सुप्ता निद्रायिता अतिनिष्पन्दत्वेन मृतेति अन्ततत्त्वे त्रयः आविर्भावे विशेषलयस्य बोध्यः। अत्र पीड़येत्यादियोगत्रस्य पदस्य न्यूनता हर्षग्लानिसम्मोहप्रकर्षबोधनद्वारा रसं पुष्णातीति गुणत्वम्। तिष्ठेदिति पुरोरवस उक्तिरियम्। सा उर्वशी प्रभावेन पिहिता सती तिष्ठेत्। अथवा प्रभौ मयि कोपवशादपिहिता तिष्ठेत् नैतत् यतो दीर्घं न कुप्यति। उत्पतिता उद्गता मयि भावार्द्रं मन्नोचरप्रेमतिमितं अस्या उर्वश्याः विबुधद्विषोऽसुराः इत्यमदृश्यत्वे हेतुर्नास्त्येव किमदृश्येति विस्मयादाह सा चेति अगोचरमगोचरत्वं विधिर्नियतिः प्रकारो वा।

(ल) अगुणत्वमदोषत्वञ्चोपपादयति एषामिति वाक्यप्रति-

**गुणः क्वाप्यधिकं पदम्।**

यथा।

"आचरति दुर्ज्जनो यत्सहसा मनसोऽप्यगोचरानर्थान्।
तन्न न जाने जाने स्पृशति मनः किन्तु नैव निष्ठुरताम्"।

अत्र न न जाने इत्यन्ययोगव्यवच्छेदाद्विच्छित्ति-विशेषः।

**समाप्तपुनरात्तत्वं न दोषो न गुणः क्वचित्।**

---

पत्तेर्वाक्यजन्यबोधस्य। ननु द्वितीयजाने इत्यनेनायोगव्यवच्छेद एव प्रतीयते इत्यत आह अत्रेति इत्यनेन इत्यनेनेवेत्यर्थः। गुणत्वमुपपादयति द्वितीय इति विच्छित्तिविशेषोऽर्थवैचित्र्यविशेषः। प्रतीयत इति गुणत्वमिति शेषः। अत्र कथितपदत्वस्यावधारणबोधकत्वात् यद्वञ्चनेत्यादि· प्राग्दर्शितवत् गुणत्वमस्ति। अस्य शुद्धोदाहरणन्तु "याहि माधव याहि केशव मावद कैतववादम्। तामनुसर सरसीरुहलोचन या तव हरति विषदम्"। अत्र माधव केशवसरसीरुहलोचन पदानामन्यतमेनैवान्वयोपपत्तौ सर्वेषामुपादानमर्थान्तरबोधकत्वात् गुण एव। तथा हि माधवपदेन लक्ष्मीपतित्वेऽपि तव वैदग्ध्यं नास्तीति केशवपदेन वीरत्वेऽपि तव रतिसामर्थ्यं नास्तीति सरसीरुहलोचनपदेन विलक्षणचक्षुःसत्त्वेऽपि समरूपलावण्याद्यतिशयं न पश्यसीति व्यज्यते। यथा वा "कुर्य्यां हरस्यापि पिनाकपाणेर्धैर्य्यच्युतिं के मम धन्विनोऽन्ये"। अत्र पिनाकपाणेरपीत्यनेनैव प्रकृतान्वयोपपत्तौ हरस्येत्यधिकमपि हरस्यैव पिनाकसम्बन्धे दुर्जयत्वमिति व्यञ्जकात् गुणत्वम्। यथा वा "नायं भिक्षुर्वरयुवतिमान् नो तितिक्षुर्धनुष्मान् राज्ञः पुत्रो नहि नहि जटाजूटभारम् दधानः। नायं व्याधो नवगुणधरः पश्य कणादकणात्

यथा । "अन्यास्ता गुणरत्ने त्यादि" । अत्र प्रथमार्डेन वाक्यसमाप्तावपि द्वितीयार्डवाक्यं पुनरुपात्तम् । एवञ्च विशेषणमात्रस्य पुनरुपादाने समाप्तपुनरात्तत्वं न वाक्यान्तरस्येति विज्ञेयम् ।

**गर्भितत्वं गुणः क्वापि ।**

यथा । (व)

"दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत ।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मात् प्रादुरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतम्" ॥

---

पुण्येऽरण्येऽत्र नवजलधरश्यामलः कोऽयमेति । अत्र द्वितीयस्य न ह्रीति निपातसमुदायस्य वाचकत्वाभावेन कथितपदस्य न विषयः किन्त्वधिकोऽपि सराजपुत्रस्य जटाधारणमत्यन्तासम्भवीति व्यञ्जकत्वात् गुण एव । न वाक्यान्तरस्येति पुनरुपादाने समाप्तपुनरात्तत्वं न दोष इत्यर्थः ।

(व) दिङ्मातङ्गेति दिङ्मातङ्गसमूहेन विभक्ताः परिच्छिन्नाश्चत्वार आघाटाः सीमाः यस्याः सा । साध्यते स्ववशीक्रियते । सिद्धासाधितापि सा मही विप्राय प्रतिपाद्यते इत्यग्रेणान्वयः । किमपरमिति वाच्यमिति शेषः । कथैवाद्भुतमाश्चर्य्यं । यत्रैवेति तथा च तत्तुल्यो न भूतो न वावर्त्तमानो न च भविष्यन्निति भावः । चमत्कारातिशयमिति तेन युद्धवीरदानवीरयोः परिपोषः । क्वचिदिति यत्र पद्यांशे सुकुमारार्थत्वं तत्रेत्यर्थः । इदानीं रसदोषाणां विषयविशेषे यथायथमदोषत्वं गुणत्वञ्चाह क्वचिदिति । रचना व्यञ्जनं विभावादिकलरचनानौचित्यं विफलयति यत्रेति । औत्सुक्येनेति । नवै

अत्र वदन्त एवेत्यादि वाक्यं वाक्यान्तरप्रवेशात् चमत्कारातिशयं पुष्णाति।

**पतत्प्रकर्षता तथा।**

तथेति क्वचित् गुणः। यथा। "चञ्चद्भुजेत्यादि"। अत्र चतुर्थपादे सुकुमारार्थतया शब्दाडम्बरत्यागो गुणः।

**क्वचिदुक्तौ स्वशब्देन न दोषो व्यभिचारिणः।**
**अनुभावविभावाभ्यां रचना यत्र नोचिता॥**

यत्र विभावानुभावमुखेन प्रतिपादने विशदप्रतीतिर्नास्ति यत्र च विभावानुभावकृतपुष्टिराहित्यमेवानुगुणं तत्र व्यभिचारिणः स्वशब्दे नोक्तौ न दोषः। यथा।

"औत्सुक्येन कृतत्वरा सह भुवा व्यावर्त्तमाना ह्रिया
तैस्तैर्बन्धुवधूजनस्य वचनैर्नीताभिमुख्यं पुनः।
दृष्ट्वाग्रे वरमात्तसाध्वसरसा गौरी नवे सङ्गमे
संरोहत्पुलका हरेण हसता श्लिष्टा शिवायास्तु वः"॥

अत्रौत्सुक्यस्य त्वरारूपानुभावमुखेन प्रतिपादनेन झटिति प्रतीतिः। त्वराया भयादिनापि सम्भवः क्रियो-

---

सङ्गमे प्रथमदिवससमागमे हसता हरेण श्लिष्टा गौरी वो युष्माकम् शिवायास्तु। कीदृशी तद्गृहगमने प्रथममौत्सुक्येन कृतत्वरा ततस्सहभुवा सहजया लज्जया व्यावर्त्तमाना ततस्तैस्तैरित्यादि ततग्रे वरं स्वामिनं दृष्ट्वा आत्तेत्यादि साध्वसस्य सखीवराभ्यामास्वाद्यमानत्वेन रसतयोपादानम्। यद्वा आत्तौ साध्वसरसौ यया रसो-रतिः व्यावर्त्तमानस्य व्यावर्त्तमानत्वस्य साध्वसस्येति साध्वसस्य विभावादिभिः परिपोषे सति रसत्वप्राप्त्या शृङ्गारविरोधित्वं स्यात्।

ऽनुभावस्य च व्यावर्त्तनस्य कोपादिनापि सम्भवात्। साध्व-सहासयोस्तु विभावादिपरिपोषस्य प्रकृतरसप्रतिकूलप्राय-त्वादित्येषां स्वशब्दाभिधानमेव न्याय्यम।

सञ्चार्य्यादेर्विरुद्धस्य बाध्यत्वेन वचो गुणः। (व)

"क्वाकार्य्यं शशलक्ष्मणः क्व च कुलमित्यादि"।

अत्र प्रशमाङ्गानां वितर्कमतिशङ्काधृतीनामभिलाषा-ङ्गौत्सुक्यस्मृतिदैन्यचिन्ताभिस्तिरस्कारः पर्य्यन्ते चिन्ता-प्रधानमास्वादप्रकर्षमाविर्भावयति।

---

• हासस्य तथात्वे प्राधान्येन प्रतिपत्तिः स्यात् न शृङ्गारत्वेन इति भावः। परिपन्थिरसविभावादिसंग्रहस्य गुणत्वमाह सञ्चार्य्यादेरिति व्यभिचारिभावादेरित्यर्थः। आदिना विभावानुभावग्रहणम्। विरु-द्धस्य प्रतिकूलरसाङ्गस्य बाध्यत्वेन प्रतिरुद्धस्वजन्यरसपरिपुष्टिकत्वेन वचो ज्ञापनम्।

(व) क्वाकार्य्यमिति भावशबलत्वोदाहरणमिदम्। गुणत्व-मुपपादयति अत्रेति प्रशमाङ्गानां शान्तरसानुकूलानामभिलाषाङ्गैः शृङ्गाररसानुकूलैस्तिरस्कारः स्वजन्यरसपरिपोषस्यगणम्। ननु वित-र्कादीनामिव औत्सुक्यादीनामपि साध्यत्वमस्तीति कथं विप्रलम्भस्य परिपुष्टिरित्यत आह पर्य्यन्त इति चिन्तायां विश्रान्तौ सत्यामित्यर्थः। चिन्ताप्रधानमबाधितत्वेन मुख्यं कारणं यस्य तादृशमास्वादप्रकर्षं विप्रलम्भशृङ्गारपरिपोषम्। आविर्भावयति करोतीति तज्ज्ञापनम् गुण इति शेषः। विरुद्धरसयोः सम्पर्को दोष एव। तदुक्तम्। "प्रत्यनीको रसो द्वौ द्वौ तत् सम्पर्कं विवर्ज्जयेदिति"। तयोर्विषयवि-शेषे समावेशमाह विरोधिनोऽपीति। स्मरणे पूर्व्वानुभूतस्यातीतस्य व्यञ्जनयाख्याने वचने ज्ञापने अङ्गिनि मुख्यविशेष्ये अतच्चाङ्गिनी-

विरोधिनोऽपि स्मरणे साम्येन वचनेऽपि वा ।
भवेद्विरोधो नान्योन्यमङ्गिन्यङ्गत्वमाप्तयोः ॥(श)

क्रमेण यथा । "अयं स रसनोत्कर्षीत्यादि" । अत्रालम्बनविच्छेदेन रतेरसात्मतया स्मर्य्यमाणानां तदङ्गानां शोकोद्दीपकतया करुणानुकूलता ।

"सरागया स्रुतघनघर्म्मतोयया
कराहतिध्वनितपृथूरुपीठया ।
मुहुर्मुहुर्दशनविलङ्घितोष्ठया
रुषा नृपाः प्रियतमयेव भेजिरे" ॥

अत्र सम्भोगशृङ्गारो वर्णनीयस्य वीरव्यभिचारिणः क्रोधस्यानुभावसाम्येन विवक्षितः । (ष)

---

त्युपादानाल्लभ्यते । अन्यथा अङ्गत्वमाप्तयोरित्यनेनैवाङ्गिलाभे तदुपादानमनर्थकं स्यात् । द्विवचनं बहूनामुपलक्षणम् ।

(ष) अयमिति व्याख्यातमिदं गुणीभूतव्यङ्ग्योदाहरणे । तत्र विरुद्धस्यापि शृङ्गारस्य स्मर्य्यमाणतया करुणेन सम्पर्को न दोषः । ननु तदानीमपि रतिरस्ति तस्या रसत्वप्राप्तिरहितेति कथं स्मर्य्यमाणत्वमत आह अत्रेति । आलम्बनस्य नायकस्य विच्छेदे मरणे अरसात्मतया तदानीन्तनानुभावाद्यभावेन रसरूपतानापन्नतया स्मर्य्यमाणानामिति एतेन शृङ्गारस्यापि स्मरणं दर्शितम् । तदङ्गानां रत्यङ्गानां कृतस्योपकारस्मरणं बन्धूनामत्यन्तशोकजनकमिति भावः । साम्येनोक्तौ विरुद्धयोः समावेशमुदाहरति सरागयेति । मुखलौहित्यजनकत्वेन रक्तौ च क्रोधरागाविति दर्शनाद्वा रुषः सरागत्वोपपत्तिः । पक्षे सानुरागया कराघातेन ध्वनितं पृथूरुपीठं यत्र तया । क्रोधे सति वीरैरूरुः पीठम्वा आहन्यते । पक्षे कराघातेन ध्वनितं पृथूरुरेव पीठं यया । अति

"एवं ध्याननिमीलनात्मुकुलितप्रायं द्वितीयं पुनः
पार्वत्या वदनाम्बुजस्तनभरे सम्भोगभावालसम् ।
अन्यद्दूरविकृष्टचापमदनक्रोधानलोद्दीपितं
शम्भोर्भिन्नरसं समाधिसमये नेत्रत्रयं पातु वः" ॥

अत्र शान्तशृङ्गाररौद्रपरिपुष्टा भगवद्विषया रतिः ।

यथा वा ।

"क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोंऽशुकान्तम्
गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण ।

---

प्रौढकान्ताभिर्नायिकाभिः करेणोरस्याहन्यते इति कामशास्त्रप्रसिद्धम् । दशनैर्विलङ्घितो निपीडित ओष्ठो यत्र पक्षे कान्तदशनेन निपीडित ओष्ठो यस्याः । अत्र शृङ्गारवीरयोः समावेशः । उक्तानुभावानामन्यत्रापि सम्भवात् झटिति रूपः प्रतीतिर्न भवतीति तस्याः स्वशब्देनोपादानं न दोषः । प्रकरणादुत्साहस्यास्वाद्यमानत्वेन वीरत्वं स्थायिनः क्रोधस्य स्वशब्देनोपादानात् आस्वाद्यत्वाभावेन न रौद्रत्वमिति भावः ।

(ख) एकस्मिन्नङ्गत्वमाप्तानां रसानां समावेशमुदाहरति एवमिति नेत्रमित्यर्थः । मुकुलितप्रायं मुद्रितपद्माकारं वदनाम्बुजे सम्भोगसुम्बनम् स्तनभरे सम्भोग आलिङ्गनादिस्तस्य भावेनाभिप्रायेण अलसं निष्पन्दं अन्यल्ललाटनेत्रं दूरमत्यन्तं विकृष्टचापो येन यद्वा दूरे विकृष्टश्चापो येन तस्मिन् मदने यः क्रोधः स एवानलस्तेनोद्दीपितमुज्ज्वलितं भिन्नरसं विरुद्धवस्तुरसव्यञ्जकं । शृङ्गारिणोऽपि न समाधिभङ्ग इति शृङ्गारस्य परम्परया क्रोधस्य समाधिविघ्नभिव रकत्वेन तत्परिणामिनो रौद्रस्य साक्षादेव देवविषयकरतिपोषकत्वम् । परम्परयाप्यङ्गत्वमाप्तयो रसयोः समावेशमुदाहरति क्षिप्त

आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनीलोत्पलाभिः
कामी वार्द्रापराधः स दहतु दुरितं शाम्भवो वः शराग्निः"(ख)

अत्र कविगता भगवद्विषया रतिः प्रधानम्। तस्याः परिपोषकतया भगवतस्त्रिपुरविध्वंसं प्रत्युत्साहस्यापरिपुष्टतया रसपदवीमप्राप्ततया भावमात्रस्य करुणोऽङ्गम्। तस्य

---

इति। क्षिप्तो हस्तावलग्नः प्रसभमभिहतोऽप्याददानोऽंशुकान्तं गृह्णन् केशेष्वपास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण। आलिङ्गन् योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः कामीवार्द्रापराधः स दहतु दुरितं शाम्भवोऽवः शराग्निः। त्रिपुरदाहे स प्रसिद्धः शम्भुसम्बन्धी शराग्निः वो युष्माकं दुरितं दहतु। कीदृशः आसन्नापराधः कामीव। साश्रुनेत्रोत्पलाभिस्त्रिपुरयुवतिभिर्हस्तावलग्नः सन्क्षिप्तः। शोकात् क्षोभाच्च तासामश्रु एवमुत्तरोत्तरक्रियास्वपि। कामीति दृष्टान्तः। अंशुकस्यान्तमाददानोऽपि प्रसभं सहसा अभिहतः केशेषु गृह्णन् अपास्त चुम्बनार्थं कामिनः केशग्रहणम्। सम्भ्रमेण भयजन्यत्वरया ईक्षणाभावः। पक्षे आदरजन्यत्वरया नेक्षितः किन्त्वनादरेणेक्षितः।

(ङ) अङ्गाङ्गीवमुपपादयति अत्रेति। प्रधानमिति। निराकाङ्क्षवाक्यप्रतिपाद्यत्वादिति भावः। तस्या भगवद्विषयरतेः। परिपोषकतयेति अङ्गस्येति शेषः। अपरिपुष्टतयेति विभावानुभावयोरनुपादानादितिभावः। रसपदवीं रसत्वम्। भावमात्रस्य उद्बुद्धमात्रः स्थायी चेति भावलक्षणाक्रान्तस्य। करुणोऽङ्गमिति दुष्टनिग्रहं प्रति भगवदुत्साहस्यानुभावेन करुणस्थायिभावेन स्त्रीणां शोकेन व्यञ्जनमिति करुणस्याङ्गत्वम्। कामीवेति प्रागयथा कामुक आचरति स तथाद्य शराग्निरिति साम्यन्तुवनात् सादृश्यानुभवात् आयातः स्मृतिविषयतां प्राप्तः। शृङ्गार ईर्ष्यामानाख्यविप्रलम्भः। अङ्गमित्यनुषङ्गेनान्वयः। ईर्ष्यामानपूर्वावस्थाया रतेः करुणस्थायिभावस्त्रीशोकोद्दीपकतया अङ्गत्वमिति भावः। नन्वत्र स्त्री-

च कामी वेति साम्यबलादायातः शृङ्गारः। एवञ्चाविश्रान्तिधामतया करुणस्याप्यङ्गतैवेति द्वयोरपि करुणशृङ्गारयोर्भगवदुत्साहपरिपुष्टतद्विषयरतिभावास्वादप्रकर्षकतया योगपद्यसद्भावादङ्गत्वेन न विरोधः। (छ)

ननु समूहालम्बनात्मकपूर्णघनानन्दस्वरूपस्य रसस्य च

---

शोकस्य वाच्येनानुभावेनाश्रुणा व्यङ्ग्येनोद्दीपनविभावेन झटित्याक्षेपलभ्येन म्रियमाणपत्यालम्बनविभावेन च परिपुष्टिरिति करुणस्य प्रधानत्वमेव कथमङ्गत्वमत आह एवञ्चेति अविश्रान्तिधामतया साकांक्षवाक्यव्यङ्ग्यतया एवपदैः सकलपदार्थोपस्थितौ खले कपोतन्यायेन विशेष्यविशेषणं तत्रापि विशेषणान्तरमिति रीत्या शाब्दबोधे सति व्यङ्ग्यबोधेऽपीयं रीतिरिति भावे भगवदुत्साहस्तत्र करुणस्तत्रापि शृङ्गारो व्यञ्जनया एकदैव अङ्गतयावगम्यते इत्युक्त्वा अवान्तरवाक्यार्थबोधक्रमेण शाब्दबोधपक्षे व्यङ्ग्यार्थबोधस्यापि तद्रीतित्वेन विशिष्टवैशिष्ट्यमिति शृङ्गारविशिष्टकरुणबोधे सति करुणविशिष्टभगवदुत्साहबोधस्तदनन्तरं भगवदुत्साहविशिष्टभावबोधः क्रमाज्जायत इति मतेन परम्परया प्रधानोपकारमुपपादयति द्वयोरपीति करुणशृङ्गारयोरिति अपरिपुष्टतयेति प्रधानस्य भूयस्युपकारे वर्त्तते” इति प्रथममते स्वपरिपोषकं परिपोषणमात्रं प्रधानस्योपकारः। द्वितीये तु निरुक्तक्रमेणास्वादातिशयजननमपीति विशेषः। स्थायिभावानामङ्गाङ्गिभावेनैव रसानामङ्गाङ्गिभाव इति काव्यप्रकाशकारः। यद्वा यासां पूर्वं प्राणेश्वरा हस्तधारणादिना प्रसादनपरा आसन् तासामेवेदानीं शम्भुशरस्तत्कर्मणैव तादृशीं दुर्दशां जनयतीति शृङ्गारेण परिपोषितः कविकरुण एव स्वजन्यभगवदुद्दिष्टनिगृहोत्साहोद्बोधेन कविगतां भगवद्विषयां रतिं जनयित्वा तामेव सामाजिकानामास्वादकन्दतामुपनयतीति रसयोरेवाङ्गत्वम्।

(छ) एतन्मते प्रद्वेषमाह नन्विति समूहालम्बनात्मवेति विभावादि-

तादृशेनेतररसेन कथं विरोधः सम्भावनीयः। एकवाक्ये निवेशप्रादुर्भावयौगपद्यविरहेण परस्परोपमर्दकत्वानुपपत्तेः। नाप्यङ्गाङ्गिभावः। द्वयोरपि पूर्णतया स्वातन्त्र्येण विश्रान्तेः। सत्यमुक्तम्। अत एवात्र प्रधानेतरेषु रसेषु स्वातन्त्र्यविश्रामराहित्यात् पूर्णरसभावमात्राच्च विलक्षणतया सञ्चारिरसनाम्ना व्यपदेशः प्राचानाम्। अस्मत्पितामहानुजकविपण्डितमुख्यश्रीचण्डीदासपादानान्तु खण्डरसनाम्ना। यदाहुः। (च)

---

पदार्थसमूहविषयकज्ञानरूपेत्यर्थः पूर्णः। समधिकः घनः सुखान्तरतिरोधः। अपेरङ्गत्वेनापीत्यग्रेणान्वयेन मतवैलक्षण्यप्रावगमः। चाख्या- द्यप्रकर्षकतया इति। "गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते। उपकारे प्रधानस्य तथा भूयसि वर्त्तते" इति न्यायेनेति भावः। अस्यार्थः। गुणो विशेषणं कृतात्मसंस्कारः स्वविशेषणेन कृतोपकारः प्रधानं पार्य्यान्तिकविशेष्यं प्रतिपद्यते अन्वेति तादृशः "सन्नेव हि धायको य आनन्दस्तत्स्वरूपस्येत्यर्थः। एतादृशेन समूहालम्बनात्मकपूर्णघनानन्दस्वरूपेण एकवाक्येति एकस्मिन् वाक्ये यो निवेशो व्यञ्जकतासम्बन्धेन वृत्तिः सा च प्रादुर्भावयौगपद्यञ्च तयोर्विरहेणेत्यर्थः। यद्वा एकवाक्यार्थग्रहेण यौ प्रादुर्भावाव्युत्पत्ती तयोर्यौगपद्यविरहेण एककालीनत्वविरहेण उपमर्दकत्वाभावात् परस्परपरिपोषकप्रतिबन्धकत्वाभावात्। "राम मन्मथेत्यादौ" बीभत्सशृङ्गारयोर्न युगपदुत्पत्ती किन्त्वभिधेयबोधानन्तरं बीभत्सस्य व्यङ्ग्यबोधानन्तरं शृङ्गारस्येति क्रमेणैवेति नानुपपत्तिः। नापीति रसयोरिति शेषः। अतएव एकानिर्वाहादेव प्रधानेतरेषु अङ्गेषु स्वतन्त्र्यादिविलक्षणतयेत्यत्र हेतुः। भावमात्राच्चेति अपरिपुष्टस्थायिभावत्वेन भावत्वमभिप्रेत्य प्रधानत्वाभावाद्विलक्षण-

"अङ्गं बाध्योऽथ संसर्गी यद्यङ्गी स्याद्रसान्तरे।
नास्वाद्यते समग्रं यत्ततः खण्डरसः स्मृत इति"॥

ननु "आद्यः करुणबीभत्सरौद्रवीरभयानकैः" इत्युक्तनयेन विरोधिनोर्वीरशृङ्गारयोः कथमेकत्र।

"कपोले जानक्याः करिकलभदन्तद्युतिमुषि
स्मरस्मेरस्फारोड्डमरपुलकं वक्त्रकमलम्।
मुहुः पश्यन् शृण्वन् रजनिचरसेनाकलकलम्
जटाजूटग्रन्थिं द्रढयति रघूणां परिवृढः"॥

इत्यादौ समावेशः। अत्रोच्यते। इह खलु रसानां विरोधितया अविरोधितायाश्च त्रिधा व्यवस्था। कयोश्चिदा-

---

भावप्रदर्शनम्। खण्डरसनाम्नेति व्यपदेश इत्यनेनान्वयः। एवञ्च पूर्णरसयोर्विरोधाद्यसम्भवेऽपि खण्डरसपूर्णरसयोस्तत्सम्भव इति भावः।

(क) अङ्गमिति अङ्गीरसो रसान्तरे यद्यङ्गं अथवा बाध्यो विरुद्धोऽपि स्मरणादिबलात् लब्धसमावेशः स्यात् यदि वा संसर्गी अविरोधी प्रधानानुपकारितया स्वातन्त्र्येण मिलितः स्यात् तदा समग्रास्वादाभावात् खण्डरसः स्मृत इत्यर्थः। ननु स्मरणादावेव विरुद्धयोः समावेशः प्रतिप्रसूतस्तदभावात् कथं कपोल इत्यादौ विरुद्धयोर्वीरशृङ्गारयोः समावेश इत्यभिप्रायेणाह नन्वाद्य इति। एकत्रेति समावेश इत्यग्रेणान्वयः। कपोल इति वक्त्रकमलं कीदृशं कपोलावच्छेदे स्मरेण कामोद्रेकेण स्मेरः प्रकाशमानः स्फारोड्डमरीऽत्युत्कटः पुलको यत्र कपोलस्य किञ्चित् पाण्डुत्वेन विमलत्वेन वा करिकलभदन्तोपमा। अत्र शृङ्गारस्य जानक्यालम्बनविभावस्तदीयताटङ्कपोल उद्दीपनविभावः तन्मुखकमलविलोकनम्। वीरस्य तु रजनीचरसेना आलम्बनं तदीयकलकलविधानमुद्दीपनविभावः। जटाजूटग्रन्थिदृढीकरणमनुभावः। वीरस्य निराकांक्षवाक्यव्यङ्ग्यतया प्रधानत्वम्। स्मरणादाविवालम्बना-

सम्बनैक्येन कयोश्चिदाश्रयैक्येन कयोश्चिन्नैरन्तर्य्येण इति। तत्र वीरशृङ्गारयोरालम्बनैक्येन विरोधः। तथा हास्यरौद्रबीभत्सैः सम्भोगस्य। वीरकरुणरौद्रादिभिर्विप्रलम्भस्य। (ख)

आलम्बनैक्येन आश्रयैक्येन च वीरभयानकयोः। नैरन्तर्य्यविभावैक्याभ्यां शान्तशृङ्गारयोः। त्रिधाप्यविरोधो वीरस्याद्भुतरौद्राभ्याम्। शृङ्गारस्याद्भुतेन। भयानकस्य बीभत्सेनेति। तेनात्र वीरशृङ्गारयोर्भिन्नालम्बनत्वान्न विरोधः। एवञ्च वीरस्य नायकनिष्ठत्वेन भयानकस्य प्रतिनायकनिष्ठत्वेन निबन्धे भिन्नाश्रयत्वेन विरोधः

---

आश्रयभेदे नैरन्तर्याभावेऽपि विरोधिनोरेकस्मिन् समावेश इति सिद्धान्तमाह इह खल्विति। आश्रयैक्येन नायकैक्येन नैरन्तर्य्येण अव्यवधानेन। विशिष्य दर्शयति तत्रेति। वीरशृङ्गारयोर्वीरसम्भोगयोः।

(ख) तथा आलम्बनैक्येन सम्भोगस्येति विरोध इत्यन्वयः। एवमग्रेऽपि। आश्रयैक्येन चेति चकारेणालम्बनैक्येनेत्यस्य समुच्चयः। वीरस्याद्भुतरौद्राभ्यां सहाविरोधः आलम्बनैक्येनाश्रयैक्येन नैरन्तर्य्येण च भवति। एवं शृङ्गारस्याद्भुतेन भयानकस्य बीभत्सेन तु नैरन्तर्य्यमात्रेणाविरोधो ज्ञेयः। वीरशृङ्गारयोरालम्बनभेदेनाविरोधं दर्शयति तेनेति। उक्त नियमेनेत्यर्थः। अत्र कपोल इत्यत्र भिन्नाश्रयत्वेनेति उत्साहस्य प्रतिनायकविषयकत्वेन नायकैक्येन निबन्धे भिन्नालम्बनत्वेनाविरोधो ज्ञेयः। इदानीं विरुद्धरसीयविभावादिपरिग्रहस्यादोषत्वं दर्शयति पाण्डुक्षाममित्यादि। तथा विरुद्धरसीयासाधारणाङ्गपरिग्रह एव दोषो न तु साधारणाङ्गपरिग्रह इति भावः। अनुकारे चेति परोक्तशब्दवाक्ययोः कर्त्रादित्वेनोपादाने वेत्यर्थः। अनुकरणे दुःश्रवस्यादोषत्वं यथा स्मगवच्चुषमद्राक्षीदित्यादि कथयत्ययम्। शब्दमात्र-

यच्च नागानन्दे प्रशमाश्रयस्यापि जीमूतवाहनस्य मलयवत्यनुरागो दर्शितः । तत्र "अहो गीतमहो वादित्रमिति" अद्भुतस्यान्तरानिवेशनान्नैरन्तर्याभावान्न शान्तशृङ्गारयोर्विरोधः । एवमन्यदपि विज्ञेयम् । "पाण्डुक्षामं वदनं" इत्यादौ च पाण्डुतादीनामङ्गभावः करुणविप्रलम्भेऽपीति न विरोधः ।

**अनुकारे च सर्वेषां दोषाणां नैव दोषता ।**

सर्वेषां दुःश्रवत्वप्रभृतीनाम् । यथा ।

"एष दुश्च्यवनं नौमीत्यादि जल्पति कश्चन" ।

अत्र दुश्च्यवनशब्दोऽप्रयुक्तः ।

**अन्येषामपि दोषाणामित्यौचित्यान्मनीषिभिः ।**
**अदोषता च गुणता ज्ञेया चानुभयात्मता ॥**

अनुभयात्मता अदोषगुणात्मता । (ख)

इति साहित्यदर्पणे दोषनिरूपणो नाम सप्तमः परिच्छेदः ॥

---

(ख) अनुकरणे च्युतसंस्कारस्यादोषत्वं यथा पद्यैष च "गवित्याह सूत्रामानं यजेति च" । अत्र प्रथमपादे गोशब्दनिर्विभक्तिकतया च्युतसंस्कारत्वम् । द्वितीयपादे सूत्रामशब्दोऽप्रयुक्तो न दोषः । दुश्च्यवनशब्दोऽप्रयुक्तो न दोष इति शेषः । अदोषगुणता अदोषत्वगुणत्वञ्च रसादेर्निकर्षप्रकर्षबीजत्वाभावादुभयरूपम् ।

इति साहित्यदर्पणविवृतौ दोषनिरूपणे
सप्तमः परिच्छेदः ।

---

# अष्टमपरिच्छेदः ।

गुणानाह ।

**रसस्याङ्गित्वमाप्तस्य धर्माः शौर्यादयो यथा ।**

गुणाः यथा खल्वङ्गित्वमाप्तस्यात्मन उत्कर्षहेतुत्वात्

---

( क ) दोषान्निरूप्य गुणान्निरूपयति गुणानिति । काव्यलक्षणो-द्देशक्रमेणेति शेषः । रसस्येति अङ्गित्वं मुख्यत्वम् । एतच्च शब्दार्थयोः काव्यव्यवहारोपयोगित्वात् । शौर्यादय इत्यादिपदात् विद्याविनयादीनां ग्रहणम् । स्वरूपविशेषाविलक्षणविशेषणानि माधुर्य्यादयोऽपि गुण-शब्दवाच्या इत्यन्वयः । गुणपदस्य व्युत्पत्तिमाह स्वेति स्वं स्वकीयो रसः तस्य समर्पको व्यञ्जको यः पदसन्दर्भः पदकदम्बविशेषो वाक्यमिति यावत् तत्काव्यव्यपदेशः काव्यव्यवहारः तस्यौपयिकमुपयोगि यदानुगुण्य मानुकूल्यं तद्भाजः । रसस्यैव काव्यव्यवहारोपयोगित्वं तदुत्कर्षद्वारा गुणानामपि तदित्यवधेयम् । ननु गुणानां वामनादिभिः शब्दार्थधर्म-

---

(क) काव्यलक्षणकारिकोक्तोद्देशक्रमप्राप्तान् गुणान्निरूपयति गुणा-निति । रसस्येत्यनेन काव्यशरीरस्य शब्दार्थयोर्व्यवच्छेदः । अङ्गित्वमाप्त-स्येति श्लिष्टं यद्यथासम्भवं दृष्टान्तदार्ष्टान्तयोर्व्याख्यायते यथा चाल्विति लोके इति पूरणीयं आत्मन इति अङ्गित्वमाप्तस्येत्यस्य विशेष्यं काव्ये कविभणितौ चाङ्गित्वं विभावाद्यङ्गसमुदाययोगेन पूर्णत्वम् । एतेन खण्डरसे माधुर्य्यादीनामननुभूयमानत्वात् असम्भव इति सूचितम् । स्वरूपविशेषा विशेषणप्रभेदाः । माधुर्य्यादीनामन्यतमस्य काव्यत्वव्या-पकतया उत्कर्षहेतुत्वाद्गुणव्यवहारोपयिकं धर्मान्तरमाह स्वसमर्पकेति

शौर्यादयो गुणशब्दवाच्याः तथा काव्येऽङ्गित्वमाप्तस्य रसस्य धर्माः स्वरूपविशेषाः माधुर्यादयोऽपि । स्वसमर्पकपदसन्दर्भस्य काव्यव्यपदेशस्यौपायिकानुगुण्यभाज इत्यर्थः । यथा चैषां रसमात्रस्य धर्मत्वं तथा दर्शितम् ।

**एवं माधुर्य्यमोजोऽथ प्रसाद इति ते त्रिधा ।**

ते गुणाः । तत्र ।

**चित्तद्रवीभावमयो ह्लादो माधुर्य्यमुच्यते । (क)**

---

तदुक्तं किमिति भवता रसमात्रधर्मत्वमुच्यते इत्यत आह यथा चैषामिति एषां गुणानाम् । तथेति काव्यप्रकाशोक्तकाव्यलक्षणदूषणप्रकरणे किञ्च शब्दार्थयोः सगुणत्वविशेषणमनुपपन्नमित्यादिना । गुणान् विभजति माधुर्यमिति । माधुर्यमाह चित्तेति स्वार्थे मयट् । ह्लाद आनन्दविशेषः । द्रुतिकारणं माधुर्यमिति ।

---

स्वं रसस्तस्य समर्पको व्यञ्जको यः पदसन्दर्भो वाक्यं तस्य काव्यव्यपदेशस्य काव्यव्यवहारस्य औपयिकमुपयोगि यदानुगुण्यमाहकुल्यं तद्भाजो गुणशब्दवाच्या इत्यन्वयः । एतच्च गुणालङ्कारसंस्कृतयोः शब्दार्थयोः काव्यशब्दोऽयं वर्त्तते इति प्राचीनमतानुसारेणोक्तम् । स्वमते तु रसवत्त्वमेव काव्यव्यवहारौपयिकं न गुणवत्त्वम् । यद्वा रसवत्त्वं काव्यलक्षणं व्यवहारबीजन्तु गुणालङ्कारसंस्कृतशब्दार्थत्वमेवेति स्वमतेनेदमुक्तं एवञ्च काव्यव्यवहारप्रयोजकत्वे सति रसधर्मत्वं गुणलक्षणं रसत्वादिव्यावृत्त्यर्थं सत्यन्तं अलङ्कारव्यावृत्त्यर्थं विशेष्यम् । ननु गुणानां शब्दार्थधर्मत्वं प्राचीनैरुक्तं भवता तु कथं रसधर्मत्वमुच्यते इत्यत आह यथा चेति एषां गुणानां मात्रपदेन शब्दार्थयोर्व्यवच्छेदः दर्शितं दर्शयितुमारब्धं माधुर्यादिस्वरूपनिरूपणेनेवाभीषां रसधर्मत्वं व्यक्तौ भविष्यतीति भावः । गुणान् विभजते माधुर्यमिति चित्तद्रवीभावमय इति स्वार्थे

यत्तु केनचिदुक्तं "माधुर्य्यं द्रुतिकारणमिति" तन्न । द्रवीभावस्यास्वादस्वरूपाह्लादाभिन्नत्वेन तत्कार्य्यत्वाभावात् । द्रवीभावस्य स्वाभाविकानाविष्टत्वात्मककाठिन्यम-

---

(ख) काव्यप्रकाशोक्तं लक्षणं दूषयति यत्त्विति द्रुतिकारणमा-ह्लादो माधुर्य्यमिति । दूषयति तन्नेति । आस्वादो रसस्तस्य स्वरूपं स्वरूपविशेषश्चित्तनिर्वृतिरूप आह्लादः कार्य्यत्वाभावात् निरुक्ताह्लाद-जन्यत्वायोगात् । द्रवीभावस्याह्लादजन्यत्वाभावेन आह्लादस्यापि तज्ज-नकत्वाभाव इति भावः । गूढ़विषयसञ्चाराक्षमत्वमनाविष्टत्वम् । मन्युः शोको दैन्यं वा । क्रोधादीत्यादिपदात् जुगुप्सादिपरिग्रहः । विस्मय-हासादीत्यादिपदेन भयादिपरिग्रहः । उपहितमुपधानं सम्बन्धस्तदा-त्मको विक्षेप इत्यर्थः । यद्वा विस्मयादिभिरुपहित उपपादितो विक्षेपो विषयान्तराग्राहित्वम् । रत्यादीत्यादिपदेन हासादीनां ग्रहणम् । रत्यादेराकारः परिणामो ज्ञानं तेनानुविद्धः सम्बलितो

---

मयट् ह्लादः सुखसम्बलितप्रतीतिः आह्लादकत्वं माधुर्य्यं शृङ्गारे द्रुतिकारणमिति काव्यप्रकाशः । शृङ्गारादिष्वनुभवसिद्धमेवाह्लादजन-कत्वं तदेव माधुर्य्यं । तस्योत्कर्षाधायकत्वमाह द्रुतिकारणमिति ।

(ख) एतद्दूषयति यत्त्विति तत्कार्य्यत्वाभावात् माधुर्य्यजन्य-त्वासम्भवात् आह्लादातिरिक्तस्य द्रवीभावस्य निर्वक्तुमशक्यतया आह्लाद एव पर्य्यवसानं एवमाह्लादजनकत्वापेक्षया लघुन आह्लादस्यैव माधु-र्य्यपदस्य शक्यतावच्छेदकत्वमुचितमित्याह्लाद एव माधुर्य्यपदार्थ इति भावः । ननु द्रवीभावस्तावदास्वाद एव भवतोच्यते तस्य रसाभिन्नतया रसधर्मत्वं नोपपद्यते इत्यत आह द्रवीभावश्चेति काठिन्यादिप-रित्यागस्य रसोद्बोधहेतुत्वं दर्शयति स्वाभाविकेति मन्युः शोकः दीप्तत्वं दग्धप्रायत्वं रत्यादीत्यादिपदेन शोकप्रशमयोर्ग्रहणं रत्यादि-भिराकारैर्विषयैरनुविद्धः सम्बलितो य आनन्दोद्बोधो रसास्वादस्तेन स्

न्युक्रोधादिकृतदीप्तत्वविस्मयहासाद्युपहितविक्षेपपरित्यागेन रत्याद्याकारानुविद्धानन्दोद्बोधेन सहृदयचित्ताद्र्रप्रायत्वम् । तच्च । (ख)

---

आनन्दस्तस्योद्बोधेन रसास्वादेन आर्द्रप्रायत्वं निरतिशयानन्दसान्द्रत्वं तच्च स्वविषयकानुभवसम्बन्धेनानन्दभागित्वं तच्चानन्द एव पर्यवसन्नमित्यभिप्रायः । केचित्तु गुञ्जर्यादिरागवृत्तिरिव रसवृत्तिः कश्चिदेको धर्मोऽस्ति स एव द्रुतिरूपाह्लादस्य जनको माधुर्यमुच्यते इत्याहुस्तन्न । रसस्यैव तादृशाह्लादजनकत्वाङ्गीकारेणैव उपपत्तौ तद्वृत्तिधर्मान्तरकल्पनाया अन्याय्यत्वात् । तच्च माधुर्यञ्च अधिकमुत्कर्षातिशयजनकम् । क्रमादिति सम्भोगादीनां पूर्वपूर्वमपेक्षया उत्तरोत्तरत्र उत्कर्षातिशयजनकत्वमिति भावः । सम्भोगाभासादिष्वपीति अपि रेवार्थः एतस्य माधुर्यस्य ।

---

एवञ्च शृङ्गारकरुणशान्तरसोद्बोधानन्तरं जायमानो रत्याद्यविषयकः सहृदयचित्तद्रवीभावरूपकेवलानन्दसन्दोहानुभवो माधुर्यं तस्य जनकतासम्बन्धेन रससम्बन्धितया रसधर्मत्वमप्यतमेवेति भावः । केचित्तु रतिशोकप्रशमेषु गुञ्जयर्यादिरागवृत्तिरिव कश्चिदेको धर्मोऽस्ति स एव माधुर्यं येन सामाजिकानां चित्तं द्रवीभवति रत्यादीनां रसरूपतया परिणामेन तस्य रसवृत्तित्वमिति वदन्ति । तन्न तत्र तादृशधर्मसत्त्वे मानाभावात् न च द्रुतिरूपकार्यान्यथानुपपत्त्या तत्कल्पनमिति वाच्यं तस्य रसस्वभावेनैव सिद्धत्वात्तदर्थं धर्मान्तरकल्पनानौचित्यात् गुञ्जर्यादौ प्रत्यक्षसिद्ध एव तादृशधर्मः अन्ये तु शब्दवत्त्वमेव माधुर्यं काव्यधर्म इत्याहुस्तन्न अशब्दवेऽपि काव्ये माधुर्यस्योपलम्भात् । माधुर्यविषयानाह तच्चेति माधुर्यञ्चेत्यर्थः । सम्भोगापेक्षया करुणे तदपेक्षया विप्रलम्भे तदपेक्षया शान्ते अधिकं सातिशयमित्यर्थः । केचित्तु करुण इति विप्रलम्भविशेषणं तन्न "अश्रुपातादयस्तद्वद्द्रुतत्वाच्चेतसो मताः" इत्यनेन करुणेऽपि चित्तद्रवीभावस्याङ्गीकारेण माधुर्यस्वीकारात्

**सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात्।**

सम्भोगादिशब्दा उपलक्षणानि। तेन सम्भोगाभासादिष्वप्येतस्य स्थितिर्ज्ञेया यथा।

**मूर्ध्नि वर्गान्त्यवर्णेन युक्ताष्टठडढान् विना।**

---

(ग) माधुर्य्यव्यञ्जकान् वर्णादीनाह मूर्ध्नीति पुरस्तादित्यर्थः। युक्ता इति मूर्द्धस्थवर्गान्त्यसजातीयवर्णा इत्यर्थः। लघू वर्णान्तरयोगराहित्येन लघुप्रयत्नोच्चार्य्यौ न तु गुरुविपरीतौ। तथात्वे "अपसारय घनसारं कुरु हारं दूर एव किं कमलैरिति" काव्यप्रकाशोक्तं तदुदाहरणमसङ्गतं स्यात्। "स्वयं हाराकारा गलति जलधारा कुवलयादि-त्यादौ" चानुभवसिद्धस्य दीर्घरेफस्य माधुर्य्यव्यञ्जकत्वस्यापलापप्रसङ्गाच्च। तद्युक्तौ माधुर्य्यव्यञ्जने। अवृत्तिः समासाभावः अल्पवृत्तिरल्पसमासः।

---

अपसारय घनसारमित्यादौ" विप्रलम्भान्तरेऽपि माधुर्य्योपलम्भाच्च। एतच्च माधुर्य्यस्य।

(ग) माधुर्य्यव्यञ्जकान्याह मूर्ध्नीति वर्गान्त्यवर्णेन युक्ताः कादयो-मान्ता इत्यर्थः लघू विसर्गवर्णान्तरायुक्तावयुक्तान्तौ च न तु गुरुविपरीतौ "स्वयं हाराकारा गलति जलधाराकुवलयादित्यादौ अपसारय घन सारं कुरु हारं दूर एव किं कमलैरित्यादौ" दीर्घानुस्वारयोगेन गुरोरपि रेफस्य माधुर्य्यव्यञ्जकत्वदर्शनात्। केचित्तु लघू ह्रस्वान्तावित्याहुस्तन्न "स्मरः खर खलः कान्त इत्यादौ परस्परस्पर्द्धिवरस्वयम्बर इत्यादौ च" रेफस्य ह्रस्वान्तत्वेन माधुर्य्यव्यञ्जकत्वापत्तेः "पुरो रेवापारे गिरिरति दुरारोहशिखर इत्यादौ" ह्रस्वान्तत्वाभावेन माधुर्य्यव्यञ्जकतानुपपत्तेः। अवृत्तिः समासाभावः अल्पवृत्तिरदीर्घसमासः मधुरा दुःश्रववर्णाघटित-त्वेन मनोरमा रचना पदसन्दर्भः निरुक्तवर्णबहुला बहुतरनिष्ठुराक्षर-रहिता निःसमासा अल्पसमासा वा सुकुमारार्थप्रतिपादिका माधुर्य्य-

**टणौ लघू च तद्व्यक्तौ वर्णाः कारणतां गताः ॥**
**अवृत्तिरल्पवृत्तिर्वा मधुरा रचना तथा ।** (ग)

यथा ।

---

मधुरा मृदुपदानुप्रासादिरुचिरा रचना । "यथा मधुरया मधुबोधित-माधवी इत्यादि" । तथा माधुर्यव्यञ्जिका । अनङ्गेति कामस्य मङ्गल-भुवोऽभिमतसिद्धिस्थानानि तस्यानेत्रप्रान्तस्य भङ्ग्यो विक्षेपविशेषाः ।

(घ) लतेति गुञ्जन्तो मधुरं कूजन्तो मदान्धा अलिपुञ्जा भ्रमरास्तेषां यत्र तत् चपलयन् कम्पयन् दलितं प्रफुल्लं तरलयन् कम्पयन् रजोवृन्दं परागसमूहं विन्दन् लभमानः विरति विक्षिपति मकरन्दं पुष्परसम् । उदाहरणद्वये मूर्द्धस्ववर्णान्त्यवर्णानामल्पसमासस्य च माधुर्यव्यञ्जकत्वम् । असमासस्य यथा मानं विमुञ्च कल्याणि दासं मामनुकम्पय । विजहीहि दृशो रागमधरस्य च कम्पनम् । ओजोगुणमाह ओज इति चित्तविस्तारो वीरादिरसास्वादेन जायमानो विस्मयविशेषः । अत्रापि

---

व्यञ्जकेति तात्पर्य्यार्थः । माधुर्य्यमुदाहरति अनङ्गेति अनङ्गस्य मङ्गलभुवो जन्मस्थानानि तस्या अपाङ्गस्य नेत्रप्रान्तस्य भङ्ग्यो विक्षेपाः ।

(घ) लताकुञ्जमिति लतापदं सुरभिपुष्पलताबोधकतया सार्थकम् । अवृत्तेर्माधुर्यव्यञ्जकत्वं यथा "मुद्रितामिन्दुमालोक्य पद्मिनीं पश्य सुन्दरि । हन्त कान्तस्य विच्छेदे मधुरोऽपि न रोचते" । सुकुमारार्थप्रतिपादकरचनाया माधुर्य्यव्यञ्जकत्वं यथा "उचितं गोपनमनयोः स्तनयोः कनकाद्रिधर्मतस्करयोः । अवमानित विधुमण्डलमुखमण्डल गोपनं किमिति । ओजोगुणमाह ओज इति दीप्तत्वमोजः तत्र दीप्तत्वमाह चित्तेति उत्साहाद्याकारानुविद्धचमत्कारोद्बोधेन जायमान उत्साहाद्यविषयक चमत्कारोद्बोध इति तदर्थः । केचित्तु दीप्तत्वं कठुवर्णश्रवणजन्यश्रोतदुःखसम्मिश्रसुखविशेषः स एव चित्तविस्तार

"अनङ्गमङ्गलभुवस्तदपाङ्गस्य भङ्गयः ।
जनयन्ति मुहुर्यूनामन्तः सन्तापसन्ततिम्" ॥

यथा वा मम ।

"लताकुञ्जं गुञ्जन्मदवदलिपुञ्जं चपयलन्
समालिङ्गन्नङ्गं द्रुततरमनङ्गं प्रबलयन् ।
मरुन्मन्दं मन्दं दलितमरविन्दं तरलयन्-
रजोवृन्दं विन्दन् किरति मकरन्दं दिशि दिशि" ॥

**ओजश्चित्तस्य विस्ताररूपं दीप्तत्वमुच्यते ।**
**वीरबीभत्सरौद्रेषु क्रमेणाधिक्यमस्य तु ॥**

---

ओजो लक्षणोऽपि । तदन्तिमौ वर्गद्वितीयवर्गचतुर्थौ द्वयोरुपर्य्यधश्च । सरेफाविति वर्गस्यादितृतीयौ च तदन्तिमौ च घटनाबन्ध औद्धत्यशालिनी डम्बरा सा च संयुक्तवर्णबाहुल्येन भवति । चवर्गादिति व्याख्यातमिदं प्राक् । अत्र समासबाहुल्यडम्बरबन्धयोरोजोव्यञ्जकत्वं वर्गस्यादीत्युक्तवर्णस्य यथा "अनेन छिन्दता मातुः कण्ठं परशुना तव । बद्धस्पर्द्धः कृपाणोऽयं लज्जते मम भार्गव" । अत्र तृतीयपादे दकारयुक्तौ धकारौ ओजोव्यञ्जकौ । विरूढप्रौढ़विक्रम इत्यत्रासंसक्तौ ढकारौ । वस्तुतस्तु माधुर्य्यव्यञ्जकातिरिक्ता वर्णान्तरसंयुक्ताः द्वित्वा अन्येऽपि वर्णा ओजो-

---

इत्याहुः तन्न अनिष्ठुराक्षर प्रायबन्धव्यज्यमाने वीरादौ तदभावप्रसङ्गात् । चित्तविस्ताररूपदीप्तत्वजनकमोज इति काव्यप्रकाशः तन्न वीरादिभ्य एव जायमानदीप्तत्वस्यैव ओजःस्वीकारेणोपपत्तौ तज्जनकधर्म्मान्तरकल्पने मानाभावात् । ओजोविषयानाह वीरेति वीरापेक्षया वीभत्से तदपेक्षया रौद्रे ओजस आधिक्यमतिशयः रौद्रवीरे च निष्प्रतिभटमोजः वीभत्से तु माधुर्य्यलेशानुविद्धं हास्याद्भुतभयान-

अस्य ओजसः। अत्रापि वीरादिशब्दा उपलक्षणानि तेन वीराभासादावप्यस्यावस्थितिः।

**वर्गस्याद्यतृतीयाभ्यां युक्तौ वर्णौ तदन्तिमौ।**
**उपर्य्यधो द्वयोर्वा सरेफष्टठडढैः सह॥**
**शकारश्च षकारश्च तस्य व्यञ्जकताङ्गताः।**
**तथा समासबहुला घटनौद्धत्यशालिनी॥**

यथा "चञ्चद्भुजेत्यादि"। (घ)

---

व्यञ्जकाः। यथा "समरे भाति संरम्भादुद्यद्दिनकरद्युतिः। क्रुद्धाशक्तुषण्ड-सङ्काशलोचनो नृपपुङ्गव"। अत्र द्वितीयपादे संयुक्तवर्णत्रयमोजोव्यञ्जकम्। ओजोव्यञ्जकाक्षरघटितबहुतरपदसमासस्तादृशाक्षरसन्दोहघटितो बन्धश्च ओजोऽतिशयव्यञ्जकौ। "दीप्तवह्निचयोद्दीप्तनेत्रापीतद्विपद्बलः। चण्ड-ध्वानपरिध्वस्त हस्तिदानोऽस्त्यसौ युधि। उद्यद्दिनकरद्रक्तः प्रज्वल-ज्ज्वलनेक्षणः। भार्गवो नृपवर्गस्य मृत्युरेष पुरि स्थितः"।

---

केषु द्वयोः समावेशो ध्वनिसिद्धान्तसंग्रहोक्तरीत्या ज्ञेयः इति चण्डी-दासः। एतन्मते वीभत्सापेक्षया रौद्रवीरयोः ओजस आधिक्यम्। ओजोव्यञ्जकान् वर्णादीनाह वर्गस्येति सजातीयस्य विजातीयस्य वा इत्यर्थः तदन्तिमौ वर्गाद्यतृतीययोरन्त्यौ वर्गस्य द्वितीयचतुर्थौ सरेफाविति द्विवचनं प्रामादिकं। रेफयुक्तस्य यस्य कस्यापि वर्णस्य ओजोव्यञ्जकत्वा-देतदुपलक्षणं माधुर्य्यव्यञ्जकातिरिक्तो युक्तो विसर्गयुक्तश्च वर्ण ओजो-व्यञ्जकः अतएव उत्कृत्योत्कृत्य इत्यादौ यो यः पाञ्चालगोत्रे इत्यादौ च ओजोव्यञ्जकत्वमक्षतमेव टादयस्तु केवला अप्योजोव्यञ्जकाः समासो बहुल इति ओजोव्यञ्जक वर्णाघटितपदसमासाधिक्यमप्योजो-व्यञ्जकमिति पृथगुपादानं घटनापदसन्दर्भः औद्धत्यशालिनी उद्भटाक्षर-

**चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः।**
**स प्रसादः समस्तेषु रसेषु रचनासु च॥**

व्याप्नोति आविष्करोति। यथा।

**शब्दास्तद्व्यञ्जका अर्थबोधका श्रुतिमात्रतः।**

यथा।

"सूचीमुखेन सकृदेव कृतव्रणस्त्वं
मुक्ताकलाप! लुठसि स्तनयोः प्रियायाः।
बाणैः स्मरस्य शतशो विनिकृत्तमर्म्मा
स्वप्नेऽपि तां कथमहं न विलोकयामि"॥

---

(ङ) प्रसादं गुणमाह चित्तमिति। आविष्टं अधिकनिविष्टं तद्व्यञ्जकाः प्रसादव्यञ्जका रसवृत्तिः कश्चिद्धर्मः येन सामाजिकानां चित्तं विषयान्तरेभ्यो व्यवच्छिद्य स्वस्मिन्नेवातिनिविष्टं करोति माधुर्यौजसोर्जनकत्वसम्बन्धेनैव रसवृत्तित्वं प्रसादस्य तदतिरिक्तेनेत्यवधेयम्।

---

बहुला उद्भटार्थं प्रतिपादिका च। द्वितीयप्रकारसंग्रहाय एतदुपादानं सार्थकं। तेन "आपतन्तममुं दूरादूरीकृत पराक्रमः। बलोऽवलोकयामास मातङ्गमिव केशरी" त्यादावोजोव्यञ्जकत्वमुपपन्नम्।

( ङ ) प्रसादगुणमाह चित्तमिति य इति आस्वाद्यव्यङ्गेषु आस्वादाख्यः कश्चिदेको धर्म्मोऽस्ति येन व्यङ्ग्यानामास्वाद्यत्वं तदभावादनास्वाद्यत्वञ्चोपपद्यते स एव प्रसादाख्यो गुण इत्यर्थः तदुक्तं चण्डीदासेन चित्तं यो व्याप्नोति आविष्टं करोति स प्रासादनामा गुण इति अनलपक्षे व्यापनं संयोगानुकूलो व्यापारः गुणपक्षे त्वाह व्याप्नोतीति आविष्करोति व्यासङ्गनिराकरणेन निर्मलं करोति प्रसादयति चित्तं निर्मलीकरोति प्रसादपदव्युत्पत्तिलभ्योऽयमर्थः आविष्टं

**एषां शब्दगुणत्वञ्च गुणवृत्त्योच्यते बुधैः॥**

शरीरस्य शौर्य्यादिगुणयोग इवेति शेषः।

**श्लेषः समाधिरौदार्य्यं प्रसाद इति ये पुनः।**
**गुणाश्चिरन्तनैरुक्ता ओजस्यन्तर्भवन्ति ते॥**

ओजसि भक्त्या ओजःपदवाच्ये शब्दार्थधर्म्मविशेषे तत्र श्लेषो बहूनामपि पदानामेकपदवद्भासनात्मा। यथा। (ङ)

---

क्षतव्रणः क्षतच्छिद्रः सर्व्वं मनः तां प्रियाम्। एषां निरुक्तगुणानाम्। शब्देत्युपलक्षणम्। अर्थगुणमपि बोध्यम्। गुणवृत्त्या स्वाश्रयरसव्यञ्जकत्वरूपपरम्परासम्बन्धेन बुधैर्व्वामनादिभिः शौर्य्यादिगुणयोगः शौर्य्यादिगुणवत्त्वम्। अत्र स्वसमवाय्यात्मावच्छेदकत्वं परम्परासम्बन्धः।

---

करोतीति पाठे आश्रयनिष्ठं करोतीत्यर्थः। प्रसादविषयमाह समस्तेष्विति रसेषु काव्यात्मभूतेषु तेन भावादीनामपि गुणवत्त्वमुपपद्यते अन्यथा तत्र काव्यव्यवहारो न स्यात् रचनासु चेति सप्तम्यर्थो व्यञ्जकत्वं तेन समस्तरचनाव्यञ्जकेत्यर्थः ओजो माधुर्य्यवदस्य रचनाविशेषे व्यञ्जको नास्ति किन्तु झटित्यर्थसमर्पकपदघटिता रचनैव व्यञ्जिकेति प्रतिपादयितुमाह शब्दा इति तद्व्यञ्जकाः प्रसादव्यञ्जकाः। ननु गुणानां रसधर्मत्वस्वीकारे प्राचीनसम्मतशब्दार्थधर्म्मत्वमेषां कथमुपपद्यते इत्यत आह एषामिति माधुर्य्यादीनामित्यर्थः। शब्दगुणत्वं शब्दार्थधर्म्मत्वं गुणवृत्त्या आश्रयरसव्यञ्जकत्वरूपपरम्परासम्बन्धेन बुधैर्व्वामनादिभिः शौर्य्यादेरात्मधर्मस्य यथा शरीरवृत्तित्वं यथा वा स्थूलत्वादेः शरीरधर्मस्य आत्मवृत्तित्वं परम्परासम्बन्धेन तथेत्यर्थः। ननु गुणानां रसवृत्तित्वस्य निरुक्तपरम्परायाः सम्बन्धत्वस्य च कल्पने गौरवमतः शब्दार्थवृत्तित्वमेव कल्पयितुमुचितमिति चेन्न क्वचिन्नीरसे गुणाभिव्यञ्जकशब्दार्थयोः सत्त्वेऽपि माधुर्य्यादेरनुपलम्भात् कचित्तु सत्त्वेऽपि

"उन्मज्जज्जलकुञ्जरेन्द्ररभसास्फालानुबन्धोद्धतः
सर्वाः पर्वतकन्दरोदरभुवः कुर्वन् प्रतिध्वानिनीः।
उच्चैरुच्चरति ध्वनिः श्रुतिपथोन्माथी यथायन्तया
प्रायः प्रेङ्खदसङ्ख्यशङ्खधवला वेलेयमुद्गच्छति"॥

---

वामनाद्युक्तदशविधगुणानां स्वोक्तगुणव्यञ्जकादौ यथायथमन्तर्भावमाह श्लेष इति। भक्त्या लक्षणया ओजः पदवाच्ये ओजःपदप्रतिपाद्ये शब्दार्थधर्मविशेषे बन्धगाढ़त्वादौ अन्तर्भवन्ति अभिन्नतया वर्त्तन्ते। बहूनामिति सन्धिवशादेकपदवत् प्रतीतिरूपः।

(च) उन्मज्जदिति इयं वेला समुद्रजलं तथोद्गच्छति यथायं

---

रसत्वेनैव तदुपलम्भाच्च रसान्वयव्यतिरेकानुविधायित्वेन रसहत्तित्व-कल्पनस्यैवोचितत्वात्। ननु वामनादिभिः श्लेषादयो दश शब्दगुणा ओज आदयो दश अर्थगुणा उक्ताः भवद्भिस्तु माधुर्य्यादयस्त्रय एव कथमुच्यन्ते इत्यतस्तान् यथासम्भवं स्वोक्तगुणव्यञ्जकदोषाभावालङ्कार-गुणीभूतव्यङ्ग्येष्वन्तर्भावयन् प्रथमं शब्दगणान् स्वोक्तगुणव्यञ्जक दोषा-भावयोरन्तर्भावयति श्लेष इति भक्त्या लक्षणया ओजःपदवाच्ये ओजः पदप्रतिपाद्ये चित्तविस्ताररूपे ओजस्यन्तर्भावासम्भवादिति भावः शब्दधर्मविशेषे बन्धगाढ़त्वरूपे तत्रार्थपदं चिन्त्यं अर्थधर्मे प्रौढ़त्वरूप ओजसि शब्दश्लेषादीनामन्तर्भावासम्भवात् एकपदवदिति सन्ध्यादिवशात् अनेकपदानां उच्चारणकालभेदः स्पष्टं नावभासते इति भावः। केचित्तु समासवशात् इति व्याचक्षते तन्न वामनोपदर्शितस्य समासासत्त्वेऽपि "अस्त्युत्तरस्यां दिशि देवतात्मा" इति श्लेषोदाहरणस्य समासवत्त्वेऽपि "तड़िद्कपिलमाकाशमित्यादौ" श्लेषप्रत्युदाहरणस्य वासङ्गत्यापत्तेः "अस्ति भवमस्ति कौतुकमस्ति च मन्दाक्ष्यमस्ति चोत्कण्ठा। बालानां प्रणयिजने भावः कोऽप्येष नैकरस इति" प्राचीनान्तरदत्तोदाहरणस्य असंग्रहापत्तेश्च।

अयं बन्धवैकट्यात्मकत्वादोज एव। समाधिरारोहावरोहक्रमरूपः। आरोह उत्कर्षः। अवरोहोऽपकर्षस्तयोः क्रमो वैरस्यानावहो विन्यासः। यथा "चञ्चद्भुजेत्यादि"। अत्र पादत्रये क्रमेण बन्धस्य गाढ़ता। चतुर्थपादे त्वपकर्षः। तस्यापि च तीव्रप्रयत्नोच्चार्य्यतया ओजस्विता।

---

ध्वनिरुच्चैरुच्चरति। कीदृक् उन्मज्जन्तो ये जलकुञ्जरेन्द्रा जलहस्तिश्रेष्ठाः तेषां रभसास्फालानुबन्धेन वेगजनितस्फालातिशयेन उद्धत उत्कटः प्रतिध्वानिनीः प्रतिशब्दयुक्ताः श्रुतेः श्रवणस्य पन्था विषयान्तरग्रहणं तस्य उन्माथी नाशकः। वेला कीदृशी प्रेङ्खन्त उपरिचरन्तो येऽसङ्ख्याः शङ्खाः शङ्खकपालानि तैर्धवला। अत्र समस्तानामसमस्तानां वा बहूनां पदानां सन्धिवशादेकत्वारोपः। अयम् श्लेषः सन्धिबाहुल्येन वर्णानां संयुक्तवर्णवत् गुरुप्रयत्नोच्चार्य्यतया बन्धस्य वैकट्यं भवतीति भावः। उत्कर्षो गाढत्वमपकर्षः शैथिल्यम्। वैरस्या-

---

(च) उन्मज्जदिति प्रलयकालीनसमुद्रवर्णनमिदं यथायं सिन्धुसम्बन्धी ध्वनिरुच्चरति तथेयं वेला विकृतसिन्धुजलमुच्छलति "अब्ध्यम्बुविकृतौ वेला कालमर्य्यादयोरपीत्यमरः" उभयोः साधर्म्यमाह उन्मज्जदिति उन्मज्जतां जलकुञ्जरेन्द्राणां रभसेन वेगेन य आस्फालो जलाभिघातजन्यशब्दस्तस्यानुबन्धेन उद्धत उद्भटः पक्षे एषां रभसेन हर्षेण य आस्फाल उत्थानव्यापारातिशयः तस्यानुबन्धेन आरम्भेण उद्धता उन्नता प्रतिध्वानिनीः प्रतिशब्दान्विताः पक्षे प्रतिध्वानिनीः शब्दनिरुद्धा जलपूरणेन निःशब्दाः कुर्वती श्रुतेः पन्थाः शब्दग्रहणसामर्थ्यं तस्य उन्माथी नाशकः पक्षे श्रुतीनां वेदानां पथाम् उन्माथिनी वेला कीदृशी प्रायेण सरणेन प्रेङ्खन्तः उच्छलन्तो ये शङ्खास्तैर्धवला। अयं श्लेषो विकटबन्धस्वाभाव्यात् उत्कर्षाधायकत्वात् गुणत्वमिति भावः। उत्कर्षो गाढ़बन्धत्वमप-

उदारता विकटत्वलक्षणा। विकटत्वञ्च पदानां नृत्यत्प्रायत्वम्।

यथा।

"सुचरणविनिविष्टैर्नूपुरैर्नर्त्तकीनां
झणितिरणितमासीत्तत्र चित्रं कलञ्च"। (च)

---

नावहः सामाजिकानां खेदाजनकः। विन्यासो ग्रथनम्। केचित्तु यत्र पद्ये प्रतिपादं प्रथममुत्कर्षः पश्चादपकर्षः अतएवारोहावरोहक्रमरूपः समाधिः। चञ्चद्भुजेत्यादौ प्रतिपादमुत्कर्षानन्तरमपकर्षः द्वितीयपादे चरमवर्णस्य गाढ़त्वेऽपि लघुप्रयत्नोच्चार्य्यतया अपकर्ष इत्याहुः। उत्कर्षापकर्षयोरुत्कर्षस्यैव प्राधान्यं प्रधानेन व्यपदेशा भवन्तीति न्यायजो व्यवहार इति भावः। नृत्यत्प्रायत्वं गुरुप्रयत्नोच्चार्य्यतयाड़म्बरत्वमेव। लघुवर्णघटितपदानामपि समभिव्याहारवशेन गुरुप्रयत्नोच्चार्यत्वमस्ति। सुचरणेति।

---

कर्षो बन्धशैथिल्यं उत्कर्षमध्ये अपकर्षोपादाने अपकर्षमध्ये चोत्कर्षोपादाने च वैरस्यं यत्र न भवतीत्यर्थः। ननु क्रमनिबन्धयोरुत्कर्षापकर्षयोः समावेशः समाधिरिति फलितं तत्रापकर्षस्य कथमोजस्यान्तःर्भावः इत्यत आह तस्यापीति चतुर्थपादस्यापीत्यर्थः। पद्यस्य पादे पादे आरोहारोहक्रमः सम्भवतीति तत्रारोहः पूर्वोऽवरोहो यथा "निरानन्दः कौन्दे मधुनि मधुरो बालबकुले न साले आलम्बो लवमपि लवङ्गे न रमते। प्रियङ्गौ नासङ्गं रचयति न चूते विरमति स्मरल्लक्ष्मीलीला कमलमधुपानं मधुकरः" लवङ्ग इति लघुप्रयत्नोच्चारणेनावरोहः। अवरोहः पूर्वं आरोहो यथा अयमुदयति मुद्रेति। नृत्यत्प्रायत्वमिति प्रत्येकं पदच्छेदादिति। झणितीति अव्यक्तशब्दानुकरणं कलमिति रणितमित्यनेनान्वितम्।

अत्र च तन्मतानुसारेण रसानुसन्धानमन्तरेणैव शब्दप्रौढोक्तिमात्रेणोजः । प्रसाद ओजोमिश्रितशैथिल्यात्मा ।

यथा ।

"यो यः शस्त्रं बिभर्त्ति स्वभुजगुरुमदः पाण्डवीनां चमूनां
यो यः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतो वा ।
यो यस्तत्कर्म्मसाक्षी चरति मयि रणे यश्च यश्च प्रतीपः
क्रोधान्धस्तस्य तस्य स्वयमिह जगतामन्तकस्यान्तकोऽहम्" ॥

**माधुर्य्यव्यञ्जकत्वं यदसमासस्य दर्शितम् ।**
**पृथक् पदत्वं माधुर्य्यं तेनैवाङ्गीकृतं पुनः ॥**

---

(छ) ननु वीरादिरसे ओजः सम्भवति कथमत्रौज इत्यत आह तन्मतानुसारेणेति । ओजो मिश्रितेति शैथिल्यं लघुप्रयत्नोच्चार्य्यत्वबाहुल्येनानुद्भटत्वम् । "तेजः क्षमा वा नैकान्तं कालज्ञस्य महीपतेः । नैकमोजः प्रसादो वा रसभावविदः कवेरिति माघे" । प्रसादः शैथिल्यमेवेत्यवधेयम् । यो य इति द्रोणवधे भूतेऽश्वत्थाम्नः क्रोधोक्तिरियम् । पाञ्चालेन धृष्टद्युम्नेन द्रोणो हत इति पाञ्चालगोत्रे क्रोधातिशयः । अधिकवया वृद्धः । गर्भशय्यां जरायुं गतो गर्भस्थ इति यावत् ।

---

(ज) नन्वत्र वीरादिरसाभावादोज एव नास्ति तद्व्यञ्जक एतदीयबन्धगाढत्वे उदारतायाः कथमन्तर्भाव इत्यत आह तन्मतानुसारेणेति ये गुणानां शब्दार्थधर्मत्वमेव वदन्ति तन्मतेनेत्यर्थः । शब्दप्रौढोक्तिमात्रेण ओजो व्यवह्रियते इति शेषः तथा च प्रकृते योग्यतासाद्गुण्यैव बन्धगाढत्वस्य ओजो व्यञ्जकत्वमिति भावः । प्रसाद इति समाधौ सोक्ते तत्पादे ओजःप्रासादयोरन्यतरस्य पुनरुन्मज्जनं नास्ति अत तूभयोर्निमज्जनोन्मज्जने ... स्वपक्षः । तदुक्तं ...

यथा। "श्वासान्मुञ्चतीत्यादि"।

**अर्थव्यक्तेः प्रसादाख्यगुणेनैव परिग्रहः।**

**अर्थव्यक्तिः पदानां हि झटित्यर्थसमर्पणम्॥(झ)**

स्पष्टमुदाहरणम्।

**ग्राम्यदुःश्रवतात्यागात्कान्तिश्च सुकुमारता।**

अङ्गीकृतेति सम्बन्धः। कान्तिरौज्ज्वल्यम्। तच्च हालिकादिपदन्यासवैपरीत्येनालौकिकशोभाशालित्वम्। अनयोरुदाहरणे स्पष्टे।

---

तत्कर्मसाची मल्लिहेत्वधानुमत्या व्यभ्यादिः। प्रतीपः प्रतिकूलः। अन्तकस्येत्यनन्तरमपिकारो बोध्यः। अत्र प्रतिपादं मध्यवर्णानां शैथिल्यं। वर्णितमस्माभिरिति शेषः। तेनैव निरुक्तमाधुर्यव्यञ्जकेनैव। प्रसादाख्यगुणेन प्रसादाख्यव्यञ्जकेन। अर्थसमर्पणसमर्थप्रत्यानयम्।

(ज) ग्राम्येति ग्राम्यत्वत्यागात् कान्तिदुःश्रवत्वत्यागात् सुकुमारतेत्यन्वयः। हालिकादीति आदिपदात् प्राकृतनरमात्रग्रहणम्। हालिकादिप्रयुज्यमानानां पदानां भल्लगल्लादिशब्दानां हालिकादिसाधारणबोधजनकानां "शुष्कोवृक्षस्तिष्ठत्यग्र इत्यादीनाञ्च विन्यासः प्रयोगस्तस्य वैपरित्येनाभावेन अलौकिकशोभा रसालङ्कारादिकृतवैचित्र्यं तद्वत्त्वमित्यर्थः। एवञ्च ग्राम्यत्वाभावे सति रसालङ्कारादिवैचित्र्यं कान्तिरिति

---

"संपृक्तौखल्वोजःप्रसादौ नदीवेलिकावद्वहेते" इति। योय इति व्याख्यातमिदं प्राक्।

(ज) वर्णितमिति अस्माभिरिति शेषः। श्वासानिति अत्र पुञ्जावल्लरीति प्राणसमानेति च समासत्वेऽपि पृथक् पदत्वस्य दीर्घसमासराहित्ये तात्पर्यात् न दोषः। यद्वा "बालेनाथ विमुञ्च

**क्वचिद्दोषस्तु समता मार्गाभेदस्वरूपिणी ।**
**अन्यथोक्तगुणेष्वस्या अन्तःपातो यथायथम् ॥**

---

फलितम् । न तु ग्राम्यत्वत्यागमात्रं एवौज्ज्वल्यम् । अन्यथा चित्र-"भानुरयमुज्ज्वलकान्तिः शेखरे लसति भूमिधरस्येत्यादावपि" कान्तिः स्यात् । "कन्ये कामयमानं मां न त्वं कामयसे कथमित्यादौ" ग्राम्यत्वरतिशृङ्गाररसानुप्रासालङ्कारसत्त्वेऽपि कान्तिवारणाय सत्यन्तम् । एतयोरुदाहरणे यथा मम । "स्वान्तं तन्वि तवानुरागमृदुलं हन्त्याशुमे मन्मथस्त्वच्चित्तन्तु विरागरूक्षमशती वेद्धुं न शक्नोत्यसौ । याचे त्वामिदमेव यच्छृणु पुनः क्रूराय तस्मै न तद्भ्रूतचापं सखि नासिकां सुनिशितं नाशीकमप्यात्मनः । दोलम्बावलिकूजितं बहु जितं कान्ते तवानुग्रहान्नैवामी गलिता वनप्रियवधूसम्बावटङ्कामया । नाशङ्के मलयानिलान्नच विधोराराधनं भावये वामायां त्वयि तावदद्य दयिते तानि प्रतीपानि मे" । यदि तु ग्राम्यत्वाभावेनैव शोभाविशेषो जन्यते इत्यङ्गीक्रियते तदा यथाश्रुतमेव सम्यक् । अन्यथा दोषत्वासम्भाव-

---

मानिनि रूषं दोषान्मया किं कृतं खेदाखासु न मेऽपराध्यति भवान् सर्वेऽपराधा मयि । तत्रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते नन्वेतन्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते" एतदुदाहरणं बोध्यम् प्रसादाख्यगुणेन प्रसादगुणव्यञ्जकेन हालिकादीत्यादिना। हालिकादिपरिग्रहः हालिकानि साधारणप्रसिद्धार्थकपदेत्यर्थः स्पष्ट इति क्रमेण यथा "ताम्बूल भृतगल्लोऽयं भल्लं जल्पति मानवः । विपर्य्ययस्तु ताम्बूल भृतगल्लोऽयं भल्लं जल्पति मानुषः" अत्र गल्लभल्लमानुषशब्दा ग्राम्याः । "आनन्दमियमायातु कदाकामवशम्वदा । विपर्य्ययस्तु कान्तार्थं मियमायातुमिति" क्वचिदिति सुकुमारवत्त्वमध्ये उद्धतार्थोपस्थितौ प्रौढ़त्वमध्ये सुकुमारार्थोपस्थितौ चेत्यर्थः मार्गस्य रीतेः कभेदोऽ-

मसृणेन विकटेन वा मार्गेणोपक्रान्तस्य सन्दर्भस्य तेनैव परिनिष्ठानं मार्गाभेदः स च क्वचिद्दोषः। तथा हि। (ज)

"अव्यूढाङ्गमगूढपाणिजठराभोगश्च बिभ्रद्वपुः
पारीन्द्रः शिशुरेष पाणिपुटके सम्मातु किन्तावता।
उद्यद्दुर्द्धरगन्धसिन्धुरशतप्रोद्दामदानार्णव-
स्रोतः शोषणरोषणात् पुनरितः कल्पाग्निरल्पायते"॥

---

नार्या। उक्तगुणेषु उक्तगुणव्यञ्जकेषु अन्तःपातोऽन्तर्भाव। यथायथं यथासम्भवम्। मसृणेन सुकुमारेण विकटेन उद्भटेन मार्गेण बन्धेन उपक्रान्तस्य आरब्धस्य सन्दर्भस्य महावाक्यविशेषस्य तेनैव उपक्रान्तेनैव परिनिष्ठानं समापनम्। सन्दर्भस्येत्युपलक्षणम्। एकवाक्येऽपि समता बोध्या।

(झ) अव्यूढाङ्गमिति अव्यूढानि अपरिणतानि अङ्गानि करचरणादीनि यस्य तत्। अगूढोऽनिष्पन्नः पाणिजठरस्याभोगः परिपूर्णता यत्र तत्। पारीन्द्रः सिंहः। "कण्ठीरवस्तु पारीन्द्रः केशरी गजमाचलेति हारावली"। सम्मातु मानं प्राप्नोतु तावताक्षुद्रशरीरकत्वेन किं न्यूनत्वमपितु न। उद्यत् उद्गलत् अस्य स्रोत

---

परित्यागः तत्स्वरूपेत्यर्थः अन्यथा प्रक्रान्तमार्गायोग्यार्थानुपस्थितौ उक्तगुणेषु प्राचीनोक्तमाधुर्यसौकुमार्य ओजःसु यथायथमिति सुकुमारमार्गाभेदस्य माधुर्यसौकुमार्ययोः प्रौढमार्गाभेदस्य त्वोजसीत्यर्थः मसृणेन सुकुमारेण उपक्रान्तस्य आरब्धस्य सन्दर्भस्य प्रबन्धस्य तेनैव उक्तमार्गेणैव परिनिष्ठानम् समाप्तिः स मार्गाभेदः।

(झ) मार्गाभेददोषत्यागस्य गुणत्व मुदाहरति अव्यूढेति अप्रौढावयवमित्यर्थः। अगूढो अजातपाणिजठरस्याभोगः परिपूर्णता यत्र पारीन्द्रः सिंहः "कण्ठीरवस्तु पारीन्द्रः केशरी गजमोहन इति

अत्रोद्धतेऽर्थे वाच्ये सुकुमारबन्धत्यागो गुण एव अनेवंविधस्थले माधुर्य्यादावित्यन्तःपातः । यथा "लताकुञ्जं गुञ्जदित्यादि" ।

**ओजः प्रसादो माधुर्य्यं सौकुमार्य्यमुदारता ।**
**तदभावस्य दोषत्वात् स्वीकृता अर्थगा गुणाः ॥**

ओजः साभिप्रायत्वरूपम् । प्रसादोऽर्थवैमल्यम् । माधुर्य्यमुक्तिवैचित्र्यम् । सौकुमार्य्यमपारुष्यम् । उदारता अग्राम्यत्वम् । एषाञ्च पञ्चानामप्यर्थगुणानां यथाक्रममपुष्टार्थाधिकपदानवीकृतामङ्गलरूपाश्लीलग्राम्यतानां निराकरणेनैवाङ्गीकारः । स्पष्टान्युदाहरणानि ।

---

इत्यनेन सम्बन्धः । गन्धसिन्धुरो गन्धहस्ती यस्य मदगन्धेन प्रतिगजाः पलायन्ते सः दानार्णवो मदसमुद्रस्तस्य स्रोतो धारा तस्य शोषणं शोषकम् रोषणं यस्य तस्मात् इतः पारीन्द्रशिशोः अल्पायते तुच्छो भवति । अर्थे वाच्ये सुकुमारसन्दर्भान्तःपातिनोऽस्य पद्यस्य समतानुरोधेन सुकुमारपदैर्घटने वर्णप्रातिकूल्याख्यदोष एव स्यात् । गुण इति अर्थस्य औद्धत्यव्यञ्जकत्वादिति भावः । अनेवमिति यत्र वर्णनीयविशेषानुरोधेन प्रक्रान्तमार्गत्यागो नास्ति तत्रेत्यर्थः । माधुर्य्यादावित्यादिपदात् ओजोग्रहणम् । माधुर्य्यव्यञ्जके ललितबन्धे ओजोव्यञ्जके उद्धतबन्धे चेत्यर्थः ।

---

हारावली" । संप्रति इयत्तां प्राप्नोतु तावता अप्रौढाङ्गत्वादिना किं न किमपि लघुत्वमित्यर्थः त्रुटेरभावमाह उद्यदिति उद्यज्जायमानं दुर्द्धरस्य गन्धसिन्धुरघातस्य मत्तहस्तिसमूहस्य प्रोद्दामदानार्णवप्रौढमदजलनिधिप्रवाहस्य शोषणं यस्मात् तादृशं रोषणं यस्य तस्मात् इतः पारीन्द्रशिशोः कल्पाग्निः प्रलयकालीनाग्निः अल्पायते

**अर्थव्यक्तिः स्वभावोक्त्यलङ्कारेण तथा पुनः।**
**रसध्वनिगुणीभूतव्यङ्ग्याभ्यां कान्तिनामकः॥**

अङ्गीकृत इति सम्बन्धः। अर्थव्यक्तिर्वस्तुस्वभावस्फुटत्वम्। कान्तिर्दीप्तरसत्वम्। स्पष्टे उदाहरणे।

**श्लेषो विचित्रतामात्रमदोषः समतापरम्।**

श्लेषः क्रमकौटिल्यानुल्वणत्वोपपत्तियोगरूपघटनात्मा। तत्र क्रमः क्रियासन्ततिः। विदग्धचेष्टितं कौटिल्यम्।

---

लताकुञ्ज इत्यादि पदात् चञ्चद्भुजेत्यादि ग्रहणम्। श्लेषादीनां दशानां अर्थगुणत्वमपि प्राचीनैरङ्गीकृतानापि यथासम्भवं दोषाभावादावन्तर्भावयति ओज इति तदभावस्य ओजः प्रभृतेरभावस्य। स्वीकृता अस्माभिरितिशेषः। उपपादयति ओज इति साभिप्रायत्वं विशेषणानां प्रकृतोपयोगित्वेन वक्तुरभिप्रेतत्वम्। अर्थस्य वाक्यार्थस्य। वैकल्यमनतिप्रयोजननिरर्थकपदार्थसम्बन्धरूपमलराहित्यम्। उक्तारेकार्थप्रतिपादकस्यानेकशब्दस्य वैचित्र्यं विरूपत्वम्। वाक्यार्थस्यामङ्गलाव्यञ्जकत्वमपारुष्यम्। अपुष्टार्थेति अन्त्यःस्यतान्त्ययस्य प्रत्येकान्वयादपुष्टार्थत्वादीनामित्यर्थः। स्पष्टानीति दोषपरिच्छेदेऽपुष्टार्थत्वादीनां पञ्चानां

---

तुच्छो भवति "यस्योपसदगन्धेन हस्तिनो भयविह्वलाः। दूरादेव पलायन्ते गन्धहस्ती स उच्यते" माधुर्यत्रादावित्यनेन सौकुमार्य्योजसोर्ग्रहणं ओजोविपर्य्यासः सौकुमार्य्यं तच्च दीर्घसमासराहित्येन पुरुषवर्णानां त्यागेन च भवति एवञ्च सुकुमारमार्गाभेदस्य माधुर्य्यसौकुमार्य्यत्रयोरन्तःपात इति भावः। इदानीमोजःप्रभृतीनां दशविधार्थगुणानां दोषाभावादिभिरङ्गीकारमगुणत्वञ्च यथायथमुपपादयति ओज इति तदभावस्य ओजः प्रभृति गुणपञ्चकाभावस्य कस्माभिर्ही-

अप्रसिद्धवर्णनाविरहोऽनुल्वणत्वम् । उपपादकयुक्तिविन्यास उपपत्तिः । एषां योगः सम्मेलनं स एव रूपं यस्या घटनायास्तद्रूपः स्तेषो वैचित्र्यमात्रम् । (झ)

अनन्यसाधारणरसोपकारित्वातिशयविरहादिति भावः । यथा ।

"दृष्ट्वैकासनसंस्थिते प्रियतमे इत्यादि" ।

अत्र दर्शनादयः क्रियाः । उभयसमर्थनरूपं कौटिल्यम् । लोकसंव्यवहाररूपमनुल्वणत्वम् । "एकासनसंस्थिते, पश्चादुपेत्य, नयने निमील्य, ईषद्वक्रितकन्धर, इति

---

यान्युदाहरणानि दत्तानि तद्विपरीतानीत्यर्थः । दीप्तरसत्वं व्यक्तरसत्वं रसस्य प्राधान्याप्राधान्याभ्यां ध्वनिगुणीभुतव्यङ्ग्यव्यपदेशः । विचित्रता श्लोटविस्मयजनकप्रतीतिविषयत्वम् । घटना अर्थानां मेलनं विचित्रतामात्रं न तु गुणत्वम् ।

(ज) अत्र हेतुमाह अनन्येति गुणानामसाधारणरसोपकारप्रयोजकत्वनियमादिति भावः । दृष्ट्वैकासनेत्युदाहरणं रसपरिच्छेदे-नायिकाप्रकारकथनप्रकरणे दत्तम् । तत्रैव मया व्याख्यातम् । उभय समर्थनं प्रियतमायाः प्रीणनमन्यस्याः प्रतारणम् तयोः समर्थनं सङ्घटनम् । लोकव्यवहाररूपं लोकव्यवहारप्रसिद्धत्वरूपम् । उपपादकानि स्वाभिमतार्थसम्पादकानि । अनेन निरुक्तश्लेषेण । वाच्यस्य

---

घाभावत्वेन अङ्गीकृता इति भावः अर्थप्रौढ़िरोज इति प्राचीनलक्षणं सा च पञ्चविधा "पदार्थे वाक्यरचना वाक्यार्थे च पदाभिधा प्रौढ़िर्व्याससमासौ च साभिप्रायत्वमस्य च" तत्राद्यप्रकारचतुष्टयस्य वैचित्र्यमात्रप्रयोजकत्वेन गुणाभावं अग्रे दर्शयिष्यति चरमप्रकारन्तु दोषाभावत्वेनैव । मंगटङ्गाति ओज इति ।

चोपपादकानि एषां योगः। अनेन च वाच्योपपत्तिग्रहण-व्यग्रतया रसास्वादो व्यवहितप्राय इत्यस्यागुणता समता च। प्रक्रान्तप्रकृतिप्रत्ययविपर्य्यासेनार्थस्य विसम्वादिता विरहः। स च प्रक्रमभङ्गरूपदोषविरह एव। स्पष्टमुदाहरणम्।

न गुणत्वं समाधेश्च

समाधिश्चायोन्यन्यच्छायायोनिरूपद्विविधार्थदृष्टिरूपः। तत्रायोनिरर्थो यथा।

"सद्योमुण्डितमत्तहूणचिबुकप्रस्पर्द्धि नारङ्गकम्"।

अन्यच्छायायोनिर्यथा।

"निजनयनप्रतिविम्बैरम्बुनि बहुशः प्रतारिता कापि।
नीलोत्पलेऽपि विमृशति करमर्पयितुं कुसुमलावी"॥

अत्र नीलोत्पलनयनयोरतिप्रसिद्धं सादृश्यं विच्छित्तिविशेषेण निबद्धम्। अस्य चासाधारणशोभानाधायकत्वान्न गुणत्वं किन्तु काव्यशरीरमात्रनिवर्त्तकत्वम्। (अ)

---

प्रियतमाचुम्बनस्य। उपपत्तिरुपपादकयुक्तिस्तस्याग्रहणे अनुसन्धाने व्यग्रतया सामाजिकानामितिशेषः। विसम्वादिता विजातीयत्वप्रतिभासः। हूणोम्लेच्छविशेषः। मत्तो मदिरादिभक्षणेन तस्य सुखस्यातिताम्रत्वादिति भावः। प्रस्पर्द्धि तुल्यम्। नारङ्गकं नागरङ्गम् पक्वमिति बोध्यम्। कुसुमलावी मालाकारी विच्छित्तिविशेषेण वैचित्र्यविशेषप्रयोजकत्वेन। अस्य निरुक्तसमाधेः। काव्यशरीरस्य अर्थस्य निर्वर्त्तकत्वं निष्पादकत्वम्। मात्रपदेन रसस्यासाधारणशोभाव्यवच्छेदः।

क्वचिच्चन्द्रमित्येकस्मिन् पदार्थे वक्तव्ये "अत्रेर्नयनसमुत्थं ज्योतिरिति" वाक्यवचनम्। क्वचित् "निदाघशीतलाहिमकालोष्णसुकुमारशरीरावयवा योषिदिति" वाक्यार्थे वक्तव्ये "वरवर्णिनीति" पदाभिधानम्। क्वचित् "एकस्य वाक्यार्थस्य किञ्चिद्विशेषनिवेशादनेकैर्वाक्यैरभिधानमित्येवं रूपो-व्यासः। क्वचिद्बहुवाक्यप्रतिपाद्यस्यैकवाक्येनाभिधानमित्येवं रूपः समासश्च" इत्येवमादीनामन्यैरुक्तानां न गुणत्वमुचितम् अपि तु वैचित्र्यमात्रावहत्वम्।

**तेन नार्थगुणाः पृथक्।**

तेनोक्तप्रकारेण। अर्थगुणा ओजःप्रभृतयः प्रोक्ताः।(ट)

इति साहित्यदर्पणे गुणविवेचनो नामाष्टमः परिच्छेदः॥

---

(ट) प्रौढ़िरोजः प्रौढ़िश्च "पदार्थे वाक्यरचना वाक्यार्थे च पदाभिधा। प्रौढ़िर्व्याससमासौ च साभिप्रायत्वमस्य चेति वामनोक्तानामर्थगुणानां पञ्चप्रकाराणामोजसामन्तिमः प्रकारं प्रागेव दूषितवान् इदानीं तस्यैव प्रकारचतुष्टयं दूषयति क्वचिच्चेति। अत्रेर्ब्रह्मपुत्रस्य मुनिविशेषस्य। अत्रेर्नयनाच्चन्द्र उत्पन्न इति पौराणिकी वार्त्ता। वरवर्णिनीपदस्य तादृशवाक्यार्थे परिभाषितवाक्यत्वादिति भावः। व्यासो यथा। "अयं नानाकारो भवति सुखदुःखव्यतिकरः सुखं वा दुःखं वा भवति न भवत्येव च ततः। पुनस्तस्मादूर्द्ध्वं भवति सुखदुःखं किमपि तत्पुनस्तस्मादूर्ध्वं भवति न च दुःखम् न च सुखम्"। समासो यथा। "ते हिमालयमामन्त्र्य पुनः प्रेक्ष्य च शूलिनम्। सिद्धञ्चास्मै निवेद्यार्थं तद्विसृष्टाः खमुद्ययुः" इति। ननु शब्दार्थशोभाधायकत्वेनैव ओजःप्रभृतीनां गुणत्वमङ्गीकरणीयमितिचेन्न। तेषां ये दोषाभावरूपत्वमना-

# नवमः परिच्छेदः ।



अथोद्देशक्रमप्राप्तमप्यालङ्कारनिरूपणं बहुवक्तव्यत्वेनो-(क) ल्लङ्घ्य रीतिमाह ।

**पदसङ्घटना रीतिरङ्गसंस्थाविशेषवत् ।**
**उपकर्त्री रसादीनाम् ।**

रसादीनामर्थात् शब्दार्थशरीरस्य काव्यस्यात्मभूतानाम् ।

**सा पुनः स्याच्चतुर्विधा ।**
**वैदर्भी चाथ गौड़ी च पाञ्चाली लाटिका तथा ॥**

---

स्तत्वाव्याप्तेः । दोषाभावस्यापकर्षप्रयोजकदोषविघटकत्वमात्रेणैव उत्क-र्षाधायकत्वासम्भवाद्‌लङ्कारेऽतिव्याप्तेः । न हि तादृशगुणालङ्कारजन्य-शोभायां किञ्चिद्वैलक्षण्यमस्ति येन गुणेभ्योऽलङ्काराणां व्यावृत्तिः क्रियत इति ।

इति साहित्यदर्पणविवृतौ गुणविवरणोनामाष्टमः परिच्छेदः ।



(क) उद्देशप्राप्तमलङ्कारनिरूपणं परित्यज्य रीतिनिरूपणे युक्ति-माह अथेति । बहवो वक्तव्या विषया यत्र तत्त्वेन रीतिनिरूपण-स्याल्पवक्तव्यत्वेन चेति बोध्यम् । सूचीकटाहन्यायेनाल्पविषय एव प्रथमं शिष्याणां जिज्ञासेति भावः । वस्तुतस्तु रीतेर्गुणघटितत्वेनैव गुणनिरूपणानन्तरं तन्निरूपणस्यौचितत्वमित्यवधेयम् । पदानां गुणा-

सा रीतिः। तत्र।

**माधुर्य्यव्यञ्जकैर्वर्णैरचना ललितात्मिका।**
**अवृत्तिरल्पवृत्तिर्वा वैदर्भीरीतिरिष्यते॥**

यथा। "अनङ्गमङ्गलभुव इत्यादि"। रुद्रटस्त्वाह

"असमस्तैकसमस्ता युक्ता दशभिर्गुणैश्च वैदर्भी।
वर्गद्वितीयबहुला स्वल्पप्राणाक्षरा च सुविधेया"॥

अत्र दशगुणास्तन्मतोक्ताः श्लेषादयः। (क)

**ओजःप्रकाशकैर्वर्णैर्बन्ध आडम्बरः पुनः।**
**समासबहुला गौड़ी।**

यथा "चञ्चद्भुजेत्यादि"। पुरुषोत्तमस्त्वाह। "बहुतर-

---

भिव्यञ्जकवर्णादीनां घटना योजना। शरीरस्य यथा शोभनाङ्गयोग-स्तथेत्यर्थः। एतेन रीतेर्व्यभिचारित्वमुपपन्नम्। नीरसेषु गुणाभि-व्यञ्जकशब्दार्थसत्त्वे तस्य रीतित्वमारचयन्नाह उपकर्त्रीति उत्कर्षजननी काव्यात्मभूतानामिति विशेषणमनुक्तमपि प्रापयति अर्थादिति प्रकर-णादित्यर्थः। एतच्च रीतीनां शब्दार्थशोभाद्वारेण रसोत्कर्षकत्वं प्राप-यति। विदर्भादिदेशविशेषभवकविसम्प्रदायाभिमतत्वेन वैदर्भ्यादिसंज्ञा। माधुर्य्यव्यञ्जकावर्णा माधुर्य्यगुणनिरूपणे दर्शिताः। एकसमस्ता अल्प-समासयुक्ता वा स्वल्पप्राणाक्षरोत्तरा लघुप्रयत्नोच्चार्य्यवर्णबहुला। तदु-दाहरणं यथा। "गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताड़ितं छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु। विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले विश्रामं लभतामिदञ्च शिथिलज्याबन्ध-मस्मद्धनुः" इति।

(ख) गौडीमाह ओज

समासयुक्ता सुमहाप्राणाक्षरा च गौड़ीया। रीतिरनुप्रास-
महिमपरतन्त्रस्तोभवाक्या च"।

वर्णैः शेषैः पुनर्द्वयोः।

समस्तपञ्चषपदो बन्धः पाञ्चालिका मता।

द्वयोर्वैदर्भीगौड्योः। यथा।

मधुरया मधुबोधितमाधवीमधुसमृद्धिसमेधितमेधया।

मधुकराङ्गनया मुहुरुन्मदध्वनिभृता निभृताक्षरमुज्जगे"॥

भोजस्त्वाह।

"समस्तपञ्चषपदामोजः कान्तिसमन्विताम्।

मधुरां सुकुमाराञ्च पाञ्चालीं कवयो विदुः॥

लाटी तु रीतिर्वैदर्भीपाञ्चाल्योरन्तरा स्थिता।ख

---

ओजोगुणनिरूपणे उक्ताः। आडम्बर उद्भटःस्तोभवाक्या शिथिल-
बन्धा। तदुक्तं दण्ड्याचार्य्येण। अल्पप्राणाक्षरोत्तरं शिथिलमिति
अनुप्रासधिया गौड़ैस्तदिष्टमिति च। तत्शिथिलम्। यथा "दोर्दण्डा-
ञ्चितेत्यादि"। सानुप्रासशिथिलबन्धा गौड़ी यथा "विभाति माला लोला-
लिकुलसंकुला। यदीयामोदमादाय यूनां माद्यति मानसम्"। पाञ्चालीं
रीतिमाह वर्णैरिति। शेषैर्वैदर्भीगौड़ीव्यञ्जकवर्णभिन्नैः। मधुरयेति
मनोरमयेत्यर्थः। मधुना वसन्तेन बोधिता प्रकाशिता प्रफुल्लपुष्पीकृता
या माधवी वासन्ती तस्या मधुसमृद्धा मकरन्दास्वादातिशयेन समेधिता
सम्वर्द्धिता मेधा मधुरस्वरवैचक्षण्यं यस्यास्तया निभृताक्षरं कलस्वरं
समस्तानि पञ्चषड़्वा पदानि यत्र ताम् ओजः कान्तिमाधुर्य्यसौकुमा-
र्य्यगुणयुक्तामित्यर्थः। यथा मम। "दृप्तोदात्तविपक्षलोकरभसो विद्रा-
विताशङ्कुणो नानायज्ञविधिप्रमोदितबुधः कारुण्यधाराञ्चितः। सद्वि-
...निपुणो दारिद्र्यचिन्तामणिः श्रीमानेष मनोज्ञनायक-

यथा।

"अयमुदयति मुद्राभञ्जनः पद्मिनीना-
मुदयगिरिवनालीबालमन्दारपुष्पम्।
विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्
कुपितकपिकपोलक्रोड़ताम्रस्तमांसि" ॥

कश्चिदाह।

"मृदुपदसमाससुभगा युक्तैर्वर्णैर्नचातिभूयिष्ठा।
उचितविशेषणपूरितवस्तुन्यासा भवेल्लाटी" ॥

अन्ये त्वाहुः।

"गौड़ी डम्बरबन्धा स्यात् वैदर्भी ललितक्रमा।
पञ्चाली मिश्रभावेन लाटी तु मृदुभिः पदैः" ॥

---

रथो राजा जयत्यङ्गसा। लाटीमाह लाटीति। अन्तरे मध्ये तदुभय-लक्षणाक्रान्तेत्यर्थः।

(ग) अयमिति। पुरोवर्त्तिरव्युदयवर्णनमिदं अयं पुरोवर्त्ती कश्चिदुदेति उदयगिरिशिखरमारोहति मुद्रा सङ्कोचः। बालं नवोत्फुल्लम्। रात्रौ चक्रवाकमिथुनं वियुक्तं सूर्य्योदये तस्य सङ्गमो भवतीति प्रसिद्धः। कोकद्वन्द्वस्य चक्रवाकमिथुनस्य बन्धुरुक्तोपकारकारी। कपीनां गण्डः स्वभावत एव रक्तः कोपेत्वत्यन्तरक्त इति सूचयितुं कुपितेति कपिविशेषणम्। ताम्रो रक्तः। अत्र योग्यत्वादयमिति सामान्यनिर्देशे विशेषलाभ इत्यन्ये। उचितेति उचितैः प्रकृतोपयुक्तैर्विशेषणैः पूरितो व्याप्तः वस्तुविन्यासो वर्णनीयनिर्देशो यत्र सा। एतन्मते मधुरयेति पाञ्चाल्यां यदुदाहृतं तदेतदुदाहरणं बोध्यम्। ललितक्रमा मधुरबन्धा मिश्रभावेन गौड़ी वैदर्भ्योः सम्पर्केण। वैदर्भरीतिप्रक्रान्तप्रबन्धमध्ये क्रुद्धो-वक्ता उद्धतो वाच्यो वर्ण्यते तदा प्रक्रान्तरीतिं परित्यज्य गौड़ीरीति-

क्वचित्तु वक्त्राद्यौचित्यादन्यथा रचनादयः॥

वक्त्रादीत्यादिशब्दाद्वाच्यप्रबन्धौ। रचनादीत्यादिशब्दाद्वृत्तिवर्णौ। तत्र वक्त्रौचित्याद्यथा। "मन्थायस्तार्णवाम्भ" इत्यादि। अत्र वाच्यस्य क्रोधाद्यव्यञ्जकत्वेऽपि भीमसेनवक्तृत्वेनोद्धता रचनादयः। वाच्यौचित्याद्यथोदाहृते। "मूर्द्धव्याधूयमानेत्यादौ"। प्रबन्धौचित्याद्यथा नाटकादौ। रौद्रेऽप्यभिनयप्रतिकूलत्वेन न दीर्घसमासादयः। एवमाख्यायिकायां शृङ्गारेऽपि न मसृणवर्णादयः। कथायां रौद्रेऽपि नात्यन्तमुद्धताः। एवमन्यदपि ज्ञेयम्।

इति साहित्यदर्पणे रीतिविवेको नाम नवमः परिच्छेदः॥

---

रनुसरणीया। एवमन्यत्रापीत्याह क्वचिच्चिति तथा वक्त्राद्युचिता सं रचना रीतिः। मन्थायस्तेति श्लोको नाटकप्रकरणे उक्तः। नाटकेऽपीति यदुक्तं तद्व्यभिचरत्यपि। यथा अनर्घराघवे। "उद्दामद्युमणिद्युतिव्यतिकरप्रक्रीडदर्कोपलज्वालाजालजटालजाङ्गलजटीबिष्कुञ्जकोयष्टयः। भौमोष्मप्लवमानस्थूरकिरणक्रूरप्रकाशा दिशो रायुरूमर्मसमापयन्ति भिगमूर्मध्येऽह्नि मून्यादिप इति"।

इति साहित्यदर्पणविवृतौ रीतिविवरणं नाम नवमः परिच्छेदः।

---

# दशमः परिच्छेदः ।

अथावसरप्राप्तानलङ्कारानाह ।

**शब्दार्थयोरस्थिरा ये धर्माः शोभातिशायिनः ।**
**रसादीनुपकुर्वन्तोऽलङ्कारास्तेऽङ्गदादिवत् ॥**

यथा अङ्गदादयः शरीरशोभातिशायिनः शरीरिणमुपकुर्वन्ति तथानुप्रासोपमादयः शब्दार्थशोभातिशायिन

---

(क) अलङ्कारनिरूपणस्य सङ्गतिमाह अथेति रीतिनिरूपणानन्तरमित्यर्थः । अवसरप्राप्तान् अवसरसङ्गत्या निरूपयितुं युक्तानित्यर्थः प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तिरवसरः । प्रकृते सूचीकटाहन्यायेन प्रथमं रीतिनिरूपणजिज्ञासा जातास्यैव उद्देशक्रमप्राप्तालङ्कारनिरूपणप्रतिबन्धिका तन्निवृत्तावलङ्कारनिरूपणजिज्ञासा जायत इति भावः । अलङ्कारस्य सामान्यलक्षणमाह शब्दार्थयोरिति । अस्थिरा अनियताः । एतेन निरलङ्कारमपि काव्यमस्तीति सूचितम् । धर्माः अनुप्रासोपमादयः शोभातिशायिनः वैचित्र्यातिशयप्रयोजकाः । तेन वाच्यत्वप्रमेयत्वादीनामतद्रूपाणां नालङ्कारत्वम् । नीरसशब्दार्थयोरनुप्रासोपमादीनामलङ्कारत्वव्यवच्छेदायाह रसादीनिति । आदिना भावादीनां परिग्रहः । उपकुर्वन्त उत्कर्षयन्तः । एवञ्च "तरङ्गनिकरोन्नीततरुणीगणसंकुला । सरिद्वहति कल्लोलवाहव्याहततीरभूरित्यादौ रसानुसन्धानरहिते यद्रूपकानुप्रासयोरलङ्कारव्यवहारः स गौण एवेति मन्तव्यम् । लौकिकदृष्टान्तमाह अङ्गदादिवदिति । आदिना कुण्डलादिपरिग्रहः । शरीरिणमात्मानमुपकुर्वन्ति उत्कृष्टतया ज्ञापयन्ति । गुणानामपि काव्यशोभाजनकत्वे [illegible]

रसादेरुपकारका के तेऽलङ्कारा अस्थिरा इति नैषां गुण-वदावश्यको स्थितिः । शब्दार्थयोः प्रथमं शब्दस्य बुद्धिवि-षयत्वात् शब्दालङ्कारेषु वक्तव्येषु शब्दार्थालङ्कारस्यापि पुन-रुक्तवदाभासस्य चिरन्तनैः शब्दालङ्कारमध्ये लक्षितत्वात् प्रथमं तमेवाह । (क)

**आपाततो यदर्थस्य पौनरुक्त्यावभासनम् ।**
**पुनरुक्तवदाभासः स भिन्नाकारशब्दगः ॥**

उदाहरणम् ।

"भुजङ्गकुण्डलीव्यक्तशशिशुभ्रांशुशीतगुः ।
जगन्त्यपि सदापायादव्याच्चेतोहरः शिवः" ॥

---

इत्युक्तम् तदर्थमाह नचैषामिति । एषामलङ्काराणां गुणानां माधु-र्य्यौजःप्रसादानां व्यञ्जकाभावेऽपि स्वस्वरसव्यञ्जकशब्दार्थयोः पर-म्परयावश्यं सद्भाव इति भावः । वस्तुतस्तु रीतीनामपि गुणव्यञ्जक-वर्णादिघटितत्वादस्थिरत्वेनालङ्कारत्वप्रसक्तौ तद्वारणाय शोभातिशायिन इत्यस्य विलक्षणवैचित्र्याधायकत्वमिति तदर्थंकरणम् अवश्यं तेनैव गुणानामपि वारणसम्भवादस्थिरा इति विशेषणमनुपयुक्तमित्यवधेयम् । शब्दालङ्काराणां प्रथमनिरूपणीयत्वे हेतुं दर्शयित्वा तत्रापि पुनरुक्तव-दाभासनिरूपणस्य प्राथमिकत्वे हेतुमाह शब्दार्थयोरिति शब्दप्रत्यक्षा-नन्तरमर्थबोधस्य सर्वानुभवसिद्धत्वादिति भावः । अस्य शब्दार्थालङ्कारत्वं स्वयमेवोपपादयिष्यति । शब्दालङ्कारान्तरमपेक्ष्यास्य वैचित्र्यातिशया-वहत्वेन तत्र प्रथमं शिष्याणां जिज्ञासेति भावः ।

(ख) आपातत इति तात्पर्य्यानवधारणदशायामित्यर्थः । लाटा-नुप्रासवारणाय स इति । अव्यादित्यत्र । पर्य्यवसाने वक्तृतात्पर्य्याव-धारणानन्तरं सदापायादिति आकारप्रश्लेषादिति भावः । परिवृत्ति-

अत्र भुजङ्गकुण्डल्यादिशब्दानाम् आपातमात्रेण सर्पाद्यर्थतया पौनरुक्त्यप्रतिभासनम्। पर्य्यवसाने तु भुजङ्गरूपं कुण्डलं विद्यते यस्येत्याद्यन्यार्थत्वम्। पायादव्यादित्यत्र क्रियागतोऽयमलङ्कारः। पायादित्यस्यापायादित्यत्र पर्य्यवसानात्। भुजङ्गकुण्डलेतिशब्दयोः प्रथमस्यैव परिवृत्तिसहत्वम्। हरः शिव इति द्वितीयस्यैव। शशिशुभ्रांशु इति द्वयोरपि। भाति सदा न त्याग इति" न द्वयोरपीति शब्दपरिवृत्तिसहत्वासहत्वाभ्याम् अस्योभयालङ्कारत्वम्। (ख)

**अनुप्रासः शब्दसाम्यं वैषम्येऽपि स्वरस्य यत्।**

स्वरमात्रेऽपि सादृश्यं वैचित्र्याभावान्न गणितम्। रसाद्यनुगतत्वेन प्रकर्षेण न्यासोऽनुप्रासः।

**छेको व्यञ्जनसङ्घस्य सकृत् साम्यमनेकधा।**

---

सहत्वं पर्य्यायशब्दोपादानेऽपि प्रकृतोपयोगित्वम्। द्वितीयस्यैव परिवृत्तिसहत्वमित्यन्वयः। एवमग्रेऽपि। भातीति दानत्यागयोरेकार्थत्वात् पौनरुक्त्यम्। वस्तुतस्तु सदा अनत्या अप्रणामेन अगः पर्वत इव।

(ग) अनुप्रासालङ्कारमाह अनुप्रास इति। शब्दस्य वर्णपदैकदेशपदानामन्यतमस्य साम्यं सादृश्येनावर्त्तनम्। वर्णानां सादृश्यञ्च-कत्वादिना एकस्थानोच्चार्य्यत्वेनापि। तेन वर्णत्वादिना सदृशस्य विजातीयवर्णस्यावर्त्तने नातिप्रसङ्गः। नापि श्रुत्यनुप्रासासंग्रहः। पदपदैकदेशयोस्तु तत्तद्व्यञ्जनघटितत्वेन छेकलाटानुप्रासयोः संग्रहाय वर्णसाम्यमित्यनुक्त्वा शब्दसाम्यमिति कृतम्। वस्तुतस्तु पदतदेकदेशसाम्येऽपि वर्णसाम्यसत्त्वात् शब्दपदं वर्णमात्र[illegible]

छेकश्छेकानुप्रासः। अनेकधेति स्वरूपतः क्रमतश्च। रसः सर इत्यादिकमभेदेन सादृश्यं नास्यालङ्कारस्य विषयः। उदाहरणं मम तातपादानाम्।

"आदाय वकुल गन्धानन्धी कुर्व्वन् पदे पदे भ्रमरान्।
अयमेति मन्दमन्दं कावेरीवारिपावनः पवनः" ॥

अत्र गन्धानन्धीति संयुक्तयोः कावेरीवारीत्यसंयुक्तयोः पावनः पवन इति बहूनां व्यञ्जनानां सकृदावृत्तिः। छेको विदग्धः। तत्प्रयोज्यत्वादेष छेकानुप्रासः। (ग)

**अनेकस्यैकधा साम्यमसकृद्वाप्यनेकधा।**
**एकस्य सकृदप्येष वृत्त्यनुप्रास उच्यते ॥**

---

नुप्रास इति काव्यप्रकाशः। वैषम्येऽपीत्यपिना साम्येऽपीति लभ्यते। एतच्च लाटानुप्रासे नियतम्। न च समस्वरपदतदेकसाम्यं यमकेष्वतिव्याप्तमिति वाच्यम्। तेषां प्रकरणनियम्यतया तदतिरिक्तत्वेनास्य विशेषणात्। ननु वैषम्येऽपि स्वरस्येत्यनेन व्यञ्जनसाम्यमनुप्रास इति लभ्यते स्वरमात्रसाम्यं न कथमनुप्रास इत्यत आह स्वरमात्रेति। अनुप्रासपदव्युत्पत्तिमाह रसादीति। तृतीयाद्वयं विशेषणे। रसाद्यनुगतः प्रकृष्टस्त्यर्थः। रसाद्यनुगतत्वं स्वाश्रयशब्दप्रकर्षणद्वारा रसादिप्रकर्षकत्वम्। तेनैव प्रकृष्टत्वम्। न्यास इत्येकदेशार्थमाह न्यास इति। अनुप्रासस्य पञ्चप्रभेदानाह छेक इति। अनेकधेति स्वरूपतः क्रमतश्चेत्यर्थः। अस्य छेकानुप्रासस्य विषयः स्थानम्। तथाच तद्वारणायैव क्रमतश्चेत्युपात्तम्। आदायेति अन्धीकुर्वन् मधुलोभेन अन्यत्रदृष्टभ्रान्तान् कुर्वन् पदे पदे स्थाने स्थाने कावेरीवारिसंयोगेन पावनः पवित्रकरः।

(घ) वृत्त्यनुप्रासमाह अनेकस्येति व्यञ्जनस्येत्यर्थः। असकृदिति अना-

एकधा स्वरूपत एव न तु क्रमतोऽपि। अनेकधा स्वरूपतः क्रमतश्च। सकृदपीत्यपिशब्दादसकृदपि। उदाहरणम्।

"उन्मीलन्मधुगन्धलुब्धमधुपव्याधूतचूताङ्कुर-
क्रीड़त्कोकिलकाकलीकलकलैरुद्गीर्णकर्णज्वराः।
नीयन्ते पथिकैः कथं कथमपि ध्यानावधानक्षण-
प्राप्तप्राणसमासमागमरसोल्लासैरमी वासराः"॥

अत्र रसोल्लासैरमी इति रसयोरेकधैव साम्यम्। न तु तेनैव क्रमेणापि। द्वितीये पादे तु कलयोरसकृत्। तेनैव क्रमेण च प्रथमे एकस्य तकारस्य सकृत् धकारस्य चासकृत्। रसविषयव्यापारवती वर्णरचनावृत्तिस्तदनुगतत्वेन प्रकर्षेण न्यसनाद्वृत्त्यनुप्रासः। (घ)

---

प्यनेकस्येत्यनुषज्यते। उन्मीलदिति वसन्तवर्णनमिदम्। अमी वसन्तसम्बन्धिनो वासराः पथिकैः प्रवासिकामुकैः कथं कथमपि महता कष्टेन नीयन्ते याप्यन्ते कीदृशाः उन्मिलतः प्रादुर्भवतोत्पद्यमानस्य मधुनो मकरन्दस्य गन्धेन लुब्धा ये मधुपास्तैर्व्याधूतेषु चूताङ्कुरेष्वाम्रमुकुलेषु क्रीडतां कोकिलानां काकलीभिः सूक्ष्मध्वनिभिः कलकलैः प्रौढ़शब्दैश्च उद्गीर्णः प्रवासित्वेव निक्षिप्तः कर्णेषु ज्वरः पीड़ा येषु पथिकैः कीदृशैः ध्यानस्यावधानेन निष्ठया क्षणं प्राप्तः प्राणसमायाः प्रियायाः समागमरसेन सम्भोगरसेन उल्लास आह्लादो यैस्तैः। रसयो रेफसकारयोः प्रथमे इति पाद इत्यन्वयः। तदतिरिक्ता छेकानुप्रासा इह वेदितव्याः। संज्ञाव्युत्पत्तिमाह रसेति रसविषयव्यापारो रसव्यञ्जनं तद्वतीत्यर्थः। वृत्तिश्च त्रिविधा उपनागरिका परुषा कोमला च। तदुक्तं काव्यप्रकाशे। "माधुर्यव्यञ्जकैर्वर्णैरुपनागरिकोच्यते। ओजः प्रकाशकैस्तैस्तु परुषा

**उच्चार्य्यत्वाद्यदैकत्र स्थाने तालुरदादिके।**
**सादृश्यं व्यञ्जनस्यैव श्रुत्यनुप्रास उच्यते॥**

उदाहरणम्।

"दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।
विरूपाक्षस्य जयिनीस्ताः स्तुमो वामलोचनाः"॥

अत्र "जीवयन्तीति" "या इति" "जयिनीरिति" अत्र जकारयकारयोरेकत्र स्थाने तालौ उच्चार्य्यत्वात् सादृश्यम्। एवं दन्त्यकण्ठ्यानामप्युदाहार्य्यम्। एष च सहृदयानामतीव श्रुतिसुखावहत्वाच्छ्रुत्यनुप्रासः।

**व्यञ्जनं चेद्यथावस्थं सहाद्येन स्वरेण तु।**
**आवर्त्त्यतेऽन्त्ययोज्यत्वादन्त्यानुप्रास एव तत्॥**

"यथावस्थमिति" यथा सम्भवमनुस्वारविसर्गस्वरसंयुक्ताक्षरविशिष्टम्। एष च प्रायेण पादस्य पदस्य चान्तप्रयोज्यः पादान्तगो यथा मम।

"केशः काशस्तवकविकासः कायः प्रकटितकरभविलासः।
चक्षुर्दग्धवराटककल्पं त्यजति न चेतः काममनल्पम्"।

---

कोमला परैरिति"। परैः शेषैः। केचित् कोमलां ग्राम्यां वदन्ति। एतास्तिस्रो वृत्तयो वैदर्भी गौड़ी पाञ्चाली संज्ञकरीतित्वेन प्राङ्निर्दिष्टा इति ग्रन्थकृता इह नोक्ताः। तदनुगतत्वेन वृत्त्यनुगतत्वेन।

(ङ) श्रुत्यनुप्रासमाह उच्चार्य्यत्वादिति स्थाने उच्चारणस्थाने। रदो दन्तः। आदिना मूर्द्धकण्ठौष्ठस्य संग्रहः। अत्र स्वरूपतः साम्याभावेऽप्यनुप्रासत्वं प्रागेव प्रतिपादितम्। दृशेति विरूपाक्षस्य शिवस्य।

पदान्तगो यथा।

"मन्दं हसन्तः पुलकं वहन्त इत्यादि"। (ङ)

**शब्दार्थयोः पौनरुक्त्यं भेदे तात्पर्य्यमात्रतः।**

**लाटानुप्रास इत्युक्तः।**

उदाहरणम्।

"स्मेरराजीवनयने नयने किं निमीलिते॥

पश्य निर्ज्जितकन्दर्पं कन्दर्पवशगं प्रियम्"। (च)

---

संज्ञा व्युत्पत्तिमाह एष इति अनुप्रासविशेषः। अन्त्यानुप्रासमाह व्यञ्जनमिति आवर्त्त्यते पुनरुच्चार्य्यते। संज्ञा व्युत्पत्तिमाह अन्त्येति अन्त एवान्त्यः। तत्र योज्यत्वात् प्रयोज्यत्वात्। केश इति प्रकटितः करभस्योरुस्य विलासः सादृश्यं येन सः।

(च) लाटानुप्रासमाह शब्दार्थयोरिति। शब्दः प्रातिपदिकं पदञ्च। भिन्नार्थशब्दपौनरुक्त्ये यमकस्यैव विषय इति तद्वारणायार्थेति। "स्मेर-राजीवनयने लोचने किं निमीलिते इत्यादावर्थमात्रस्य पौनरुक्त्ये नायमनुप्रास इत्युभयोपादानम्। अर्थस्य पौनरुक्त्यन्तु पूर्वपदार्थविशेषणविशेष्याभ्यां सहोत्तरपदार्थविशेषणविशेष्ययोरैक्ये हि सम्भवति। तेन घनेन संवृते सुसखि व्योम्नि विभाति चन्द्रमा इत्यादौ विशेषणयोर्भेदान्नायमनुप्रासः। नापि "वपुः कान्तं वचः कान्तं मनस्तु परुषं तवेत्यादौ" विशेष्ययोर्भेदात्। ननु "यातु यातु किमनेन तिष्ठतु मुञ्च मुञ्च सखि सादरं वच इत्यादौ" क्रोधादिव्यञ्जके शब्दार्थपौनरुक्त्ये लाटानुप्रासप्रसङ्ग इत्यत आह भेदे इति। तात्पर्य्यं नात्पर्य्यार्थोऽन्वयस्तन्मात्रेण भेदे सतीत्यर्थः। अतएव अन्वयमात्रभेदादिति काव्यप्रकाशः। तथा च यातु यात्वित्यादावन्वयभेदो नास्ति किन्तु क्रोधव्यञ्जकमेव पौनरुक्त्यमिति भावः। नन्वर्थान्तरसंक्रमितवाच्ये ध्वनावापाततः शब्दार्थयोः पौनरुक्त्यावभासनेऽपि पर्य्यवसाने वक्तृतात्पर्य्यविषयविशेषणान्तरप्रतीत्या-

अत्र विभक्त्यर्थस्यापौनरुक्त्येऽपि मुख्यतरस्य प्रातिपदिकांशयोरुभयधर्म्मिरूपस्याभिन्नार्थत्वाल्लाटानुप्रासत्वमेव।

"नयने तस्यैव नयने च" अत्र द्वितीयनयनशब्दो भाग्यवत्त्वादिगुणविशिष्टत्वरूपतात्पर्य्यमात्रेण भिन्नार्थः।

---

भिन्नार्थत्वाभासेनायमनुप्रास इत्यभिप्रायेणाह नयने इति। द्वितीयेति भाग्यवत्त्वादिगुणरूपं यद्विशिष्टत्वं विशेषणं तन्मात्रेण वक्तृतात्पर्य्येण भिन्नार्थ इति योजनावैपरीत्येनान्वयबोधः। अतएव "दैन्येऽथ लाटानुप्रासेऽनुकम्पायां प्रसादने। अर्थान्तरसंक्रमितवाच्ये हर्षेऽवधारणे"। इत्यर्थान्तरसंक्रमितवाच्यध्वनेः पृथगुपादानं सङ्गच्छते। मात्रपदेन नयनत्वस्य व्यवच्छेदः। शब्दस्य पौनरुक्त्यं द्विरुक्तिः। प्रातिपदिकपौनरुक्त्यञ्च तावदेकस्मिन् समासे विभिन्नसमासे समासासमासयोश्च सम्भवतीति त्रिविधम्। यथा "सितकरकररुचिरुचिरविभाविभाकराकारधरणिधरकीर्त्तिः। पौरुषकमलाकमलासादितवास्ति नान्यस्य"। अत्र करेति प्रातिपदिकाद्व्यतिरेकस्मिन् समासे विभेति भिन्ने कमलेति समासासमासयोः। समासासमासगतं प्रातिपदिकपौनरुक्त्यमुदाहरति स्मरेति। फुल्लेत्यर्थः।

(छ) नन्वत्र प्रातिपदिकस्य पौनरुक्त्यसत्त्वेऽपि विभक्त्यर्थस्य भिन्नत्वादर्थपौनरुक्त्यं नास्तीति कथमस्य विषय विषय इत्यत आह अत्रेति। भिन्नत्वात् पुनरुक्तत्वात्। पदपौनरुक्त्यमप्येकानेकपदगतत्वेन द्विविधम्। तत्रैकपदपौनरुक्त्ये यथा "वदनं वरवर्णिन्यास्तस्याः सत्यं सुधाकरः। सुधाकरः क्व नु पुनः कलङ्कविकलो भवेत्"। अत्र विभक्तिसहितस्य प्रातिपदिकस्य तदर्थस्य च पौनरुक्त्यम्। प्रथमं सुधाकरपदं विधेयार्थम्। अपरमनुवाद्यार्थम्। अनेकपदपौनरुक्त्ये उदाहरति यस्य नेति। अत्र पूर्वार्द्धे तापकत्वात्तुहिनदीधितिर्दवदहनः। परार्द्धे तु तादृशदुःखाजनकत्वात् दवदहनोऽपि तुहिनदीधितिरिति तात्पर्य्यविषयस्योद्देश्यविधेयभावेनान्वयस्य भेदः पदार्थान्तु

यथा वा ।

"यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य ।
यस्य च सविधे दयिता दवदहनस्तुहिनदीधितितस्य" ॥

अत्रानेकपदानां पौनरुक्त्यम् । एष च प्रायेण लाटजनप्रियत्वाल्लाटानुप्रासः ।

**अनुप्रासः पञ्चधा ततः ॥**

स्पष्टम् । (झ)

**सत्यर्थे पृथगर्थायाः स्वरव्यञ्जनसंहतेः ।
क्रमेण तेनैवावृत्तिर्यमकं विनिगद्यते ॥**

---

अभेद एव । मिलित्वा लाटानुप्रासः पञ्चप्रकारः । चरमप्रकारद्वयं पदानुप्रास इत्यन्ये । अयञ्चान्यैरुभयालङ्कारतयोक्तोऽपि शब्दविशेषान्वयव्यतिरेकानुविधायित्वात् ग्रन्थकृता शब्दालङ्कारमध्ये गृहीतः ।

(ञ) यमकालङ्कारमाह सत्यर्थ इति । स्वरव्यञ्जनसंहते रज्भलसमुदायस्य । स्वरव्यञ्जनयोरेकत्वेऽपि यमकं भवति यथा । "नानाकारेण कान्तभ्रुत्वं राधितमनोभुवा । विविक्तेन विलासेन ततक्ष हृदयं मम" । एतद्वर्णयमकं वामनसम्मतम् । क्रमेणेति येन क्रमेण प्रथमं स्वरव्यञ्जनसमूह उक्तस्तेनैवेत्यर्थः । आवृत्तिः पुनरुच्चारणम् । पदयोः स्वरव्यञ्जनसमूहयोः । क्वचिदिति "नगजा नगजा दयिता दयिता इत्यादौ" । क्वचिन्निरर्थकत्वमिति द्वयोरित्यनुषङ्गः । यथा "विजितामरतामरसेक्षणा इत्यादि" । अत्र तामरेति समूहयो पदैकदेशत्वान्निरर्थकम् । एकस्येति प्रथमस्य द्वितीयस्य वा स्वरव्यञ्जनसमूहस्येत्यर्थः । विभक्तविषयत्वं विभिन्नविषयत्वम् । यमकादिति शेषः । रसादीनामत्यन्तोपकारिणो यमकप्रपञ्चस्य निर्वचनमनतिप्रयोजनमिति सङ्क्षेपेणैव यमकनिरूपणं ज्याय इत्यभिप्रायेणाह एतदिति यमको-

अत्र द्वयोरपि पदयोः क्वचित्सार्थकत्वं क्वचिन्निरर्थकत्वम्। क्वचिदेकस्य सार्थकत्वमपरस्य निरर्थकत्वमत उक्तं सत्यर्थ इति। तेनैव क्रमेणेति दमो मोह इत्यादेर्व्विविक्तविषयत्वं सूचितम्। एतच्च पदपादार्द्धश्लोकावृत्तित्वेन पादाद्यावृत्ते-श्चानेकविधतया प्रभुततमभेदम्। दिङ्मात्रमुदाह्रियते। (ज)

"नवपलाशपलाशवनं पुरः
स्फुटपरागपरागतपङ्कजम्।
मृदुलतान्तलतान्तमलोकयत्
ससुरभिं सुरभिं सुमनोभरैः"॥

---

त्यर्थः। अत्र पदपदं पादैकदेशपरमर्द्धपदं श्लोकार्द्धपरम्। पादाद्या-वृत्तिश्चेति पादस्य द्विधा त्रिधा चतुर्द्धा वा खण्डने चानेकविधत्वम्। आदिना पादार्द्धश्लोकयोः संग्रहः। तत्र प्रथमपादस्य द्वितीयाद्यन्य-तमस्मिन् द्वितीयादिसमुदाये च द्वितीयतृतीयसमुदाये द्वितीयचतुर्थसमु-दाये च द्वितीयस्य तृतीयाद्यन्यतमस्मिन् तृतीयादिसमुमाये च तृतीयस्य चतुर्थे आवृत्तिः सम्भवतीति दशविधत्वमेव पादयमकस्य। एवं प्रथमा-र्द्धस्य द्वितीयार्द्धे प्रथमपादस्य द्वितीये तृतीयस्य चतुर्थे द्वितीयस्य तृतीये प्रथमस्य चतुर्थे पादे आवृत्तिः सम्भवतीति श्लोकार्द्धयमकस्य त्रैविध्यम्। श्लोकयमकमपि विजातीयचतुष्पादवृत्त्या एकाकारचतुष्पादावृत्त्या च द्वि-विधम्। प्रभूततमभेदमतिप्रचुरप्रकारम्। दिङ्मात्रमिति प्रकारान्तरोप-लक्षणमल्पमित्यर्थः।

(झ) नवेति नवानि पलाशानि पत्राणि येषां तादृशपलाशवनं किंशुकारण्यं यत्र तम्। स्फुटानि विकसितानि परागे रजोभिः परागतानि संबद्धानि पङ्कजानि यत्र तम्। मृदुलोऽतएव तान्त आतपेन ग्लानो लतान्तो यत्र तम्। स स्मीकरणः सुरभिं वसन्तं सुमनोभरैः पुष्पातिशयैः सुरभिं सुगन्धिम्। पदावृत्तिः पदैकदेशावृत्तिः। द्विती-

अत्र पदावृत्तिः पलाशपलाशेति । सुरभिं सुरभिमित्यत्र च द्वयोः सार्थकत्वम् । लतान्तलतान्तेत्यत्र प्रथमस्य निरर्थकत्वम् । परागपरागेत्यत्र द्वितीयस्य । एवमन्यत्राप्युदाहार्य्यम् ।

"यमकादौ भवेदैक्यं डलोर्ब्वोर्लरोस्तथा" ।

इत्युक्तनयात् "भुजलतां जडतामबलाजन" इत्यत्र न यमकत्वहानिः । (झ)

**अन्यस्यान्यार्थकं वाक्यमन्यथा योजयेद्यदि ।**
**अन्यः श्लेषेण काक्वा वा सा वक्रोक्तिस्ततो द्विधा ॥**

---

यस्येति निरर्थकमित्यर्थः । अन्यदपीति पदावृत्त्यादिरूपयमकमित्यर्थः । पदाभ्यासो यथा "न मन्दया वर्जितमानसार्थया न मन्दया वर्जितमानसार्थया । उपर्युपस्तोर्णपयोधरद्वयं मया समालिङ्ग्य च जीवितेश्वर इत्यादि"। अर्द्धाभ्यासो यथा"नास्थेयः स त्वया वर्ज्यः परमायतमानया । नास्थेयः सत्वया वर्ज्यः परमायतमानया इत्यादि" । श्लोकावृत्तिद्वयं क्रमेण यथा । "विनायकेन भवता वृत्तोपचितबाहुना । स्वमित्रोद्धारणाभीता पृथ्वीयमतुलाश्रिता । विनायकेन भवता वृत्तोपचितबाहुना । स्वमित्रोद्धारणा भीता पृथ्वीयमतुलाश्रिता । समानया समानया समानया समानया । समानया समानया समानया समानया" । अयं चतुरक्षरपादश्लोकः । यमकादावित्यादिना श्लेषादिग्रहणम् । तेन "त्वं समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसौ अयन्तु युवयोर्भेदः स जड़ात्मा पटुर्भवान्" । इत्यादौ न श्लेषभङ्गः ।

(ञ) वक्रोक्त्यलङ्कारमाह अन्यस्येति वक्तुरित्यर्थः । अन्यार्थकमन्यतात्पर्यकम् । अन्यथा अर्थान्तरप्रतिपादकत्वेन योजयेत् सङ्गमयेत् । अन्यः श्रोता । ततः श्लेषकाकुवक्रोक्तिभ्याम् । श्लेषस्यापि पदभङ्गाभङ्गाभ्यां

द्विधेति श्लेषवक्रोक्तिः काकुवक्रोक्तिश्च। क्रमेणोदाहरणम्।

"के यूयं स्थल एव सम्प्रति वयं प्रश्नो विशेषाश्रयः
किं ब्रूत विहगः स वा फणिपतिर्यत्रास्ति सुप्तो हरिः।
वामा यूयमहो विडम्बरसिकः कीदृक् स्मरो वर्त्तते
येनास्मासु विवेकशून्यमनसः पुंस्वेव योषिद्भ्रमः"॥

अत्र विशेषपदस्य विः पक्षी शेषो नाग इति अर्थद्वय-योगात् सभङ्गश्लेषः। अन्यत्र तु अभङ्गः। (ञ)

"काले कोकिलवाचाले सहकारमनोहरे।
कृतागसः परित्यागात्तस्याश्चेतो न दूयते"॥

---

द्वैविध्येन श्लेषवक्रोक्तिरपि द्विविधा। के यूयमिति जिज्ञासा जले यूयमित्यर्थासङ्गमयन् श्रोताह स्थल इति। वक्ता स्वतात्पर्य्यमवगमय-न्नाह प्रश्न इति। विशेषाश्रयविशेषविषयः। विःपक्षीशेषोऽनन्त इत्यभि-प्रायेण तदपि श्रोतान्यथा योजयति किं ब्रूत इति किं पृच्छतीत्यर्थः। वाक्छलेन कदर्थितो वक्ता श्रोतारमाक्षिपति वामा इति प्रतिकूलतया छलग्राहिण इत्यर्थः। तदपि योषिदभिप्रायेण श्रोतान्यथा योजयति अहो इति। विडम्बरसिकः प्रतारणाचतुरः। येन स्मरविडम्बनेन विवेकशून्यमनसस्तवेति शेषः। यद्वा सामान्येनाक्षेपो विशेषे पर्य्यवस्य-तीति वाग्वैदग्ध्यं तत्रैव श्लेषवक्रोक्ति द्वैविध्यं दर्शयति अत्रेति। नागो नागराजः। अर्थद्वययोजकत्वात् प्रतिपाद्यद्वये सङ्गमनीय-त्वात्।

(ट) काकुवक्रोक्तिमुदाहरति। काले इति कृतागसः कृतापराधस्य पत्युरिति शेषः। घटितो योजितः। भाषासमावेशालङ्कारमाह शब्दै-रिति। मञ्जुलेति। मानिनीं प्रति सख्यावचनमिदम्। कलेन मधुर-ध्वनिना। गम्भीरे मनोहरे। केलिकीरे क्रीड़ाशुके। धीरे मन्दे गन्ध-

अत्र कयाचित् सख्या निषेधार्थे नियुक्तो नञ्, अन्यथा काक्वा दूयत एवेति विध्यर्थे घटितः ।

**शब्दैरेकविधैरेव भाषासु विविधास्वपि ।**
**वाक्यं यत्र भवेत् सोऽयं भाषासम इतीष्यते ॥**

यथा मम ।

"मञ्जुलमणिमञ्जीरे कलगम्भीरे विहारसरसीतीरे ।
विरसासि केलिकीरे किमालि धीरे च गन्धसारसमीरे" ॥

एष श्लोकः संस्कृतप्राकृतसौरसेनीप्राच्यावन्तीनागरापभ्रंशेष्वेकविध एव ।

"सरसं कइण कव्वमित्यादौ" तु ।

सरसमित्यत्र संस्कृतप्राकृतयोः साम्येऽपि वाक्यगतत्वाभावे वैचित्र्याभावान्नायमलङ्कारः ।

**श्लिष्टैः पदैरनेकार्थाभिधाने श्लेष इष्यते । (८)**

---

सारसमीरे चन्दनवायौ । कइणकव्वं कवेः काव्यम् । श्लेषालङ्कारमाह श्लिष्टैरिति । "सकृदुच्चरितः शब्दः सकृदर्थं गमयतीति" नियमेन काव्ये स्वरभेदानादरात् यावन्तोऽर्थास्तावन्त एव शब्दा एकप्रयत्नोच्चार्य्यन्ते इति नये युगपन्नानाशब्दोच्चारणेऽपि तेषां भेदोपलम्भो न भवति । अत्रापि प्रकरणादिनियमाभावादनेकार्थानामभिधयैव बोधः । प्रकरणादिनियमसत्त्वे तु एकस्याभिधया अपरस्य व्यञ्जनयेति मतमाश्रित्य इदं लक्षणम् । एवञ्च एकप्रयत्नोच्चार्य्यत्वेन लुप्तभेदानां वर्णादीनां मेलकः श्लेषः । तद्विशिष्टैः पदैरनेकार्थानामभिधया बोधने सति श्लेषो भवतीत्यर्थः । तथा च तादृशाभिधानमेव श्लेष इति भावः । एवं सति नाश्रयाश्रयः ।

वर्णप्रत्ययलिङ्गानां प्रकृत्योः पदयोरपि ॥
श्लेषाद्विभक्तिवचनभाषाणामष्टधा च सः ॥

क्रमेणोदाहरणम् ।

"प्रतिकूलतामुपगते हि विधौ
विफलत्वमेति बहुसाधनता ।
अवलम्बनाय दिनभर्त्तुरभूत्
न पतिष्यतः करसहस्रमपि" ॥

अत्र विधाविति विधुविधिशब्दयोरुकारिकारयोर्व्वर्णयोरौकाररूपत्वात् श्लेषः ।

"किरणा हरिणाङ्कस्य दक्षिणश्च समीरणः ।
कान्तोत्सङ्गजुषां नूनं सर्व्व एव सुधाकिरः" ॥

अत्र "सुधाकिर इति" क्विप्कप्रत्यययोः । किञ्चात्र बहुवचनैकवचनयोरैकरूप्याद्वचनश्लेषोऽपि ।

---

(ठ) श्लिष्टवर्णादिभेदेन श्लेषस्याष्टविधत्वमाह वर्णेति । वर्णौ च प्रत्ययौ च लिङ्गे चेति विग्रहः । स श्लेषालङ्कारः । प्रतिकूलतामिति । सूर्यास्तवर्णनमिदम् । पतिष्यतोऽस्तं गमिष्यतो दिनभर्त्तुः सूर्यस्य किरणसहस्रमप्यवलम्बनाय अस्तमयविघातायनाभूत् । अथ च पतिष्यतः स्खलिष्यतो जनस्य करद्वयमपि पतनप्रतिघाताय भवति तस्य तु करसहस्रमप्यवलम्बनाय नाभूदिति श्लेषः । कथंद्वयमपि श्लेषेण समर्थयति प्रतिकूलतामिति विधौ चन्द्रे प्रतिकूलतां विरुद्धफलभागित्वमदृष्टभागित्वमिति यावत् । बहुसाधनता बहुस्थित्युपायशालित्वम् विफलत्वमेति । तथाच कालान्तरे सूर्यास्तगमनं प्रति तत्कालीनकिरणानां प्रतिबन्धकत्वं कल्प्यते । एवञ्च सन्ध्याकाले तत्कालीनकिरणद्वयप्राप्ति-

४५

"विकसन्नेत्रनीलाब्जे तथा तन्व्याः स्तनद्वयी।
तव दत्तां सदामोदं लसत्तरलहारिणी"।

अत्र नपुंसकस्त्रीलिङ्गयोः श्लेषो वचनश्लेषोऽपि। (ठ)

"अयं सर्व्वाणि शास्त्राणि हृदि ज्ञेषु च वक्ष्यति।
सामर्थ्यकृदमित्राणां मित्राणाञ्च नृपात्मजः"॥

अत्र वक्ष्यतीति वहिवच्योः सामर्थ्यकृदिति कृन्तिकरोत्योः प्रकृत्योः।

---

बन्धकानां सद्भावेऽपि सूर्य्यांस्तगमनमभिधेत्रति प्रथमार्धसमर्थनम्। पक्षे विधौ दैवे प्रतिकूलतामनभिमतफलसाधनोन्मुखतामुपगते सति बहुभिमतफलोपायशालित्वं विफलतामेतीत्यर्थः। प्रत्ययश्लेषमुदाहरति किरणा इति। क्विप्प्रत्ययक प्रत्यययोरिति श्लेष इत्यनुषङ्गः। एवमग्रेऽपि। क इत्यप्रत्ययस्य संज्ञा। वचनश्लेषोऽपीति। सर्व इति सुधाकर इति च। अत्रादौ सन्धिवशादेकरूप्यम्। लिङ्गश्लेषमुदाहरति विकसदिति। दत्तामिति दाधातोः परस्मैपद द्विवचनात्मनेपदैक वचनयोरपि श्लेषः। आमोदमानन्दम् अथच नीलाब्जयोः सौरभदानं सम्भवति। नेत्रपक्षे लसन्ती च तरले च हारिणी मनोहरे चेति विग्रहः स्तनद्वयीपक्षे लसंस्तरलो हारमध्यगो मणिर्यत्र सा चासौ हारिणी चेति विग्रहः। यद्वा लसंस्तरलो यत्र एवंभूतो हारो यत्रास्ति। कर्मधारयोत्तरमतुनिषेधस्याप्रायिकत्वादेतत् साधु। वचनश्लेषोऽपीत्यपिना णिन् प्रत्ययस्य इनुप्रत्ययस्य च श्लेषः।

(ठ) प्रकृतिश्लेषमुदाहरति अयमिति। राजपुत्रे जाते ज्योतिर्विदोवचनमिदम्। हृदि वक्ष्यतीति वहधातुः ज्ञेषु पण्डितेषु वक्ष्यतीति वचधातुः। अमित्राणां सामर्थ्यच्छेत्ता मित्राणां सामर्थ्यस्य कर्त्ता। पदश्लेषमुदाहरति पृथुकेति। व्याख्यातमिदं दोषपरिच्छेदे। तत्र प्रकृतिश्लेषोऽपि सम्भवतीत्यत आह अत्र पदभङ्गे अर्थबोधनाय

"पृथु कार्त्तस्वरपात्रमित्यादि"।

अत्र पदभङ्गे विभक्तिसमासयोरपि वैलक्षण्यात् पदश्लेषो न तु प्रकृतिश्लेषः। एवञ्च।

"नीतानामाकुलीभावं लुब्धैर्भूरिशिलीमुखैः।
सदृशे वनवृद्धानां कमलानां तदीक्षणे"॥

अत्र लुब्धशिलीमुखादिशब्दानां श्लिष्टत्वेऽपि विभक्तेरभेदात् प्रकृतिश्लेषः। अन्यथा सर्व्वत्र पदश्लेषप्रसङ्गः। (ढ)

"सर्व्वस्वं हर सर्व्वस्य त्वं भव च्छेदतत्परः।
नयोपकारसाम्मुख्यमायासि तनुवर्त्तनम्"॥

अत्र हर इति पक्षे शिवसम्बोधनमिति सुप्। पक्षे च

---

समस्त पदस्य पार्थक्ये। विभक्तिसमासयोरपीत्यपिना प्रकृतेः संग्रहः। विभक्तिरत्र समासाङ्गम्। क्वचित्पदभङ्गाभावेऽपि प्रकृतिविभक्तिवैलक्षण्येन पदश्लेषो यथा। "यस्य चेतः प्रियालोके तस्य स्मरकदर्थनम्"। अत्र यद्युष्मदोस्तत्तदोः प्रकृत्योः सुप्तिङोर्विभक्त्योरपि वैलक्षण्यात् पदश्लेषः। एवञ्च प्रकृतिविभक्तिवैलक्षण्यात् पदश्लेषाङ्गीकारे च नीतानामिति। तथा ईक्षणे कमलानां पद्मानां मृगविशेषाणाञ्च सदृशे। "मृगभेदे तु कमलः कमलाः श्रीवरस्त्रियोरिति मेदिनी"। कीदृशानां लुब्धैर्मधुलुब्धैर्भूरिभिः शिलीमुखैर्भ्रमरैराकुलीभावं विसंष्ठुलतां नीतानां पक्षे लुब्धैर्व्याधैर्वहुभिर्बाणैराकुलीभावं व्याकुलतां नीतानां। वने जले विपिने च। वृद्धानां प्राप्ताधिकरूपाणां ईक्षणेऽपि पद्मिनीमुखे पतङ्गिभ्र्भ्रमरैर्व्याकुलत्वं नीयते। अन्यथा प्रकृतिभेदमात्रेणापि पदश्लेषाङ्गीकारे सर्वत्र प्रकृतिश्लेषस्थले। एवञ्च पदश्लेषाङ्गीकारे प्रकृतिश्लेषोदाहरणं न स्यादिति प्रकृतिश्लेषोच्छेदप्रसङ्ग इति भावः।

(ढ) विभक्तिश्लेषमाह सर्वस्वमिति। शिवं प्रति तद्भक्तस्य पुत्रं प्रति दातुराशीरुक्तिरियम्। प्रथमे हे हर त्वं सर्वस्य जनस्य सर्वस्वं भवस्य

इधातोस्तिङिति विभक्तिः । एवं भवेत्यादौ अस्य च भेदस्य प्रत्ययश्लेषेणापि गतार्थत्वे प्रत्ययान्तरासाध्यसुवन्ततिङन्तगतत्वेन विच्छित्तिविशेषाश्रयणात् पृथगुक्तिः ।

"महदे सुरसन्धम्मे तमव समासङ्गमागमाहरणे ।
हरबहु सरणं तं चित्तमोहमवसर उमे सहसा ॥"

अत्र । संस्कृतमहाराष्ट्र्योः ।

**पुनस्त्रिधा सभङ्गोऽथाभङ्गस्तदुभयात्मकः ।**

एतद्भेदत्रयञ्च उक्तभेदाष्टके यथासम्भवं ज्ञेयम् । (ढ)

---

संसारस्य छेदतत्परस्य नयस्य उपकारस्य च सांमुख्यं यस्मात्तादृशं तनु-वर्त्तनं शरीरवृत्तिमायासि प्राप्नोषीत्यर्थः । द्वितीये त्वं सर्वस्य सर्वस्वं हरच्छेदे धनिनां मारणे तत्परो भव उपकारसांमुख्यं नय अपनय तद्विमुखो भवेत्यर्थः । आयासि परपीड़ाकारि वर्त्तनं जीवनोपायं तनु विस्तारयेत्यर्थः । अस्य च विभक्तिश्लेषपरस्य च । प्रत्ययश्लेषेणापीत्य-पिभिन्नक्रमे प्रत्ययश्लेषेणापि गतार्थत्वेऽपीत्यर्थः । प्रत्ययान्तरेणासाध्यं यत् सुवन्तं तिङन्तञ्च तद्गतत्वेन विच्छित्तिविशेषाश्रयणात् वैचित्र्य-विशेषजननात् । तत्तद्धितान्तस्य स्वादिव्यतिरेकेण प्रयोगाभावात् । प्रत्ययान्तरसाध्यत्वं सुपतिङन्तस्य तु न तथात्वमितिविशेषः । आयासी त्यत्र प्रकृतिविभक्तिवैलक्षण्येन पदश्लेषोऽपीत्यवधेयम् ॥ भाषाश्लेषमाह महदे इति । संस्कृतार्थो यथा । हे महदे उत्सवदे हे उमे हे गौरि आगमाहरणे विद्याग्रहणे मे मम तत्प्रसिद्धं समासङ्गं अव रक्ष । कीदृशं सुरसन्धं देवप्रार्थनीयम् । अवसरे समये तं प्रसिद्धं चित्तमोहं सहसा झटिति हर अपनय कीदृशं बहुसरणं बहुविषयगामिनम् । प्राकृतार्थस्तु मह मम देहु देहि रसं रतिं धर्मे धर्मे तमयसं तमोवशां आसं आशां समागमा संसारात् हर अपनयणे अस्माकं हरवधूशिववधूः हरयं रचयित्री तत्र त्वं

यथा वा।

"येन ध्वस्तमनोभवेन बलिजित्कायः पुरा स्त्रीकृतो
यश्चोद्‌वृत्तभुजङ्गहारवलयो गङ्गाञ्च योऽधारयत्।
यस्याहुः शशिमच्छिरो हर इति स्तुत्यञ्च नामामराः
पायात् स स्वयमन्धकक्षयकरस्त्वां सर्वदोमाधवः" ॥

अत्र "येन ध्वस्तेत्यादौ" सभङ्गश्लेषः। "अन्धकेत्यादौ" अभङ्गः। अनयोश्चैकत्र सम्भवात् सभङ्गाभङ्गात्मको ग्रन्थगौरवभयात् पृथङ् नोदाहृतः। इह केचिदाहुः "सभङ्गश्लेष एव शब्दश्लेषविषयः। यतोदात्तादिस्वरभेदाद्भिन्नप्रयत्नोच्चार्य्यत्वेन भिन्नयोः शब्दयोर्जतुकाष्ठन्यायेन श्लेषः। अभङ्गस्तु अर्थश्लेष एव। यत्र स्वरभेदादभिन्नप्रयत्नोच्चार्य्यतया शब्दा-

---

मम सहसा इति। भाषासमावेशे तु भाषाणामैकरूप्यमेव न त्वर्थभेदः इह त्वर्थभेदोऽपीति भेदः। यथासम्भवमिति पृथुकार्त्तस्वरेत्यादौ सभङ्गः लीलामित्यादावभङ्गः। सर्वस्वं हरेत्यादौ सभङ्गाभङ्गः।

(ग) एकत्रैव तन्त्रितयमुदाहरति यथा वेति सर्वदाः सर्वाभीष्टस्य दाता माधवः सर्वदा उमाधवश्च त्वाम्पायात्। माधवपक्षे अभवेन जन्मरहितेन अनःशकटं ध्वस्तम्पादेन पराक्रमितं बलेरसुरराजस्य जेता कायः पुरा अमृतपरिवेशनावसरे स्त्रीकृतः स्त्रीत्वं प्रापितः। अमृतार्थं विवदमानानां देवासुराणाममृतपरिवेशनाय मायया नारायणेन मोहिनीरूपं मोहिनीरूपं कृतमिति पुराणवार्त्ता। यश्च उद्वृत्तस्य भुजङ्गस्याघासुरस्य हन्ता यद्वा कालियस्य पीडाकरः। रवारवलयः अरिसम्बन्धिसैन्यं यातीत्यर्थः। यद्वा उद्वृत्तभुजङ्गहारं बलं यस्य तेन गरुड़ेन यातीत्यर्थः। अगं गोवर्द्धनं कृष्णरूपेण गां पृथ्वीं च कूर्मरूपेण योऽधारयत्। शशिनं मथ्नातीति शशिमद्राहुस्तस्य शिरो-

भेदादर्थयोरेकवृन्तगतफलद्वयन्यायेन श्लेषः यो हि यदाश्रितः स तदलङ्कार एव, अलङ्कार्य्यालङ्करणभावस्य लोकवदाश्रयाश्रयिभावेनोपपत्तिरिति" तदन्ये न मन्यन्ते, तथा ह्यत्र ध्वनिगुणीभूतव्यङ्ग्यदोषगुणालङ्काराणां शब्दार्थगतत्वेन व्यवस्थितेरन्वयव्यतिरेकानुविधायित्वेन नियम इति। (त)

न च "अन्धकक्षयेत्यादौ" शब्दाभेदः। "अर्थभेदेन शब्दभेद" इति दर्शनात्। किञ्चात्र शब्दस्यैव मुख्यतया वैचित्र्यबोधोपायत्वेन कविप्रतिभयोट्टङ्कणात् शब्दालङ्कारत्वमेव। विसदृशशब्दद्वयस्य बन्धे चैवंविधस्य वैचि-

---

हर इति स्तुत्यं नाम यस्य चामरा आहुः। अन्धकानां यादवानां क्षयकरो द्वारकाख्यनिवासनिर्माता। उमाधवपक्षे येन ध्वस्तमनोभवेन विनाशितकामेन बलिजितो विष्णोः कायः पुराऽस्त्रीकृतः मोहिनीरूपादिद्वचुना शिवेन प्रेरितो विष्णुः पुनर्मोहिनीरूपं दधारेति पुराणवार्त्ता। यस्य उद्वृत्तौ उत्कर्षेण वर्त्तितौ भुजङ्गरूपौ हारवलयौ येन सः। यश्च शिरसिगङ्गामधारयत् यद्वा शरीराद्धेन गौरीं शिरसि गङ्गाञ्च इत्यभिप्रायेण चकारः। यस्य शिरः शशिमच्चन्द्रयुक्तं हर इति स्तुत्यं नाम चामरा आहुः। अन्धकस्यासुरविशेषस्य विनाशकः। संप्रस्तावत् शब्दालङ्कारोऽर्थालङ्कारश्च सम्भवति तयोः परमतनिराकरणपूर्वकं भेदं निरूपयति अत्रेति। जतुकाष्ठेति पृथगुपलभ्यमानयोरपि जतुकाष्ठयोर्योगे यथैकत्वप्रतिभासस्तथेहापीत्यर्थः। लोकवदिति यथा मौल्यादिगतं मुकुटादिमस्तकाद्यलङ्कारत्वेन व्यपदिश्यते तथा काव्येऽपीत्यर्थः। दूषयति तदन्ये इति।

(त) शब्दाभेदादर्थश्लेष इति यदुक्तं तद्दूषयति न चेति। तदर्थनस्य प्रामाण्यानभ्युपगमेत्याह किञ्चेति। कविप्रतिभया कवीना-

त्वाख्याभावाद् वैचित्र्यस्यैव चालङ्कारत्वादर्थमुखप्रेक्षितया चार्थालङ्कारत्वेऽनुप्रासादीनामपि रसादिपरत्वेनार्थमुखप्रेक्षितयार्थालङ्कारत्वप्रसङ्गः। शब्दस्याभिन्नप्रयत्नोच्चार्य्यत्वेनार्थालङ्कारत्वे "प्रतिकूलतामुपगते हि विधाविल्यादौ" शब्दभेदेऽप्यर्थालङ्कारत्वं तत्रापि प्रसज्यतीत्युभयत्रापि शब्दालङ्कारत्वमेव। यत्र तु शब्दपरिवर्त्तनेऽपि न श्लेषत्वखण्डना तत्र।

"स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम्।
अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च"॥

इत्यादावर्थश्लेषः। "अस्य चालङ्कारान्तरविविक्तविषयताया असम्भवात् विद्यमानेष्वलङ्कारान्तरेष्वपवादत्वेन

---

मनुभवेन। उद्भङ्गनाद्विप्रयोकरणात्। शब्दस्यान्वयानुविधायित्वं प्रदर्श्य व्यतिरेकानुविधायित्वं दर्शयति विसदृशेति वक्ष्ये चेति। चकारस्य वैचित्र्याभावाच्चेत्यन्वयः। ननु वैचित्र्यस्य शब्दान्वयव्यतिरेकानुविधायित्वेन किमायातमत आह वैचित्र्यस्यैवेति। अलङ्कारत्वात् अलङ्कारनियामकत्वात् अर्थमुखप्रेक्षितया अर्थानुसन्धानसापेक्षत्वेन अर्थालङ्कारत्वे अर्थालङ्कारत्वाङ्गीकारे रसादिपरत्वेन रसाद्युत्कर्षाभिप्रायप्रयोज्यत्वेन। शब्दभेदेऽपीति विधाविल्यादौ स्वरभेदाभावेनैकप्रयत्नेनैव शब्दद्वयोच्चारणादर्थद्वयप्रतीतिरिति भावः। उभयत्र स भङ्गाभङ्गश्लेषयोः। नन्वेवं श्लेषस्यार्थालङ्कारत्वोच्छेद इत्यत आह यत्रत्विति। स्तोकेनेति सुवर्णादिगौरवप्रकर्षापकर्षप्रकाशिका तुम्बिका शिखरफलका (निक्ति इति भाषा) तुलाकोटिः। अत्र स्तोकादिपदस्थानेऽल्पादिपदनिवेशेऽप्यर्थद्वयप्रतीतिरस्त्येव। वयमित्यादौ वक्ष्यतीत्यादिपदस्थाने धारयिष्यतीत्यादिपदनिवेशे तु नार्थद्वयप्रतीतिरिति। अत्र शब्दालङ्कारत्वमेव। इदानीं

तद्बाधकतया तत्प्रतिभोत्पत्तिहेतुत्वमिति केचित् । इत्यमत्र विचार्य्यते समासोक्त्यप्रस्तुतप्रशंसादौ द्वितीयार्थस्यानभिधेयतया नास्य गन्धोऽपि । (त)

"विद्वन्मानसहंसेत्यादौ" श्लेषगर्भे रूपकेऽपि मानसशब्दे चित्तसरोरूपोभयार्थत्वेऽपि रूपकेन श्लेषो बाध्यते । सरोरूपस्यैवार्थस्य विश्रामधामतया प्राधान्यात् । श्लेषे त्वर्थद्वयस्यापि समकक्षत्वं "सन्निहितबालान्धकारा भास्वन्मूर्त्तिश्चेत्यादौ" विरोधाभासेऽपि विरुद्धार्थस्य प्रतिभात-

---

श्लेषस्यालङ्कारान्तरविविक्तविषयत्वमुपपादयितुं परमतं निराकरोति अस्य चेति श्लेषस्य चेत्यर्थः । विविक्तेति वियुक्तेत्यर्थः । अपवादत्वेन असम्भवविषयान्तरत्वेन । तद्बाधकतया अलङ्कारान्तरबाधकतया प्रतिभोत्पत्तिहेतुत्वं अलङ्कारान्तर प्रतीति जनकप्रतीति विषयत्वम् । तथा च प्राथमिकप्रतीतिविषयत्वेन श्लेषस्य व्यपदेश एव न तु चरमप्रतीतिविषयस्यालङ्कारान्तरस्य व्यपदेश इति भावः । श्लेषाबाध्यानलङ्कारान् विभिद्य दर्शयति इत्यमिति । तत्र प्रथमं समासोक्त्यादेः श्लेषबाध्यत्वभ्रमं निराकरोति समासोक्तीति । अस्य श्लेषस्य गन्धोऽपि व्यञ्जनयैव तत्र द्वितीयार्थस्य प्रतीतिरिति भावः ।

(थ) ननु श्लिष्टरूपके उभयस्यार्थस्याभिधेयतया श्लेषबाध्यत्वमस्त्वित्यत आह विद्वदिति । विदुषां ज्ञानिनां मानसमेव मानसं सरोविशेषः तस्य हंस इत्यर्थः । श्लेषगर्भे श्लेषप्रतिभोत्थापिते उभयार्थत्वेऽपि रूप्यरूपकोभयवाचकत्वेऽपि । श्लेषस्य बाध्यप्रयोजकं सम्भवद्विषयान्तरत्वं दर्शयति सरोरूपस्यैवेति । एवकारेण चित्तरूपस्य व्यवच्छेदः । विश्रान्तिधामतया रूपकप्रतीतिपर्य्यवसानास्पदतया । प्राधान्यादिति अर्थयोः समकक्षत्वाभावोपपादकं समकक्षत्वं परस्परनिरपेक्षतया प्रधानत्वम् । तथा चार्थद्वयस्य समकक्षत्वे श्लेषस्य विषयः

भावस्य प्ररोहाभावान्न श्लेषः। एवं पुनरुक्तवदाभासेऽपि। तेन "येन ध्वस्तेत्यादौ" प्राकरणिकयोर्नीतानामित्यादाव प्राकरणिकयोरेकधर्माभिसम्बन्धात् तुल्ययोगितायाम्। (थ)

स्वेच्छोपजातविषयोऽपि न याति वक्तुं
देहीति मार्गणशतैश्च ददाति दुःखम्।
मोहात् समुत्क्षिपति जीवनमप्यकाण्डे
कष्टं प्रसूनविशिखः प्रभुरल्पबुद्धिः" ॥

---

सम्भवति। प्रकृते तु उद्देश्यविधेयभावेन गुणप्रधानभावापेक्षितया तुल्यकक्षत्वाभावात् रूपकेण श्लेषो बाध्यते। अन्यथा श्लिष्टपरम्परितरूपकस्य निर्विषयतापत्तेरिति भावः। नन्वत्रापि विरोधाभासोच्छेदस्तत्र समकक्षार्थद्वयस्याभिधानेन श्लेषस्य निर्बाधप्ररुत्वादित्यत आह सन्निहितेति। सन्निहितो बालः केश एवान्धकारो यत्र सा भास्वन् मूर्त्तिर्दीप्यमानशरीरा अथ च सन्निहितनवीनान्धकारा सूर्यस्वरूपा चेति विरोधः। प्रतिभातमात्रस्य पदार्थस्फूर्तिविषयस्यैव प्ररोहाभावादयोग्यत्वेन शब्दानुभवाभावात्। तथा चार्थद्वयस्य शब्दानुभवेऽपि श्लेषस्य विषयसम्भवादुत्सर्गत्वम्। विरोधाभासस्यायोगरततया शब्दानुभवाभावेपि विषयं इत्यपवादत्वमिति भावः। पुनरुक्तवदाभासेऽपीति द्वितीयार्थस्य पुनरुक्ततया शब्दानुभावो न भवतीति भावः। ननु तर्हि के श्लेषबाध्या इत्यपेक्षायामाह तेनेति समासोक्त्यादौ श्लेषस्य प्रसक्त्यभावादेव बाध्यत्वासम्भवेनेत्यर्थः। प्राकरणिकयोरित्येकधर्माभिसम्बन्धादित्यग्रे नान्वयः माधवो माधवी रक्षणोपयोगित्वेन प्राकरणिकत्वम्। अप्राकरणिकयोरिति पद्मस्तगविशेषयोरुपमानत्वेनाप्राकरणिकत्वमिति भावः। तुल्ययोगितायामिति विद्यमानायामपीत्यग्रे णान्वयः।

(द) स्वेच्छेति दुर्मतिराजकसेवकस्योक्तिरियम्। प्रसूनविशिखः कामोऽल्पबुद्धिश्च प्रभुः कष्टहेतुः। कष्टहेतुत्वमुपपादयति पादत्रयेण

इत्यत्र प्राकरणिकाप्राकरणिकयोरेकधर्माभिसम्बन्धाद्दीपके ।

"सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुविम्बमिवे-त्यादौ" चोपमायां विद्यमानायामपि श्लेषस्यैतद्विषयपरिहारेणासम्भवात् । एषाञ्च श्लेषविषयपरिहारेणापि स्थितेः । एतद्विषये श्लेषस्य प्राबल्येन चमत्कारित्वप्रतीतेश्च श्लेषेणैव व्यपदेशो भवितुं युक्तः, अन्यथा तद्व्यपदेशस्य सर्व्वथाऽभावप्रसङ्गाच्चेति । अत्रोच्यते न तावत् परमार्थतः श्लेषस्यालङ्कारान्तराविविक्तविषयता । "येन ध्वस्तेत्यादिना"

---

स्वेच्छया उपजाता उपपन्ना विषया उपभोगसाधनद्रव्याणि यस्य सः न याति विषयाद्वानुभवति गत्यर्थानां ज्ञानार्थत्वात् मार्गणशतैर्याचकसमूहैर्देहीति वक्तुमर्थात्तेभ्यो दुःखं ददाति महाबुद्धिस्तु देहीति वचनं विनैव याचकेभ्यो धनं ददातीति भावः । मोहादपराधस्मात् समाक्षिपति हरति अकाण्डे अकाले । कामपक्षे स्वेच्छं यथेष्टमुपजाताः सम्भवन्तो विषया लक्ष्याणि यस्य सः । देहीति शरीरीति वक्तुं योग्यतां न याति न प्राप्नोति मार्गणशतैः शरसमूहैर्मोहान्मोहं विधाय अशरीरोऽपि सम्भवद्बहुलक्ष्योऽपि कस्मैचिन्मार्गणशतैः दुःखं ददाति लक्ष्येषु विभज्य यदि शरान् क्षिपेत्तदा एकस्य वेधने शरशतासम्भवात् दुःखातिशयो न भवतीति भावः । अत्र स्मरस्योपमानत्वेनाप्राकरणिकत्वं राज्ञ उपमेयत्वेन प्राकरणिकत्वम् । दीपके इति विद्यमानेऽपीति लिङ्गविपरिणामेनान्वयः । सकलकलं कोलाहलसहितम् अथ च सकला समग्रा कला यस्य तादृशम् । एतद्विषयेति तुल्ययोगितादिविषयेत्यर्थः । एषां तुल्ययोगितादीनां अन्यथा एतद्विषये श्लेषानङ्गीकारे । एतन्मते दोषं प्रदर्श्य सिद्धान्तमप्याह कचो-

विविक्तविषयत्वात्, न चात्र तुल्ययोगिता; तस्याश्च द्वयो-रप्यर्थयोर्वाच्यत्वनियमाभावात्। अत्र हि माधवीमाधव-योरेकस्य वाच्यत्वनियमेऽपरस्य व्यङ्ग्यत्वं स्यात्। (द)

किञ्च तुल्ययोगितायामेकस्यैव धर्म्मस्यानेकधर्म्मिसम्बद्ध-तया प्रतीतिः; इह त्वनेकेषां धर्म्मिणां पृथक् पृथक् धर्म्मसम्ब-द्धतया। "सकलकलेत्यादौ" च श्लेषमाप्रतिभोत्पत्ति हेतुः

---

ष्यत इति। विविक्तविषयत्वात् अलङ्कारान्तरपृथक्कृतविषयत्वात्। अत्र येन ध्वस्तेत्यादिश्लेषविषये। तस्यां तुल्ययोगितायाम्। एतद्दीपक-स्याप्युपलक्षणम्। अर्थयोर्वाक्यार्थयोः। वाच्यत्वानियमाभावादिति एकस्य वाच्यत्वनियमादितितात्पर्य्यार्थः। न च "रूक्षाः स्वभावमधुरा वहन्त्यो रागमुल्बणं द्वयो इत्यस्य कर्षन्ति कान्ताभिः प्रेषिताः प्रिय" इत्यादौ तुल्ययोगितायां द्वितीयार्थस्य वाच्यत्वस्वत्वेन कथमेकस्यैव वाच्यत्व मिति वाच्यं ये तु दुर्गालङ्घितविग्रह इत्यादौ पदपराद्वृत्त्या द्विती-यार्थस्यापि वाच्यत्वमङ्गीकुर्वन्ति तेषां मत इत्यर्थः। अत्र चेति येन ध्वस्तेत्यादौ तुल्ययोगितानुरोधेनैकस्य वाच्यत्वनियमो वाच्यस्त्वधा-वत्यपरस्य व्यङ्ग्यत्वापत्त्या श्लेषस्य विषयो न स्यादिति भावः।

(ध) ननु पदपराद्वृत्तिपक्षे द्वयोरप्यर्थयोर्वाच्यत्वमत आह किञ्चेति इहतु श्लेषेतु पृथक् पृथक् धर्मसम्बन्धतया प्रतीतिरित्यन्वयः। अलङ्का-राणां यो यत् प्रतीतिजन्य प्रतीतिविषयः स तद्बाध्य इति नियमा-भिप्रायेण श्लेषबाध्यत्वमुपमायां यस्तु निषेधयति सकलमित्यादौ वेति। श्लेषेणोपमाबाधक इति भावः। तत्वदा। शब्दमात्रं सामान्य मात्रित्यापि इह अलङ्कारमध्ये सम्भवत इत्यन्वयः। यद्यपि सकल-कलमित्यादौ एकप्रयत्नेन शब्दद्वयोत्पत्त्या शब्दस्याप्येकत्वं न सम्भ-वति तथाप्येकानुपूर्वावच्छिन्नत्वेन शब्दयोरेकत्व प्रतिभास इति भावः। समुच्चयालङ्कारे एकधर्माभिसम्बन्धस्य नियमाभावात् समुच्चयपदस्त

येषः। पूर्णोपमाया निर्विषयत्वापत्तेः। "कमलमिव मुखं मनोज्ञमेतदित्याद्यस्ति पूर्णोपमाविषय इति चेन्न। यदि "सकलेत्यादौ" शब्दश्लेषतया नोपमा तत् किमपराद्ध "मनोज्ञमित्यादावर्थश्लेषेण स्फुटमर्थालङ्कारावेतावुपमासमुच्चयौ, किन्तु "आश्रित्य शब्दमात्रं सामान्यमिहापि सम्भवत्" इति रुद्रटोक्तदिशा गुणक्रियासाम्यवच्छब्दसाम्यस्याप्युपमाप्रयोजकत्वात्। ननु गुणक्रियासाम्यस्यैव उपमाप्रयोजकता युक्ता तत्र साधर्म्म्यस्य वास्तवत्वात्, शब्दसाधर्म्म्यस्य तु न तथा तत्र साधर्म्म्यस्यावास्तवत्वात्, ततश्च

---

तुल्ययोगितापरं दीपकपरञ्च। तयोस्तत् सम्भवात्। नन्वेवं किञ्च तुल्ययोगितायामित्यादिना सङ्केतुल्ययोगितयोर्यो विषयभागः कृतः स न सङ्गच्छते। येन ध्वस्तेत्यादावपि शब्दरूपैकधर्मसम्बन्धस्य सत्त्वेन तुल्ययोगितायो विषयसम्भवादिति चेत् सत्यम्। यत्र धर्मिणोर्भिन्नप्रयत्नोच्चार्य्यशब्दबोध्यतायां द्विवचन चकाराद्यपेक्षा तत्रैव दीपकतुल्ययोगितयोर्विषयः। येन ध्वस्त इत्यादौ तु द्विवचनाद्यपेक्षाविरहेण तुल्ययोगिताया विषय एव नास्ति ययोरेकधर्मसम्बन्धस्तयोरनेकप्रयत्नोच्चार्य्यपदवाच्यत्वम् दीपकतुल्ययोगितालक्षणे निवेशनीयमतो नातिप्रसङ्गः। एवञ्च पूर्वोक्तं निरूपणे च सतीत्यर्थः स्वेच्छोपजातविषयोऽपीत्यादिदीपकस्य च किरणा हरिणाङ्कस्य इत्यादि विकसन्नेत्रनीलाब्जे इत्यादि" च तुल्ययोगितायाश्च विषय इति ध्येयम्। गुणक्रियासाम्यवत् गुणक्रियासाम्यस्येव। तत्र गुणक्रियासाम्यप्रयुक्तोपमायाम्। वास्तवत्वात् वस्तुसमवेतत्वात्। न तथा नोपमाप्रयोजकता। अत्र शब्दसाम्यप्रयुक्तोपमायाम् साधर्म्यस्य शब्दरूपसामान्यस्य धर्मस्य अवास्तवत्वात् उपमानोपमेयरूपवस्तुनोऽसमवेतत्वात् ततश्च शब्दसाम्यस्योपमाप्रयोजकत्वायोगाच्च अविशिष्टस्य वास्तवत्वरूपविशेषरहितस्य उपमालक्षणस्य काव्य-

पूर्णोपमाया अन्यथानुपपत्तेर्गुणक्रियासाम्यस्यैवार्थश्लेषविषयतापरित्यागे पूर्णोपमाविषयता युक्ता न तु "सकलेत्यादौ" शब्दसाम्यस्येति चेन्न। साधर्म्यमुपमेत्येवाविशिष्टस्य उपमालक्षणस्य शब्दसाम्याद्यावृत्तेरभावात्। (ध)

यदि च शब्दसाम्ये साधर्म्यमवास्तवत्वान्नोपमाप्रयोजकं तदा कथं "विद्वन्मानसेत्यादौ" आधारभूते चित्तादौ सरोवराद्यारोपे राजादेर्हंसाद्यारोपरूपरूपकः प्रयोजकः। किञ्च यदि वास्तवसाम्य एवोपमाङ्गीकार्य्या तदा कथं त्वयापि "सकलकलेत्यादौ" बाध्यभूतोपमाङ्गीक्रियते। किञ्चात्र श्लेषस्यैव साम्यनिर्व्वाहकता न तु साम्यस्य श्लेषनिर्व्वाहकता, श्लेषबन्धतः प्रथमं साम्यस्यासम्भवादित्युपमाया एवाङ्गित्वेन व्यपदेशो ज्यायान्। "प्रधानेन व्यपदेशा भवन्ती" त्युक्तनयात्। ननु शब्दालङ्कारविषयेऽङ्गाङ्गिभावसङ्करो नाङ्गीक्रियते तत्कथमत्र श्लेषोपमयोरङ्गाङ्गीभावः सङ्कर इति

---

प्रकाशोक्तस्य। तथाच येन केनापि सम्बन्धेनोपमानोपमेयवृत्तिधर्म उपमा। न तु समवाय सम्बन्धेनेति नियमः। शब्दस्य उपस्थाप्यत्वसम्बन्धेनोपमानोपमेयवृत्तित्वेनोपमानोपमेयप्रयोजकत्वमक्षतमिति भावः।

(न) उपमानोपमेययोरभेदप्रतीतिरूपकमित्यभिप्रायेणाह यदि चेति। आधारभूते विषयस्वरूपे। ननु श्लिष्टपदनिबन्धनपरम्परितरूपकान्यथानुपपत्त्या तत्र तथा कल्पनीयं न तूपमायामित्यत आह किञ्चेति कथमिति तदेतिशेषः। श्लेषस्यालङ्कारान्तरप्रतिभोत्पत्तिहेतुत्वेन तेनैव व्यपदेश इति यदुक्तं तद्दूषयति किञ्चात्रेति। अङ्गित्वेन साध्यतया प्रधानत्वेन। तथाच श्लेषस्य प्रथमोपस्थितत्वेऽपि साधनत्वेनाप्रधानतया तेन व्यपदेशो नोचित इति भावः। तथा

चेन्न। अर्थानुसन्धानविरहिण्यनुप्रासादाविव तथानङ्गीकारात्। एवं दीपकावपि ज्ञेयम्। (न)

"सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः।
निपतन्ति धार्त्तराष्ट्राः कालवशान्मेदिनीपृष्ठे"॥

अत्र शरद्वर्णनया प्रकरणेन धार्त्तराष्ट्रादिशब्दानां हंसाद्यर्थाभिधाने नियमात् दुर्योधनादिरूपोऽर्थः शब्दशक्तिमूलो वस्तुध्वनिः। इह च प्रकृतप्रबन्धाभिधेयस्य द्वितीयस्यार्थस्य सूच्यतयैव विवक्षितत्वात् उपमानोपमेयभावो न विवक्षित इति नोपमाध्वनिर्न च श्लेष इति सर्वमवदातम्। (प)

---

नङ्गीकारात् अङ्गाङ्गिभावसङ्करानङ्गीकारात्। श्लेषस्य शब्दालङ्कारत्वेऽप्यर्थानुसन्धानसापेक्षत्वादुपमाङ्गत्वमच्युतमिति भावः। एवमिति यथा एकशब्दवत्त्वेन उपमां स्वीकृत्य तस्या एव प्राधान्यव्यपदेशस्तथा दीपकादावपीत्यर्थः। आदिपदात् तुल्ययोगितापरिग्रहः।

(प) सत्पक्षा इत्यादौ केचिदुपमाध्वनिं केचिच्च श्लेषं स्वीकुर्वन्ति तदुभयमपि नोचितमित्याह सत्पक्षा इति। सन्तः पक्षाः पत्राणि येषां ते प्रसाधिताशा अलङ्कृतदिशः मदेन शरत्कालकृतचित्तविकारविशेषेणोद्धत आरम्भः आरावो येषां रभिशब्दे इत्यस्य रूपम्। धार्त्तराष्ट्राः हंसविशेषाः कालवशात् शरत्कालवशात्। वर्षासु हंसा मानसे सरसि तिष्ठन्ति शरदि पृथिवीमागच्छन्तीति प्रसिद्धिः। पक्षे सत्पक्षा उत्तमसहायास्ते मधुरगिरश्चेति समासः। प्रसाधिताशाः वशीकृतदिशः। यद्वा प्रकृष्टं साधिता आशाः स्वेच्छाविषया यैः। अथवा प्रसाधिता धृता आशा जयेच्छा यैस्ते मदेन गर्वेण उद्धता आरम्भा युद्धाद्याडम्बरा येषां ते धार्त्तराष्ट्रा धृतराष्ट्रसुताः कालवशात् मृत्यु-

**पद्माद्याकारहेतुत्वे वर्णानां चित्रमुच्यते।**

आदिशब्दात् खड्गमुरजचक्रगोमूत्रिकादयः। अस्य च तथाविधलिपिसन्निवेशविशेषवशेन चमत्कारविधायिनामपि वर्णानां तथाविधश्रोत्राकाशसमवायविशेषवशेन चमत्कारविधायिभिर्वर्णैरभेदेनोपचाराच्छब्दालङ्कारत्वम्। तत्र पद्मबन्धो यथा मम। (फ)

"मारमासुषमा चारुरुचा मारवधूत्तमा।
मात्तधूर्त्ततमावासा सा वामा मेऽस्तु मा रमा"॥

---

कालवशात् नियमनात् नियन्त्रणात् ध्वनिर्व्यङ्ग्यः। नवा श्लेष इति प्रकरणनियमेन द्वितीयार्थस्यानभिधेयत्वादिति हेतुरत्र द्रष्टव्यः।

(फ) चित्राख्यालङ्कारमनेकविधमाह पद्मादीति पद्माद्याकारवर्णस्तोमजनकत्वे इत्यर्थः। गोमूत्रिकादय इत्यादिपदेन काव्यपद्यादयो ग्राह्याः। ननु श्रोत्रसम्बद्धानां जन्यवर्णानां पद्माद्याकारजनकत्वरूपचित्रालङ्काराभावात् कथमस्य शब्दालङ्कारत्वमतस्तदुपपादयति अस्य चेति चित्रालङ्कारस्येति। तथाविधस्य पद्मादिसदृशस्य लिपीनां वर्णसंस्थानानां सन्निवेशविशेषस्य रचनाविशेषस्य वशेन चमत्कारविधायिणां वक्तृविस्मयकारिणां वर्णानां तथाविधः श्रोत्राकाशसमवायविशेषः कर्णरन्ध्रसम्बन्धविशेषस्तद्वशेन चमत्कारविधायिभिः श्रोतृविस्मयकारिभिः। एवञ्च पद्माद्याकारलिपिसन्निवेशविशेषमालोक्य वक्त्रा ये वर्णा उच्चार्य्यन्ते तैरेव श्रोतॄणां श्रोत्रे पद्माद्याकारवर्णस्तोमो जन्यते कार्य्यकारणयोरभेदोपचारेण जन्यवर्णानामपि चित्रालङ्कारस्यत्वम् इति भावः।

(ब) मारमेति सा रामा मनोरमा स्त्री ममास्तु रमा मास्तु लक्ष्मा या अपि सा मनोरमेति भावः। कीदृशी मारमासुषमा मारस्य

एषोऽष्टदलपद्मबन्धो दिग्दलेषु निर्गमप्रवेशाभ्यां श्लिष्ट-

---

कामस्य मा लक्ष्मीः सेव सुषमा परमा शोभा यस्याः सा । चारुरुचा मनोहरकान्त्या मारवध्वा रतेरप्युत्तमा मात्तधूर्त्ततमावामा अगृहीत-धूर्त्ततमगृहा श्लिष्टवर्णः । तुलोमप्रतिलोमपाठेनैकरूपाक्षरः अन्यथा क्वचित् प्रवेशः क्वचिन्निर्गमः इत्यपि श्लिष्टवर्ण एव । अत्राष्टसु दिक्षु विततमष्टदलं पद्मं लेख्यम् । तत्कर्णिकायां श्लोकस्य प्रथममक्षरं लेख्यम् । ततश्च कर्णिकायां श्लोकस्य प्रथममक्षरं लेख्यं ततः पूर्वादि-दलेषु प्रदक्षिणक्रमेण द्वौ द्वौ वर्णौ लेख्यौ । एवं सप्तदशभिरक्षरैः पद्मं भवति । तत्र कर्णिकान्तस्थवर्णोपक्रमेण प्राच्यदले निर्गमे नाग्नेयमले प्रवेशेन दक्षिणदलेनिर्गमप्रवेशाभ्यां नैर्ऋतदले निर्गमेन पश्चिमदले प्रवेश-निर्गमाभ्यां वायव्यदले प्रवेशेन उत्तरदले निर्गमप्रवेशाभ्यां ईशानदले निर्गमेन प्राच्यदले पश्चात् प्रवेशेन श्लोकः पाठ्यः । कर्णिकावर्णस्य त्वष्टावृत्त्या पाठः । तदुक्तम् । "वर्णद्वयेन चैकैकं दलभूतदलाष्टकम् । सर्वोत्तराद्यवर्णेन पद्मं स्यात् क्षतकर्णिकमिति" खड्गबन्धो यथा "मारारिशक्ररामेभ मुखैरासाररंहसा । सारारब्धस्तवा नित्यं तदर्त्तिहरणक्षमा । माता नतानां संघट्टः श्रियां बाधितसंभ्रमा । मान्याथ सीमा रामाणां शं मे दिश्यादुमादिजा" । अस्यार्थः उमा अद्रिजा मे मह्यं शं कल्याणं दिश्यात् दद्यात् । कीदृशी मारारिः शिवस्य शक्रस्य रामस्य इभमुखो गणेशस्य तैरासाररंहसा दृष्टिकणरीत्या नित्य-मारब्धस्तवा । पुनः कीदृशी सारा श्रेष्ठा तेषां स्तुवतां शिवादीनां अर्त्तौ पीड़ायां हरणे क्षमा । नतानां प्रणतानां माता मातेव पालयित्री श्रियां सम्पदां सङ्घट्टः सम्मेलनस्थानं बाधितसंभ्रमा निरुद्वेगा सम्यग्भ्रमर-हिता वामानां नारीणां सीमा पराकाष्ठा । अद्रिजेत्यत्र आदिजेति पाठे आद्येत्यर्थः । अनेन श्लोकद्वयेन खड्गः प्रस्तीर्य्यते तत्र दृष्टैः उपर्य्यधः शाखाद्वयम् उपरि शाखाचतुष्टये प्राथमिकं आकारं विन्यस्य तिर्य्यगधः क्रमेण रादीनादि [illegible]

वर्णः किन्तु दिग्दलेष्वन्यथा कर्णिकाक्षरन्तु श्लिष्टमेव । एवं खड्गबन्धादिकमप्युह्यम् । ( ब )

---

धारा । ततः खड्गशिखायां सेति श्लिष्टं ततस्तिर्यगूर्ध्वक्रमेण रारब्धेत्यादिवर्णचतुर्दशकं विन्यस्यापरां धारां कुर्यादित्येका पट्टिकासाकारः पूर्वसाकारं प्रविष्टः एवमन्योऽपि तत्रैव प्रविष्टं कल्पयित्वा दक्षिणशाखायां तेत्यादिवर्णसप्तकं विन्यस्य वामशाखायां तिर्यग्विलोमेन स्मिकारादिवर्णसप्तकं लिखेत् साकारश्चतुष्पथे प्राथमिकसाकारं प्रविष्टः तामस्तमेवसाकारमारभ्याधोऽधोऽन्याथसीति त्रयोवर्णा मुष्टौ लेख्याः । ततोऽधश्चतुष्पथमध्ये तदन्तिमसाकारं विन्यस्य तद्दक्षिणशाखायां रानानांशमिति चतुरो वर्णान् विन्यसेत् ततो वामशाखायां विलोमेन से दिश्यादु इति चतुरो वर्णान् लिखेत् साकारोऽधश्चतुष्पथस्थसाकारं प्रविष्टः ततो मुष्टेरधः फलके द्विजा इति द्विजेति वा वर्णद्वयं लेख्यमिति खड्गनिष्पत्तिः । मुरजबन्धो यथा । "सा सेनागमनारम्भे रसेनासीदनारता । तारनादजनामत्तधीरनागमनामया" । अत्र पङ्क्तिचतुष्टयेन लिखितस्य पादचतुष्टयस्याधः क्रमेण यथाक्रमं प्रथम द्वितीय तृतीय चतुर्थानूर्ध्वक्रमेण पञ्चम षष्ठ सप्तमाष्टमान् वर्णान् गृहीत्वा प्रथमः पादः । द्वितीयात् प्रथमं प्रथमात् द्वितीयतृतीयौ द्वितीयाच्चतुर्थपञ्चमौ प्रथमात् षष्ठ सप्तमौ द्वितीयादष्टमं गृहीत्वा द्वितीयः पादः । तृतीयात् प्रथमं तुर्यात् द्वितीय तृतीयौ तृतीयात्तुर्यपञ्चमौ तुर्यात् षष्ठसप्तमौ तृतीयादष्टमं गृहीत्वा तृतीयः पादः । पादचतुष्टयस्योर्ध्वक्रमेण प्रथम द्वितीय तृतीय चतुर्थानधःक्रमेण पञ्चषष्ठसप्तमाष्टमान् गृहीत्वा चतुर्थः पादः पाद्य एवं मुरजसिद्धिः । चक्रबन्धो विदग्ध मुखमण्डने गोमूत्रिका बन्धो दण्डिनि ज्ञेयः । एवमन्येऽपि मुषल मूलगत्रि हलचतुरङ्गपीठरथतुरग गजपादादयो बोध्याः । एवं वर्णानामनुलोम प्रतिलोम पाठादिना एकरूप पदोत्थयहेतुत्वेऽपि [illegible] वेदितव्यः ।

**काव्यान्तर्गडुभूता या सा तु नात्र प्रपञ्च्यते ।**
**रसस्य परिपन्थित्वान्नालङ्कारः प्रहेलिका ॥**
**उक्तिवैचित्र्यमात्रा सा च्युतदत्ताक्षरादिका ।**

च्युताक्षरा दत्ताक्षरा च्युतदत्ताक्षरा च । उदाहरणम् ।

"कूजन्ति कोकिलाः साले यौवने फुल्लमम्बुजम् ।
किं करोतु कुरङ्गाक्षी वदनेन निपीड़िता" ॥

तत्र "रसाल इति" वक्तव्ये "साल इति" रच्युतः । "वने" इत्यत्र "यौवन" इति योर्दत्तः । "वदनेनेत्यत्र" "मदनेनेति" मच्युतौ वो दत्तः । आदिशब्दात् क्रियाकारकगुप्त्यादयः । तत्र क्रियागुप्तिर्यथा ।

---

(भ) काव्यस्यान्तर्गडुभूततया अन्तर्गड्डुवदकिञ्चित्करत्वेन । इह काव्यालङ्कारविचारप्रकरणे । दण्ड्यादिभिरुक्तं प्रहेलिकाया अलङ्कारत्वं दूषयति रसस्येति रसबोधस्येत्यर्थः परिपन्थित्वाद्विलम्बकत्वात् तथा च प्रत्युत दोषलक्षणाक्रान्ततया प्रहेलिकाकाव्ये नोपादेयेतिभावः । ननु तर्हि प्राचीनैः किमत्यलङ्कारप्रकरणे प्रहेलिका प्रपञ्चिता इत्यत आह उक्तीति वैचित्र्यमात्रं वैचित्र्यमात्रप्रयोजिका नतु रसाद्युपकारिका । तथा च वैचित्र्यमात्रप्रयोजकत्वेनालङ्कारस्याभ्यात्तत्रालङ्कारपदप्रयोगो गौण एवेति भावः । वन इतीति वक्तव्य इत्यन्वयः । एवमिति कारकसम्बोधनगुप्त्यादावप्युदाहार्यमित्यर्थः । तत्र दुर्य्योधन उपागत इत्यत्र योऽधन उपागत इति कर्त्तृपदं गुप्तम् । यथा वा "ब्राह्मणेभ्यो नदीतीरे वस्त्राण्याभरणानि च । ददाति गां हिरण्यञ्च वसुधाञ्च द्रुतं व्रज" । अत्र ब्राह्मणेति सम्बोधनं पदम् । एभ्य इति कर्त्तृपदं सम्प्रदानभ्रमजनकत्वाद्गुप्तम् । एवमेक

"पाण्डवानां सभामध्येदुर्य्योधन उपागतः ।

तस्मै गाश्च हिरण्यञ्च सर्वाण्याभरणानि च" ॥

अत्र "दुर्य्योधन" इत्यत्र "अदुर्य्योऽधन इति" अदुरिति क्रिया गुप्ता । एवमन्यत्रापि । ( म )

अथावसरप्राप्तेष्वर्थालङ्कारेषु प्राधान्यात् सादृश्यमूलेषु लक्षितव्येषु तेषामप्युपजीव्यत्वेन प्रथममुपमालङ्कारमाह ।

---

द्वित्रिचतुः स्वरः नियमोऽप्युक्तिवैचित्र्यमेव । क्रमेण यथा । "करपङ्कजसस्त्रक्रन्नक्रग्रस्तगजग्रह । भक्तभव्यभरव्यग्र मम व्यसनमर्द्दय । श्रीदीश्रीह्रीकीर्त्तिधीनीतिगीः प्रति । एधेते द्वेद्वे ते येनेमे देवेशे । चितिविजितिस्थितिविहिति व्रतरतयः परगतयः । उरुरुरुधुर्गुरुदुधुवुर्युधि कुरवः स्वमरिकुलम् । आम्नायानामाहन्त्या वाग्गीतीरीतीः प्रीतीर्भीतीः । भोगोरोगोमोदोमोहोध्येयेच्छेदेदेशे क्षेमे" । एवमेकादिचतुष्पर्यन्त वर्णस्थाननियमानामुदाहरणानि दण्डिनि द्रष्टव्यानि ।

( म ) अर्थालङ्कारान्निरूपयितुमुपमानिरूपणस्य प्राथमिकत्वे हेतुमाह अथेति । शब्दालङ्कारनिरूपणानान्तरमित्यर्थः । अवसरप्राप्ता अवसर संगत्या निरूपणयोग्येषु अर्थालङ्कारेषु मध्ये सादृश्यमूलेषु सादृश्यप्रतिभोत्थापितेषु स्मरणादिषु लक्षितव्येषु निरूपणीयेषु तेषां सादृश्यमूलालङ्काराणामुपजीव्यत्वेन उत्थापकत्वेन प्राधान्यात् प्रथममुपमां निरुपयतीत्यर्थः । एवञ्च हेतुतासङ्गतिर्दर्शिता । साम्यमिति वाक्यस्य एकत्वे सति द्वयोः साम्यमुपमेत्यन्वयः । साम्यं साधर्म्यं गुणक्रियारूपं वाच्यमभिधावोध्यम् । अवैधर्म्ये विरुद्धधर्म्मप्रोक्तिशून्यं वैधर्म्यविषयैकवाक्य विषयत्वे सति इवादि वाच्यमुभयसम्बन्धिसाधर्म्यमुपमेत्यर्थः । वाच्यादिचतुष्टयस्य क्रमेण व्यावृत्तिमाह रूपकादिष्विति । आदिना परिणामादिग्रहणम् । व्यङ्ग्यत्वमभिधाभिन्नवृत्ति प्रतीयमानत्वम् । तेन मुखं चन्द्र इत्यादौ रूपके चन्द्रादिसा-

**साम्यं वाच्यमवैधर्म्यं वाक्यैक्ये उपमाद्वयोः ।**

रूपकादिषु साम्यस्य व्यङ्ग्यत्वं व्यतिरेके च वैधर्म्यस्या-

---

धर्मत्वस्य लक्षणया प्रतीतत्वेनाव्यङ्ग्यत्वेऽपि न क्षतिः । ननु विधुवति मुखाम्भोजमित्यादौ वक्ष्यमाणोदाहरणे साम्यस्य गम्यत्वात् कथं लक्षणगमनमितिचेन्न । दध्यानयेत्यादौ कुम्भस्थामादेः प्रतिसन्धानात् कर्मत्वादेरिव लुप्तस्य वत्वप्रतिसन्धानात् साम्यस्य वाच्यत्वाङ्गीकारात् समासस्यैवोपमावाचकत्वाङ्गीकाराच्च । अत एव दण्डिनोक्तम् सादृश्यवाचकप्रकरणे समासश्च बहुव्रीहिः शशाङ्क वदनादिष्विति चकारात् कर्मधारयश्च । ननु तथापि सादृश्यवाचकसमासस्य "सन्त्वे क्विप्समासगता द्वेधा धर्म्मवादि विलोपने" इति वक्ष्यमाणसङ्गतमिति चेन्न । समासस्य सादृश्यवाचकत्वमस्वीकुर्वतां प्राचां मतानुसारेणैव तत्प्रकारस्य प्रणेष्यमाणत्वात् । "एवं वदनं मृगशावाक्ष्याः सुधाकरमनोहरमिति" औपम्यवाचकस्य लोपे यदुदाहृतं तदपि प्राचीनमतानुसारेणैवेति वेदितव्यम् । एतन्मते तु प्रथमं धर्मलोपस्य द्वितीयं पूर्णाया उदाहरणं बोध्यम् । ननु तथापि "मुखमस्या विधुं द्वेष्टि सद्यो मुखिडत मत्तहरणचिनुकप्रसङ्गि नारङ्क"मित्यादावव्याप्तिः । साम्यस्य गम्यत्वात् न च "स्पर्द्धते जयति द्वेष्टीत्यादि" दण्डिदर्शनात् तत्रापि साम्यस्य वाच्यत्वमिति वाच्यं । तस्य साम्यव्यञ्जकपदत्वेनोपपत्तौ साम्यवाचकत्वकल्पनाया अन्याय्यत्वात् । अत्रोच्यते । द्वेषस्पर्द्धयोश्चेतनधर्मत्वेन मुखनारङ्ककयोरसम्भवादुपमायां पर्य्यवसानेन तादृशस्थले निदर्शनालङ्कारस्यैवाङ्गीकारात् । इवादीनुपादानात् मुखचन्द्रौ मनोज्ञावित्यत्र उभयसाम्यस्य वाच्यत्वेऽपि नातिव्याप्तिः । व्यतिरेके इति । "अकलङ्कि मुखं तस्या न कलङ्की यथा विधु"रित्याद्येकवाक्यगतव्यतिरेक इत्यर्थः । तत्राकलङ्कित्वमुपमानस्य कलङ्कित्वमुपमेयस्य वैधर्म्यम् । नन्वत्र साम्यस्य वाच्यत्वेऽपि तस्य नञासत्वे सम्बन्धाभावबोधादुभयसम्बन्धित्वमेव नास्ति कथमत्रोपमाप्रसक्तिरिति चेन्न । मुखे चन्द्रसाधर्म्यबाधासम्भवेन तत्रो-

प्युक्तिः उपमेयोपमायां वाक्यद्वयम् अनन्वये च एकस्यैव साम्योक्तिरित्यस्याभेदः ।( म )

**सा पूर्णा यदि सामान्यधर्म औपम्यवाचि च ।**

**उपमेयं चोपमानं भवेद्वाच्यम्**

सा उपमा साधारणधर्मौ द्वयोः सादृश्यहेतुगुणक्रिये

---

मुखस्य उत्कर्षातिशयप्रतीतिमात्रे तात्पर्यात् । उपमेयोपमायामिति "मतिरिव कमला कमलेव मतिरित्यादौ" इत्यर्थः । अत्र श्रीमत्योरतुल्यत्वं साधर्म्यं वाक्यद्वयेन प्रतिपाद्यते । रसनोपमादेरपि विलक्षणवैचित्र्या-धायकत्वेनालङ्कारान्तरत्वमित्यनेनैव तद्वारणमित्यवधेयम् । वाक्यैक्ये इति वाक्यान्तरव्यवच्छेदकमेव न त्वेकपदव्यवच्छेदकम् । तेन मुखाब्ज-मित्यादावेकपदेऽप्युपमा । अनन्वये त्विति "चन्द्रश्चन्द्र इवातन्त्र इत्यादा" वित्यर्थः । अत्रैकस्यैव चन्द्रस्यातन्त्रत्वं साधर्म्यमिव शब्देन प्रतिपाद्यते ननु घटत्वमिव पटत्वं नित्यमित्यादेरप्युपमात्वं स्यादिति चेदिष्टमेव किन्तु वैचित्र्यविशेषानाधायकत्वात्तस्यामलङ्कारव्यवहारो नास्तीति वि-शेषः । एवमन्यत्रापि बोध्यम् । केचित्तु इवादिशब्दवत्तुल्यादिपदेनापि साधारणधर्मस्य प्रतिपादनात् करिष्यमाणश्रौत्यार्थीविभागानुपपत्त्या-साधारणधर्मसम्बन्ध एवोपमा न तु साधारणधर्ममात्रम् । स च प्रति-योगितारूपः । चन्द्र इव मुखमित्यादौ चन्द्रप्रतियोगिकसादृश्याश्रयो मुखमिति प्रतीतेरानुभाविकत्वात् । तादृशसम्बन्धस्य इवादिशब्देन वाच्यस्तु त्यादिपदेनार्थवशलभ्य इति श्रौतार्थीविभाग इत्याहुः । तन्न आधर्रा-मुपमायामव्याप्तेः । तत्र साधारणधर्मसम्बन्धस्य विभक्त्यादिप्रतिसन्धान-लभ्यतया इवादिशब्दवाच्यत्वाभावात् उभयसम्बन्धित्वविशेषादिवाच्यत्वे श्रौती अर्थवशलभ्यत्वे त्वार्थीति विवक्षयैव विभागोपपत्तेश्च ।

( य ) उपमायाः पूर्णा लुप्ता चेति भेदद्वयमाह सेति । सामान्य-पदविवरणं साधारणेति सादृश्यहेतुसामान्यव्यावृत्तिबोधकारणे साम्य-

मनोज्ञत्वादि, औपम्यवाचकमित्यादि, उपमेयं मुखादि, उपमानं चन्द्रादि ।

इयं पुनः ।

**श्रौती यथेववाशब्दा इवार्थो वा वतिर्यदि ॥**

**आर्थी तुल्यसमानाद्यास्तुल्यार्थे यत्र वा वतिः ।य**

यथेववादयः शब्दा उपमानान्तरप्रयुक्ततुल्यादिपद-साधारणा अपि श्रुतिमात्रेणोपमानोपमेयगतसादृश्यल-

---

विशेषणे इति यावत् । औपम्यवाचकमिति अव्ययानामन्विताभिधान-स्वीकारादिति भावः । उपलभ्यमानसादृश्यस्यानुयोगि उपमेयं प्रतियोगि-उपमानम् । पूर्णोपमायाः श्रौतार्थीभेदेन द्वैविध्यमाह इयं पुन-रिति इयं पूर्णोपमा । श्रूयत इति श्रुतिः शब्दस्तयैवोपलभ्यमानोपमा-नोपमेयसम्बन्धा श्रौती ।

(१) तस्या उपलम्भकानाह यथेवेति । वा स्याद्विकल्पोपमयोरिवार्थे च समुच्चये इति कोषात् वाशब्दस्योपमार्थकत्वम् । बहुवचनमाद्यार्थम् । तेन "पङ्कजदलानिवा लोचनानि" इत्यादौ वाशब्दोऽप्युपमार्थः । पदार्थानु-सन्धानापेक्षया प्रतीयमानोभयसम्बन्धा आर्थी । तस्या ज्ञापकानाह तु-ल्येति । आद्यपदेन समसदृशादीनां ग्रहणम् । भेदमुपपादयति यथेवेति । यद्यपि यथादयः शब्दा उपमानवाचकपदात् परं प्रयुज्यमानस्य तुल्या-दिपदस्य साधारणास्तद्वदुपमानोपमेयगतसाधर्म्यबोधकास्तथापि श्रुतिमा-त्रेण स्वोपलब्धिमात्रेण न तु पदार्थानुसन्धानापेक्षया उपमानोपमेया-न्वितसाधर्म्यं बोधयन्तीति हेतोस्तेषां यथादिशब्दानां सद्भावे प्रयोगे श्रौती उपमेत्यर्थः । अव्ययानामन्विताभिधानस्वीकारात् यथा घटो न पट इत्यादौ नञ्पदं पदार्थोपस्थितिमन्तरेणैव पदार्थोपस्थितेः प्रागेव समभिव्याहृतपदार्थयोरन्वितं भेदं बोधयति तथा कमलमिव मुखमि-

क्षणसम्बन्धं बोधयन्तीति तत्सद्भावे श्रौती उपमा । एवं तत्र "तस्येवेत्यनेन" इवार्थे विहितस्य वतेरुपादाने । (र) तुल्यादयस्तु "कमलेन तुल्यं मुखमित्यादौ" उपमेय एव । कमलं मुखस्य तुल्यमित्यादावुपमान एव । कमलं मुखञ्च

---

त्यादौ इवादिपदमपि श्रवणमात्रेण समभिव्याहृतपदार्थयोरन्वितं साधर्म्यं बोधयति । अन्विताभिधानवादिमते ह्यखण्डवाक्यस्याखण्डवाक्यार्थे शक्तिरेकातिरिक्ता कल्प्यते प्रथमं तयैव वाक्यार्थबोधो जायते पश्चादेव शक्त्या लक्षणया वा प्रत्येकपदार्थोपस्थितिरिति भावः । अव्ययानामभिहितान्वयाङ्गीकारेऽपि अव्ययातिरिक्तनामार्थयोरभेदातिरिक्तसम्बन्धेन साक्षादन्वयास्वीकारादव्ययार्थस्य नामार्थेन साक्षादेवान्वयः सम्भवतीति अव्ययपदेन उपमानोपमेयभावेऽपि साधारणधर्मसम्बन्धोपस्थापनेन विभक्त्यर्थप्रतिसन्धानापेक्षेति बोध्यम् । एवमिति तत्र तस्येवेति पाणिनिसूत्रं तत्रेव तस्येवेत्यर्थे वतिर्भवतीति तदर्थः । इवार्थकस्य वतेरिव शब्दतुल्यव्युत्पत्तिः तदुपादानेऽपि श्रौत्येवोपमेत्यर्थः ।

(ल) आर्थीमुपपादयति तुल्यादयस्त्विति शब्दा इत्यनुषङ्गः । कमलेनेति षष्ठ्यर्थे तृतीया षष्ठ्यर्थश्चात्र कुम्भस्य जलमितिवदाधेयत्वम् । तस्य च तुल्यपदार्थैकदेशे सादृश्येनान्वयः । तथा च कमलवृत्तिसादृश्याश्रयो मुखमित्यर्थः । उपमेय एवेति तुल्यादयः शब्दा विश्राम्यन्तीत्यध्याहृत्यान्वयः : सादृश्यं बोधयित्वा विरमन्तीति तदर्थः । एवकारेण उपमानव्यवच्छेदः । एवञ्च तुल्यादिपदानां अनव्ययतया अन्विताभिधानास्वीकारेणान्वयबोधात् प्राक्पदार्थोपस्थितिमात्रं जनयित्वा उपमेय एव विश्रान्तिः पश्चात्तु उपमानपदार्थानुसन्धानेन तात्पर्य्यानुसन्धानेन च उपमानस्य सादृश्योपमानसम्बन्धप्रतीतिरिति भावः उपमान एवेति तुल्यादयः शब्दा विश्राम्यन्तीत्यन्वयः । कमलादीनां मुखोपमानत्वं प्रसिद्धमित्यभिप्रायेणेदम् । वस्तुतस्तु कमलमात्रोपमेयमेव । इयमेव विपर्य्यासोपमेति दण्डी । विषयविशेषे तुल्यादिपदानामपि सादृश्यानुसन्धानं

तुल्यमित्यादावुभयत्रापि विश्राम्यन्तीति अर्थानुसन्धानादेव साम्यं प्रतिपादयन्तीति तत्सद्भावे आर्थी। एवं 'तेन तुल्यमित्यादिना" तुल्यार्थे विहितस्य वतेरुपादाने।

द्वे तद्धिते समासेऽथ वाक्ये

द्वे श्रौती आर्थी च। उदाहरणम्।

"सौरभमम्भोरुहवन्मुखस्य कुम्भाविवस्तनौ पीनौ।
हृदयं मदयति वदनं तव शरदिन्दुर्यथा बाले"॥

अत्र क्रमेण त्रिविधा श्रौती। (ख)

---

विनाप्युभयसम्बन्धि साधर्म्यबोधकत्वमाह कमलं मुखञ्चेति। अर्थानुसन्धानादेवेति षष्ठ्यर्थानुसन्धानादुभयसम्बद्धं साम्यं बोधयन्त्येवेत्यर्थः। तुल्यादिपदानामपि कचित् षष्ठ्यर्थानुसन्धानं विनाप्युभयसम्बद्धसाम्यबोधकत्वस्य सम्भवेऽपीवादिवत् सर्वत्र तदभावात् तत्सद्भावे न श्रौत्युपमेति भावः। तुल्यार्थस्य वतेरुपादानेऽप्यार्थीमाह एवमिति। तेन तुल्यमिति पाणिनिसूत्रम्। वतेरुपादाने आर्थीति सम्बन्धः। श्रौत्यार्थीभेदेन द्विविधायाः पूर्णोपमायाः त्रैविध्यमाह द्वे इति तद्धिते वत्कल्पादियोगे। समास इति इवयोग एव उपमानात् सर्वविभक्तीनामिवे चेत्यलोपविधानसामर्थ्यात् समासः। स च नित्य एव नित्यसमासे इवयोगसमासगेति काव्यप्रकाशदर्पणादिवार्थस्य विशेष सापेक्ष्यत्वेऽप्यभिधानबलात् समासः। एवञ्च प्रतियोगिपदासमभिव्याहारेण यदिवपदं प्रयुज्यते तत्रयोक्तृप्रमादजमेव। वाक्ये यथादियोगेऽलागमकत्वेन समासाभावात्तद्योगे वाक्यगता एव उपमेति भावः। एवं त्रिविधा श्रौती। आर्थी तु तद्धिते वदादियोगे तुल्यादिपदसमासस्य वैकल्पिकत्वात् समासे वाक्ये च सम्भवतीति भावः। समासपक्षेऽपि लुप्तषष्ठ्यर्थस्य लक्षणया वा प्रतिसन्धानादेवोपमानसम्बन्धबोध इत्याशयेनेव। सौरभमिति मुखस्य सौरभमम्भोरुहवृत्तिसाधर्म्याभिन्नमित्यन्वयबोधः। यद्वा सौरभाभिन्न-

"मधुरः सुधावदधरः पल्लवतुल्योऽतिपेलवः पाणिः ।
चकितमृगलोचनाभ्यां सदृशी चपले च लोचने तस्याः" ॥

अत्र क्रमेण त्रिविधा आर्थी ।

**पूर्णा षडेव तत् ।**

स्पष्टम् । (व)

**लुप्ता सामान्यधर्मादेरेकस्य यदि वा द्वयोः ।**
**त्रयाणां वानुपादाने श्रौत्यार्थी सापि पूर्ववत् ॥**

सा लुप्ता । तद्भेदमाह ।

**पूर्णावद्धर्मलोपे सा विना श्रौतीन्तु तद्धिते ।**

सा लुप्तोपमा धर्मस्य साधारणगुणक्रियारूपस्य लोपे

---

सम्भोरुह साधर्म्यम् सुखसम्बन्धीति । स्तनौ पीनत्वाभिन्नकुम्भवृत्ति साधर्म्याश्रयावित्यन्वयबोधः । एवमुत्तरत्रापि । सुधावदिति प्रथमान्तात्तुल्यार्थे वतिः । पेलवः कोमलः । अत्रैकदेशस्याश्लीलत्वेऽपि याद्दचूतादिशब्दवत् कविनिबद्धप्रयुक्तत्वान्न दोषः । अत्र पेलवपदार्थैकदेशस्य तुल्यपदार्थैकदेशे साम्येऽभेदेनान्वयो व्युत्पत्तिवैचित्र्यात् । नन्वम्भोजस्येव सुखस्य सौरभमित्यादौ साधारणधर्मस्योपमानसम्बन्धित्वबोधे षष्ठ्यर्थानुसन्धानस्यापेक्षणीयतया कथं श्रौतीत्वमिति चेन्न । नामार्थनिपातार्थयोरन्वयबोधे विभक्त्यर्थानुसन्धानस्यातन्त्रतया तत्र षष्ठ्या विशेषणविभक्तेरिव प्रयोगसाधुत्वमात्रार्थकत्वात् । अन्यथा "चन्द्रादिव मुखात्तस्या निरसृति कथामृतमित्यादौ सम्बन्धबोधकविभक्त्यभावादुपमानसम्बन्धबोधो न स्यात् । तद्दिति उक्तप्रकारादित्यर्थः ।

(व) लुप्तामाह लुप्तेति । आदिपदेन उपमानोपमेयवाचकादीन संग्रहः । अनुपादानेऽवाच्यत्वेऽप्रयोगेचेति यथासम्भवं बोध्यम्

पूर्णावदिति पूर्वोक्तरीत्या षट्प्रकारा, किन्त्वत्र तद्धिते श्रौत्या असम्भवात् पञ्चप्रकारा। उदाहरणम्।

"मुखमिन्दुर्यथा पाणिः पल्लवेन समः प्रिये ! ।
वाचः सुधा इवोष्ठस्ते बिम्बतुल्यो मनोऽश्मवत्" ॥

**आधारकर्मविहिते द्विविधे च क्यचि क्यङि ॥**
**कर्मकर्त्रोर्णमुलि च स्यादेवं पञ्चधा पुनः ।**

धर्मलोपे लुप्तेत्यनुषज्यते। क्यच् क्यङ्णमुलः कलापमते यिणायिणमः। क्रमेणोदाहरणम्। (अ)

"अन्तःपुरीयसि रणेषु सुतीयसि त्वं
पौरं जनं तव सदा रमणीयते श्रीः ।
दृष्टः प्रियाभिरमृतद्युतिदर्शमिन्द्र-
सञ्चारमत्र भुवि सञ्चरसि क्षितीश" ॥

---

तद्धिते श्रौत्या असम्भवादिति धर्मस्यानुपादाने तन्निष्ठसम्बन्धबोधिकायाः षष्ठ्याः सप्तम्या वानुत्पत्तौ तदन्तविहित इवार्थे वतिर्न सम्भवति कल्पादेस्तु तुल्यार्थविहितत्वेन तद्योगे आर्थी एव सम्भवतीति भावः। अश्मवदिति अश्मतुल्यमित्यर्थः। धर्मलुप्ताया एव उपमायाः पुनरपि पञ्चप्रकारानाह आधारेति। अधिकरणात् कर्मणश्च विहिते क्यचि ईयप्रत्यये कर्त्तुर्विहिते क्यङि आयप्रत्यये कर्मकर्त्रोरुपपदयोर्विहिते णमुलि ण्वादेशे अमि। यिणिति ईयप्रत्ययस्य संज्ञा।

(अ) अन्तःपुरीयसीति तुल्यत्वमाचारश्च ईयप्रत्ययार्थः। आचारस्याधिकरणत्वान्वययोग्यक्रिया। सा च प्रकृते सञ्चाररूपायाज्ञाः व्युत्पत्तिवैचित्र्येण तुल्यत्वस्य प्रकृत्यर्थे आचारस्याख्यातार्थेऽन्वयः। तथा चान्तःपुरतुल्येषु रणेषु सञ्चारकर्त्तेत्यन्वयबोधः। सुतीयसीत्यादौ त्वाचारो मननं पौरजनं सुततुल्यं मन्यसे इत्यर्थः। रमणीयत इत्यत्राचारो

"अत्रान्तःपुरीयसीत्यत्र" सुखविहारास्पदत्वस्य "स्नुतीयसीत्यत्र" स्नेहनिर्भरत्वस्य च साधारणधर्मस्य लोपः। एवमन्यत्र। (ष)

इह च यथादितुल्यादिविरहात् श्रौत्यादिविशेषचिन्ता नास्ति। इदञ्च केचित् औपम्यप्रतिपादकस्य वतेर्लोपे उदाहरन्ति तदयुक्तम्। क्यङादेरपि तदर्थविहितत्वेनौपम्यप्रतिपादकत्वात्। ननु क्यङादिषु सम्यगौपम्यप्रतीतिर्नास्ति प्रत्ययत्वेनास्वतन्त्रत्वात् इवादिप्रयोगा-

---

वर्त्तनं रमणीतुल्या श्रीर्वर्त्तते इत्यर्थः। अत्रान्ताधीनत्वस्य उपभोगसाधनत्वस्य वा साधारणधर्मस्य लोपः। इष्ट इति अमृतद्युतिरिव इष्ट इत्यर्थः। अत्र मनोज्ञत्वादिसाधारणो धर्मः। इन्द्रसञ्चारमिति इन्द्र इव सञ्चरसीत्यर्थः। अत्र विभावाद्यतिशयः साधारणधर्मः। केचित्तु क्यच्क्यङोरर्थे आधारस्तस्यात्र विद्यमानत्वात् धर्मलोपोदाहरणमेतन्न भवतीत्याहुस्तन्न। आचारस्य साधनत्वेऽपि प्रकृते सादृश्यहेतुत्वेन विवक्षणात्। उपदर्शितधर्माणां सादृश्यहेतुत्वेन झटिति प्रतीयमानत्वात् "चन्द्रायते शुक्लरुचापि हंस इत्यादौ" सत्यपि आचारे शुक्लरुचेति साधारणधर्मप्रयोगदर्शनाच्च आचारस्याख्यातार्थान्वितत्वेन निराकाङ्क्षतया क्यच्क्यङोऽर्थे सादृश्येऽभेदान्वयसम्भवेन, सादृश्यहेतुत्वायोगाच्च।

(ष) इह चेति श्रौत्यादीत्यादि पदेनार्थी परिग्रहः। वस्तुतस्तु यथा तुल्यार्थविहितस्य वतेर्योगे आर्थीत्वं यथात्रापि तुल्यार्थविहितक्यच्क्यङोर्योगे आर्थीत्वम्। श्रुतिः शब्दस्तेन साक्षात् प्रतीयमाना श्रौती तदितरा आर्थीति वदतश्चण्डीदासस्य मते सुतरामार्थीत्वम्। वतेरितीवाद्युपलक्षणम्। 'वतेरुपमाप्रतिपादकस्य लोपे षड़िति काव्यप्रकाशे पाठः। तदर्थविहितत्वेन वत्यर्थविहितत्वेन। कल्पवादेरित्य-

भावाच्चेति न वाच्यम् । कल्पवादावपि तथा प्रसङ्गात् । न च कल्पवादीनामिवादितुल्यतयौपम्यस्य वाचकत्वं, क्यङादीनान्तु द्योतकत्वम्, इवादीनामपि वाचकत्वे निश्चयाभावात् । वाचकत्वे वा समुदितं पदं वाचकं "प्रकृतिप्रत्ययौ स्वस्वार्थबोधकाविति च" मतद्वयेऽपि वत्यादिक्यङाद्याः साम्यमेवेति । यच्च केचिदाहुः "वत्यादय इवाद्यर्थेऽनुशिष्यन्ते क्यङादयस्त्वाचारार्थे इति" तदपि न । न खलु क्यङादय आचारमात्रार्था अपि तु सादृश्याचारार्था इति । तदेवं धर्मलोपे दशप्रकारा लुप्ता । (स)

---

लुप्तप्रकारसहितनिर्देशः। निश्चयाभावादिति तथाचेवादेरव्ययतया उपमावाचकत्वमसिद्धं तत्तुल्यस्य कल्पादेः सुतरामेव तदसिद्धमिति भावः । ननु कमलमिव मुखमित्यादौ उपमालक्षणाव्याप्तिभयेन इवादेरुपमावाचकत्वमवश्यमङ्गीकार्य्यमित्यभिप्रायेणाह वाचकत्वेवेति इवादितुल्यत्वे कल्पादेरुपमावाचकत्वाङ्गीकारे वेत्यर्थः । समुदितं प्रकृतिप्रत्ययसमुदायः वाचकं प्रकृत्यर्थविशिष्टप्रत्ययार्थप्रतिपादकं स्वस्वार्थबोधकौ क्रमेण स्वार्थप्रतिपादकौ । वत्यादीत्यादिपदेन कल्पादिपरिग्रहः । साम्यमेवेति सादृश्यवाचकत्वेन साम्यमित्यर्थः । आचारार्थः इति अनुशिष्यन्त इत्यन्वयः । अपित्विति किन्त्वित्यर्थः । अपि तर्हीतिपाठे किन्तर्हीत्यर्थः । उपसंहरति तदेवमिति । वस्तुतस्तु चन्द्रायते शुक्लरुचापि हंस इत्यादौ साधारणधर्मोपादानेऽपि क्यङादियोगे उपमादर्शनादार्थ्या उपमायास्तद्धितादित्रितयगतत्ववत् क्यजादिपञ्चकगतत्वे न विशेषो बोध्यः । एवञ्चाष्टप्रकाराया आर्थ्या धर्मलोपालोपाभ्यां षोडशप्रकारा बोध्या । क्यजादिपञ्चके धर्मलोपे उदाहरणं यथा "क्षीरः प्रीतिकरत्वेन पर्यङ्कीयति मञ्चके । मित्रीयति परं प्रेम्णा भक्त्या देवायते न्वयाम् । देवदर्शी जनैः साधुः प्रतीच्यत्वेन दृश्यते । कृपयाविष्णुस-

**उपमानानुपादाने द्विधा वाक्यसमासयोः ।**

उदाहरणम् ।

"तस्या मुखेन सदृशं रम्यं नास्ते न वा नयनतुल्यम्" ।

अत्र मुखनयनप्रतिनिधिवस्त्वन्तरयोर्गम्यमानत्वादुपमानलोपः । अत्रैव च "मुखेन सदृशं" इत्यत्र "मुखं यथेदमिति" "नयनतुल्यमित्यत्र दृगिवेति" पाठे श्रौत्यपि सम्भवतीत्यनयोर्भेदयोः प्रत्येकं श्रौत्वार्थीत्वभेदेन चतुर्विधत्वसम्भवेऽपि प्राचीनरीत्या द्विप्रकारत्वमेवोक्तम् ।

**औपम्यवाचिनो लोपे समासे क्विपि च द्विधा ।**

क्रमेणोदाहरम् । (ङ)

"वदनं मृगशावाक्ष्याः सुधाकरमनोहरम् ।

गर्दभति श्रुतिपरुषं व्यक्तं निनदन् महात्मनां पुरतः" ।

अत्र "गर्दभतीत्यत्र" औपम्यवाचिनः क्विपो लोपः । न चेह उपमेयस्यापि लोपः । "निनदन्निति" अनेनैव निर्देशात् ।

---

ह्वारं नित्यं सञ्चरतिच्चितो" । अत्र तृतीयान्तपदार्थानां क्यजाद्यर्थे सादृश्येऽभेदेनान्वयः ।

(ङ) उपमानलुप्तामुपमामाह उपमानेति लुप्तोपमेत्यनुषङ्गः । न वेति न वा नयनतुल्यरम्यमास्ते इत्यन्वयः । अन्यथा धर्मोपमानलोपोदाहरणमिदं स्यात् । प्रतिनिधीति सदृशेत्यर्थः । इवादिलुप्तामाह औपम्येति यत्र कालापादिभिरायलोपः क्रियते तत्र पाणिनीयैः क्विनुशिष्यते ।

(च) वदनमिति मृगशावस्याक्षीवाक्षि यस्या इति बहुव्रीहा-

**द्विधा समासे वाक्ये च लोपे धर्मोपमानयोः।**

"तस्या मुखेनेत्यादौ" "रम्यमिति" स्थाने "लोके इति" पाठेऽनयोरुदाहरणम्।

**क्विप्समासगता द्वेधा धर्मे वादिविलोपने।**

उदाहरणम्। "विधवति मुखाब्जमस्याः।

अत्र "विधवतीति" मनोहरत्वक्विप्प्रत्ययोर्लोपः। केचित्त्वत्रापि प्रत्ययलोपमाहुः। "मुखाब्जमिति" च समासगा।

**उपमेयस्य लोपे तु स्यादेका प्रत्यये क्यचि।**

यथा।

"अरातिविक्रमालोकविकस्वरविलोचनः।
कृपाणोदग्रदोर्दण्डः स सहस्रायुधीयति"॥

अत्र स सहस्रायुधमिव आत्मानमाचरतीति वाक्ये उपमेयस्यात्मनो लोपः। न चेह औपम्यवाचकलोप उक्तादेव न्यायात्। अत्र केचिदाहुः सहस्रायुधेन सह "वर्त्तत

---

वचिपदलोपः। इवार्थस्य समासगम्यतया इवपदाप्रयोगः। चन्द्रत्वस्य शब्दानुपात्तत्वात् लोप इतीदं वक्ष्यमाणत्रिलोपोदाहरणम्। सुधाकर इव मनोहरमिति उपमानानां सामान्यवाचिभिरिति कर्मधारयः। एतदेव प्रकृतोदाहरणम्। क्विपि उदाहरति गर्दभतीति गर्दभ इवाचरतीत्यर्थे क्विप् चिह्नार्थत्वात्तल्लोपः। यथा ग्रामध्वमित्यादौ क्विपो लोपेऽपि कर्त्तृत्वस्य वाच्यत्वं तथेहापि। सादृश्यस्येति सामान्यलक्षणागतम्। अत्र स्तुतिपरत्वनिनादः साधारणधर्मः शब्दोपात्त एव। निर्देशादिति उपमेयस्य त्वनेनान्वयः। एवमेकलोपानुदाहृत्य द्विलोपानाह द्विधेति। लुप्तोपमेत्यनुषज्यते एवमग्रेऽपि। विधवतीति विधुरिया-

इति" स सहस्रायुधः स इवाचरतीति" वाक्यात् स सहस्रायुधीयतीति पदसिद्धौ विशेषस्य शब्दानुपपात्तत्वादिहोपमेयलोप इति नव विचारसहम्। कर्त्तरि क्यचोऽनुशासनविरुद्धत्वात्।

धर्म्मोपमेयलोपेऽन्या

यथा।

"यशसि प्रसरति भवतः क्षीरोदीयन्ति सागराः सर्व्वे"

अत्र क्षीरोदमिवात्मानमाचरन्तीत्युपमेय आत्मा साधारणधर्म्मः शुक्लता च लुप्तौ।

त्रिलोपे च समासगा।

यथा। "राजते मृगलोचना"।

अत्र मृगस्य लोचने इव चञ्चले लोचने यस्या इति समासे उपमाप्रतिपादकसाधारणधर्मोपमानानां लोपः।

तेनोपमाया भेदाः स्युः सप्तविंशतिसंख्यकाः।

पूर्णा षड्विधा लुप्ता चैकविंशतिविधेति मिलित्वा सप्तविंशतिप्रकारोपमा। एषु चोपमाभेदेषु मध्ये अलुप्तसाधारणधर्मेषु भेदेषु विशेषः प्रतिपद्यते। (च)

---

चरतीत्यर्थः। मुखमब्जमिवेति शाशाद्यैस्तद्गुणैस्तुल्यस्येति कर्मधारयः। क्तत्वादिलौरभाद्योर्लोपः। एवं शशाङ्कवदनेत्यादि बहुव्रीहावप्येतदुदाहरणं बोध्यम्। उपमेयस्यात्मन इति कर्मक्यचोर्योगे कर्मण एवोपमेयत्वं तस्य प्रयोगे तथेतिभावः। उक्तादेवेति क्यजादेः सादृश्यबोधकत्वव्यवस्थापनादित्यर्थः। अनुशासनविरोधादिति अनुशासनाभावादित्यर्थः। त्रिलोपे धर्मोपमानेवादिलोपे। समास इति अत्र लोचन-

**एकरूपः क्वचित् क्वापि भिन्नः साधारणो गुणः ।**
**भिन्ने बिम्बानुबिम्बत्वं शब्दमात्रेण वा भिदा ॥**

तत्र एकरूपे यथा उदाहृतम् । "मधुरः सुधावदधर इत्यादि" । बिम्बप्रतिबिम्बत्वे यथा ।

"भल्लापवर्ज्जितैस्तेषां शिरोभिः श्मश्रुलैर्महीम् ।
तस्तार सरघाव्याप्तैः स क्षौद्रपटलैरिव" ॥

---

पदस्यैव समासे लोपो विहितोऽन्ययोस्तु गम्यमानत्वम् । तेनेति उक्तप्रकारप्रपञ्चेनेत्यर्थः । एकविंशतिविधेति धर्मलोपे दश उपमानलोपे द्वे औपम्यवाचिलोपे द्वे धर्मोपमानलोपे द्वे धर्मवादिलोपे च द्वे उपमेयलोपे धर्मोपमेयलोपे धर्मवाद्युपमानलोपे चैकैकेत्येकविंशतिविधेत्यर्थः ।

(क)एकरूप इति जातिवन्नानाव्यक्तिष्वेक एव गुणादिरित्युपाधिशक्तिवादिमते नेदम् । यद्वा एकजातीय इत्यर्थः । एवञ्च क्वचिदेकजातीयत्वेन क्वचित् सदृशत्वेनैकत्वोपचारात् उभयवृत्तित्वं विवक्षणीयम् । गुणः साधर्म्यम् । भिन्ने भिन्नसाधारणधर्मे बिम्बस्य सदृशस्य अनुबिम्बत्वं प्रणिधानगम्यत्वम् । एकधर्मस्यैकशब्दोपादानं प्रायेण क्वचिच्छब्दभेदेनाप्युपादानं सम्भवतीत्याह शब्दमात्रेणैवेति । क्रमेणोदाहरति मधुर इति । एतद्गुणैकत्वे । क्रियैकत्वे यथा । "स्त्रीव गच्छति षण्डोऽयं वक्त्येषा स्त्री पुमानिव" । भल्लेति भल्लेन बाणविशेषेण अपवर्ज्जितैः कृत्तैः तेषां जवनानां तस्तार छादयामास सरघा मधुमक्षिकास्ताभिर्व्याप्तैः क्षौद्रपटलैर्मधूत्पत्तिस्थानैः मौचाक इति प्रसिद्धैः श्मश्रुलैरित्यस्येति दृष्टान्तालङ्कारे यथा वाक्यार्थयोरिवाद्यभावात् सादृश्यं प्रणिधानगम्यं तथात्रापि श्मश्रुसरघयोः । अत्र श्यामत्वविशेषः सादृश्यहेतुः । एवञ्च सादृश्यहेतू गुणक्रिये इत्यस्योपलक्षणतया द्रव्यस्यापि साधारणधर्मत्वमवगन्तव्यम् । स्वोदर्मिति स्वाकूतमभिप्रायम् । एको एवेति

अत्र "श्मश्रुलैरित्यस्य" "सरघाव्याप्तै रिति" दृष्टान्तवत् प्रतिबिम्बनम्। शब्दमात्रेण भिन्नत्वे यथा।

'स्मेरं विधाय नयनं विकसितमिव नीलमुत्पलं मयि सा।
कथयामास कृशाङ्गी मनोगतं निखिलमाकूतम्"॥

अत्र एक एव स्मेरत्वविकसितत्वे प्रतिवस्तूपमावच्छब्दभेदेन निर्दिष्टे। (क)

**एकदेशविवर्त्तिन्युपमा वाच्यत्वगम्यते।**
**भवेतां यत्र साम्यस्य।**

यथा।

"नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरः श्रियः।
पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिव"॥

---

संख्यार्थादेकशब्दात् द्विवचनासम्भवादयं पाठो न युक्तः किन्तु अत्रैकमेव प्रफुल्लत्वं प्रतिवस्तूपमावद्विभिन्नाभ्यां स्मेरविकसितशब्दाभ्यां निर्दिष्टमिति पाठो बोद्धव्यः। एकक्रियायाः शब्दभेदेनोपादाने यथा "प्रकाशते सुखं तस्याश्चन्द्रस्सादीप्यते यथा। नन्वत्र वाक्यैक्याभावात्" कथमुपमेति चेन्न। यथा अमावस्यायां श्राद्धं कुर्यात् रात्रौ श्राद्धं न कुर्वीत इत्यत्र सम्बन्धेनान्यतरवैयर्थ्यमिति न्यायेन रात्रीतरत्वामावस्यायां श्राद्धं कुर्यादित्येकवाक्यत्वं तथात्राप्येकवाक्यत्वस्य स्वीकारात्।

(ख) प्राचीनैरस्वीकृतामपि प्रमाणसिद्धामेकदेशविवर्त्तिनीमुपमाह एकदेशेति यत्र वाक्ये कस्यचित् साम्यं वाच्यं कस्यचिद् गम्यं तत्रैकदेशविवर्त्तिन्युपमेत्यर्थः इयञ्चैकदेशविवर्त्तिरूपकवत् साङ्गस्याङ्गिनः सादृश्य एव सम्भवति। नेत्रैवेति अङ्गना इव सरः श्रियः पदे पदे प्रतिवस्तु विभान्ति स्म। अत्र नेत्रादित्रयमुपमानस्य उत्पलादित्रयमुपमेयस्याङ्गम्। रसनोपमामाह कथितेति यतोऽङ्गमिति पूर्वोपमायां यदुपमेयमुत्तरोपमायां

अत्र उत्पलादीनां नेत्रादीनाम् सादृश्यं वाच्यं, स्त्रीणाञ्चाङ्गनासादृश्यं गम्यम् ।

**कथिता रसनोपमा ।**

**यथोर्द्ध्वमुपमेयस्य यदि स्यादुपमानता ॥**

यथा । (ख)

चन्द्रायते शुक्लरुचापि हंसो
हंसायते चारुगतेन कान्ता ।
कान्तायते स्पर्शसुखेन वारि
वारीयते स्वच्छतया विहायः" ॥

---

तस्योपमानता यदि स्यादित्यर्थः । इयं साधारणधर्मस्याभेदे भेदे च सम्भवतीति द्विधा । तत्राद्या यथा "महीभृतो वदान्यस्य भारतीवामलामतिः । चेष्टामतिरिव स्वच्छा चेष्टेव गुणसन्ततिः" । अत्र स्वच्छत्वमेकमेव साधारणो धर्मः ।

(ग) द्वितीयामाह चन्द्रायत इति चन्द्र इवाचरतीत्यर्थः । मालोपमामाह मालोपमेति । बह्विति एकाधिकपरम् । तेन "तां हंसमालाः शरदीव गङ्गां महौषधीर्नक्तमिवात्मभासः । स्थिरोपदेशामुपदेशकाले प्रपेदिरे प्राक्तनजन्मविद्याः" । इत्यादावुपमाद्वयेऽपि मालत्वमक्षतम् । इयमपि पूर्ववत् द्विधा । तत्राद्यामाह वारिजेनेति । अत्र मनोहरत्वमेकमेव सादृश्यहेतुः । द्वितीया यथा "ज्योत्स्नेव नयनानन्दः सुरेव मदकारणम् । प्रभुतेव समाकृष्टसर्वलोका नितम्बिनी" । अत्र नेत्रानन्दजननादयो विभिन्नधर्मा एव सादृश्यानां हेतवः । उपमेयस्य प्रकृतत्वं उपमानस्याप्रकृतत्वं प्रायिकमित्यभिप्रायेणाह क्वचिदिति । प्रकृतत्वं वर्णनीयस्योत्कर्षाधायकत्वेनाकाङ्क्षितत्वम् । हंस इति । हंसादय इव चन्द्रादयोऽपि वर्णनीयशरत्कालस्योत्कर्षाधायकत्वेनाकाङ्क्षिताः । विमला

**मालोपमा यदेकस्योपमानं बहु दृश्यते ।**

यथा ।

"वारिजेनेव सरसी शशिनेव निशीथिनी ।
यौवनेनेव वनिता नयेन श्रीर्मनोहरा" ॥

क्वचिदुपमानोपमेययोर्द्वयोरपि प्रकृतत्वं दृश्यते ।

"हंसश्चन्द्र इवाभाति जलं व्योमतलं यथा ।
विमलाः कुमुदानीव तारकाः शरदागमे ॥
अस्य राज्ञो गृहे भान्ति भूपानीता विभूतयः ।
पुरन्दरस्य भवने कल्पवृक्षभवा इव" ॥

अत्रोपमेयभूतविभूतिभिः "कल्पवृक्षभवा इवेति" उपमानभूता विभूतय आक्षिप्यन्त इति आक्षेपोपमा । अत्रैव "गृहे इत्यस्य" "भवने इत्यनेन" प्रतिनिर्देशात् प्रतिनिर्देश्योपमा इत्यादयश्च न लक्षिताः ॥ एवंविधवैचित्र्यस्य सहस्रधा सन्दर्शनात् ॥ (ग)

---

इतिपाठो न रमणीयः । भिन्नलिङ्गतया कुमुदिनीत्युपमानान्वयायोग्यत्वात् । तस्मात् लसतीलिपाठो द्रष्टव्यः । वस्तुतस्तु प्रकृतयोरेकधर्माभिसम्बन्धरूप तुल्ययोगितैवेयं न तूपमा ! एवञ्चात्र यथेवशब्दप्रयोगस्तुल्ययोगिताद्योतकचार्थत्वेन गौण एवेत्यवधेयम् । प्राचीनसम्मतानाक्षेपोपमादीनुपमाप्रकारान् वैचित्र्यातिशयनाधायकत्वेनोपेक्षमाण आह अस्य राज्ञ इति । कल्पवृक्षोद्भवाः कल्पवृक्षोत्पन्ना विभूतय इत्यर्थः । आक्षिप्यन्ते इति कल्पवृक्षभवा इति विशेषणेनोपस्थिता विभूतय एवाक्षिप्यन्ते इति भावः । एवंविधेति यथा कथञ्चिद्वैचित्र्यविशेषाणां परिच्छेत्तुमगणयितया [illegible] परिच्छेदो न सम्भवतीति भावः ।

**उपमानोपमेयत्वमेकस्यैव त्वनन्वयः ।**

अर्थादेकवाक्ये । यथा ।

"राजीवमिव राजीवं जलं जलमिवाजनि ।

चन्द्रश्चन्द्र इवातन्द्रः शरत्समुदयोद्यमे" ॥

अत्र राजीवादीनामनन्यसदृशत्वप्रतिपादनार्थमुपमानोपमेयभावो वैवक्षिकः । राजीवमिव पाथोजमिति" चास्य लाटानुप्रासाद्विविक्तो विषयः । किन्त्वत्रोचितत्वादेकशब्दप्रयोग एव श्रेयान् । तदुक्तम् ।

"अनन्वये च शब्दैक्यमौचित्यादानुषङ्गिकम् ।

अस्मिंस्तु लाटानुप्रासे साक्षादेव प्रयोजकमिति" ॥

---

(घ) अनन्वयालङ्कारमाह । उपमानेति । नन्वेतत् रसनोपमाया-मुपमेयोपमायाञ्चातिव्याप्तमत आह अर्थादिति पारिशेष्यादित्यर्थः । रसनोपमायां यथोर्द्ध्वमित्यनेन उपमेयोपमायां पर्य्यायेणेत्यनेनानेकवाक्य लाभात् एकवाक्ये एवास्य विषय इति भावः । ननूपमेयोपमायां द्वयो-रित्युपादानात् कथमतिव्याप्तिरिति चेन्न । तत्र प्रत्येकपदार्थस्यापि पर्य्यायेणोपमानोपमेयभावसम्भवात् । अतस्त्वो निर्मलः । ननूपमानोपमे-यभावो भेद एव सम्भवति कथमेकस्यैव स इत्यत आह राजीवादीना-मिति । वैवक्षिक आरोप्य विवक्षितः । ननु लाटानुप्रासविषयविनिर्मो-केणास्य विषयो न सम्भवतीति तद्बाधकोऽयमेव स्यादित्यत आह राजी-वमिवेति विविक्तो विषय इति । तथा चायं सम्भवद्विषयान्तरत्वान्न बाधक इति भावः । उचितत्वादुपमानोपमेययोरभेदस्य झटिति प्रतीत्यु-पयुक्तत्वात् । श्रेयान् अतिप्रशस्तो न तु नियतः । औचित्यात् प्राश-स्त्यात् । आनुषङ्गिकमनियतम् । साक्षादेव स्वयमेव । प्रयोजकं वैचि-त्र्याधायकम् । उपमेयोपमामाह पर्य्यायेणेति । क्रमेणेत्यर्थः । रसनो-पमायामेकस्यैव क्रमेणोपमानोपमेयभाव इति तद्वारणाय द्वयोरिति ।

**पर्य्यायेण द्वयोरेतदुपमेयोपमा मता ।**

एतदुपमानोपमेयत्वम् । अर्थाद्वाक्यद्वये । यथा ।

"कमलेव मतिर्मतिरिव कमला
तनुरिव विभा विभेव तनुः
धरणीव धृतिर्धृतिरिव धरणी
सततं विभाति तव यस्य वत" ।

अत्रास्य राज्ञः श्रीबुद्ध्यादिसदृशं नान्यदस्तीत्यभिप्रायः । (ङ)

**सदृशानुभवाद्वस्तुस्मृतिः स्मरणमुच्यते ।**

यथा ।

"अरविन्दमिदं वीक्ष्य खेलत्खञ्जनमञ्जुलम् ।
स्मरामि वदनं तस्याश्चारु चञ्चललोचनम्" ॥

"मयि सकपटमित्यादौ च" स्मृतेः सादृश्यानुभवं विनोत्थापितत्वान्नायमलङ्कारः । राघवानन्दमहापात्रास्तु

---

मुखमिव कमलमित्यादौ युगपदेव द्वयोरुपमानोपमेयत्वमिति तद्वारणाय पर्य्यायेणेति । अत्र सादृश्यहेत्वभेदे इत्यपि बोध्यम् । तेन पल्लवमिवारुणं करतलं करतलमिव कोमलं पल्लवमित्युपमाद्वयव्यवच्छेदः । अस्या वैचित्र्यं दर्शयति अस्य राज्ञ इति ।

(ङ) स्मरणालङ्कारमाह सदृशेति । सदृशानुभवस्य स्मृतिं प्रति संस्कारोद्बोधकत्वेन कारणत्वम् । संस्कारस्तु वस्त्वनुभवादुत्पन्नः । सदृशेति सम्बन्धिज्ञानादिजन्यस्मृतिवारणाय । तेन "भवदभिमतवस्तून्याकिरन्तःसमन्तात् सरसिजदलतल्पं मर्मरं कल्पयन्त्याः । हतकरणवयस्याजीवनोपायमस्याः स्मरणमविरलन्ते हन्त सम्पादयन्ति" इत्यादौ

वैसादृश्यात् स्मृतिमपि स्मरणालङ्कारमिच्छन्ति । तत्रोदाहरणन्तेषामेव यथा ।

"शिरीषमृद्वी गिरिषु प्रपेदे
यदा यदा दुःखशतानि सीता ।
तदा तदास्याः सदनेषु सौख्य-
लक्षाणि दध्यौ गलदश्रु रामः" ॥ (ङ)

**रूपकं रूपितारोपाद्विषये निरपह्नवे ।**

---

सम्बन्धिज्ञानजन्यस्मरणस्य नालङ्कारत्वम् । एवं चिन्ताजन्यस्मृतेरपि नालङ्कारत्वमित्याह मयेति । स्मृत्याख्यव्यभिचारिभावस्योदाहरणमिदम् । वैसादृश्याद्विरुद्धानुभवात् । तेषां राघवानन्दमहापात्राणाम् । शिरीषेति गलदश्रु यथा स्यात्तथा दध्यौ स्मृतवान् । अत्र वैपरीत्यसम्बन्धेन सम्बन्धिनो ज्ञानं संस्कारोद्बोधकम् ।

(च) रूपकालङ्कारमाह रूपकमिति । अत्र रूपितारोपादिति पञ्चम्यन्तपाठः प्रामादिकः । अर्थासङ्गतेः । प्रथमान्तपाठस्तु रमणीयः । उपमेये उपमानाभेदारोपस्यैव रूपकत्वाङ्गीकारात् यत्र तत्प्रयुक्तस्यार्थान्तरस्य तदुक्तं चण्डीदासेन रूपकप्रकरणे अलङ्कारस्यात्राहार्य्यस्तादात्म्यारोप इति । न चातिसाम्यादपह्नुतभेदयोरभेदो रूपकमिति काव्यप्रकाशदर्शनात् तदानीं भेदप्रतीतेरभावात् कथमाहार्य्यत्वम् । बाधकालीनेच्छाजन्यज्ञानस्यैवाहार्य्यत्वाङ्गीकारादिति वाच्यम् । शाब्दस्य भेदानुभवस्य तदानीमसत्त्वेऽपि आनुमानिकस्य मानसस्य भेदप्रत्ययस्य सत्त्वात् । ननु गौर्वाहीक इत्यादौ अपह्नुतभेदयोरुपमानोपमेययोस्तादात्म्यारोपस्य कथं न रूपकत्वमिति न वाच्यम् । तस्य विच्छित्तिविशेषाजनकत्वेन रसाद्युपकारकत्वाभावात् । केचित्तु विषयस्य प्राङ्निर्देशे रूपकस्य व्यवहारः परनिर्देशे तु गौणीव्यवहार इत्याहुस्तन्न । "निर्माणकौशलं धातुश्चन्द्रिकालोकचक्षुषाम् । क्रीडागृहमनङ्गस्य मेयमिन्दीवरेक्षणा" इत्यादौ विष-

"रूपितेति" परिणामाद्व्यवच्छेदः । एतच्च परिणाम-प्रस्तावे विवेचयिष्यामः । "निरपह्नव" इत्यपह्नुतिव्यवच्छेदार्थम् । (च)

**तत्परम्परितं साङ्गं निरङ्गमिति च त्रिधा ।**

तद्रूपकम् । तत्र ।

**यत्र कस्यचिदारोपः परारोपणकारणम् ।**
**तत्परम्परितं श्लिष्टाश्लिष्टशब्दनिबन्धनम् ॥**
**प्रत्येकं केवलं मालारूपञ्चेति चतुर्विधम् ।**

तत्र श्लिष्टशब्दनिबन्धनं केवलपरम्परितं यथा ।

"आहवे जगदुद्दण्डराजमण्डलराहवे ।
श्रीनृसिंहमहीपाल स्वस्त्यस्तु तव बाहवे" ॥

---

यस्य प्राङ्निर्देशाभावेऽपि रूपकव्यवहारात् । रूपितस्य अपह्नवभेदोपमानस्य निरपह्नवे प्रतिषेधशून्ये विषये उपमेये आरोपस्तादात्म्यारोपो रूपकमित्यर्थः । अतएवोक्तं काव्यप्रकाशकारेण । "रूपकं स्यादभेदो य उपमानोपमेययोरिति" । परिणामादिति अस्येति शेषः । एतच्च रूपकपरिणामयोर्वैलक्षण्यञ्च । परिणामे ह्यारोप्यमाणस्य प्रकृतोपयोगित्वेनाप्रकृतत्वनियतोपमानत्वस्य बाधाद्रूपितपदेन तद्व्यवच्छेद इति भावः । विषय इत्यस्य वाच्य इति विशेषणं बोध्यम् । तेन "लतामूले लीनो हरिणपरिहीनो हिमकरः स्वयं हाराकारा गलति जलधारा कुवलयात् । धुनीते बन्धूकं तिलकुसुमजन्मा हि पवनो बहिर्द्वारे पुण्यं परिणमति कस्यापि कृतिनः" । इत्यादौ निगीर्णे विषये मुखादौ निष्कलङ्कचन्द्राद्युपमानतादात्म्यारोपरूपातिशयोक्तौ नातिव्याप्तिः ।

(क) रूपकप्रभेदानाह तदिति कार्य्यकारणभावरूपापरम्पराशङ्काला

अत्र राजमण्डलं नृपसमूह एव चन्द्रबिम्बमित्यारोपो राजबाहोःराहुत्वारोपे निमित्तम् । मालारूपं यथा ।

"पद्मोदयदिनाधीशः सदागतिसमीरणः ।
भूभृदावलिदम्भोलिरेक एव भवान् भुवि" ॥

अत्र पद्मायाः उदय एव पद्मानामुदयः, सतामागतिरेव सदागमनं, भूभृतो राजान एव पर्वता इत्याद्यारोपो राज्ञः सूर्यत्वाद्यारोपे निमित्तम् । अश्लिष्टशब्दनिबन्धनं केवलं यथा ।

"पान्तु वो जलदश्यामाः शार्ङ्गज्याघातकर्कशाः ।
त्रैलोक्यमण्डपस्तम्भाश्चत्वारो हरिबाहवः" ॥

अत्र त्रैलोक्यस्य मण्डपत्वारोपो हरिबाहूनां स्तम्भत्वारोपे निमित्तम् । मालारूपं यथा ।

"मनोजराजस्य सितातपत्रं
श्रीखण्डचित्रं हरिदङ्गनायाः ।
विराजति व्योमसरः सरोजं
कर्पूरपूरप्रभमिन्दुबिम्बम्" ॥

---

यत्रेति पारम्परितं साङ्गं सावयवं निरङ्गं निरवयवम् । परम्परितरूपकमाह यत्रेति । तस्यापि द्वैविध्यमाह श्लिष्टेति श्लिष्टशब्दनिबन्धनमश्लिष्टशब्दनिबन्धनञ्चेत्यर्थः । पुनरपि तस्यापि द्वैविध्यमाह प्रत्येकमिति निरङ्गभेदयोरेकैकमित्यर्थः । आहवे इति । जगत् एतत्कष्टदखण्डं यस्मात् तत्सम्बोधने । तथा इत्यारोप इति । अत्र श्लेषेण रूप्यरूपकयोर्द्वयोरेवाभिधानं शब्दमात्ररूपसादृश्यमूलं प्रथमं रूपकम् । तेन राजमण्डलपदवाच्योपमर्दकत्वरूपसादृश्यनिबन्धनं द्वितीयं रूपकमिति भावः । पु-

अत्र मनोजादेराजत्वाद्यारोपश्चन्द्रबिम्बस्य सितातपत्रत्वाद्यारोपे निमित्तम्। एषु च राजभुजादीनां राहुत्वाद्यारोपो राजमण्डलादीनां चन्द्रमण्डलत्वाद्यारोपे निमित्तमिति" केचित्। (झ)

**अङ्गिनो यदि साङ्गस्य रूपणं साङ्गमेव तत्।**
**समस्तवस्तुविषयमेकदेशविवर्त्ति च ॥**

तत्र।

**आरोप्याणामशेषाणां शाब्दत्वे प्रथमं मतम्।**

प्रथमं समस्तवस्तुविषयं यथा।

"रावणावग्रहक्लान्तमिति वागमृतेन सः।
अभिवृष्य मरुत्सस्यं कृष्णमेघस्तिरोदधे:" ॥

अत्र कृष्णस्य मेघत्वारोपे वागादीनाममृतत्वारोपितम्। (ञ)

---

च्छायाः सम्पदः उदय उपार्जनं पद्मपक्षे प्रकाशः। राजमण्डलादीनां सरूपशब्दवाच्यत्वं सामत्रं प्रसिद्धतारोपकारणं बाहुबाह्लादीनान्तु बाहुधर्मान्तरमप्रसिद्धमित्यस्वरसः केचिदित्यनेन सूचितः।

(ञ) साङ्गरूपकमाह अङ्गिन इति रूपणमुपमानतादात्म्यारोपः। तस्य द्वैविध्यमाह समस्तेति समस्तानि वस्तूनि आरोप्यमानानि विषयाः शब्दोपात्तानि यत्र तत्। आरोप्याणामिति बहुवचनमविवक्षितम्। "उद्देश्ये लिङ्गं संख्याकालश्चातन्त्राणीति" न्यायात्। तेन "दन्तांशुके शराबीभिस्तस्या भाति मुखाम्बुजमि"त्यादेः संग्रहः। शाब्दत्वे शब्दोपात्तत्वे। रावण एवावग्रहो दृष्टिप्रतिबन्धकस्तेन क्लान्तं वागमृतेन वागमृतेन अभिवृष्य प्रीणयित्वा पक्षे अभिषिच्य मरुद्देव एव सस्यं व्रीह्यादि। कृष्णो विष्णुरेव मेघः। अत्र कृष्णोऽङ्गी वागाद्यङ्गम्। मेघत्वारोपवत्

यत्र कस्यचिदार्थत्वमेकदेशविवर्त्ति तत्।

कस्यचिदारोप्यमाणस्य। यथा।

"लावण्यमधुभिः पूर्णमास्यमस्या विकस्वरम्।
लोकलोचनरोलम्बकदम्बैः कैर्न पीयते"॥

अत्र लावण्यादौ मध्वाद्यारोपः शाब्दो मुखे पद्मत्वारोप आर्थः। न चेयमेकदेशविवर्त्तिन्युपमा विकस्वरत्वधर्मस्यारोप्यमाणे पद्मे मुखतया वर्त्तनात् मुखे चोपचरितत्वात्।

निरङ्गं केवलस्यैव रूपणं तदपि द्विधा।

माला केवलरूपत्वात्

---

मेघत्वारोपस्य शाब्दत्ववत् अमृतत्वाद्यारोपितत्वं अमृतत्वाद्यारोपितस्य शाब्दत्वम्।

(अ) एकदेशविवर्त्तिसाङ्गरूपकमाह यत्रेति आर्थत्वं अर्थबललभ्यत्वम्। कस्यचिदित्यनेनान्यस्य शाब्दत्वलाभः। श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्त्ति तदिति काव्यप्रकाशदर्शनात् शाब्दत्वस्याप्येतल्लक्षणघटकत्वं बोध्यं। रोलम्बो भ्रमरः "इन्दीन्दिरस्तु रोलम्बमञ्जरीको मधुव्रत" इति हारावली। न चेयमिति समभिव्याहृतपदार्थस्य मुख्यया वृत्त्या अन्वयसम्भव एव एकदेशविवर्त्तिनोरुपमारूपकयोरन्यतराङ्गीकारे बीजम्। मुखपद्मं विकस्वरमित्यत्र पद्मसदृशं मुखं विकस्वरमित्युपमाङ्गीकारे क्रियाविशेषणालितरूपविकस्वरत्वस्य मुखे बाधात् कान्तिविशेषे लक्षणाप्रसङ्गः। मुखमेव पद्ममिति रूपकाङ्गीकारे तु विशेष्ये पद्मे विकस्वरत्वस्य मुख्यया वृत्त्या अन्वयः सम्भवति। "दन्तप्रभा पुष्पचिता पाणिपल्लवशोभिनी। केशपाशालिवृन्देन सुवेशा हरिणेक्षणा" इत्यत्र रूपकाङ्गीकारे भूषणादिकृतशोभाविशेषस्य सुवेशत्वस्य लतायां बाधात् शोभातो लक्षणा-

तत्र मालारूपं निरङ्गं यथा ।

"निर्माणकौशलं धातुश्चन्द्रिका लोकचक्षुषाम् ।
क्रीडागृहमनङ्गस्य सेयमिन्दीवरेक्षणा" ॥

केवलं यथा । (ञ)

"दासे कृतागसि भवत्युचितः प्रभूणां
पादप्रहार इति सुन्दरि ! नात्र दूये ।
उद्यत्कठोरपुलकाङ्कुरकण्टकाग्रै-
र्यत्खिद्यते मृदु पदं ननु सा व्यथा मे" ॥

**तेनाष्टौ रूपके भिदाः ।**

चिरन्तनैरुक्ता इति शेषः । क्वचित् परम्परितमप्येकदेशविवर्त्ति यथा ।

"खड्गः क्ष्मासौविदल्लः समिति विजयते मालवाखण्डलस्य" ।

---

सङ्गः । उपमाङ्गीकारे तु मुख्यया वृत्त्या अन्वयः सम्भवतीति एतादृशं विशेषमवलोक्य एव केचिदेकदेशविवर्त्तिनीमुपमामेकदेशविवर्त्तिरूपक एवान्तर्भावयन्ति । केवलस्यैव न तु साङ्गस्य । तदपि निरङ्गं रूपकमपि । मालेति मालारूपत्वात् केवलरूपत्वाच्चेत्यर्थः । निर्माणकौशलं वराङ्गनासृष्टिव्युत्पत्तिः । सौन्दर्यातिशयसम्पादकत्वमेवानयोः साम्यं तन्मूलक एवायमारोपः । अत्रेन्दीवरेक्षणाया एव रूपणं न तु तदङ्गस्यापि ।

(ञ) दासे इति मानिनीं प्रसादयितुस्तत्पादाहतस्य नायकस्योक्तिरियम् । अत्र पादप्रहारे मृदुपदमिति तवेति शेषः । तव पादप्रहारेऽपि मम पुलको भवति तथापि मयि तव क्रोध इति भावः । सौविदल्लो अन्तःपुरपालकः कञ्चुकी । क्ष्मायां महिषीत्वारोपो राजभोग्यत्वरूपसाम्यमूलकः । मृगत्रमिति "अत्र स्थितं दम्बरथालवस्य श्रीखण्ड-

अत्रार्थः छायायां महिषीत्वारोपः खङ्गे सौविदल्लत्वारोपे हेतुः। अस्य भेदस्य पूर्ववन्मालारूपत्वेऽप्युदाहरणं मृग्यम्।

**दृश्यन्ते क्वचिदारोप्याः श्लिष्टाः साङ्गेऽपि रूपके।**

तत्रैकदेशविवर्त्ति श्लिष्टं यथा मम। (ञ)

"करमुदयमहीधरस्तनाग्रे
गलिततमःपटलांशुके निवेश्य।
विकसितकुमुदेक्षणं विचुम्ब-
त्ययममरेशदिशो मुखं सुधांशुः" ॥

समस्तवस्तुविषयं यथा। अत्रैव "विचुम्बतीत्यादौ" "चुचुम्ब "हरिदबलामुखमिन्दुनायकेन इति" पाठे न चात्र श्लिष्टपरम्परितम्। तत्र हि। "भूभृदावलिदम्भोलिरित्यादौ" राजादौ सर्वतत्वादिरूपणं विना वर्णनीयस्य राजादेर्दम्भोलितादिरूपणं सर्वथैव सादृश्यासम्भवादसङ्गतम्। तर्हि कथं "पद्मोदयदिनाधीश इत्यादौ" परम्परितं, राजादेः सूर्य्यादिना सादृश्यस्य तेजस्वितादिहेतुकस्य सम्भवा-

---

चित्रं हरितोऽवलायाः। विराजते चारु नभःसरोजं कर्पूरपूरप्रभमिन्दुबिम्बम्"। अत्र शम्बरशात्रवादेराजत्वाद्यारोपे आर्थश्चन्द्रबिम्बस्य सितच्छत्रत्वारोपे निमित्तम्।

(ञ) करमिति करं किरणमेव हस्तं पद्मोदयादेरेव पद्मोदयादिशब्दस्येव द्वयोरुभयरूपकयो राजादिसूर्य्यादयोः। नन्वत्र शब्दसाम्यविवक्षावशात् प्रसिद्धतेजस्वितादिरूपसाम्यविवक्षायास्तु त्रैलोक्यमण्डपस्तम्भा इत्यादौ तु दीर्घत्वपीवरत्वादिसाम्यसम्भवेनात्र तन्मूलक एव स्तम्भत्वाद्यारोपोऽस्तु त्रैलोक्यादौ मण्डपत्वाद्यारोपस्य तत्कारण-

दिति न वाच्यम् । तथा हि राजादेस्तेजस्वितादिहेतुकं सुव्यक्तं साहश्यं न तु प्रकृते तद्विवक्षितं पद्मोदयादेरेव द्वयोः साधारणधर्म्मतया विवक्षितत्वात्, इह तु महीधरादेः स्तनादिना साहश्यं पीनोत्तुङ्गत्वादिना सुव्यक्तमेवेति न श्लिष्टपरम्परितम् । क्वचित् समासाभावेऽपि रूपकं दृश्यते । यथा ।

"मुखं तव कुरङ्गाक्षि ! सरोजमिति नान्यथा" ।

क्वचिद्वैयधिकरण्येऽपि । यथा ।

"विदधे मधुपश्रेणीमिह भ्रूलतया विधिः" ।

क्वचिद्वैधर्म्येऽपि यथा ।

"सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुण-
ज्योत्स्नाकृष्णचतुर्दशी सरलतायोगश्वपुच्छच्छटा ।
यैरेषापि दुराशया कलियुगे राजावली सेविता
तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत् कौशलम्" ॥

इदं मम । अत्र च केषाञ्चिद्रूपकाणां शब्दश्लेषमूलत्वेऽपि रूपकविशेषत्वादर्थालङ्कारमध्ये गणनम् । एवं वक्ष्यमाणालङ्कारेषु बोद्धव्यम् । (ट)

---

त्वस्वीकारेण किमिति चेन्न । स्तम्भा यथा मण्डपभारसहिष्णवस्तथा हरिवाहवस्त्रैलोक्यभारसहिष्णव इति साम्यस्यैव प्रकृते विवक्षितत्वात् । तच्च त्रैलोक्यादौ मण्डपत्वाद्यारोपात् विना दुर्बोधम् । समासाभावेऽपीति । अतएव दण्डिना व्यस्तं समस्तं व्यस्तसमस्तञ्चेति त्रिविधं रूपकमुक्तम् । भ्रूलतयेत्यभेदे तृतीया । अन्यथा तादात्म्यारोपो न स्यात् । सुचरितमेवालेख्यं चित्रं द्युभित्तिराकाशकुड्यं सरलता कौटिल्यराहित्यमेव शरलता दाक्षिण्यं तस्या योगे श्वपुच्छच्छटा कुक्कुर-

**अधिकारूढवैशिष्ट्यं रूपकं यत्तदेव तत् ।**

तदेवाधिकारूढवैशिष्ट्यसंज्ञरूपकम् । यथा मम ।

"इदं वक्त्रं साक्षाद्विरहितकलङ्कः शशधरः
सुधाधाराधारश्चिरपरिणतं बिम्बमधरः ।
इमे नेत्रे रात्रिन्दिवमधिकशोभे कुवलये
तनुर्लावण्यानां जलधिरवगाहे सुखतरः" ॥

अत्र कलङ्कराहित्यादिनाधिकं वैशिष्ट्यम् ।

**विषयात्मतयारोप्ये प्रकृतार्थोपयोगिनि ।**
**परिणामो भवेत्तुल्यातुल्याधिकरणो द्विधा ॥ (ठ)**

---

लाङ्गूलकुण्डली । भक्तिमात्र सुलभे कैवल्यापि भक्त्या प्राप्ये । अत्र केषाञ्चिदिति साधनस्य श्लेषस्य शब्दालङ्कारत्वेऽपि साध्यत्वेन प्रधानस्यार्थालङ्कारमध्ये गणनमिति भावः । वक्ष्यमाणानां श्लेषापह्नवादीनाम् ।

(ठ) अधिकारूढवैशिष्ट्यं रूपकमाह अधिकारूढेति अधिकमत्यर्थमारूढमारोपितं वैशिष्ट्यं विशेषणं यत्र तदित्यर्थः । सुधाधाराधार इति बिम्बस्य विशेषणम् । कलङ्करहितत्वादिविशेषणं चन्द्रादेरत्यन्तमसम्भवीति तत्र तदारोपणादधिकारूढवैशिष्ट्यम् । कलङ्कराहित्यादिनेत्यभेदे तृतीया । परिणामालङ्कारमाह विषयात्मतयेति प्रकृतार्थोपयोगिनि वस्तुनि विषयतादात्म्येनारोप्ये सति परिणाम इत्यर्थः । प्रस्तुतप्रयोजनसाधनत्वेन प्रसिद्धिरेव प्रकृतार्थोपयोगित्वम् । रूपके सदृशवस्तुनस्तादात्म्यं विषये भासते इह तु सजातीयफलसाधनतया विषयस्य तादात्म्यमारोप्यमाणे भासते इति विशेषः । तुल्याधिकरणः समानाधिकरणः । स च समानविभक्तिकपदद्वये प्रयोज्यः भिन्नविभक्तिकपदद्वयप्रयोज्योव्यधिकरण एवातुल्याधिकरणः ।

आरोप्यमाणस्यारोपविषयात्मतया परिणमनात् परिणामः। यथा।

"स्मितेनोपायनं दूरादागतस्य कृतं मम।
स्तनोपपीड़माश्लेषः कृतो द्यूते पणस्तया"॥

अत्रोपायनपणौ वसनाभरणादिभावेनोपयुज्येते।(ड) अत्र तु नायकसम्भावनद्युतयोः स्मिताश्लेषरूपतया।

---

(ड) संज्ञा बीजमाह आरोप्यमाणस्येति परिणमनात् परिणतबुद्धिविषयीकरणात्। बुद्धेः परिणामस्यानाहार्य्यत्वे सति धारावाहिकत्वम्। रूपके ह्याहार्य्य एव सत्यदभेदबुद्धिरनन्तरं सामर्थ्यप्रतीतिरेव न त्वभेदबुद्ध्यन्तरम्। इह तु वस्तुनोरेककार्य्यकारित्वेनात्यन्ततिरस्कृतभेदयोरभेदप्रतीतिधारेति भावः। इह प्रायेण भवत्यर्थस्य करोत्यर्थस्य वा धातोः प्रयोगः। तत्र भवत्यर्थस्य प्रयोगो यथा "तिरस्करिण्यो जलदा भवन्ति"। अत्र योषिद्गात्रावरणरूपप्रस्तुतप्रयोजनसाधनत्वेन प्रसिद्धे पटविशेषे आरोप्यमाणे तत्साधनस्य जलदस्य तादात्म्यारोपः। यथा वा "मन्दो गन्धवहः क्षारो वह्निरिन्दुश्च जायते। चर्च्चा चन्दनपङ्कस्य शस्त्रघातः प्रवासिनाम्"। अत्र देहदाहादिरूपप्रस्तुतप्रयोजनसाधनत्वेन प्रसिद्धे वस्तुनि क्षारादावारोप्यमाणे तत्साधनस्य गन्धवहादेर्विषयस्य तादात्म्यारोपः। करोत्यर्थस्य प्रयोगे परिणाममाह स्मितेनेति तृतीयात्राभेदे। उपायनं सात्त्वादिप्रीत्यर्थं दीयमानं द्रव्यम्। स्तनोपपीड़ं स्तनावुपपीड्य ततः इत्यत्र कृत इति पाठो न रमणीयः। कथितपदत्वदोषप्रसङ्गात्। पराजये एतद्दातव्यमित्यङ्गीकृतं द्रव्यं पणः। आश्लेषरूपतया इति प्रयुज्येते इत्यन्वयः। आरोप्यमाणयोः प्रकृतोपयोगित्वेन प्रसिद्धिं विषयतादात्म्यारोपश्चोपपादयति अन्यत्रेति। सम्भावनान्तरद्यूतान्तरयोरित्यर्थः। उपयुज्येते हेतूभवतः।

(ढ) अत्र त्विति प्रस्तुतयोस्त्वित्यर्थः। स्मिताश्लेषरूपतया स्मिताश्लेष

अत्र प्रथमार्द्धे वैयधिकरण्येन प्रयोगः । द्वितीये सामानाधिकरण्येन । रूपके "सुखचन्द्रं पश्यामीत्यादौ" आरोप्यमाणचन्द्रादेरुपरञ्जकतामात्रं न तु प्रकृते दर्शनादावुपयोगः । इह तूपायनादेर्विषयेण तादात्म्यं प्रकृते चनायकसम्भावनादावुपयोगः । अत एव रूपके आरोप्यस्यावच्छेदकत्वमात्रेणान्वयः । अत्र तु तादात्म्येन दासे कृतागसीत्यादौ" रूपकमेव न तु परिणामः । आरोप्यमाणकटकस्य पादभेदनकार्य्यस्याप्रस्तुतत्वात् । न खलु तत् कस्यचिदपि प्रस्तुतकार्य्यस्य घटनार्थमनुसन्धीयते । अयमपि रूपकवदधिकारूढवैशिष्ट्यो दृश्यते यथा ।

---

तादात्म्येन उपयुज्यते इत्यन्वयः । उपयोगित्वेन प्रतीयते इति तदर्थः । रूपकादस्य भेदमुपपादयति रूपके इति । उपरञ्जकत्वमात्रं उपलक्षणत्वमेव यथाह्लादकं चन्द्रं पश्यामीत्यादावाह्लादकत्वस्य दर्शनानुपयोगित्वेन उपलक्षणत्वं तथेहापीति भावः । नत्विति चन्द्रस्य दर्शनयोग्यत्वेऽपि यथाह्लादादिसाधनत्वेन प्रसिद्धिर्न तथा दर्शनसाधनत्वेनेति भावः । प्रकृते चेति चकारस्य उपयोगश्चेत्यन्वयः । ननु मुखचन्द्रः प्रकाशत इत्यादौ चन्द्रादेरारोप्यमाणस्य प्रकाशसाधनत्वेन प्रसिद्धिरस्तीति परिणामप्रसङ्ग इत्यत आह अतएवेति परिणामलक्षणे विषयात्मतयेत्यस्य निवेशादित्यर्थः । अवच्छेदकमात्रेण विषयव्यावर्त्तकत्वमात्रेण न तु विषयतादात्म्येन । अत्र त्विति परिणामे त्वित्यर्थः । ननु दासे कृतागसीत्यादौ पादभेदनरूपकार्य्यसाधनत्वेन प्रसिद्धस्य कण्टकस्य पुलकाङ्कुरत्वेनारोपः इति परिणाम एवेत्यत आह दासे इत्यादौ अप्रस्तुतत्वादिति मानभङ्गस्यैव तत्र प्रस्तुतत्वादिति भावः । ननु प्रस्तुतघटकस्यापि प्रस्तुतत्वमित्यतः पादभेदनमपि प्रस्तुतमत आह न खल्विति तत्पादभेदनं घटनार्थमपीत्यपेरन्वयः उपपादनार्थमपीति तदर्थः । अनु-

"वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः" ॥

अत्र प्रदीपानामौषध्यात्मतया प्रकृते सुरतोपयोगिन्यन्धकारनाशे उपयोगोऽतैलपूरत्वेनाधिकारूढवैशिष्ट्यम्।(ढ)

**सन्देहः प्रकृतेऽन्यस्य संशयः प्रतिभोत्थितः।**
**शुद्धो निश्चयगर्भोऽसौ निश्चयान्त इति त्रिधा॥**

---

स्त्रीयते प्रतीयते। अधिकारूढवैशिष्ट्यं परिणाममाह अयमपीति परिणामोऽपीत्यर्थः। यत्र हिमालये।

(ण) सन्देहालङ्कारमाह सन्देह इति। प्रकृते उपमेयेऽन्यस्य उपमानस्य प्रतिभोत्थितः कविप्रौढ़ोक्तिसिद्धः न तु वस्तुस्वभावसिद्धः। "ससन्देहस्तु भेदोक्तौ तदनुक्तौ च संशय इति" काव्यप्रकाशदर्शनात्। "अनन्वयससन्देहावुपमास्वेव दर्शिताविति" दण्डिदर्शनाच्चास्य ससन्देह इत्यपि संज्ञान्तरम्। सन्देह इति सं ज्ञात उपमानोपमेयसंशयः सन्देह इति वामनदर्शनादवसीयते। केचित्तु काव्यप्रकाशकारिकामेवं व्याकुर्वन्ति "भेदोक्तौ तु ससन्देहः भेदानुक्तौ तु संशय" इत्यलङ्कारद्वयमेतदिति वदन्ति। तन्न तथार्थकत्वे विशेष्यं दुर्लभं स्यात्। उपमानोपमेययोर्भेदोक्तौ ससन्देहस्तदनुक्तौ सत्यां संशय इत्यर्थो यदि क्रियते तदा प्रथमस्य व्यतिरेके द्वितीयस्य रूपकादावतिप्रसङ्गः स्यात्। संशयालङ्कारस्य पृथक्त्वेनाप्युपादानाच्च। "भेदोक्तौ च यः संशयः स तु सन्देह" इति काव्यप्रकाशकाराभिप्रायमविकलय्य ग्रन्थकृत् तथा लक्षणं कृतवान्। वेलायां तीरे उच्छलितस्य उद्गतस्य उद्दाड़ोत्कलिकावतां अत्यन्तोत्कटतरङ्गशालिनां समुद्रस्य स्वसिद्धान्तस्य स्वाचारस्य वा उपन्यासे ज्ञापने विस्त्रम्भिणः प्रणयिनः। "समयाः शपथाचारकालसिद्धान्तसम्विद" इत्यमरः। "विस्रम्भः कौलिकलहे विश्वासे प्रणयेऽपि चेति" मेदिनी। अनवच्छिन्नशिष्यताड़नाया या यष्टिः सा उपदेशयष्टिः। स्मराचार्यः कामस्य।

यत्र संशय एव पर्य्यवसानं स शुद्धः । यथा ।

"किं तारुण्यतरोरियं रसभरोद्भिन्ना न वा वल्लरी
वेलाप्रोच्छलितस्य किं लहरिका लावण्यवारां निधेः ।
उद्गाढ़ोत्कलिकावतां स्वसमयोपन्यासविस्रम्भिणः
किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः" ॥

यत्रादावन्ते च संशय एव मध्ये च निश्चयः स निश्चयमध्यः । यथा ।

"अयं मार्त्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम् ।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति पुनः
समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः" ॥

अत्र मध्ये मार्त्तण्डाद्यभावनिश्चयः राजनिश्चये द्वितीयसंशयोत्थानासम्भवात् । यत्रादौ संशयोऽन्ते च निश्चयः स निश्चयान्तः । यथा । (ग)

---

निश्चयगर्भ इत्यत्र गर्भपदस्य मध्यार्थताभिप्रायेण व्याकरोति यत्रेति । अयं किमिति त्वामाजौ समालोक्य प्रतिभटाः प्रतिकूलशूराश्चिरमिति विकल्पान् विदधति । विकल्पानाह अयमिति । व्यावर्त्तकधर्ममाह स खल्विति इतो गतः सर्वा इत्यादिकृशानुव्यावर्त्तको धर्मः । एष कृशानुर्न नियतं सर्वां दिशः प्रसरति वाय्वभिमुखदिङ्मात्रप्रसारित्वात् कृशानुस्तु सर्वदिक्प्रसारी न स इत्यर्थः । महिषवाहनत्वाभावः कृतान्तव्यावर्त्तको धर्मः । मार्त्तण्डाद्यभावनिश्चयो मार्त्तण्डादिभेदानुमानं न तु राजनिश्चय इति शेषः । अत्र हेतुमाह राजेति । द्वितीयसंशयानुत्थानाद् द्वितीयसंशयानुत्थानप्रसङ्गात् ।

"किं तावत् सरसि सरोजमेतदारा-
दाहोस्विन्मुखमवभासते तरुण्याः।
संशय्य क्षणमिति निश्चिकाय कश्चित्
बिब्बोकैर्बकसहवासिनां परोक्षैः"॥

अप्रतिभोत्थापिते तु "स्थाणुर्वा पुरुषो वा इत्यादि-संशयेनायमलङ्कारः।

"मध्यं तव सरोजाक्षि ! पयोधरभरार्दितम्।
अस्ति नास्तीति सन्देहः कस्यचित्ते न भाषते"॥

अत्रातिशयोक्तिरेव उपमेये उपमानसंशयस्यैवैतदलङ्का-रविषयत्वात्।

**साम्यादतस्मिंस्तद्बुद्धिर्भ्रान्तिमान् प्रतिभोत्थितः।**

यथा।

"मुग्धा दुग्धधिया गवां विदधते कुम्भानधो बल्लवाः
कर्णे कैरवशङ्कया कुवलयं कुर्वन्ति कान्ता अपि।

---

(त) किं तावदिति संशय्येति योजना। बिब्बोकैर्निरुक्त-सूचकैश्चेष्टाविशेषैः वकसहवासिनां पद्मानां परोक्षैरपरिचेयैः। बिब्बोकानभिज्ञत्वातिशयज्ञापनाय पद्मानां वकसहवासित्वेनोपन्यासः। प्रतिभोत्थित इत्यस्य व्यावृत्तिमाह अप्रतिभेति। अत्रोच्चै-स्तरत्वादिना सादृश्यमस्त्येव। प्रकृतेऽन्यस्येत्यस्य व्यावृत्तिमाह साम्य-मिति अत्रातिशयोक्तिरेवालङ्कारो न तु सन्देहः। अत्र हेतुमाह उपमेय इति। एतदलङ्कारविषयत्वात् सन्देहालङ्कारस्वरूपत्वात्। भ्रान्तिमदलङ्कारमाह साम्यादिति। अत्र तत्पदद्वयमप्राकरणिकपरम्। प्रतिभोत्थिता कविप्रौढोक्तिसिद्धा। ननु रूपके उपमानेनोपमेय-निगरणरूपायामतिशयोक्तौ चातिप्रसङ्ग इति चेन्न। तयोराहार्य-

कर्कन्धूफलमुच्चिनोति शवरी मुक्ताफलाकाङ्क्षया
सान्द्रा चन्द्रमसो न कस्य कुरुते चित्तभ्रमं चन्द्रिका" ॥

अस्वरसोत्थापिता भ्रान्तिर्नायमलङ्कारः । यथा ।
"शुक्तिकायां रजतमिति" । न चासादृश्यमूला । यथा ॥

"सङ्गमविरहविकल्पे वरमिह विरहो न सङ्गमस्तस्याः ।
सङ्गे सैव तथैका त्रिभुवनमपि तन्मयं विरहे" ॥ (त)

**क्वचिद्भेदाद्ग्रहीतॄणां विषयाणां तथा क्वचित् ।**
**एकस्यानेकधोल्लेखो यः स उल्लेख इष्यते ॥**

---

रूपत्वात् भ्रमस्य चाहार्यभिन्नत्वात् । भ्रमप्रमाभिन्नं तृतीयप्रकारकं ज्ञानमाहार्यमिति तत्सिद्धान्तः । मुग्धा इति वल्लवा गोपाः गवाक्षः कुम्भान् विदधते इत्यन्वयः । चन्द्रिका किरणः । अत्र कविप्रौढोक्ति-सिद्धो भ्रमः साम्यातिशयव्यञ्जकः । अत्र ध्वनिसत्त्वेऽपि वैचित्र्यविशेष-स्यानुभवसिद्धत्वात् । अलङ्कारत्वेनोपादानम् । स्वरसोत्थापिता वस्तु-स्वभावजनिता । अयं भ्रान्तिमान् । शुक्तौ चाकचक्यविशेष एव रजत साधर्म्यम् । साम्यादित्यस्य व्यावृत्तिमाह न चेति भ्रान्तिनामायमल-ङ्कार इत्यनुषज्यते । सङ्गमेति सङ्गमविरहयोरेकतरस्याभीष्टत्वविवेचन इत्यर्थः । इयं भावनातिशयजन्या भ्रान्तिः कविप्रौढोक्तिसिद्धापि न साम्यप्रयुक्तमूला ।

(थ) उल्लेखालङ्कारमाह क्वचिदिति । ग्रहीतॄणां बोधकानां विष-याणां हेत्ववच्छेदकादीनां तथा भेदात् । अनेकधा विविधप्रकारेण उल्लेखोऽवधारणम् । तरोरियमित्यादि प्रिय इति इत्थं नन्दादिभिः भक्तैरक्रूरादिभिः अप्याहि अबोधि योगिभिर्नारदादिभिः देवः श्रीकृष्णः नन्वेकस्यानेकरूपेण स्फुरणैः किं प्रयोजकं सर्वेषां ग्रहीतॄणां वा कि-मित्येकरूपेण स्फुरणं न भवतीत्यत आह अत्रेति तत्तद्गुणयोगात् प्रियत्वादितत्तत् प्रकारसम्बन्धात् । इच्छादीत्यादिपदेन वक्ष्यमाणका-

क्रमेणोदाहरणम्।

"प्रिय इति गोपवधूभिः शिशुरिति वृद्धैरधीश इति देवैः।
नारायण इति भक्तैर्ब्रह्मेत्यग्राहि योगिभिर्देवः" ॥

अत्रैकस्यापि भगवतस्तत्तद्गुणयोगादनेकधोल्लेखे गोपवधूप्रभृतीनां रुच्यादयो यथायोगं प्रयोजकाः। यदाहुः।

"यथारुचि यथार्थित्वं यथाव्युत्पत्ति भिद्यते।
आभासोऽप्यर्थ एकस्मिन्ननुसन्धानसाधितः" ॥

अत्र भगवतः प्रियत्वादीनां वास्तवत्वादग्रहीतभेदाच्च न मालारूपकं न च भ्रान्तिमान् न चायमभेदे भेद इत्येवंरूपातिशयोक्तिः। तत्र हि "अन्यदेवाङ्गलावण्यमित्यादौ"

---

रिक्तार्थित्वव्युत्पत्त्योर्ग्रहणम्। यथायोगम् यथासम्भवं प्रयोजकाः कारणानि। भगवति यावद्गुणसत्त्वेऽपि रुच्यादिभेदेन विविधप्रकारेणैव स्फुरणं न त्वेकरूपेण रुच्यादीनामन्यतमस्य कारणस्य सर्वत्राभावादिति भावः। यथा रुचीति रुचिरभिलाषः अर्थित्वं प्रयोजनापेक्षित्वं व्युत्पत्तिर्भावना रुच्यादीनामनतिक्रमेण इत्यर्थः। भिद्यते भिन्नत्वेनोपपद्यते। आभासो ज्ञानं अर्थे विषये अनुसन्धानसाधितः विविधविशेषणज्ञानजनितः। एकविषये व्यक्तिभेदेन विभिन्नप्रकारकज्ञानोत्पत्तौ तत्तद्विशेषणज्ञानसहकृतं रुच्यादिकं कारणमिति भावः। वास्तवत्वादनारोपितत्वात् ग्रहीतभेदाच्चेति। एवञ्च "पिता प्रजानां शमनो रिपूणां वनीयकानाममरद्रुमश्च। कविः कवीनां सुहृदां सुधांशुः सतां गुरुर्भूमिपतिः प्रतीतः"। इत्यादौ पितृत्वादीनां प्रकाराणामवास्तवत्वेऽपि ग्रहीतभेदादेव नानारूपत्वमिति भावः। न च भ्रान्तिमान् इति अत्र प्रियत्वादीनां वास्तवत्वादिति हेतुर्बोद्धव्यः। एवञ्चात्र

लावण्यादेर्विषयस्य पृथक्त्वेनाध्यवसानम् । न चेह भगवति गोपवधूप्रभृतिभिः प्रियत्वाद्यध्यवसीयते । प्रियत्वादेर्भगवति तत्काले तात्त्विकत्वात् । केचिदाहुः "अयमलङ्कारो नियमेनावश्यम्भावेनालङ्कारान्तरविच्छित्तिमूलः, उक्तोदाहरणे च शिशुत्वादीनां नियमाभिप्रायात् प्रियत्वादेर्भिन्नत्वाध्यवसाय" इत्यतिशयोक्तिरस्ति तत्सद्भावेऽपि च ग्रहीतृभेदेन नानात्वप्रतीतिरूपो विच्छित्तिविशेष उल्लेखाख्यभिन्नालङ्कारप्रयोजकः । श्रीकण्ठजनपदवर्णने "वज्रपञ्जरमिति" "शरणागतैः अम्बरविवरमिति" "वातिकैः" इत्यादिष्वातिशयोक्तेर्विविक्तो विषयः । इह च रूपकालङ्कारयोगः ॥ वस्तुतस्तु "अम्बरविवरम्" इत्यादौ भ्रान्तिमन्तमेवेच्छति न रूपकं भेदप्रतीतिपुरःसरस्यैवारोपस्य गौणीमूलरूपकादिप्रयोजकत्वात् । यदाहुः शारीरकमीमांसाभाष्यव्याख्याने श्रीमद्वाचस्पतिमिश्राः "अपि च परशब्दः परत्र लक्ष्यमाणगुणयोगेन वर्त्तते इति" । यत्र प्रयोक्तृ-

---

सादृश्यजनित भ्रमाभावादत्र न भ्रान्तिमानिति भावः । अयमुक्तोल्लेखः । तात्त्विकत्वात् विद्यमानत्वात् । केचिदिति अयमुल्लेखः अलङ्कारान्तरं विच्छित्तेर्मूलं यस्य सः । अलङ्कारान्तरसङ्कुल एवायं विच्छित्तिविशेषं जनयतीति भावः । प्रियत्वादेर्धर्मस्य शिशुत्वादीनां नियमाभिप्रायात् व्यवच्छेदे तात्पर्य्यात् भिन्नत्वाध्यवसायः शिशुत्वादिभेदप्रत्ययः । ननु अत्रातिशयोक्तिरेव वैचित्र्यप्रयोजिका आस्तां किमुल्लेखस्यालङ्कारत्वाङ्गीकारेण इत्यत आह तत्सद्भावेऽपीति अतिशयोक्ति सद्भावेऽपीत्यर्थः । ग्रहीतृभेदादिति एकस्मिन्नीश्वरे गोपवधूप्रभृतीनां रुच्यादिभेदेन प्रियत्वादिप्रतीतिरतिशयोक्त्यलङ्कारस्तन्मूलकः । सभ्यानां नानात्वप्रत्यय एव

संप्रतिपत्तौः सम्प्रतिपत्तिः स गौणः स च भेदप्रत्ययपुरःसर इति। इह तु वार्तिकानां श्रीकण्ठजनपदवर्णने भ्रान्तिकृत एव अम्बरविवरत्वाद्यारोप इति। अत्रैव च "तपोवनमिति" मुनिभिः "कामायतनमिति" वेश्याभिरित्यादौ च परिणामालङ्कारयोगः। (थ)

"गाम्भीर्येण समुद्रोऽसि गौरवेणासि पर्वतः।"

इत्यादौ चानेकधोल्लेखे गाम्भीर्यादिविषयभेदः प्रयोजकः। अत्र च रूपकयोगः। "गुरुर्वचसि पृथुरुरसि अर्जुनो यशसीत्यादि" चास्य रूपकात् विविक्तो विषय इति। अत्र हि श्लेषमूलातिशयोक्तियोगः।

---

विच्छित्तिविशेष इति भावः। अम्बरविवरमाकाशावकाशः। रूपकस्य भेदप्रतीति पुरःसरत्वे हेतुमाह गौणीमूलस्येति सादृश्यलक्षणामूलस्येत्यर्थः। रूपकादिप्रयोजकत्वादितिरूपकादिस्वरूपत्वादिति तात्पर्यम्। गौण्या लक्षणया भेदप्रतीति पुरःसरत्वे प्राचीनसम्वादमाह यदाहुरिति परशब्द उपमानाभिधायकः शब्दः परत्र उपमेये लक्ष्यमाण गुणयोगेन प्रतीयमान साधारणधर्मसम्बन्धेन यत्र यस्मिन् सति प्रयोक्तृर्प्रतिपत्तौर्वक्तृश्रोत्रोः संप्रतिपत्तिः प्रमात्मकसादृश्यज्ञानं स गौणः शब्दव्यापार इत्यर्थः। सहवक्तृतात्पर्य्य ज्ञानविशेषरूपशब्दव्यापारश्च। प्रकृते रूपकं वैधर्म्यं दर्शयति इह त्विति। भ्रान्तिकृतो विशेषदर्शनाजन्यः। अत्रैव श्रीखण्डजनपदवर्णन एव। परिणामालङ्कारयोग इति चारोप्यमाणयोस्तपोवनकामायतनयोस्तपः कामरूपप्रकृतप्रयोजनोपयोगित्वात् परिणाम इति भावः।

(द) विषयभेदेनोल्लेखमुदाहरति गाम्भिर्य्येणेति कामदत्वाच्च लोकानामसि त्वं कल्पपादपः इत्युत्तरार्द्धमस्य। अत्रैकस्य पुंसो हेतुभेदेन

**प्रकृतं प्रतिषिध्यान्यस्थापनं स्यादपह्नुतिः।**

इयं द्विधा क्वचिदपह्नवपूर्व्वक आरोपः क्वचिदारोपपूर्व्वकोऽपह्नव इति। क्रमेणोदाहरणम्।

"नेदं नभोमण्डलमम्बुराशि-
र्नैताश्च तारा नवफेनभङ्गाः।
नायं शशी कुण्डलितः फणीन्द्रो
नासौ कलङ्कः शयितो मुरारिः"॥

"एतद्विभाति चरमाचलचूड़चुम्बि-
हिण्डीरपिण्डरुचिशीतमरीचिबिम्बम्।
उज्ज्वालितस्य रजनीं मदनानलस्य
धूमं दधत्प्रकटलाञ्छनकैतवेन"॥

इदं पद्यं मम। एवम्।

"विराजति व्योमवपुः पयोधि-
स्तारामयास्तत्र च फेनभङ्गाः।

इत्याद्याकारेण च प्रकृतनिषेधो बोद्धव्यः। (द)

---

बहुत्वाद्यनेकरूपेणोल्लेखः। गुरुरिति गुरुर्विशालो जीवश्च पृथुर्महान् वैयस्य अर्जुनः शुक्लो धनञ्जयश्च। अत्रैकस्य पुंसो वचःस्थलाद्यवच्छेदेन गुरुत्वाद्यनेकरूपेणोल्लेखः। अपह्नुत्यलङ्कारमाह प्रकृतमिति। उपमेयमित्यर्थः। निषिद्धा स्वभिन्नत्वेनारोप्या अनुस्थापनरूपसमारोपः। इयञ्च अपह्नुतिश्च। अस्या उभयरूपत्वे विनिगमनाभाव एव प्रयोजक इति भावः। फेणभङ्गाः फेणखण्डानि। अत्र नभोमण्डलादीनां प्रथमं स्वभिन्नत्वेन पश्चादम्बुराशित्वादिनारोपः। एतदिति "हिण्डीरोऽब्धिकफः फेण" इत्यमरः। लाञ्छनकैतवेनेति कलङ्काभेदव्यञ्जकमिदम्। निषिध्येति आनन्तर्य्यमविवक्षितमिति भावः।

गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन।
यदि श्लेषेणान्यथा वाऽन्ययेत्साप्यपह्नुतिः॥

श्लेषेण यथा।

"काले वारिधराणामपतितया नैव शक्यते स्थातुम्।
उत्कण्ठितासि तरले! नहि नहि सखि! पिच्छिलः पन्थाः"॥

अत्रापतितयेत्यत्र पतिं विनेत्युक्त्वा पतनाभावेनेत्यन्यथाकृतम्। अश्लेषेण यथा।

"इह पुरोऽनिलकम्पितविग्रहा
मिलति का न वनस्पतिना लता।
स्मरसि किं सखि! कान्तरतोत्सवं
न हि घनागमरीतिरुदाहृता"॥

वक्रोक्तौ परोक्तेरन्यथाकारः इह तु स्वोक्तेरेवेति भेदः। गोपनकृतागोपनीयस्यापि प्रथममभिहितत्वाच्च व्याजोक्तिः। (ध)

---

(ध) प्रकारान्तरेणापह्नुत्यलङ्कारमाह गोपनीयमिति द्योतयित्वा बोधयित्वा कथञ्चन शब्देन साङ्ख्यादिना वा अन्यथा श्लेषभिन्नेन कालस्वभावादिना अन्ययेत् भिन्नत्वेन ख्यापयेत्। काले इति प्रथमाङ्कम्। विरहिण्याः तृतीयपादः सख्याः चतुर्थपादो विरहिण्या उक्तिः। अपतितया अस्खलिततया अथ च पतिहीनत्वेन। न हि न हीति सखीवाक्यार्थप्रतिषेधः। पिच्छिल इति स्खलनाभावतात्पर्यग्राहकम्। इहेति घनागमरीतिर्वर्षाकालस्वभावः। व्याजोक्तेरिति भेद इत्यनेनान्वितम्। व्याजोक्तौ गोपनीयस्य प्रथमं स्वयमभिधानं नास्तीति भावः।

अन्यन्निषिध्य प्रकृतस्थापनं निश्चयः पुनः ।

निश्चयाख्योऽयमलङ्कारः । अन्यदित्यारोप्यमाणम् । यथा मम ।

"वदनमिदं न सरोजं नयने नेन्दीवरे एते ।
इह सविधे मुग्धदृशो मधुकर ! न मुधा परिभ्राम्य" ॥

यथा वा ।

"हृदि विषलताहारो नायं भुजङ्गमनायकः
कुवलयदलश्रेणी कण्ठे न सा गरलद्युतिः ।
मलयजरजो नेदं भस्म प्रियारहिते मयि
प्रहर न हरभ्रान्त्याऽनङ्ग ! क्रुधा किमु धावसि" ॥

न ह्ययं निश्चयान्तः सन्देहस्तत्र संशयनिश्चययोरेकाश्रयत्वेनावस्थानात् । अत्र तु भ्रमरादेः संशयो नायकादेर्निश्चयः किञ्च न भ्रमरादेरपि संशयः । एककोट्यनधिके

---

(न) निश्चयालङ्कारमाह अन्यदिति उपमानं निषिध्य भिन्नत्वेनाख्याय प्रकृतस्य उपमेयस्य स्थापनं तत्त्वेनावधारणम् । आरोप्यमाणं सादृश्यातिशयेनारोपविषयतां नीयमानम् । अयमपि द्विधा क्वचिदारोप्यमाणनिषेध पूर्वकं प्रकृतस्थापनं क्वचिच्च प्रकृतस्थापनपूर्वक आरोप्यमाणनिषेधः । तत्राद्यो यथा "न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे" । द्वितीयमाह वदनमिति दृढ़प्रतिपत्तये प्राचीनोदाहरणमाह हृदीति विरहिण उक्तिरियम् । एकाश्रयत्वेन एकात्मवृत्तित्वेन । तथा चात्र संशयनिश्चययोर्व्यधिकरणत्वान्नायं निश्चयान्तसन्देह इति भावः । ननु तत्र तयोः समानाधिकरण्यनियमे किं मानमत आह किञ्चेति । एककोट्यनधिके एककोटिमात्रावगाहिनि तथा समीपगमनासम्भवात् सन्देहप्रसङ्गायोगात् । तर्हि एककोटिमात्रावगाहिज्ञानकनिश्चयत्वस्वीकारे

स्थाने तथा समीपागमनासम्भवात्। तर्हि भ्रान्तिमानस्तु। अस्तु नाम भ्रमरादेर्भ्रान्तिः। न चेह तस्याश्चमत्कारविधायित्वम् अपि तु तथाविधनायकाद्युक्तेरेवेति सहृदयसंवेद्यम्। किञ्चाविवक्षितेऽपि भ्रमरादेः पतनादौ भ्रान्तौ वा नायिकाचाट्वादिरूपेणैव सम्भवत्येव तथाविधोक्तिः। न च रूपकध्वनिरयं मुखस्य कमलत्वेनानिर्द्धारणात्। न चापह्नुतिः प्रस्तुतस्यानिषेधादिति पृथगेवायमलङ्कारश्चिरन्तनोक्तालङ्कारेभ्यः। शुक्तिकायां रजतधिया पतति पुरुषे शुक्तिकेयं न रजतमिति कस्यचिदुक्तौ नायमलङ्कारो वैचित्र्याभावात्। (न)

**भवेत् सम्भावनोत्प्रेक्षा प्रकृतस्य परात्मना।**
**वाच्या प्रतीयमाना सा प्रथमं द्विविधा मता॥**

---

भ्रान्तिमानिति भ्रान्तेर्निश्चयरूपत्वादिति भावः। नायकाद्युक्तेरिति चमत्कारविधायित्वमित्यनेनान्वितम्। उक्तिर्निश्चयः। ननु सम्बोध्य भ्रान्तिं विना तथाविधोक्तेरसम्भव एव। एवञ्चास्य भ्रान्तिमूलकत्वं नियतम्। तथा च प्रकृते सैव चमत्कारविधायिनी। तथाविधोक्तिस्तु भ्रमव्यञ्जिकैवेत्यत आह किञ्चेति। पतनादाविति भ्रमव्यञ्जकोपादानं तस्य नियतत्वादाह भ्रान्ताविति अविवक्षितायामिति लिङ्गव्यत्ययेनान्वयः। चाट्वादिरूपेण चाटुत्वादिप्रकारेण मुखस्य मुखादेः कमलत्वेन कमलत्वादिना अनिर्द्धारणात् अनारोपात् प्रत्युत भिन्नत्वेन निर्णयात्। पतति रजतार्थं वर्त्तमाने। तथा च वस्तुतत्त्वमेव नालङ्कारत्वप्रयोजकमपि तु वैचित्र्याधायकत्वमेवेति भावः।

(प) उत्प्रेक्षालङ्कारमाह भवेदिति सम्भावना उत्कटैककोटिकः संशयः। प्राकृतस्य उपमेयस्य परात्मना उपमानस्वरूपेण। तादा-

वाच्ये वादिप्रयोगे स्यादप्रयोगे परा पुनः ।
जातिर्गुणः क्रिया द्रव्यं यदुत्प्रेक्ष्यं द्वयोरपि ॥
तदष्टधापि प्रत्येकं भावाभावाभिमानतः ।
गुणक्रियास्वरूपत्वान्निमित्तस्य पुनश्च ताः ॥
द्वात्रिंशद्विधतां यान्ति

तत्र वाच्योत्प्रेक्षायामुदाहरणं दिङ्मात्रं यथा ।
"ऊरुः कुरङ्गकदृशश्चञ्चलचेलाञ्चलो भाति ।
सपताकः कनकमयो विजयस्तम्भः स्मरस्येव" ।
अत्र विजयस्तम्भस्य बहुवाचकत्वाज्जात्युत्प्रेक्षा ।

---

कारसम्बन्धलाभायात्मपदोपन्यासः । प्रकारत्वं तृतीयार्थः । तथा च तादात्म्यसंसर्गकोपमानप्रकारकोपमेयविशेष्यकोत्कटैककोटिकः संशयः उत्प्रेक्षेत्यर्थः । सन्देहालङ्कारवारणाय उत्कटैककोटिक इति । रूपकभ्रान्तिमदतिशयोक्तीनां निश्चयरूपत्वात् संशयपदेन वारणम् । उपमानञ्च क्वचित् सम्भवि क्वचित् प्रौढ़ोक्तिसिद्धम् । आद्यं यथा गुणागुणानुबन्धित्वादिति अत्र प्रणवपदार्थः सम्भवत्येव । द्वितीयं यथा ऊरुरित्यादि अत्र सुरतेच्छारूपस्मरस्य कनकमयविजयस्तम्भः शशविषाणवदलीकः प्रौढ़ोक्त्यैव सिद्धिः । परो प्रतीयमाना सा द्वयोर्वाच्यप्रतीयमानयोः । जातिर्जातिवाचकपदप्रतिपाद्योऽर्थः । एवं गुणादयोऽपि । भावेति भावाभिमाने जात्यादिरूपभावसम्भावनायां अभावाभिमाने जात्यादिप्रतियोगिकाभावसम्भावनायाम् । एवञ्च षोड़शप्रकारत्वमुपपन्नम् । निमित्तस्य सम्भावनजनकज्ञानविषयसाधारणधर्मस्य ता उत्प्रेक्षाः । ऊरुरिति अत्र अभिभूय यद्विषये वीरैर्यः स्तम्भ आरोप्यते स विजयस्तम्भः । विजयस्तम्भपदस्य बहुवाचकत्वादिति अनेकव्यक्तिनित्य-

"ज्ञाने मौनं क्षमा शक्तौ त्यागे श्लाघाविपर्य्ययः ।
गुणा गुणानुबन्धित्वात्तस्य सप्रसवा इव" ॥

अत्र सप्रसवत्वं गुणः ।

"गङ्गाम्भसि सुरत्राण ! तव निःशाननिःस्वनः ।
स्नातीवारिबधूवर्गगर्भपातनपातकी" ॥

अत्र स्नातीति क्रिया ।

"मुखमेणीदृशो भाति पूर्णचन्द्र इवापरः" ।

अत्र चन्द्र इत्येकव्यक्तिवाचित्वाद्द्रव्यशब्दः । एते भावाभिमाने च । अभावाभिमाने यथा । (प)

"कपोलफलकावस्याः कष्टं भूत्वा तथाविधौ ।
अपश्यन्ताविवान्योन्यमीदृक्षां क्षामतां गतौ" ॥

---

सामान्यजातित्वस्वीकारादिति भावः । गुणोत्प्रेक्षामाह ज्ञाने इति शास्त्रादिज्ञाने सत्यपि मौनं जल्पवितण्डाराहित्यं क्षमा पराभवानर्हस्यापराधसहिष्णुता । श्लाघा आत्मप्रशंसा तस्याविपर्य्ययोऽभावः । गुणानुबन्धित्वात् गुणप्रयोजकत्वात् । प्रकर्षप्रयोजकधर्म्मोऽत्र गुणः । तस्य दिलीपस्य कुक्षिगर्भयोर्विभागः प्रसवः तत्सहिताः सप्रसवाः । ज्ञानादीनां मौनाद्युत्पादनेप्रसवत्वसम्भावना ज्ञानादिसत्त्व एव मौनादीनां गुणत्वमिति ज्ञानादीनां मौनादिप्रयोजकत्वम् । क्रियोत्प्रेक्षामाह गङ्गेति सुरत्राणेति प्रसिद्धस्य राज्ञः सम्बोधनम् । प्रयाणकालीनवाद्यं निःशानः अरिबधूवर्गस्य गर्भपातनमेव पातकं पापजननयोग्यकर्म्म तद्वान् । पापकर्मा हि गङ्गास्नानं करोति शब्दोऽपि पापकर्मवानिति तदीयगङ्गाजलसम्बन्धे स्नानसम्भावना ॥ द्रव्योत्प्रेक्षामाह मुखमिति अपरः प्रसिद्धातिरिक्तः । अयं प्रौढोक्तिसिद्धः । एते दर्शितप्रकारोत्प्रेक्षा प्रकाराः ।

(फ) कपोलेति तथाविधौ अतिसुन्दरौ ईदृक्ष ईदृशीं क्षामत

अत्रापश्यन्ताविति क्रियाया अभावः । एवमन्यत् । निमित्तस्य गुणक्रियारूपत्वे यथा "गङ्गाम्भसीत्यादौ" स्नातोवेत्युत्प्रेक्षा निमित्तं पातकित्वं गुणः । "अपश्यन्ताविवेत्यादौ" क्षामतागमनरूपं निमित्तं क्रिया । एवमन्यत् । प्रतीयमानोत्प्रेक्षा यथा । (फ)

"तन्वङ्गयास्तनयुग्मेन मुखं न प्रकटीकृतम् ।
हाराय गुणिने स्थानं न दत्तमिति लज्जया" ॥

अत्र लज्जयेवेति इवाद्यभावात् प्रतीयमानोत्प्रेक्षा । एवमन्यत् । ननु ध्वनिनिरूपणप्रस्तावेऽलङ्काराणां सर्वेषामपि व्यङ्ग्यत्वं भवतीत्युक्तम्, सम्प्रति पुनर्विशिष्य कथमुत्प्रेक्षायाः प्रतीयमानत्वमुच्यते । उच्यते व्यङ्ग्योत्प्रेक्षायाम् ।

"महिलासहस्सभरिए तुह हिअए सुहअ सा अमायन्ती अणुदिण अणस्सअम्मा अङ्गं तणु अपि तणूएइ" ॥ *

---

कृशत्वम् । ननु कपोलयोः परस्परदर्शनाभावः सिद्ध एव कथमत्र सम्भावनेति चेन्न । विरहजनितकृशत्वे परस्परदर्शनाभावजन्यकृशत्वसम्भावनायां तात्पर्य्यात् । पातकित्वं पापजननयोग्यत्वं गुणक्रियातिरिक्तो धर्मः यथाश्रुतस्य शब्देऽसम्भव इति ध्येयम् । एतेन "निष्पन्दमरविन्दाक्षि नेत्रद्वन्द्वमिदं तव । चिरविच्छिन्नमेकान्तं कान्तमाध्यायति ध्रुवमित्यादौ" गुणक्रियाभिन्नस्य निष्पन्दत्वादेरपि निमित्तस्य संग्रहः । यद्वा निमित्तस्यापि भावाभावरूपत्वं द्वैविध्यं बोध्यम् ।

(फ) तन्वङ्ग्या इति कालिम्नावृतत्वात् मुखप्रकटीकरणाभाव इति भावः । गुणिने सूत्रवते अथ च विद्यादिगुणशालिने । दाना-

---

* महिलासहस्रभरिते तव हृदये सुभग साऽमान्ती ।
अनुदिनमनन्यकर्माङ्गं तन्वपि तनूकरोतीति ॥

इत्यादौ उत्प्रेक्षणं विनापि वाक्यविश्रान्तिः, इह तु स्तनयोर्लज्जाया असम्भवात् लज्जयेवेत्युत्प्रेक्षवेति व्यङ्ग्यः। प्रतीयमानोत्प्रेक्षयोर्भेदः। अत्र वाच्योत्प्रेक्षायाः षोड़शसु भेदेषु मध्ये विशेषमाह।

**तत्र वाच्या भिदाः पुनः।**
**विना द्रव्यं त्रिधा सर्वाः स्वरूपफलहेतुगाः॥**

तत्रोक्तेषु वाच्यप्रतीयमानोत्प्रेक्षयोर्भेदेषु मध्ये ये वाच्योत्प्रेक्षयाः षोड़श भेदास्तेषु जात्यादीनां त्रयाणां ये द्वादश भेदास्तेषां प्रत्येकं स्वरूपफलहेतुगत्वेन द्वादशभेदतया षट्त्रिंशद्भेदाः द्रव्यस्य स्वरूपोत्प्रेक्षणमेव सम्भवतीति चत्वार इति मिलित्वा चत्वारिंशद्भेदाः अत्र स्वरूपोत्प्रेक्षा यथा। पूर्वोदाहरणेषु "स्मरस्य विजयस्तम्भ" इति "सप्रसवा"इवेत्यादयः जातिगुणरूपाः। फलोत्प्रेक्षा यथा।

"रावणस्यापि रामास्तो भित्वा हृदयमाशुगः।
विवेश भुवमाख्यातुमुरगेभ्य इव प्रियम्"॥

---

भावो हि लज्जासम्पादकः। स्तनयोरतिसान्द्रत्वेन हारस्यावकाशाप्राप्तिस्तत्त्वयमुत्प्रेक्षा। उत्प्रेक्षां विनापि तव हृदये वस्तुमिवेति फलोत्प्रेक्षां विनापि। उत्प्रेक्षयैव उत्प्रेक्षावाचकेवाद्याध्याहारेणैव वाक्यविश्रान्तिरित्यन्वयः। अनयोरुत्प्रेक्षाध्वनिप्रतीयमानोत्प्रेक्षयोः। स्वरूपेति तादर्थ्यचतुर्थ्यन्तेन तुमन्तेन वा पदेन यत्रोत्प्रेक्षा सा फलोत्प्रेक्षा। हेतुविभक्त्यन्तपदेन उत्प्रेक्षा हेतूत्प्रेक्षा। ताभ्यामितरा स्वरूपोत्प्रेक्षा सम्भवतीति फलहेतुभावेन द्रव्यसम्भावनाया वैचित्र्याजनकत्वादिति भावः। पूर्वोदाहरणेषु

अत्र "आख्यातुमिति" भूप्रवेशस्य फलं क्रियारूपमुत्प्रेक्षितम् । हेतूत्प्रेक्षा यथा । (भ)

"सैषा स्थली यत्र विचिन्वता त्वां
भ्रष्टं मया नूपुरमेकमुर्व्याम् ।
अदृश्यत त्वच्चरणारविन्द-
विश्लेषदुःखादिव बद्धमौनम्" ॥

अत्र दुःखरूपो गुणो हेतुत्वेनोत्प्रेक्षितः । एवमन्यत् ।

**उक्तानुक्तयोर्निमित्तस्य द्विधा तत्र स्वरूपगाः ।**

तेषु चत्वारिंशत्सङ्ख्यकेषु भेदेषु मध्ये ये स्वरूपगायाः षोडश भेदास्ते उत्प्रेक्षानिमित्तस्योपादानानुपादानाभ्यां द्वात्रिंशद्भेदा इति मिलित्वा षट्पञ्चाशद्भेदा वाच्योत्प्रेक्षायाः । तत्र निमित्तस्योपादानं यथा । पूर्वोदाहृते "स्नातीवेति" उत्प्रेक्षायां निमित्तं पातकित्वमुपात्तम् । अनुपादाने यथा "चन्द्र इवापर" इत्यत्र तथाविधसौन्दर्य्यातिशयो नोपात्तः । हेतुफलयोस्तु नियमेन निमित्तस्योपादानमेव । तथा हि "विश्लेषदुःखादिव" इत्यत्र यन्निमित्तं बद्धमौनत्वम् "आख्यातुमिव" इत्यत्र च भूप्रवे-

---

जइत्यादिषु । रामास्तो रामविचिन्नः बाणस्य भूतलप्रवेशो रामवीर्य्यातिशयं ख्यापयति तत्र प्रियाख्यानसम्भावना ।

(भ) सैषेति सीतां प्रति श्रीरामस्योक्तिरियम् । विचिन्वता अन्विष्यता । अत्र सीताचरणासम्बन्धः सीताचरणविश्लेषदुःखत्वेन सम्भावितः । मिलित्वेति चतुर्विंशतिप्रकारफलहेतूत्प्रेक्षाभिरिति शेषः । हेतुफलयोस्त्विति हेतूत्प्रेक्षा फलोत्प्रेक्षयोस्त्वित्यर्थः

शस्तयोरनुपादानेऽसङ्गतमेव वाक्यं स्यात् । प्रतीयमानायाः षोड़शसु भेदेषु विशेषमाह ।

**प्रतीयमानाभेदाश्च प्रत्येकं फलहेतुगाः ।**

यथोदाहृते "तन्वङ्ग्यास्तनयुग्मेन" इत्यत्र "लज्जयेवेति" हेतुरुत्प्रेक्षितः । अस्यामपि निमित्तस्यानुपादानं न सम्भवति । इवाद्यनुपादाने निमित्तस्य चाकीर्त्तने उत्प्रेक्षणस्य प्रमातुर्निश्चेतुमशक्यत्वात् । स्वरूपोत्प्रेक्षाप्यत्र न भवति । धर्म्मान्तरतादात्म्यनिबन्धनायामस्यामिवाद्यप्रयोगे विशेषणयोगे सत्यतिशयोक्तेरभ्युपगमात् । यथा । "अयं राजाऽपरः पाकशासन इति" । विशेषणाभावे च रूपकस्य यथा राजा पाकशासन इति तदेवं द्वात्रिंशत्प्रकारा प्रतीयमानोत्प्रेक्षा ।

**उक्त्यनुक्त्योः प्रस्तुतस्य प्रत्येकं ता अपि द्विधा ।**

ता उत्प्रेक्षाः । उक्तौ यथा "ऊरुः कुरङ्गकदृशः" इति । अनुक्तौ यथा मम प्रभावत्यां प्रद्युम्नः इह हि ।

---

हेतूत्प्रेक्षायामुत्प्रेक्ष्यमाणस्य फलमेवनिमित्तं फलोत्प्रेक्षायान्तु हेतुरेवेत्यवधेयम् । असङ्गतमेवेति विभक्त्याद्युपस्थापितस्य हेतुत्वस्य कार्य्यत्वस्य वा अन्वयानुपयोग्यत्वलाभेनान्वयबोधविधुरं स्यादित्यर्थः । धर्म्मान्तरतादात्म्यनिबन्धनायां धर्मान्तरतादात्म्यविषयिण्याम् अस्यामुत्प्रेक्षायां विशेषणस्यासम्भवित्वरूपस्याद्भुतधर्मस्य योगे इत्यर्थः । अध्यवसीयमानस्य प्रौढ़ोक्तिसिद्धत्वेनोत्कृष्टत्वमिति विषयस्यापकृष्टत्वरूपसधःकरणमतिशयोक्तिप्रयोजकम् । अभ्युपगमादिति इवाद्ययोगे सम्भाव

"सम्प्रति प्रतिदिगन्तमाच्छादयता तिमिरपटलेन
घटितमिवाञ्जनपुञ्जैः पूरितमिव मृगमदक्षोदैः ।
ततमिव तमालतरुभिर्वृतमिव नीलांशुकैर्भुवनम्" ॥

अत्राञ्जनेन घटितत्वादेरुत्प्रेक्षणीयस्य विषयव्याप्तत्वं नोपात्तम् । यथा वा । (म)

"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः" ।

अत्र तमसो लेपनस्य व्यापनरूपो विषयो नोपात्तः । अञ्जनवर्षणस्य तमः सम्पातः अनयोरुत्प्रेक्षानिमित्तञ्च तमसोऽतिबहुलत्वं धारारूपेणाधःसंयोगश्च यथासङ्ख्यम् । केचित्तु "अलेपनकर्तृभूतमपि तमो लेपनकर्तृत्वेनोत्प्रेक्षितं व्यापनञ्च निमित्तम्, एवं नभोऽपि वर्षणक्रियाकर्तृत्वेनेत्याहुः ।

**अलङ्कारान्तरोत्था सा वैचित्र्यमधिकं वहेत् ॥**

तत्र सापह्नवोत्प्रेक्षा । यथा मम ।

---

नायाः सिद्धत्वेनावभासादिति भावः । रूपकस्येति अभ्युपगमादित्यन्वयः विषयस्याधःकरणाभावात् रूपकस्यैव प्रसर इति भावः । प्रस्तुतस्य विषयस्य । ता निरुक्ताष्टविंशतिप्रकारा उत्प्रेक्षाः ।

(म) लिम्पतीवेति गाढान्धकारवर्णनमिदम् । तमःसम्पात इति विषयो नो पात्त इत्यन्वयः । अतिबहुत्वमिति बहुत्वप्रयुक्तनिविड़-संयोगः । एवं सति साधारणधर्मत्वमुपपन्नम् । धारारूपेणेति तमस इति योजना अधःसंयोगश्चेति तमसो द्रवत्ववादिमतमाश्रित्योक्तम् । व्यापनञ्चेति निविड़संयोगानुकूलव्यापारश्चेत्यर्थः । एवमिति अवर्षण-क्रियाकर्तृभूतमपीत्यर्थः । इतुप्रे क्षितमित्यनुषज्यते । तत्र धारा-

"अशुच्छलेन सुदृशो हुतपावकधूमकलुषाक्ष्याः।
अप्राप्य मानमङ्गे विगलति लावण्यवारिपूर इव" ॥ (म)

श्लेषहेतुगा यथा।

"मुक्तोत्करः सङ्कटशुक्तिमध्याद्विनिर्गतः सारसलोचनायाः।
जानीमहेऽस्याः कमनीयकम्बुग्रीवाधिवासाद्गुणवत्त्वमाप" ॥

अत्र गुणवत्त्वे श्लेषः "कम्बुग्रीवावासादिवेति" हेतूत्प्रेक्षाया हेतुः। अत्र "जानीमहे" इत्युत्प्रेक्षावाचकम्।

एवम्।

**मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादयः।**

क्वचिदुपमोपक्रमोत्प्रेक्षा यथा।

"पारे जलं नीरनिधेरपश्यन्मुरारिरानीलपलाशराशीः।
वनावलीरुत्कलिकासहस्रप्रतिक्षणात्कूलितशैवलाभाः" ॥

---

रूपेणाधःसम्पातो निमित्तं नभसोऽञ्जनवर्षणकर्तृत्वेन सम्भावनायां प्रकृतस्य उपमेयस्य तमसो बोधो दुर्घट इत्यस्वरसः केचिदित्यनेन सूचितः। अपरे तु तमोऽञ्जनत्वेनोत्प्रेक्षितं नीलत्वमत्र निमित्तमित्याहुः। सा उत्प्रेक्षा सापह्नवा अपह्नुत्यलङ्कारमूला। मानमियताम्।

(य) सङ्कटेति कारणस्य गुणवत्त्वप्राप्तिकारणत्वाभावसूचकम्। अपकृष्टजातागुणवत्त्वमुत्कर्षप्रयोजकधर्मयोगित्वमथ च सूत्रवत्त्वम्। हारस्य गुणवत्त्वनामभ्युत्तमस्थानवासेन गुणवत्त्वं भवतीति भावः। हारस्य गुणवत्त्वप्राप्तौ स्वभाव एव हेतुः तत्त्वेयमुत्प्रेक्षा। अथ च शुक्तिमध्यापेक्षया कम्बुग्रीवाया महत्त्वमुचितमेव। एवमिति उत्प्रेक्षावाचका इत्यर्थः आदिपदात् खलु किम्र प्रभृतीनां ग्रहणम्। यथा "रुचयोऽस्तमितस्य

इत्यत्राभाशब्दस्योपमावाचकत्वादुपक्रमे उपमा, पर्य्यवसाने तु जलधितीरे शैवालस्थितेः सम्भवानुपपत्तेः सम्भावनोत्थानमित्युत्प्रेक्षा । एवं विरहवर्णने । ( य )

"केयूरायितमङ्गदैरित्यत्र" "विकासिनीलोत्पलति स्म कर्णे मृगायताक्ष्याः कुटिलः कटाक्षः" । इत्यादौ च ज्ञेयम् । भ्रान्तिमदलङ्कारे "मुग्धा दुग्धधियेत्यादौ" भ्रान्तानां वल्लवादीनां विषयस्य चन्द्रिकादेर्ज्ञानं नास्ति तदुपनिबन्धनस्य कविनैव कृतत्वात्, इह तु सम्भावनाकर्त्तुर्विषयस्यापि ज्ञानमिति द्वयोर्भेदः । सन्देहे तु समकक्षतया कोटिद्वयस्य प्रतीतिः । इह तूत्कटासम्भाव्यभूतैका कोटिः । अतिशयोक्तौ विषयिणः प्रतीतस्य पर्य्यवसानादसत्यता प्रतीयते, इहतु प्रतीतिकाल एवेति भेदः ।

---

भास्वतः स्खलिता यत्र निरालयाः खलु । अभिसारयसन्तविलेपनापणकाश्मीरजपण्यवीथयः ॥ पृथुवर्त्तुलतन्नितम्बकृन्मिहिरस्यन्दनशिल्पशिक्षया । विधिरेकचक्रचारिणं किमु निर्मित्सति मान्मथं रथम्" । इवशब्दस्योत्प्रेक्षावाचकत्वं प्रसिद्धमिति तन्नोक्तम् । आदिपदेन वा तस्यापि ग्रहणम् । उत्कलिकासहस्रेण तरङ्गसमूहेन प्रतिक्षणमुत्कूलिताः कूलं प्रापिताः ये शैवलास्तत्तुल्या इत्यर्थः । "कथितोत्कलिकोत्कण्ठाहेलासलिलवीचिषिति मेदिनी" । उपक्रम इति प्रथममुपमाप्रतीतिरित्यर्थः । सम्भावनोत्थापनं सम्भावनाप्रतीतिः ।

( र ) केयूरायितमिति अङ्गदैः कङ्कणैः । अनयोरायतत्वकोरूपमावाचकत्वादुपक्रमे उपमाप्रतीतिः पर्य्यवसाने तु भुजमध्ये कर्णे च कङ्कणकटाक्षयोरसम्भवात् सम्भावनोत्थापनमित्युत्प्रेक्षा । इदानीं भ्रान्तिमदादिभ्यः उत्प्रेक्षाया भेदमुपपादयति भ्रान्तिमदिति तदुप-

"रञ्जिता नु विविधास्तरुशैला नामितं नु गगनं स्थगितं नु।
पूरिता नु विषमेषु धरित्री संहृता नु ककुभस्तिमिरेण"॥

इत्यत्र यत्तर्वादी तिमिराक्रान्तता रञ्जनादिरूपेण सन्दिह्यत इति "सन्देहालङ्कार" इति केचिदाहुः। तन्न एकविषये समानबलतयानेककोटिस्फुरणस्यैव सन्देहत्वात्। इह तु तर्वादिव्याप्तेः प्रतिसम्बन्धिभेदः व्यापनादेर्निगरणेन रञ्जनादेः स्फुरणञ्च। अन्ये तु "अनिर्द्धारणरूपविच्छित्त्याश्रयत्वेनैककोट्यधिकोऽपि भिन्नोऽयं सन्देहप्रकार" इति वदन्ति स्म। तदप्ययुक्तम्। (र)

निगीर्णस्वरूपस्यान्यतादात्म्यप्रतीतिर्हि सम्भावना। तस्याश्चात्र स्फुटतया सद्भावान्नुशब्देन चेवशब्दवत्तस्याद्यो-

निबन्धनस्य चन्द्रिकादिवर्णनस्य विषयस्य वेति चकारात् विषयिणश्च संग्रहः। समकक्षतया तुल्यस्वरूपतया उत्कटा निश्चितप्राया सम्भाव्यभूता अनिर्द्धारितस्वरूपा कोटिः प्रकारः एककोटिकज्ञानस्यापि सत्संशयत्वमुच्यते तदनिर्द्धारणत्वरूपसंशयधर्मयोगात् गौणमेव। पर्य्यवसाने शाब्दबोधानन्तरम्। प्रतीति काल एवेति रूपकवदाहार्य्य एव अन्यतादात्म्यप्रत्ययः सम्भावनेति भावः। रञ्जितानीलद्रवेण लिप्ता नामितं प्रह्वीकृतं स्थगितं संवृतं विषमेषु निम्नभागेषु संहृता अपनीताः प्रतिसम्बन्धिभेद इति। तथा चैकविषयानेककोटिकज्ञानत्वाभावादस्य संशयत्वमनुपपन्नमिति भावः। नन्विदं तमसा तरुशैलादिव्यापनम्। ननु रञ्जनमित्याद्याकारा भानासन्देहा एवेत्यत आह व्यापनस्येति निगरणेन अधःकरणेन। एककोट्यधिकेऽपीति भावप्रधानो निर्देशः एककोटेरुत्कटत्वेऽपीति तदर्थः।

(ल) निगीर्णेति निगीर्णत्वमधःकृतत्वं तच्च विच्छित्तिविशेषं प्रत्य-

तत्रादुत्प्रेक्षैवेयं भवितुं युक्ता । अलमदृष्टसन्देहप्रकार-कल्पनया ।

"यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते
तदाचष्टे लोकः शशक इति नो मां प्रति तथा ।
अहन्त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी-
कटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम्" ॥

इत्यत्र मन्ये शब्दप्रयोगेऽप्युक्तरूपाया सम्भावनाया अप्रतीतेर्वितर्कमात्रं नासावपह्नवोत्प्रेक्षा । (ल)

**सिद्धत्वेऽध्यवसायस्यातिशयोक्तिर्निगद्यते ।**

विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसायः । अस्य चोत्प्रेक्षायां विषयिणोऽनिश्चितत्वेन निर्देशात् साध्यत्वम् । इह तु निश्चितत्वेनैव प्रतीतिरिति सिद्धत्वम् ।

---

किञ्चित्करत्वमेव न तु शब्दानुपात्तत्वमात्रं तथा सति जरः कुरङ्गकश्च इत्यादौ विषयोपादानादव्याप्तिः स्यात् । अन्यतादात्म्यप्रतीतिरुपमानतादात्म्यारोपः । प्रतीतिरत्र निर्द्धारणरूपा प्रत्येतव्या । तेनातिशयोक्ति व्युदासः । यदेतदिति वस्त्विति शेषः । जलदलवलीलां मेघखण्ड-सादृश्यं वितनुते धारयति । तथा शशकवचनम् । तद्वस्तुनः शशकवचनं न समेत्यर्थः । वितर्कमात्रं प्रौढोक्तिसिद्धकोऽद्युपस्थितिमात्रम् । तथा च यदेतदित्यनेन किमप्यनिर्दिष्टस्वरूपं वस्तु प्रस्तुतं तस्यात्र शशरूपत्वं प्रतिषिद्धकिणकलङ्करूपत्वं व्यवस्थापितं न तूपमानतादात्म्यं सम्भावितमिति भावः ।

(ल) अतिशयोक्त्यलङ्कारमाह सिद्धत्वे इति । निश्चितविषयिताह-कत्वे इत्यर्थः निश्चयरूपत्व इति पर्य्यवसितोऽर्थः । अध्यवसायपदार्थमाह विषयेति विषयिणोऽध्यवसायप्रकारस्य अभेदप्रतिपत्तिस्तादात्म्यारोपः ।

विषयनिगरणं चोत्प्रेक्षायां विषयस्याधःकरणमात्रेण इहापि "मुखं द्वितीयश्चन्द्र" इत्यादौ यदाहुः ।

"विषयस्यानुपादानेऽप्युपादानेऽपि सूरयः ।
अधःकरणमात्रेण निगीर्णत्वं प्रचक्षते" इति ॥

**भेदेऽप्यभेदः सम्बन्धेऽसम्बन्धस्तद्विपर्य्ययौ ।**
**पौर्वापर्य्यात्ययः कार्य्यहेत्वोः सा पञ्चधा ततः ॥**

तद्विपर्य्ययौ अभेदेऽभेदः । असम्बन्धे सम्बन्धः । साऽतिशयोक्तिः । अत्र भेदेऽभेदो यथा मम ।

"कथमुपरि कलापिनः कलापो
विलसति तस्य तलेऽष्टमीन्दुखण्डम् ।
कुवलययुगलं ततो विलोलं
तिलकुसुमं तदधः प्रवालमस्मात्" ॥

अत्र कान्ताकेशपाशादेर्मयूरकलापादिभिरभेदेनाध्य-

---

सिद्धत्व इत्यस्य व्यावृत्तिमाह तस्य चेति अध्यवसायस्य चेत्यर्थः । निर्देशात् विषयिकरणात् साध्यत्वं वक्तापामाण्यत्वम् । प्रतीतिरिति विषयिण इत्यन्वयः । ननु शब्देनानुपादानं निगरणम् । एवं सत्युक्तप्रस्तुतायामुत्प्रेक्षायामतिशयोक्तौ चोक्तविषयायां कथं लक्षणगमनमत आह निगरणञ्चेति अधःकरणमात्रेण विच्छित्तिविशेषं प्रत्यकिञ्चित्करत्वेनापकर्षमात्रेण न तु शब्दानुपादानेनापि । भेद इति भेदे सत्यप्यभेदप्रतिपत्तिरित्यर्थः । एवमग्रेऽपि । पौर्वापर्य्यात्ययः पौर्वापर्य्यविपर्य्यासः स च पूर्वोत्पन्ने परोत्पन्नत्वारोपः परोत्पन्ने पूर्वोत्पन्नत्वारोपः इत्युभयस्वरूपः एकप्रकारः क्रमोत्पन्ने च समकालोत्पन्नत्वारोपः इति द्वितीयः । केशपाशादेरित्यादिपदेन भालनेत्रनासाधरग्रहणम् । साद्दश्य-

वसायः। यथा वा। "विश्लेषदुःखादिव बद्धमौनम्" अत्र चेतनगतं मौनित्वमन्यदचेतनगतं चान्यदिति द्वयोर्भेदेऽप्यभेदः। एवम्।

"सहाधरदलेनास्या यौवने रागभाक् प्रियः"॥

अत्राधरस्य रागो लौहित्यं प्रियस्य रागः प्रेम द्वयोरभेदः। (घ)

अभेदे भेदो यथा।

"अन्यदेवाङ्गलावण्यमन्याः सौरभसम्पदः।
तस्याः पद्मपलाशाक्ष्याः सरसत्वमलौकिकम्"॥

सम्बन्धेऽसम्बन्धो यथा।

"अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः।

---

निबन्धनाभेदारोपरूपातिशयोक्तिमुदाहृत्य एकशब्दप्रतिपाद्यत्वनिबन्धनाभेदारोपरूपामुदाहरति यथा वेति अत्र युगपद्वृत्तिद्वयस्य स्वार्थोपस्थापकत्वाङ्गीकारेण शक्यलक्ष्ययोरेकदैवैकशब्दोपस्थाप्यत्वमित्यभिप्रायेणाह अत्रेति चेतनगतं मौनित्वं वचनाभावरूपं अचेतनगतञ्च ध्वन्यभावरूपम्। आद्ये शक्तिः द्वितीये लक्षणा। ताभ्यामेकदैव उभयमुपस्थाप्यते तथैव एकशब्दप्रतिपाद्यत्वनिबन्धनाभेदारोपरूपामतिशयोक्तिमुदाहरति एवमिति। अत्र द्वयोरर्थैकत्वनिबन्धनकार्य्यसाधनत्वरूपातिशयोक्तिरवधेया।

(घ) अन्यदेवेति सरसत्वं रसयोद्भूतम्। अस्या इति सर्गविधौ सृष्टिकर्मणि। चन्द्रः प्रजापतिरभूत् नु वितर्कें। चन्द्रस्य कान्तिमयत्वात् कान्तिप्रदत्वं सम्भाव्योक्तम्। मदन इति प्रजापतिरभूदित्यन्वयः। अत्र हेतुः शृङ्गारेति। पुष्पाकरश्चैत्रः अत्र सौरभ्यसौकुमार्य्योत्पादत्वं हेतु-

वेदाभ्यासजड़ः कथं नु विषयव्यावृत्तकौतूहलो
निर्म्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः" ॥

अत्र पुराणप्रजापतिनिर्म्माणसम्बन्धेऽप्यसम्बन्धः। (अ)

असम्बन्धे सम्बन्धो यथा।

"यदि स्यान्मण्डले सक्तमिन्दोरिन्दीवरद्वयम्।
तदोपमीयते तस्या वदनं चारुलोचनम्" ॥

अत्र यद्यर्थबलादाहृतेन सम्बन्धेन सम्भावनया सम्बन्धः।

कार्य्यकारणयोः पौर्व्वापर्य्यविपर्य्ययश्च द्विधा भवति। कारणात्प्रथमं कार्य्यस्य भावे द्वयोः समकालत्वेन च। क्रमेण यथा।

"प्रागेव हरिणाक्षीणां चित्तमुत्कलिकाकुलम्।
पश्चादुद्भिन्नवकुलरसालमुकुलश्रियः" ॥

---

दौर्ष्यः। अस्य प्रसिद्धत्वात् न निर्हेतुकत्वदोषः। यद्वा शृङ्गारैकरस इति चैतस्यापि विशेषणम्। ननु विधिरेव कस्मादस्या निर्माता न इत्यत आह वेदेति वेदस्याभ्यासेन परमतात्पर्य्यपर्य्यालोचनेन जड़ो विषयोपभोगानचतुरः अतएव विषयव्यावृत्तकौतूहलः। पुराण इति प्रजापतिरिति सम्बन्धः मुनिर्मननशीलः। एतेन सृष्टिकर्मणि चित्तैकाग्रत्वं नास्तीति सूचितम्। तद्विनैतादृशरूपसृष्टिर्न भवतीति भावः। इदं काव्यप्रकाशे शुद्धसन्देहोदाहरणत्वेनोपन्यस्तम्। तन्मते विधेर्निर्मातृत्वव्यावृत्तिरपि संशयितैवेति न निश्चयान्तत्वमस्य।

(अ) यदि स्यादिति इयमङ्गतोपमेति दण्डी। नन्विन्दीवरद्वयस्येन्दुमण्डले व्यतिरेकप्रतीतिरेव जायते कथं सम्बन्धाध्यवसाय इत्यत आह यद्यर्थेति यदर्थबलात् यद्यर्थसामर्थ्यात् आहृतेन कल्पितेन सम्भवेन पदार्थेन सम्भावनया अध्यवसायेन सम्बन्धो इत्यास

"सममेव समाक्रान्तं द्वयं द्विरदगामिना ।
तेन सिंहासनं पित्र्यं मण्डलञ्च महीक्षिताम्" ॥

इह केचिदाहुः । "केशपाशादिगतो लौकिकोऽतिशयोऽलौकिकत्वेनाध्यवसीयते, केशपाशादीनां कलापादिभिरध्यवसायेऽन्याङ्गीक्रियते" "प्रागेव हरिणाक्षीणामित्यत्र" वकुलादिश्रीणां प्रथमभावितापि पश्चाद्भावित्वेनाध्यवसिता, अतएवात्रापि इवशब्दप्रयोगे उत्प्रेक्षा । (ष)

---

इति शेषः । वस्त्वर्थप्रयोग एवायं प्रकारः सम्भवति आहार्य्य एव सम्बन्धाध्यवसाय इति भावः । अतएवोक्तं काव्यप्रकाशे यद्यर्थोक्तौ च कल्पनमिति । द्वयोः कार्य्यकारणयोः समकालत्वे समकालोत्पन्नत्वे । प्रागेवेति उत्कलिकाकुलं उत्कण्ठाव्याप्तं जातं उद्भिन्नानां प्रफुल्लानां वकुलानामाम्रमुकुलानाञ्च श्रियो जाता इत्यर्थः । सममेव एकदैव समाक्रान्तमारूढं वशीकृतञ्च पित्र्यं पितुरागतम् । अनयोः कारणस्यात्यन्तशीघ्रकारित्वं व्यज्यते । केचित्तु सममेवेत्यादिद्वितीयप्रकारो धुनोति चासिं तनुते च कीर्त्तिमितिवत् समुच्चयालङ्कारस्यैव विषय इति वदन्ति । तन्न । विरूपशब्दाभ्यामेव क्रिययोरुपादाने हि समुच्चयविषयस्वीकारात् । कलापादिभिरध्यवसाये विवक्षिते इति शेषः । अव्याप्तिरिति अन्यदेवेत्यत्र लावण्यान्तरस्य भेदसत्त्वेनाध्यवसायरूपत्वाभावादिति भावः । एवमन्यत्रापि यथायथं ज्ञेयम् । अनन्यदिति अतिशयप्रतीतये तद्व्यक्तेरेव भेदस्तत्राध्यवसीयत इति भावः । तथाहीति निरुक्ताध्यवसायास्वीकारेऽनुभवसिद्धोत्प्रेक्षा न स्यादिति भावः । वकुलादिश्रीणामिति एवमुत्कलिकायाः पश्चाद्भावितापि पूर्वभावित्वेनाध्यवसितेति बोध्यम् । एवमिति उक्तदिशा । अन्यत्र तृतीयचतुर्थप्रकारयोरव्याप्त्युद्धारो बोद्धव्य इत्यर्थः । तथाहि तादृशरूपस्य निर्माता विधिरनिर्मातृत्वेन इन्दुमण्डलासक्तमिन्दीवरद्वयमिन्दु,मण्डलसक्तत्वेनाध्यवसीयते इति भावः ।

एवमन्यत्र।

**पदार्थानां प्रस्तुतानामन्येषां वा यदा भवेत्।**
**एकधर्म्माभिसम्बन्धः स्यात्तदा तुल्ययोगिता॥**

अन्येषामप्रस्तुतानां धर्म्मो गुणक्रियारूपः। उदाहरणम्

"अनुलेपनानि कुसुमान्यबलाः कृतमन्यवः पतिषु दीपदशाः।
समयेन तेन सुचिरं शयितप्रतिबोधितस्मरमबोधिषत"॥

अत्र सन्ध्यावर्णनस्य प्रस्तुतत्वात् प्रस्तुतानामनुलेपनादीनामेकबोधनक्रियाभिसम्बन्धः।

"त्वदङ्गमार्दवं द्रष्टुः कस्य चित्ते न भासते।
मालतीशशभृल्लेखा कदलीनां कठोरता"॥

इत्यत्र मालत्यादीनामप्रस्तुतानां कठोरतारूपैकगुणसम्बन्धः। एवम्।

"दानं वित्तादृतं वाचः कीर्त्तिधर्म्मौ तथायुषः।
परोपकरणं कायादसारात् सारमाहरेत्"॥

अत्र दानादीनां कर्म्मभूतानां साररूपैकगुणसम्बन्ध एकाहरणक्रियासम्बन्धः। (स)

---

(स) तुल्ययोगितालङ्कारमाह पदार्थानामिति। अनुलेपनानीति चन्दनद्रवाणीत्यर्थः। कुसुमानि शुक्लपुष्पाणि तेन तमस्विना समयेन पतिषु कृतमन्यवोऽबलाः सुचिरं शयितप्रतिबोधितस्मरं यथास्यात्तथा। अनुलेपनादीन्यबोधिषत बोधिता इत्यर्थः। तमस्यनुलेपनादीनां शुभ्रस्फूर्त्तिरस्ति ततश्च स्मरोद्बोधो जायते मृगमदादीनां तमोयस्ततया स्फूर्त्तिर्न सम्भवतीति भावः। अत्रेति प्रस्तुते तमसि स्फुरद्रूपत्वात् अनुलेपनादीनामपि प्रस्तुतत्वमित्यभिप्रायः। तदङ्गमिति अत्र वर्ण्य-

**अप्रस्तुतप्रस्तुतयोर्दीपकन्तु निगद्यते ।**
**अथ कारकमेकं स्यादनेकासु क्रियासु चेत् ॥**

क्रमेणोदाहरणम् ।

"बलावलेपादधुनापि पूर्ववत्
प्रबाध्यते तेन जगज्जिगीषुणा ।
सती च योषित् प्रकृतिश्च निश्चला
पुमांसमभ्येति भवान्तरेष्वपि" ॥

अत्र प्रस्तुताया निश्चलायाः प्रकृतेरप्रस्तुतायाश्च सत्या योषित एकानुगमनक्रियासम्बन्धः ।

"दूरं समागतवति त्वयि जीवनाथे
भिन्ना मनोभवशरेण तपस्विनी सा ।
उत्तिष्ठति स्वपिति वासगृहं त्वदीय-
मायाति याति हसति श्वसिति क्षणेन" ॥

इदं मम । अत्रैकस्या नायिकाया उत्थानाद्यनेकक्रियासम्बन्धः । अत्र च गुणक्रिययोरादिमध्यावसान सद्भावेन

---

नीयतया नायिका प्रस्तुता मालत्यादीनान्तूपमानत्वेनाप्रस्तुतत्वम् । गुण-क्रियोभयाभिसम्बन्धतुल्ययोगितामुदाहरति दानमिति ।

(ह) दीपकालङ्कारमाह अप्रस्तुतेति । ननु कमलमिव मुखं मनोज्ञ-मित्यादावतिव्याप्तिरिति चेन्न । साम्यवाचकपदाभावे सतीत्यस्य विव-क्षणीयत्वात् । एवं वैधर्म्योक्त्यभावे सतीत्यपि बोध्यम् । तेन "त्वं समुद्रश्च दुर्वारौ महासत्त्वौ सतेजसौ । अयन्तु युवयोर्भेदः स जडात्मा पटुर्भवा-नित्यादि" व्यतिरेकालङ्कारे नातिव्याप्तिः । प्रकारान्तरेण दीपकमाह अथेति अथवेत्यर्थः । अनेकासु क्रियास्वेकं कारकं यदि सम्बद्धं स्यात्

त्रैविध्यं न लक्षितम्। तथाविधवैचित्र्यस्य सर्वत्रापि सहस्रधा सम्भवात्। (ह)

**प्रतिवस्तूपमा सा स्याद्वाक्ययोर्गम्यसाम्ययोः।**
**एकोऽपि धर्मः सामान्यो यत्र निर्दिश्यते पृथक्॥**

यथा।

"धन्यासि वैदर्भि! गुणैरुदारै-
र्यया समाकृष्यत नैषधोऽपि।
इतः स्तुतिः का खलु चन्द्रिकाया
यदब्धिमप्युत्तरलीकरोति"॥

अत्र समाकर्षणमुत्तरलीकरणञ्च क्रिया एकैव पौनरुक्त्यनिरासाय भिन्नवाचकतया निर्दिष्टा। इयं मालयापि दृश्यते यथा।

---

तदापि दीपकं स्यादित्यर्थः। बलावलेपात् सामर्थ्यगर्वात् अधुनापि अस्मिन् जन्मन्यपि पूर्ववत् पूर्वजन्मनीव तेन शिशुपालेन भवान्तरेषु जन्मान्तरेषु। द्वितीयं दीपकमुदाहरति दूरमिति।

(ह) प्रतिवस्तूपमालङ्कारमाह प्रतीति। वाक्ययोर्वाक्यार्थयोर्गम्यसाम्ययोः प्रतीयमानोपमानोपमेयभावयोः। तेन पद्मं मनोज्ञं रुचिरः शशाङ्क इत्यादौ नातिव्याप्तिः। तत्र वाक्यार्थयोरुपमानोपमेयभावप्रत्ययाभावात्। प्रकाशते मुखं तस्याश्चन्द्रमा दीप्यते यथेत्याद्युपमावारणाय गम्येति। न चात्र प्रागुक्तरीत्यैकवाक्यत्वमेवेति वाच्यम्। अत्र गम्य इत्युपादानादेव तत्र तथा कल्पनात्। अन्यथा भिन्नवाक्ये उपमाप्रसक्त्यभावेन प्रतिवस्तूपमैव न स्यात्। दृष्टान्तवारणायाह एकोऽपीति। "एकरूपः क्वचित् क्वापि भिन्नः साधारणो गुण" इत्युक्तदिशा

"विमल एव रविर्विशदः शशी
प्रकृतिशोभन एव हि दर्पणः ।
शिवगिरिः शिवहाससहोदरः
सहजसुन्दर एव हि सज्जनः" ॥

अत्र विमलविशदादिरर्थत एक एव । वैधर्म्म्येण यथा ।

"चकोर्य्य एव चतुराश्चन्द्रिकापानकर्म्मणि ।
विनावन्तीर्न निपुणाः सुदृशो रतनर्म्मणि" ॥ (क)

**दृष्टान्तस्तु सधर्मस्य वस्तुनः प्रतिबिम्बनम् ।**

सधर्म्मस्येति प्रतिवस्तूपमाव्यवच्छेदः । अयमपि साधर्म्म्यवैधर्म्म्याभ्यां द्विधा । क्रमेणोदाहरणम् ।

"अविदितगुणापि सत्कविभणितिः
कर्णेषु वमति मधुरधाराम् ।
अनधिगतपरिमलापि हि
हरति दृशं मालतीमाला" ॥

---

साम्यस्य विभिन्नसामान्यधर्मस्य व्यवच्छेदः पृथग्विभिन्नशब्दाभ्यां तेन दीपकस्य व्यवच्छेदः । धन्यासीति दमयन्तीं प्रति हंसस्योक्तिरियम् । पौनरुक्त्येति कथितपदत्वेनेत्यर्थः । भिन्नवाचकतया विभिन्नवाचकत्वेन । एवं प्रतिवस्तूपमा । विमल इति शिवगिरिः कैलासः शिवस्य हासस्य च सहोदरस्तुल्यः । नन्वत्र प्रतिवाक्यं धर्मभेद एवेति कथं प्रतिवस्तूपमेत्यत आह अत्रेति । अर्थतस्तात्पर्य्यात् विमलादिपदानां विभिन्नार्थवाचकत्वेऽपि पर्य्यवसाने तात्पर्य्यबलाद् सत्यरूपैकार्थबोधकत्वमिति भावः । अवन्तीरवन्तिदेशोत्पन्ना नारीः । विनाशब्दोऽत्र भिन्नार्थः ।

(क) दृष्टान्तालङ्कारमाह दृष्टान्त इति । सधर्मस्य सदृशस्य वस्तुनः सामान्यधर्मस्य प्रतिबिम्बनं प्रणिधानगम्यसाम्यत्वम् । एतावापि वाक्ययो-

"त्वयि दृष्टे कुरङ्गाक्ष्याः स्रंसते मदनव्यथा।
दृष्टानुदयभाजीन्दौ ग्लानिः कुमुदसंहतेः"॥

"वसन्तलेखैकनिबद्धभावं परासु कान्तासु मनः कुतो नः।
प्रफुल्लमल्लीमधलम्पटः किं मधुव्रतः काङ्क्षति वल्लिमन्याम्"॥

इदं पद्यं मम। अत्र "मनः कुतो न" इत्यस्य "काङ्क्षति वल्लिमन्या" मित्यस्य चैकरूपतयैव पर्य्यवसानात् प्रतिवस्तूपमैव। इह तु कर्णे मधुधारावमनस्य नेत्रहरस्य च साम्यमेव न त्वैकरूप्यम्। अथ समर्थ्यसमर्थकवाक्ययोः सामान्यविशेषभावोऽर्थान्तरन्यासः, प्रतिवस्तूपमादृष्टान्तयोस्तु न तथेति भेदः। (क)

**सम्भवन् वस्तुसम्बन्धोऽसम्भवन् वापि कुत्रचित्।**
**यत्र विम्बानुविम्बत्वं बोधयेत् सा निदर्शना॥**

अत्र सम्भवद्वस्तुसम्बन्धनिदर्शना यथा।

---

रित्यनुवर्त्तते। तेन भङ्गापवर्जितैरित्यत्र नातिव्याप्तिः। एकवाक्यत्वात्। अयमपि दृष्टान्तोऽपि। स्रंसते नश्यति ग्लानिः सङ्कोचः। मदनव्यथाग्लान्योः सन्तोषविरोधित्वात् साम्यमनयोः सत्त्वासत्त्वाभ्यां वैधर्म्यम्। इह त्विति प्रीतिजनन एव पर्य्यवसानादैकरूप्येऽपि प्रीतेर्वैलक्षण्याद्वैलक्षण्यमिति भावः। अत्रेति प्रतिवस्तूपमादृष्टान्तयोरित्यर्थः। समर्थ्येति समर्थ्यसमर्थकयोर्वाक्ययोरित्यर्थः। न तथा न सामान्यविशेषभावो न वा समर्थ्यसमर्थकभावः।

(ख) निदर्शनालङ्कारमाह सम्भवन्निति। असम्भवन् बाधितः विम्बानुविम्बत्वं उपमानोपमेयभावं बोधयेद्गमयेत् इति शेषः। कोऽत्रेति सुधा

"कोऽत्र भूमिवलये जनान्मुधा
तापयन् सुचिरमेति सम्पदम् ।
वेदयन्निति दिनेन भानुमान्
आससाद चरमाचलं ततः" ॥

अत्र रवेरोद्दृशार्थवेदनक्रियायां कर्तृत्वेनान्वयः सम्भवत्येव ईदृशार्थज्ञापनसमर्थचरमाचलप्राप्तिरूपधर्म्मवत्त्वात्, स च रवेरस्ताचलगमनस्य परतापिनां विपत्प्राप्तेश्च विम्बप्रतिविम्बभावं बोधयति। असम्भववस्तुसम्बन्धनिदर्शनात्वेकवाक्यानेकवाक्यगतत्वेन द्विविधा। तत्रैकवाक्यगा

यथा ।

"कलयति कुवलयमालाललितं कुटिलः कटाक्षविक्षेपः ।
अधरः किसलयलीलामाननमस्याः कलानिधेर्विलासम्" ॥

अत्रान्यस्य धर्म्मं कथमन्यो वहत्विति कटाक्षविक्षेपादीनां कुवलयमालादिगतललितादीनां कलनमसम्भवत् तल्ललितादिसदृशं ललितादिकमवगमयत् कटाक्षविक्षेपादेः कुवलयमालादेश्च विम्बप्रतिविम्बभावं बोधयति। यथा वा।

"प्रयाणे तव राजेन्द्र ! मुक्ता वैरिमृगीदृशाम् ।
राजहंसगतिः पद्भ्यामाननेन शशिद्युतिः" ॥

---

निष्प्रयोजनं ततो दिनान्तरे। ईदृशार्थेति पूर्वार्द्धोक्तार्थः। स च वेदनक्रियान्वयः। विम्बानुविम्बभावं सादृश्यं तच्चादर्शनप्रयोजकत्वेनेति बोध्यम्। कलयतीति अत्र धर्मधर्मिणोरुपमाकल्पनम्। धर्मयोरुपमा-

अत्र पादाभ्यामसम्बद्धराजहंसगतेस्त्यागोऽनुपपन्न इति तयोस्तत्सम्बन्धः कल्प्यते, स चासम्भवन् राजहंसगतिमिव गतिं बोधयति। अनेकवाक्यगा यथा। (ग)

"इदं किलाव्याजमनोहरं वपु-
स्तपःक्षमं साधयितुं य इच्छति।
ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति"॥

अत्र यत्तच्छब्दनिर्दिष्टवाक्यार्थयोरभेदेनान्वयोऽनुपपद्यमानस्तादृशवपुषस्तपःक्षमत्वसाधनेच्छा नीलोत्पलपत्रधारया शमीलताच्छेदनेच्छेवेति बिम्बप्रतिबिम्बभावे पर्य्यवस्यति। यथा वा।

"जन्मेदं बन्ध्यतां नीतं भवभोगोपलिप्सया।
काचमूल्येन विक्रीतो हन्त चिन्तामणिर्मया"॥

अत्र भवभोगलोभेन जन्मनो व्यर्थतानयनं काचमूल्येन चिन्तामणिविक्रय इवेति पर्य्यवसानम्। एवम्।

"क्व सूर्य्यप्रभवो वंशः क्व चाल्पविषया मतिः।
तितीर्षुर्दुस्तरं मोहादुडुपेनास्मि सागरम्"।

---

कल्पने निदर्शनालङ्कारमुदाहरति यथा वेति। सक्ता व्यक्ता तयोः पदयोः तत्सम्बन्धः राजहंसगतिसम्बन्धः।

(ग) इदमिति शकुन्तलामालोक्य दुष्मन्तस्योक्तिरियम्। अव्याजमनोहरं स्वभावसुन्दरं अर्थादनेन तपःक्षमं साधयितुं य इच्छतीत्यर्थः। ऋषिः कण्वः व्यवस्यति इच्छति। जन्मेदमिति वीतरागस्योक्तिरियम्। बन्ध्यतां निष्फलताम्। एवमिति उडुपेन क्षुद्रनौकया।

अत्र सम्मत्या सूर्य्यवंशवर्णनमुडुपेन सागरतरणमिवेति पर्य्यवसानम् । इयं क्वचिदुपमेयवृत्तस्योपमानेऽसम्भवेऽपि भवति । यथा ।

"योऽनुभूतः कुरङ्गाक्ष्यास्तस्या मधुरिमाधरे ।
समास्वादि स मृद्वीकारसे रसविशारदैः" ॥

अत्र प्रकृतस्याधरस्य मधुरिमधर्म्मस्य द्राक्षारसेऽसम्भवात् पूर्व्ववत् साम्ये पर्य्यवसानम् । मालारूपापि यथा मम ।

"क्षिपसि शुकं वृषदंशकवदने
मृगमर्पयसि मृगादनवदने
वितरसि तुरगं महिषविषाणे
निदधच्चेतो भोगवितने" ॥ (ग)

इह बिम्बप्रतिबिम्बताक्षेपं विना वाक्यार्थापर्य्यवसानम् दृष्टान्ते तु पर्य्यवसितेन वाक्यार्थेन सामर्थ्याद्बिम्बप्रतिबिम्ब-

---

उपमेयवृत्तस्य उपमेयधर्मस्य मृद्वीकारसे द्राक्षाद्रवे पूर्व्ववत् कल्पयतीत्याद्युक्तोदाहरणवत् । तत्रोपमानधर्मस्य उपमेये बाधात् उपमाकल्पनमिति विशेषः । एवं "मुखं ते चन्द्रमस्यद्रिं पङ्कजं द्वेष्टि लोचनम्" । अत्र स्पर्द्धाद्वेषयोश्चेतनधर्मत्वात् मुखलोचनयोरसम्भवादुपमायां पर्य्यवसानम् । वृषदंशको मार्जारः मृगादनस्तरक्षुः वितरसि क्षिपसि । अत्र वैषयिकसुखानुभवस्थाने चेतोनिधानं वृषदंशकवदनादौ शुकाद्यर्पणमिवेत्युपमायां पर्य्यवसानम् ।

(घ) दृष्टान्तादेर्निदर्शनाभेदमुपपादयति इहेति निदर्शनायामित्यर्थः । ननु कोऽत्र भूमिवलये इत्यादौ जनतापकरः सूर्य्योऽप्यस्तं

ताप्रत्यायनम्। नापीयमर्थापत्तिः, तत्र "हारोऽयं हरिणाक्षीणामित्यादौ" सादृश्यपर्यवसानाभावात्।

**आधिक्यमुपमेयस्योपमानान्न्यूनताथवा।**
**व्यतिरेक एक उक्ते हेतौ नोक्ते स च त्रिधा॥**
**चतुर्विधोऽपि साम्यस्य बोधनाच्छब्दतोऽर्थतः।**
**आक्षेपाच्च द्वादशधा श्लेषेऽपीति त्रिरष्टधा।**
**प्रत्येकं स्यान्मिलित्वाष्टचत्वारिंशद्विधः पुनः॥**

उपमेयस्योपमानादाधिक्ये हेतुरुपमेयगतमुत्कर्षकारणमुपमानगतं निकर्षकारणञ्च। तयोर्द्वयोरप्युक्तावेकः प्रत्येकं समुदायेन वानुक्तौ त्रिविध इति चतुर्विधेऽप्यस्मिन्नुपमानोपमेयत्व निवेदनं शब्दे नार्थेनाक्षेपेण चेति द्वादशप्रकारोऽपि श्लेषेऽपिशब्दादश्लेषेऽपि चतुर्विंशतिप्रकारः। उपमानान्न्यूनतायामप्यनयैव भङ्ग्या चतुर्विंशतिप्रकारतेति

---

याति किमुतान्य इति दण्डापूपन्यायादर्थान्तरप्रतीतिरस्तीति इयमर्थापत्तिरित्यत आह नापीयमिति। मुक्तानामिति मौक्तिकानां प्राप्तापवर्गाणाञ्चेत्यर्थः। सादृश्येति तथा सादृश्यपर्यवसानस्यैव निर्दर्शनैव विशेषत्वादन्यत्र त्वर्थापत्तिरिति भावः। व्यतिरेकालङ्कारमाह आधिक्यमिति। व्यतिरिच्यते उपमानवैलक्षण्येनोपलभ्यते उपमेयमनेनेति व्यतिरेकपदव्युत्पत्तिरवधेया। आधिक्यपक्षं विकल्पयति एक इति नोक्ते इति। हेतावित्यनुषङ्गः। शब्दत इवादिशब्दात् अर्थतस्तुल्यादिपदार्थानुसन्धानात्। आक्षेपात् व्यञ्जनातः। श्लेषेऽपीत्यादिना श्लेषाभावसमुच्चयः। त्रिरष्टधा चतुर्विंशतिप्रकारा। निकर्षोऽपकर्षः।

मिलित्वाष्टचत्वारिंशत्प्रकारो व्यतिरेकः। उदाहरणम्।

"अकलङ्कं मुखं तस्या न कलङ्की विधुर्यथा"।

अत्रोपमेयगतमकलङ्कत्वमुपमानगतञ्च कलङ्कित्वं हेतुद्वयमप्युक्तम्। यथा शब्दप्रतिपादनाच्च शाब्दमौपम्यम्। अत्रैव "न कलङ्कि विधूपममिति" पाठे आर्थम्। (घ)

"जयतीन्दुं कलङ्किनमिति" पाठे त्विवादितुल्यादिपदविरहादाक्षिप्तम्। अत्रैवाकलङ्कपदत्यागे उपमेयगतोत्कर्षकारणानुक्तिः। कलङ्किपदत्यागे चोपमानगतनिकर्षकारणानुक्तिः द्वयोरनुक्तौ द्वयोरनुक्तिः। श्लेषे यथा।

"अतिगाढगुणायाश्च नाब्जवद्भङ्गुरा गुणाः"।

अत्रैवार्थे वतिरिति शाब्दमौपम्यम् उत्कर्षनिकर्षकारणयोर्द्वयोरप्युक्तिः। गुणशब्दः श्लिष्टः। अन्ये भेदाः पूर्ववदूह्याः। एतानि चोपमेयस्योपमानादाधिक्ये उदाहरणानि। न्यूनत्वे दिङ्मात्रम्। यथा।

---

प्रत्येकमिति उत्कर्षकारणानुक्तावपर इत्यर्थः। अनयैव भङ्ग्येति निरुक्तक्रमेणेत्यर्थः। तथाहि उपमेयस्य उपमानात् न्यूनतायां हेतुरुपमेयगतं निकर्षकारणं उपमानगतोत्कर्षकारणञ्च तयोर्द्वयोरप्युक्तावेकः प्रत्येकं समुदायेन वानुक्तौ त्रिविध इत्याद्युक्तप्रकारेण चतुर्विंशति- त्रिवत्वं बोध्यम्।

(ङ) जयतीति जयः पराभवः स चापकृष्टत्वेन ज्ञानं तस्य च मुखे ऽसम्भवात् सादृश्ये पर्य्यवसानमित्याक्षेप इति भावः। द्वयोरिति अकलङ्किकलङ्किपदयोरित्यर्थः। द्वयोरनुक्तिः उत्कर्षनिकर्षकारणयोरनुक्तिः। मुखे चन्द्रसादृश्यनिषेधेनैवाधिक्यं प्रतीयते। अतिगाढेति अतिगाढ-

"क्षीणः क्षीणोऽपि शशी
भूयो भूयोऽभिवर्द्धते नित्यम्।
विरम प्रसीद सुन्दरि!
यौवनमनिवर्त्ति यातं तु"॥

अत्रोपमेयभूतयौवनास्थैर्यस्याधिक्यं तेनात्र "उपमानादुपमेयस्याधिक्ये विपर्य्यये वा व्यतिरेक इति" केषाञ्चिल्लक्षणे "विपर्य्यये वेति पदमनर्थकमिति" यत् केचिदाहुः तन्न विचारसहम्। तथा ह्यत्राधिकन्यूनत्वे सत्त्वासत्त्वे एव विवक्षिते। अत्र च चन्द्रापेक्षया यौवनस्यासत्त्वं स्फुटमेव। अस्तु वात्रोदाहरणे यथा कथञ्चिद्गतिः। (ङ)

"हनूमदाद्यैर्यशसा मया पुन-
र्द्विषां हसैर्दूतपथः सितीकृतः"॥

गुणशालित्वमुपमेयगतोत्कर्षकारणं भङ्गुरगुणभागित्वमुपमानापकर्षकारणम्। पूर्ववदिति तस्यानाञ्जवद्भङ्गुरा गुणा इति अतिगाढ़गुणायाश्च नाञ्जवद्गुणा इति तस्यानाञ्जवद्गुणा इति प्रकारत्रयमूह्यम्। क्षीणः क्षीण इति। मानिनीं प्रत्युक्तिरियम्। विरमेति मानादिति शेषः। यातं यौवनन्तु अनिवर्त्ति यौवनं पुनर्न वर्द्धत इति तात्पर्य्यार्थः। अत्र पुनर्वर्द्धनमुपमानचन्द्रोत्कर्षकारणम्। अपुनर्वर्द्धनमुपमेययौवननिकर्षकारणम्। उपमानान्न्यूनतायां व्यतिरेकमस्वीकुर्वतां मतं दूषयति अत्रोपमेयेति चन्द्रास्थैर्य्यमत्रोपमानं बोध्यम्। तेन क्षीणः क्षीण इत्यादौ आधिक्यव्यतिरेकेणैव संग्रहसम्भवेन विपर्य्यये वा न्यूनतायां वा। तथा हीति सत्त्वासत्त्वे उत्कृष्टत्वापकृष्टत्वे। ननु यौवनास्थैर्य्यस्याधिक्यस्य निवेदनं प्रकृतस्य मानभङ्गस्य उपकारकमिति तस्यैव वैचित्र्याधायकत्वं न तु यौवनासत्त्वस्य इत्यत आह अस्तु वेति।

(ङ) हनूमदाद्यैरिति दमयन्तीं प्रति दूतत्वेन इन्द्रादिभिः प्रेषि-

इत्यादिषु का गतिरिति सुष्ठूक्तं "न्यूनताथवेति"।

**सहार्थस्य बलादेकं यत्र स्याद्वाचकं द्वयोः।**
**सा सहोक्तिर्मूलभूतातिशयोक्तिर्यदा भवेत्॥**

अतिशयोक्तिरप्यत्राभेदाध्यवसायमूला कार्य्यकारणपौर्व्वापर्य्यविपर्य्ययरूपा च। अभेदाध्यवसायमूलापि श्लेषभित्तिका अन्यथा च। क्रमेणोदाहरणम्।

"सहाधरदलेनास्या यौवने रागभाक् प्रियः"।

अत्र रागपदे श्लेषः। (च)

---

तस्य नलस्य तत्प्रयोजनासिद्धौ विषादोक्तिरियम्। अत्र प्रभुप्रयोजननिष्पादकत्वेन हनूमदादेरुपमानस्योत्कृष्टत्वं तद्व्यतिरेकेणोपमेयस्य नलस्यापकृष्टत्वञ्च प्रतीयते। अत्र द्वयोरुपमानोपमेयभावविवक्षणेऽपि उपमानस्यैवाधिक्यं न तूपमेयस्येति। सहोक्त्यलङ्कारमाह सहार्थस्येति। सहार्थस्य साकं सार्द्धं समं सह: प्रभृतिः। एकं वस्तुवाचकं अन्वयि अभेदाध्यवसायमूला अभेदाध्यवसायरूपा श्लेषभित्तिका। श्लेषप्रतिपन्नभेदमूलाः अन्यथा अश्लेषभित्तिका सम्बन्धिभेदादवगतभेदमूलेति यावत्। सहाधरेति सहशब्दस्य रागभजनमर्थः तृतीयायाः सम्बन्धित्वं तस्य च सहार्थेऽन्वयः। सहशब्दस्याव्ययत्वात् तदर्थस्य द्वारीभूतविभक्त्यर्थं विनापि समकालीनत्वसम्बन्धेन रागभाक् सहार्थैकदेशे रागभजनेनान्वयः। यौवन इति सति सप्तम्याः समकालीनत्वमर्थः अस्यापि रागभजनेनान्वयः। अस्या इत्यस्य तात्पर्य्यवशात् अधरदलेन प्रियेन चान्वयः। तथाचास्याः प्रियः इदमधरदलसम्बन्धियौवनकालीनरागाश्रय इत्यन्वयबोधः। रागः प्रेम लौहित्यञ्च तयोरभेदारोपः। अन्यथा एकत्वाभावादेकस्योभयान्वयासम्भवेन लक्षणमसङ्गतं स्यात्

"सह कुमुदकदम्बैः काममुल्लासयन्तः
सह घनतिमिरौघैर्धैर्य्यमुत्सारयन्तः।
सह सरसिजषण्डैः स्वान्तमामीलयन्तः
प्रतिदिशममृतांशोरंशवः सञ्चरन्ति॥

इदं मम। अत्रोल्लासादीनां सम्बन्धिभेदादेव भेदो न तु श्लिष्टतया।

"सममेव नराधिपेन सा गुरुसम्मोहविलुप्तचेतना।
अगमत्सह तैलविन्दुना तनुदीपार्च्चिरिव चितेस्तलम्"॥

इयञ्च मालयापि सम्भवति। तथोदाहृते "सह कुमुदकदम्बैरित्यादौ"। (क)

---

(क) सह कुमुदेति कुमुदकदम्बस्योल्लासो विकाशः कामस्योल्लासो वर्द्धनं तयोः सादृश्येनैवाभेदारोपः। तेजः संसर्गाभावरूपस्य तिमिरस्योत्सारणं तद्देशे सम्बन्धाभावः धैर्य्यस्योत्सारणं विनाशः तयोः सादृश्येनैवाभेदारोपः। सरसिजषण्डानाममीलनं सङ्कोचः स्वान्तस्यामीलनं विषमान्तरादाकर्षणं तयोरपि सादृश्येनैवाभेदारोपः। एवञ्चात्र उल्लासादयः सहशब्दानामर्थाः कर्मत्वं तृतीयानामर्थः तस्य सहार्थेऽन्वयः। सहार्थस्य च समकालीनत्वसम्बन्धेन उल्लासयन्त इत्यादिपदार्थैकदेशे उल्लासादावन्वयः। तथा च कुमुदकदम्बादिकर्म-कोल्लासादिसमकालीनोल्लासादिकर्त्तारः चन्द्रांशव इत्यन्वयबोधः। अत्राभेदाध्यवसायमूलभूतं भेदमुपपादयति अत्रोल्लासादीनामिति मदुक्त-दिशा सम्बन्धिभेदाद्भेदो बोध्यः। कार्य्यकारणपौर्वापर्य्यविपर्य्ययरूपा-तिशयोक्तिमूलां सहोक्तिमुदाहरति सममेवेति एकदेवेत्यर्थः। नरा-धिपेन अजेन सा इन्दुमती। अत्राजस्य पतनमिन्दुमतीपतनजन्यमपि समकालीनत्वेनाध्यवसितम्। इयञ्च सहोक्तिश्च।

"लक्ष्मणेन समं रामः काननं गहनं ययौ" इत्यादौ चातिशयोक्तिमूलत्वाभावान्नायमलङ्कारः ।

**विनोक्तिर्यद्विनान्येन नसाध्वन्यदसाधु वा ।**

न असाधु अशोभनं न भवति । एवञ्च यद्यपि शोभनत्व एव पर्य्यवसानं तथाप्यशोभनत्वाभावमुखेन शोभनवचनस्यायमभिप्रायो यत्कस्यचिद्वर्णनीयस्याशोभनत्वं तत्परसन्निधिरेव दोषः । तस्य पुनः स्वभावतः शोभनत्वमेवेति । यथा ।

"विना जलदकालेन चन्द्रो निस्तन्द्रतां गतः ।
विना ग्रीष्मोष्मणा मञ्जुर्व्वनराजिरजायत" ॥

असाधु अशोभनम् । यथा ।

"अनुयान्त्या जनानीतं कान्तं साधु त्वया कृतम् ।
का दिनश्रीर्विनार्केण का निशा शशिना विना" ॥

---

( ज ) मूलभूतेत्यादिविवक्षायाः फलमाह लक्ष्मणेनेति । वस्तुतस्तु यत्र वैचित्र्यमनुभूयते तत्रैवास्यालङ्कारत्वमङ्गीकरणीयम् । अन्यथा सह मणिवलयैर्बाष्पधारागलन्ती इति काव्यप्रकाशकारदत्तोदाहरणमसङ्गतं स्यात् अत्र स्वस्थानाच्यवनरूपं गमनमेकमेव । न च गमनयोरेकजातीयत्वेऽपि व्यक्तिभेदाद्भेद इति वाच्यम् । लक्ष्मणेन समं रामः काननं गहनं ययावित्यादावपि तथाकल्पनस्य सम्भवात् व्यावृत्त्यभावेन तद्विलक्षणस्याकिञ्चित्करत्वात् । एवं वर्द्धते सहपान्थानां मूर्च्छया चूतमञ्जरीति दण्डिदत्तोदाहरणे तृतीयार्थो दृशित्वं मूर्च्छाष्टत्तिवृद्धिसमकालीनवृद्ध्याश्रयो चूतमञ्जरीत्यन्वयः विनोक्त्यलङ्कारमाह विनोक्तिरिति । यत् यदि । एकपदा-

"निरर्थकं जन्म गतं नलिन्या
यया न दृष्टं तुहिनांशुबिम्बम्।
उत्पत्तिरिन्दोरपि निष्फलैव
दृष्टा विनिद्रा नलिनी न येन"॥

अत्र परस्परविनोक्तिभङ्ग्या चमत्कारातिशयः। विना-शब्दप्रयोगाभावेऽपि विनार्थविवक्षया विनोक्तिरेवायम्। एवं सहोक्तिरपि सहशब्दप्रयोगाभावेऽपि सहार्थविवक्षया भवतीति बोद्धव्यम्। (ज)

**समासोक्तिः समैर्यत्र कार्य्यलिङ्गविशेषणैः।**
**व्यवहारसमारोपः प्रस्तुतेऽन्यस्य वस्तुनः॥**

---

र्थाशोभनत्वाभावादिप्रयोजकापरपदार्थव्यतिरेककथनं तदा विनोक्तिरि-त्यर्थः। यद्यपीति नासाध्वित्यस्येति शेषः। पर्य्यवसानं तात्पर्य्यम्। तथाच साधुत्वस्य साधुशब्देनैव प्रतिपादनमुचितमिति भावः। अशोभनत्वा-भावमुखेन अशोभनत्वाभावप्रतिपादनद्वारा तस्य परसन्निधिजात-दोषस्य वस्तुनः। पुनर्दोषविगमे सति स्वभावत एव न तु दोषविगम-रूपोपाधेः शोभनत्वमित्यन्वयः। दोषविगमेन यत्र शोभनत्वं भवति सामान्यविषय इति भावः। विनेति निस्तन्द्रतां निर्मलत्वम्। अत्र स्वतः सुन्दरयोश्चन्द्रवनराज्योर्मेघघीश्मसन्निधानरूपदोषविगमेन शोभ-नत्वं प्रतिभातीत्यर्थः। परजनातीतं मृतं काकुत्स्थिता विनिद्रा प्रफुल्ला। परस्परस्य दर्शनं विना परस्परजन्मनिरर्थकत्वमुखेनाशोभनत्व-मिति भङ्ग्येत्युक्तम्। एवं सहोक्तेरिति अतएव समभेव नराधिपेन सा इदमित्युदाहरणमुपपन्नम्।

(ज) समासोक्त्यलङ्कारमाह समासोक्तिरिति। समैः प्रस्तु-ताप्रस्तुतसाधारणैः। तत्र त्यय्यं य इत्यर्थे। लिङ्गं स्त्रीत्वादि

अत्र समेन कार्य्येण प्रस्तुतेऽप्रस्तुतव्यवहारसमारोपः। यथा।

"व्याधूय यद्वसनमम्बुजलोचनाया
वक्षोजयोः कनककुम्भविलासभाजोः।
आलिङ्गसि प्रसभमङ्गमशेषमस्या
धन्यस्त्वमेव मलयाचलगन्धवाह"!॥

---

व्यवह्रियते विशेषण प्रतीयतेऽनेनेति व्यवहारः अवस्थाभेदः। इह तु स्वावस्थासमारोपेणेत्यादि वक्ष्यमाणस्वरसात्। अत्र व्यवहारसमारोपे कृतप्रकृतविशेषाधानस्यानुभवसिद्धतया व्यवहारो अथवा तत्त्वमौपम्यं यत्प्रतीयते इति प्राचीनोक्तानुसारेण च व्यवहारसमारोपरूपैव समासोक्तिरनेनाङ्गीकृता। न तु "परोक्तिर्भेदकैः श्लिष्टैः समासोक्तिरिति" काव्यप्रकाशलक्षणानुसारेण प्रकृतवाचिना श्लिष्टविशेषणबलादप्रकृतव्यञ्जनरूपद्वितीयार्थोपमानत्वानङ्गीकारेणासङ्गति प्रसङ्गात्। अभिधामूलव्यञ्जनायां तल्लक्षणस्यातिव्याप्तेश्च। अन्यस्याप्रस्तुतस्य समासेन सकृदुच्चारणरूपसंक्षेपेण अवस्थाद्वयप्रतीतिः समासोक्तिरिति संज्ञाव्युत्पत्तिरवधेया। यद्वा समस्य कार्य्यादेरासेन उपन्यासेन उक्तिरप्रस्तुतावस्थाव्यञ्जनम्। व्याधूयेति अत्र नायिकायाः स्तनवसनाक्षेपपूर्वकालिङ्गनमेव कार्य्यं प्रकृतस्य वायोरप्रकृतस्य नायकस्य चेति समानम्। यदि पुनर्नायिकायास्तादृशालिङ्गनमप्राप्नुवतः कस्य चिदात्मनोऽधन्यत्वनिवेदनमेतत् स्यात् तदा वायोरप्रकृतत्वात् नेयं समासोक्तिः। किन्तु धन्याः खलु वने वाताः इत्यादिवक्ष्यमाणवत् वैधर्म्येणाप्रस्तुतप्रशंसैव। अहमधन्य इति प्रस्तुतस्य गम्यत्वात्। एवञ्च "नवा लता गन्धवहेन चुम्बिता करम्बिताङ्गी मकरन्दशीकरैः" रित्याद्युदाहरणमस्यावगन्तव्यम्। यत्र वायुर्वर्णनीयत्वेन प्रकृतस्तत्र चुम्बनरूपकार्य्यसाम्येन शृङ्गारित्वरूपनायकावस्थासमारोपश्चारुत्वकावहात।

अत्र गन्धवाहे हठकामुकव्यवहारसमारोपः। लिङ्ग-साम्येन यथा। (ञ)

"असमाप्तजिगीषस्य स्त्रीचिन्ता का मनस्विनः।
अनाक्रम्य जगत्कृत्स्नं नो सन्ध्यां भजते रविः" ॥

अत्र पुंस्त्रीलिङ्गमात्रेण रविसन्ध्ययोर्नायकनायिका-व्यवहारः। विशेषणसाम्यन्तु श्लिष्टतया साधारण्येनौपम्य-गर्भत्वेन च त्रिधा। तत्र श्लिष्टतया यथा मम।

"विकसितमुखीं रागासङ्गाद्गलत्तिमिरावृतिं
दिनकरकरस्पृष्टामैन्द्रीं निरीक्ष्य दिशं पुरः।
जरठलवलीपाण्डुच्छायो भृशं कलुषान्तरः
श्रयति हरितं हन्त! प्राचेतसीं तुहिनद्युतिः" ॥

अत्र मुखरागादिशब्दानां श्लिष्टता। अत्र हि "तिमि-रावृतिमिति" अत्र "तिमिरांशुकामिति" पाठे एक-देशस्य रूपणेऽपि समासोक्तिरेव न तु एकदेशविवर्त्ति रूप-

---

(ञ) असमाप्तजिगीषस्येति मनीषिणो नीतिवेदिनः। अत्र दृष्टान्त-त्वेनाप्रकृतयोरपि रविसन्ध्ययोः प्रकृताङ्गत्वेनैव प्रकृतत्वमवधेयम्। नचायं समासोक्तिमूलोऽर्थान्तरन्यास इति वाच्यम्। प्रथममप्रकृतार्थप्रतीतेर-सम्भवात् प्राथमिकप्रतीतिविषयस्यैव समर्थकत्वाङ्गीकारात्। आरोपित-स्त्रीपुंसभावयोः स्त्रीपुंसविशेषत्वाभावेन सामान्यसमर्थकत्वायोगाच्च। साधारण्येन वाच्यव्यङ्ग्यगतत्वेन। विकसितेति मुखमेकदेशोपक्रमश्च रागो रक्तिमा सुरतेच्छा च गलन्ती नश्यन्ती तिमिरावृतिर्यस्यास्ताम् पक्षे गलन्ती स्खलन्ती तिमिरमिवावृतिर्वसनं यस्यास्ताम्। पक्वलवलीफलस्येव पाण्डुश्छाया कान्तिर्यस्य कलुषान्तरः कलङ्कमलिनाभ्यन्तरः पक्षे

कम्। तत्र हि तिमिरांशुकयोरूप्यरूपकभावो द्वयोराव-रकत्वेन स्फुटसादृश्यतया परसाचिव्यमनपेक्ष्यापि स्वमात्र-विश्रान्त इति न समासोक्तिबुद्धिं व्यपहन्तुमीशः। यत्र तु रूप्यरूपकयोः सादृश्यमस्फुटं तत्रैकदेशान्तररूपणं विना तदसङ्गतं स्यादित्यशाब्दमप्येकदेशान्तररूपणमार्थमपेक्षत एवेति। तत्रैकदेशविवर्त्तिरूपकमेव यथा। (ञ)

"जस्स रणन्तउरए करे कुणन्तस्स मण्डलग्गलअं।
रससंमुहीवि सहसा परंमुही होइ रिउसेणा"॥

अत्र रणान्तःपुरयोः सादृश्यमस्फुटमेव। क्वचिच्च यत्र स्फुटसादृश्यानामपि बहूनां रूपणं शाब्दमेकदेशस्य चार्थं तत्रैकदेशविवर्त्ति रूपकमेव। रूपकप्रतीतेर्व्यापितया समा-सोक्तिप्रतीतिविरोधायकत्वात्। नन्वस्ति रणान्तःपुरयोरपि सुखसञ्चारतया स्फुटं सादृश्यमिति चेत्। सत्यमुक्तम्।

---

ईर्ष्याकषायितचित्तः। अत्र प्राच्यां वक्रोक्तीव्यवहारश्चन्द्रे नायकव्यव-हारः प्रतीयते। एकदेशविवर्त्तिरूपकेण सहासाविषयविभागं करोति अत्रहीति परस्य नायिकारूपणस्य साचिव्यमानुकूल्यम्। स्वमा-त्रेण स्वसामर्थ्येनैव विश्रान्तः वैचित्र्यविशेषे कार्य्ये उपक्षीणः।

(ञ) जस्सेति यस्य रणान्तःपुरे करे कुर्वाणस्य मण्डला-ग्रलताम्। रससंमुख्यपि सहसा पराङ्मुखी भवति रिपुसेना। इति सं। मण्डलाग्रलतां खड्गलतां रसेन समरेच्छया सुरते-च्छया च। सन्मुखी अभिमुखगामिनी। अत्र यदि लिङ्गसाम्येन मण्डलाग्रलतायां नायिकाव्यवहारः पराङ्मुखत्वरूपकार्य्यसाम्येनापि रिपुसेनायां प्रतिनायिकाव्यवहारः प्रतीयते तथापि तदुभयं रणेऽन्तः-पुररूपणासङ्गतिप्रसङ्गसापेक्षमित्येकदेशविवर्त्तिरूपकमेवेदमिति भावः।

अस्त्येव किन्तु वाक्यार्थपर्य्यालोचनसापेक्षं न खलु निरपेक्षम्। मुखचन्द्रादेर्म्मनोहरत्वादिवद्गणान्तःपुरयोः स्वतः सुखसञ्चारत्वाभावात्। साधारण्येन यथा।

"निसर्गसौरभोद्भ्रान्तभृङ्गसङ्गीतशालिनी।
उदिते वासराधीशे स्मेराजनि सरोजिनी"॥

अत्र निसर्गेत्यादिविशेषणसाम्यात् सरोजिन्यां नायिकाव्यवहारप्रतीतौ स्त्रीमात्रगामिनः स्मेरत्वधर्म्मस्य समारोपः कारणम्। तेन विना विशेषणसाम्यमात्रेण नायिकाव्यवहारप्रतीतेरसम्भवात्। औपम्यगर्भत्वं पुनस्त्रिधा सम्भवति। उपमारूपकसङ्करगर्भत्वात्। अत्रोपमागर्भत्वे यथा। (ट)

---

कचिच्च यत्रेति अत्र साहचर्य्यमर्य्यादया प्रथमत एवाप्रस्तुतोपस्थितिरिति भावः। नायिकाव्यवहारेति यथा मुखे स्वाभाविकं सौरभं तथा एव व्यवहारसमारोपः। ननु श्लिष्टविशेषणस्य द्व्यर्थशब्दप्रयोगसामर्थ्यादेवार्थान्तरप्रतिपादकत्वं साधारणविशेषणस्य तु वाच्यविशेषाधानेनैव उपक्षीणत्वात् कथं तेनार्थान्तरप्रतीतिरित्यत आह स्त्रीमात्रेति मात्रपदेन सरोजिन्या व्यवच्छेदः। सरोजिनीविकाशे चित्तोल्लासविशेषरूपस्मेरत्वस्य तादात्म्यारोपः। कारणं सहकारि। तेन स्मेरत्वसमारोपेण। असम्भवादिति साधारणविशेषणस्य वाच्यविशेषाधानेनैव उपक्षीणतयाव्यङ्ग्यबोधे सामर्थ्याभावादिति भावः। एवञ्च साधारणविशेषणम् प्रस्तुतासाधारणधर्म्मारोपादिसहकृतमेवार्थान्तरप्रतिपादकमिति फलितम्। उपमारूपकयोः सन्दिग्धत्वे सङ्करः।

"दन्तप्रभा पुष्पचिता पाणिपल्लवशोभिनी ।
केशपाशालिवृन्देन सुवेशा हरिणेक्षणा" ॥

अत्र सुवेशत्ववशात् प्रथमं दन्तप्रभाः पुष्पाणीवेत्युपभागभेलेन समासः। अनन्तरञ्च दन्तप्रभासदृशैः पुष्पैश्चितेत्यादिसमासान्तराश्रयेण समानविशेषणमाहात्म्याद्धरिणेक्षणायां लताव्यवहारप्रतीतिः। रूपकगर्भत्वे यथा।

"लावण्यमधुभिः पूर्णमित्यादि"। सङ्करगर्भत्वे यथा। "दन्तप्रभा पुष्पेत्यादौ"। "सुवेशेत्यत्र" "परीतेति" पाठे उपमारूपकसाधकाभावात् सङ्करसमाश्रयणम्। समासान्तरं पूर्ववत्। समासान्तरमहिम्ना लताप्रतीतिः। एषु च येषां मते उपमासङ्करयोरेकदेशविवर्त्तिता नास्ति तन्मते आद्यतृतीययोः समासोक्तिः। द्वितीयस्तु प्रकार एकदेशविवर्त्तिरूपकविषय एव। पर्य्यालोचनेनाद्ये प्रकारे एकदेशविवर्त्तिन्युपमैवाङ्गीकर्तुमुचिता। अन्यथा।

---

(ठ) दन्तप्रभेति। नन्वेतद्रूपकगर्भमेवेत्यत आह सुवेशत्ववशादिति सुवेशत्वस्यान्यथानुपपत्तेरित्यर्थः। पुष्पपल्लवाभ्यामपि भूषणादिकृत शरीरशोभाविशेषस्य सम्भवेऽपि अलिवृन्देन तस्यासम्भवात्तत्रैवोपमासमासस्यावश्यकत्वमित्यवगन्तव्यम्। लताप्रतीतौ सुवेशत्वेन शोभात्वारोपो वेदितव्यः। लावण्येति अत्र लावण्यमधुनो राह्लादकत्वेन लोचनरोलम्बयोः श्यामत्वादिना स्फुटसादृश्यसम्भवात् रूपकाणां बहुत्वाभावाच्च समासोक्तिरेव नत्वेकदेशविवर्त्तिरूपकम्। एकदेशविवर्त्तिरूपकस्य यदेतदुदाहरणं दत्तं तन्मतभेदेनेत्यवगन्तव्यम्। नन्वत्र मध्वादीनां मुखेबाधात् प्राथमिकबोधानुपपत्तिरिति चेन्न। यथा मुखचन्द्रम् चुम्बतीत्यादौ चुम्बनस्य चन्द्रे बाधान्मुखे पर्य्यवसानं तथा मुखसम्बन्धस्य

"ऐन्द्रं धनुः पाण्डु पयोधरेण शरद्दधानार्द्रनखक्षताभम् ।
प्रसादयन्ती सकलङ्कमिन्दुं तापं रवेरभ्यधिकं चकार" ॥

इत्यत्र कथं शरदि नायिकाव्यवहारप्रतीतिः । नायिकापयोधरेणार्द्रनखक्षताभशक्रचापधारणासम्भवात् ।

नन्वत्र "आर्द्रनखक्षताभम्" इत्यत्र स्थितमप्युपमानत्वं वस्तुपर्य्यालोचनया ऐन्द्रे धनुषि सञ्चारणीयम् । यथा (ठ) "दध्ना जुहोतीत्यादौ" हवनस्यान्यथासिद्धेर्दधि सञ्चार्य्यते विधिः । एवं चेन्द्रचापाभमार्द्रनखक्षतं दधानेति प्रतीतिर्भविष्यतीति चेन्न । एवंविधनिर्वाहे कष्टसृष्टिकल्प-

---

मध्वादावसम्भवात् लावण्यादौ पर्य्यवसानमिति स्वीकारात् । नन्वेवमपि पूर्ववत्समासद्वयाङ्गीकारेणोपमागर्भमेवेदमस्तु किमधिकेन रूपकगर्भत्वकल्पनेनेति चेत् सत्यम् । गतानुगतिकन्यायेनास्य प्रकारस्य स्वीकारात् यन्यकृतैव खण्डनीयत्वाच्च । द्वितीयस्त्विति मुखे मध्वाद्यन्वयस्यासम्भवात् प्रथमत एव पद्माध्याहारेण प्रतीतिः कुतो व्यञ्जनामात्रप्राणा समासोक्तिरिति भावः । वस्तुपर्य्यालोचनया इति अभिप्रेतार्थबोधनानुरोधेन सञ्चारणीयं याचितमण्डनन्यायेनार्पणीयम् ।

(ठ) अत्र वैदिकदृष्टान्तमाह दध्नेति अन्यथासिद्धेः सायं प्रातर्जुहोतीति वचनान्तरप्राप्तेः । दध्नि दधिपदे सञ्चार्य्यते उपसंक्रम्यते विधिरप्राप्तप्रापकत्वरूपविधिशक्तिः । तदुक्तम् । "सर्वत्राख्यातसम्बन्धे श्रूयमाणे पदान्तरे । विधिशक्तेरुपसंक्रान्ते स्वाङ्गातोरनुवादतेति" । यथाख्याते स्थिता विधिशक्तिर्धात्वर्थस्यान्यथासिद्धत्वे तथानुपयोगिनी दग्धदहनन्यायेन पदार्थान्तरस्य विधेयतायामुपयोगं लभमाना पदान्तरे सञ्चार्य्यते तथात्रापीति भावः । कष्टनिर्वाहेति अशक्यनिर्वाहेत्यर्थः । ननु धर्मिकल्पनातो धर्मकल्पना

नादेकदेशविवर्त्तिन्युपमाङ्गीकारस्यैव न्याय्यत्वात् । अस्तु वात्र यथाकथञ्चित् समासोक्तिः । "नेत्रैरिवोत्पलैः पद्मैरि-त्यादौ" चान्यगत्यसम्भवात् । किञ्चोपमायां व्यवहार-प्रतीतेरभावात् कथं तदुपजीविकायाः समासोक्तेः प्रवेशः । यदाहुः । (ढ)

"व्यवहारोऽथ वा तत्त्वं नौपम्ये यत्प्रतीयते ।
तन्नौपम्यं समासोक्तिरेकदेशोपमा स्फुटा" ॥

एवञ्चोपमारूपकयोरेकदेशविवर्त्तिताङ्गीकारे तन्मूल-सङ्करेऽपि समासोक्तेरप्रवेशो न्यायसिद्ध एव तेनौपम्यगर्भ-

---

लवीयसीतिन्यायेनोपमेयस्योपमानत्वकल्पनमपेक्ष्य एकदेशविवर्त्तिन्युपमा-कल्पनागुरुरित्यत आह अस्तुवेति नेत्रैरिवेति "नेत्रैरिवोत्पलैः पद्मैर्मुखैरिव सरः श्रियः । पदे पदे विभान्ति स्म चक्रवाकैः स्तनैरिवेति" प्रागुक्तोदाहरणे इत्यर्थः । अन्यगत्यसम्भवात् समासोक्ति-प्रकारासम्भवात् ; एकदेशविवर्त्तिन्युपमा एवाङ्गीकर्त्तुमुचितेति पूर्वे-णान्वयः । ननु प्रागुक्तयुक्त्या उत्पलादावुपमानत्वं सञ्चारणीयमिति चेन्न । आर्द्रनखक्षताभमित्यत्र आर्थ्या उपमाया अर्थवशेनैव कल्प-नाया योग्यत्वात् । प्रकृते तु श्रौत्यास्तदसम्भवादिति भावः । नन्विव-शब्दव्यत्ययेनात्रापि व्यवहारसमारोप इत्यत आह किञ्चेति । विशे-षणानां सादृश्योपलम्भमहिम्ना विशेष्यस्याप्यध्याहारेण प्रथमत एव सादृश्यप्रतीतिरनुभवसिद्धा तयैव श्रोतुराकाङ्क्षाविरहात् व्यवहारव्यञ्ज-नम् न भवतीति भावः ।

(ढ) व्यवहार इति औपम्यगर्भविशेषणसाम्ये सति व्यव-हारोऽप्रस्तुतस्य साधर्म्यं तत्त्वं स्वरूपं वा भवति । यत्प्रतीयते तदौपम्यं समासोक्तिर्न भवति तत्र हेतुरेकदेशेति । स्फुटा सर्वानुभव-

विशेषणोत्थापितत्वं नास्या विषय इति। विशेषणसाम्यं श्लिष्टविशेषणोत्थापिता साधारणविशेषणोत्थापिता चेति द्विधा। कार्य्यलिङ्गयोस्तुल्यत्वे च द्विविधेति चतुष्प्रकारा समासोक्तिः। सर्व्वत्रैवात्र व्यवहारसमारोपः कारणम्। स च क्वचिल्लौकिके वस्तुनि लौकिकवस्तुव्यवहारसमारोपः। शास्त्रीये वस्तुनि शास्त्रीयवस्तुव्यवहारसमारोपः। लौकिके वा शास्त्रीयवस्तुव्यवहारसमारोपः।। शास्त्रीये वा लौकिकवस्तुव्यवहारसमारोपः इति चतुर्द्धा। तत्र लौकिकवस्त्वपि रसादिभेदादनेकविधम्। शास्त्रीयमपि तर्कायुर्वेदज्योतिःशास्त्रादिप्रसिद्धतयेति बहुप्रकारा समासोक्तिः। दिङ्मात्रं यथा। "व्याधूय यद्वसनमित्यादौ"। लौकिके वस्तुनि लौकिकस्य हठकामुकस्य व्यवहारादेः समारोपः। (ढ)

"यैरेकरूपमखिलास्वपि वृत्तिषु त्वां
पश्यद्भिरव्ययमसङ्ख्यतया प्रवृत्तम्।
लोपः कृतः किल परत्वजषो विभक्ते-
स्तैर्लक्षणं तव कृतं ध्रुवमेव मन्ये"॥

---

सिद्धा। तथाच सादृश्यप्रतीतिरेवानुभवसिद्धा न व्यवहारप्रतीतिरिति। नात्र समासोक्तिप्रसङ्ग इति भावः। तत्त्वप्रतीतौ समासोक्तिमन्ये स्वीकुर्वन्ति तन्मतानुसारेणैवाथवा तत्त्वमित्युक्तम्। व्यवहारादेरित्यादिपदेन स्वरूपस्य ग्रहणम्।

(ढ) यैरिति चन्द्रेश्वरः सम्बोध्यः। वृत्तिषु वस्तुषु पदार्थान्वयेषु च अव्ययमविनश्वरमव्ययपदवाच्यञ्च असंख्यतया अनन्तरूपतयासङ्ख्याविशेषा-

अत्रागमशास्त्रप्रसिद्धे वस्तुनि व्याकरणप्रसिद्धवस्तुव्यवहारसमारोपः। एवमन्यत्र। रूपकेऽप्रकृतमात्मस्वरूपसन्निवेशेन प्रकृतस्य रूपमवच्छादयति। इह तु स्वावस्थासमारोपेणावच्छादितस्वरूपमेव तं पूर्व्वावस्थातो विशेषयति। अत एवात्र "व्यवहारसमारोपो न तु स्वरूपसमारोप इति वदन्ति। उपमाध्वनौ श्लेषे च विशेष्यस्यापि साम्यमिह तु विशेषणमात्रस्य अप्रस्तुतप्रशंसायां प्रस्तुतस्य गम्यत्वमिह त्वप्रस्तुतस्येति भेदः।

**उक्तिर्विशेषणैः साभिप्रायैः परिकरो मतः।**

यथा। (ग)

---

प्रतिपादकतया च परत्वजुष उत्कर्षभाजस्तव विभक्तेर्भेदप्यहस्य। पक्षे परवर्त्तिन्या विभक्तेः स्वादेः लक्षणं विशिष्टज्ञानं स्वतन्त्र। आगमशास्त्रप्रसिद्धे वस्तुनीश्वरे व्याकरणशास्त्रप्रसिद्धवस्तुनो णिदादनस्य व्यवहारसमारोपः। रूपकादस्याः परैरूपपादितं भेदं दर्शयति रूपक इति अप्रकृतं वस्तु आत्मरूपसन्निवेशेन आत्मस्वरूपारोपणेन रूपं स्वरूपम्। इह तु समासोक्तौ तु स्वावस्था स्वधर्मं तं प्रकृतपदार्थं पूर्वावस्थातः प्रकृतावस्थामवच्छाद्य विशेषयति उत्कृष्टत्वेन ज्ञापयति। अत्राप्यप्रकृतमिति कर्त्तृपदमन्वेति। विशेष्यस्यापीत्यपीना विशेषणस्यापि साम्यं प्रतीयते इति शेषः। गम्यत्वं व्यङ्ग्यत्वम्। परिकरालङ्कारमाह उक्तिरिति। विशेषणस्य प्रकृतोपयोगित्वज्ञापनमित्यर्थः। विशेषणैरिति बहुत्वमत्र विवक्षितम्। तेनैव वैचित्र्यस्यानुभवसिद्धत्वात्। साभिप्रायैः प्रकृतार्थपरिपोषणाभिप्रायेण प्रयुक्तैः। यद्यप्यपुष्टार्थस्य दोषत्वाभिधानात् तन्निराकरणेन पुष्टार्थस्य स्वीकारः कृतस्तथाप्येकनिष्ठत्वेन बहूनां विशेषणानामेव उपन्यासे वैचित्र्यमित्यलङ्कारमध्येऽयं गणित इति काव्यप्रकाशः।

"अङ्गराज ! सेनापते ! द्रोणोपहासिन् ! कर्ण ! रक्षैनं भीमाद्दुःशासनम्" ।

**शब्दैः स्वभावादेकार्थैः श्लेषोऽनेकार्थवाचनम् ।**

"स्वभावादेकार्थैरिति" शब्दश्लेषाद्व्यवच्छेदः । "वाचनमिति च" ध्वनेः । उदाहरणम् ।

"प्रवर्त्तयन् क्रियाः साध्वीर्मालिन्यं हरितां हरन् ।
महसा भूयसा दीप्तो विराजति विभाकरः" ।

---

(त) अङ्गराजेति भीमेन वध्यमानं दुःशासनं रक्षितुमशक्नुवन्तं कर्णं प्रति अश्वत्थाम्नो लज्जाप्रतिपादकं वचनमिदम् । उक्तविशेषणत्रयेण कर्णस्य रक्षणोपयोगित्वं प्रतीयते । तथाविधस्य स्वपक्षरक्षणाक्षमतायां लज्जातिशयः प्रतीयते इति । श्लेषालङ्कारमाह शब्दैरिति । स्वभावादित्यर्थपदस्याभिधेयमात्रपरत्वरूपतात्पर्य्यग्राहकत्वम् । अन्यथा एकार्थैरित्ययोग्यम् सर्वेषामेव शब्दानां वाच्यलक्ष्यव्यङ्ग्यरूपनानार्थसम्भवात् । वाचनमभिधालक्षणाभ्यां प्रतिपादनम् । एकस्मिन् विशेष्येऽभिधया अपरस्मिन् विशेष्ये लक्षणया अर्थद्वयप्रतिपादनेऽर्थश्लेष इति भावः । ध्वनेर्वाचकव्यञ्जनस्य शब्दस्य व्यवच्छेद इति पूर्वेणान्वयः । प्रवर्त्तयन्निति कर्त्तरि शक्तं सूर्य्यपक्षे करस्पर्शनेन पावित्र्यजननद्वारा उपयोगि लाक्षणिकम् । तदुक्तं विष्णुपुराणे । "स्पृष्टो यदंशुभिर्लोकः क्रियायोग्योऽभिजायते । पवित्रताकारणाय तस्मै शुद्धात्मने नम इति" । साध्वीः क्रियाः वेदोदितकर्माणि । हरितां दिग्वृत्तिनां मालिन्यं दैन्यादनौजस्यं पक्षे दिशां तमः श्यामताम् । महस्तेजस्तच्चाधिक्षेपापमानादेरिति प्रागुक्तं शौर्य्यं वा तेन दीप्तोऽधृष्यः । पक्षे ज्योतिषा जाज्वल्यमानः । नन्वत्र प्रकरणात् राजप्रतीतौ सूर्य्ये व्यञ्जनैवेत्युपमाध्वनिरेवायमित्यत आह प्रकरणादिनियमाभावादिति । आदिना संयोगादिपरिग्रहः । नन्वेवं शब्दश्लेष

अत्र प्रकरणादिनियमाभावात् द्वावपि राजसूर्य्यौ वाच्यौ । (त)

क्वचिद्विशेषः सामान्यात्सामान्यं वा विशेषतः ।
कार्य्यान्निमित्तं कार्य्यञ्च हेतोरथ समात् समम् ॥
अप्रस्तुतात् प्रस्तुतञ्चेद्गम्यते पञ्चधा ततः ।
अप्रस्तुतप्रशंसा स्यात् ।

क्रमेणोदाहरणम् ।

"पादाहतं यदुत्थाय मूर्द्धानमधिरोहति ।
स्वस्थादेवापमानेऽपि देहिनस्तद्वरं रजः" ॥

अत्रास्मदपेक्षया रजोऽपि वरमिति विशेषे प्रस्तुते सामान्यमभिहितम् ।

"स्रगियं यदि जीवितापहा
हृदये किं निहिता न हन्ति माम् ।
विषमप्यमृतं क्वचिद्भवे-
दमृतं वा विषमीश्वरेच्छया" ॥

---

एवार्थं विभाकरपदस्य राजसूर्य्योभयवाचकत्वादिति चेत् । सङ्कीर्णमेवेदमुदाहरणम् । असङ्कीर्णोदाहरणन्तु "स्तोकेनोन्नतिमायाति स्तोकेनायात्यधोगतिम् । अहो सुसदृशी वृत्तिस्तुलाकोटेः खलस्य च" अत्रोन्नत्यधोगतिपदाभ्यामुत्कर्षापकर्षौ लक्ष्यौ ।

(थ) अप्रस्तुतप्रशंसालङ्कारमाह क्वचिदिति । एतच्च वाक्यपञ्चकेऽन्वेति । अप्रस्तुतादिति सामान्यादित्यादिपञ्चकस्य विशेषणम् । अप्रस्तुतादिति यथायथं लिङ्गविपरिणामाविपरिणामाभ्यां विशेषइत्यादिपञ्चकस्य विशेषणम् । ततस्तदा अप्रस्तुतेन प्रस्तुतस्य प्रशंसा-

अत्रेश्वरेच्छया क्वचिदहितकारिणोऽपि हितकारित्वं हितकारिणोऽप्यहितकारित्वमिति सामान्ये प्रस्तुते विशेषोऽभिहितः। एवं चात्राप्रस्तुतप्रशंसामूलोऽर्थान्तरन्यासः। दृष्टान्ते प्रख्यातमेव वस्तु प्रतिबिम्बत्वेनोपादीयते। इह तु विषामृतयोरमृतविषीभावस्याप्रसिद्धेर्न तस्य सद्भावः। (थ)

"इन्दुर्लिप्त इवाञ्जनेन जड़िता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमदलं श्यामेव हेमप्रभा।
कार्कश्यं कलया च कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव"॥

अत्र सम्भाव्यमानेभ्य इन्द्वादिगताञ्जनलिप्तत्वादिभ्यः कार्य्येभ्यो वदनादिगतसौन्दर्य्यविशेषरूपं प्रस्तुतं कारणं प्रतीयते।

---

व्यञ्जनम्। यद्वाप्रस्तुतव्यञ्जकमप्रस्तुतकथनं अप्रस्तुतप्रशंसा। पादाहतमिति बलदेवस्योक्तिरियम्। सामान्यमभिहितमिति देहिन इति सामान्यवाचकम्। स्रगियमिति अजविलापोऽयम्। अहितकारिविशेषो विषं हितकारिविशेषोऽमृतम्। नन्वत्र बिम्बप्रतिबिम्बभावसत्त्वात् दृष्टान्त एवायमित्यत आह दृष्टान्त इति। तस्य दृष्टान्तस्य सद्भावः सम्भवः। अस्यां सङ्कीर्णोदाहरणन्तु "मणिर्लुठति पादेषु काचः शिरसि धार्य्यते। यथैवास्ति तथैवास्तु काचः काचो मणिर्मणिः। अत्राविवेचकेन उत्कृष्टस्यानादरेऽपि नोत्कर्षापचयः। अनुत्कृष्टस्यादरेऽपि नोत्कर्षः इति प्रस्तुतमप्रस्तुतेन वाक्यार्थेन प्रतीयते।

(द) इन्दुर्लिप्त इति जड़िता निष्पन्दा कार्कश्यं माधुर्य्यविपर्य्यासः। प्रस्तुतं प्रचुरीभूतम्। बर्हस्य श्यामकोमलत्वाभाव एव गर्हा। सम्भाव्यमानेभ्य उत्प्रेक्षणीयेभ्यः। अनुक्तनिमित्तेयमुत्प्रेक्षा तद्विष-

"गच्छामीति मयोक्तया मृगदृशा निःश्वासमुद्रेकिणं
त्यक्त्वा तिर्य्यगवेक्ष्य वाष्पकलुषेनैकेन मां चक्षुषा।
अद्य प्रेम मदर्पितं प्रियसखीवृन्दे त्वया बध्यता-
मित्थं स्नेहविवर्द्धितो मृगशिशुः सोत्प्रासमाभाषितः"॥

अत्र कस्यचिद्गमनरूपे कार्य्ये कारणमभिहितम्।

तुल्येऽप्रस्तुते तुल्याभिधाने च द्विधा श्लेषमूला सादृश्यमात्रमूला च। श्लेषमूलापि समासोक्तिवद्विशेषणमात्रश्लेषे श्लेषवद्विशेष्यस्यापि श्लेषे भवतीति द्विधा।

क्रमेण यथा।

"सहकारः सदामोदो वसन्तश्रीसमन्वितः।
समुज्ज्वलरुचिः श्रीमान् प्रभूतोत्कलिकाकुलः"॥

अत्र विशेषणमात्रश्लेषवशादप्रस्तुतात् सहकारात् कस्यचित् प्रस्तुतस्य नायकस्य प्रतीतिः। (द)

---

कार्य्यं तस्य तद्विषये उपचारादिदमुपपद्यम्। उदाहरणान्तरन्तु "नाघ्रातं न कृतं कर्णे स्त्रीभिर्मधुनि नार्पितम्। त्वद्विषां दीर्घिकास्वेव विशीर्णं नीलमुत्पलम्"। अत्रोत्पलाघ्राणाद्यभावरूपकार्य्येभ्यः प्रस्तुतायाः शोच्यावस्थाया हेतोः प्रतीतिः। तत्सत्त्वनियतसत्ताकत्वरूपमेव कार्य्यत्वमभावानामवगन्तव्यम्। गच्छामीति सखायं प्रति कस्यचिदुक्तिरियम्। सोत्प्रासं रूक्षहासयुक्तम्। मृगशिशुं प्रति गमनाभावसूचकं तादृगाभाषणमत्र कारणम्। विशेषणमात्रस्येति मात्रपदेन विशेष्यव्यवच्छेदः। विशेष्यस्यापीत्यपिना विशेषणपरिग्रहः। आमोदः सौरभमानन्दश्च। वसन्तकालोपकरणपल्लवादियुक्तः सम्यगुज्ज्वला रुचिर्दीप्तिर्यस्य सः। पक्षे सम्यगुज्ज्वले शृङ्गारे रुचिरभिलाषो यस्य सः। श्रीः शोभा वेशरचना च रचना च प्रभूताभिः प्रचुराभिरुत्कलि-

"पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि
यायाद्यदि प्रणयनेन महानपि स्यात्।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयं
केनापि दिक् प्रकटिता पुरुषोत्तमेन" ॥

अत्र पुरुषोत्तमपदेन विशेष्येणापि श्लिष्टेन प्रचुरप्रसिद्धया प्रथमं विष्णुरेव बोध्यते। तेन वर्णनीयः कश्चित्पुरुषः प्रतीयते। सादृश्यमात्रमूला यथा।

"एकः कपोतपोतः शतशः श्येनाः क्षुधाभिधावन्ति।
अम्बरमावृतिशून्यं हरि हरि शरणं विधेः करुणा" ॥

---

काभिरुन्नतमुकुलैराकुलो व्याप्तः। पक्षे प्रकर्षेण भूतया उत्कलिकया नायिकौत्कण्ठया आकुलो व्याकुलः।

(ध) पुंस्त्वादपीति पुरुषभावात् यदि प्रविचलेत् स्त्री यदि भवेत्। अधःपातालमपि यदि यायात्। प्रणयने याचननिमित्तं यदि न महान् स्यात् खर्वः स्यात्। तदपि तथापि विश्वमुद्धरेत् इतीयं दिक् ईदृशोऽयं प्रकारः केनाप्यनिर्वचनीयेन पुरुषत्तोमेन विष्णुना प्रकटिता दर्शिता। तेन हि दैत्यहृतं राज्यमुद्धर्त्तुं मोहिनीरूपस्त्रीत्वं प्राप्तम्। जलप्लुतं विश्वमुद्धर्त्तुं वराहरूपेण पातालं गतम्। बलिदैत्यापहृतं राज्यमुद्धर्त्तुं पादत्रयभूमियाचननिमित्तं वामनत्वं प्राप्तम्। राजपक्षे पुंस्त्वात् पौरुषात् यदि प्रविचलेत् यद्यप्यनीचत्वमपि यायात् याचननिमित्तं यदि महिमशून्यः स्यात् तदपि विश्वं स्वराज्यमुद्धरेदित्ययं प्रकारश्च केनापि पुरुषोत्तमनाम्ना राज्ञा प्रकटिता। विशेष्येणापि विशेष्यवाचकेनापि प्रचुरप्रसिद्धा भूरिप्रयोगेन अतिप्रसिद्धया वा। प्रकृतस्यैवात्र व्यङ्ग्यत्वं न तूपमानस्येति नोपमाध्वनित्वम्। द्वयोरभिधेयत्वाभावाच्च श्लेषोऽपि कश्चित्। प्रस्तुत इति यस्य वहवः शत्रवो गोपनस्थानं नास्ति स इत्यर्थः। इयञ्च अप्रस्तुतप्रशंसा च। वैधर्म्येणापि विधर्मान्तर-

अत्र कपोतादप्रस्तुतात् कश्चित् प्रस्तुतः प्रतीयते । इयं क्वचित् वैधर्म्म्येणापि भवति । यथा । (ध)

"धन्याः खलु वने वाताः कह्लारस्पर्शशीतलाः ।
राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः" ॥

अत्र वाता धन्या अहमधन्य इति वैधर्म्म्येण प्रस्तुतः प्रतीयते । वाच्यस्य सम्भवासम्भवोभयरूपतया त्रिप्रकारेयम् । तत्र सम्भवे उक्तोदाहरणान्येव । असम्भवे यथा ।

"कोकिलोऽहं भवान् काकः समानः कालिमावयोः ।
अन्तरं कथयिष्यन्ति काकलीकोविदाः पुनः" ॥

अत्र काककोकिलयोर्वाक्यं प्रस्तुताध्यारोपणं विनाऽसम्भवि । उभयरूपत्वे यथा ।

"अन्तश्छिद्राणि भूयांसि कण्टका बहवो बहिः ।
कथं कमलनालस्य माभूवन् भङ्गुरा गुणाः" ॥

अत्र प्रस्तुतस्य कस्यचिदध्यारोपणं विना कमलनालान्तश्छिद्राणां गुणभङ्गुरीकरणे हेतुत्वमसम्भवि अन्येषान्तु

---

व्यञ्जकवैधर्म्यविशिष्टस्य कथनेनापि । एवञ्च षट्प्रकारा अप्रस्तुतप्रशंसेति फलितम् ।

(न) धन्या इति दशरथस्योक्तिरियम् । कह्लारस्य कह्लारवतो जलस्य स्पर्शेन शीतलाः । सौगन्ध्यप्रतीतिरत्र लक्षणाप्रयोजनम् । अत्रेति वाता धन्या इति वैधर्म्येण अहमधन्य इति प्रस्तुत इत्यन्वयः । वाच्यस्य वाक्यार्थस्य । कोकिलोऽहमिति अन्तरं विशेषं काकलीकोविदाः सूक्ष्ममधुरध्वनिविदः । वाक्योपवाक्यमुक्तिप्रत्युक्ती । तौ प्रस्तुतौ तयोरध्यारोपणं स्वरूपव्यञ्जनम् । छिद्राणि विवराणि दोषाश्च ।

सम्भवीत्युभयरूपत्वम् । अस्याश्च समासोक्तिवद्व्यवहारसमारोपप्राणत्वाच्छब्दशक्तिमूलाद्वस्तुध्वनेर्भेदः उपमाध्वनावप्रस्तुतस्य व्यङ्ग्यत्वम् । एवं समासोक्तौ श्लेषेऽपि द्वयोरपि वाच्यत्वम् । (न)

**उक्ता व्याजस्तुतिः पुनः ।**

**निन्दास्तुतिभ्यां वाच्याभ्यां गम्यत्वे स्तुतिनिन्दयोः ।**

निन्दया स्तुतेर्गम्यत्वे व्याजेन स्तुतिरिति व्युत्पत्त्या व्याजस्तुतिः स्तुत्या निन्दाया गम्यत्वे व्याजरूपा स्तुतिः । क्रमेण यथा ।

"स्तनयुगमुक्ताभरणाः कण्टककलिताङ्गयष्टयो देव ! ।
त्वयि कुपितेऽपि प्रागिव विश्वस्ता रिपुस्त्रियो जाताः ॥

---

कण्टकास्तीक्ष्णाग्रपत्त्रावयवाः क्षुद्रशत्रवश्च । गुणास्तन्तवो यशांसि च । छिद्राणां विवराणां गुणभङ्गुरीकरणे पद्मनालतन्तुच्छेदने । छन्ये षां कण्टकानाम् । तस्याश्च श्लेषमूलतुल्याप्रस्तुतप्रशंसायाश्च । समासोक्तिवदिति समासोक्तौ यथा श्लिष्टशब्दप्रयोगमात्रेण व्यवहारो न प्रतीयते किन्तु विशेषणसाम्यानुसन्धानेनापि तथात्रापि विशेषणसाम्यानुसन्धानमप्यपेक्षितं शब्दशक्तिमूलवस्तुध्वनौ तु तन्नापेक्षितमिति ततोऽस्या भेद इति भावः । द्वयोः प्रस्तुताप्रस्तुतयोः वाच्यत्वं प्रकरणादिनियमाभावादित्यर्थः ।

(प) व्याजस्तुत्यलङ्कारमाह । उक्तेति । वाच्याभ्यामापाततः प्रतीयमानाभ्याम् । ननु निन्दाव्याजेन स्तुतिर्भवत्येव व्याजस्तुतिः । स्तुतिव्याजेन निन्दा तु व्याजनिन्दैव भवति कथं व्याजस्तुतिरित्यतः संज्ञाया द्विविधं योगार्थमाह निन्दयेति । स्तनयुगेति राजानं प्रति कस्यचिदुक्तिरियम् । स्तनयुगे मुक्ताभरणं हारो यासां

इदं मम ।

"व्याजस्तुतिस्तव पयोद ! मयोदितेयं
यज्जीवनाय जगतस्तव जीवनानि ।
स्तोत्रन्तु ते महदिदं घन ! धर्म्मराज
साहाय्यमर्ज्जयसि यत् पथिकान्निहत्य" ॥ (प)

**पर्य्यायोक्तं यदा भङ्ग्या गम्यमेवाभिधीयते ।**

उदाहरणं ।

"स्पृष्टास्ता नन्दने शच्याः केशसम्भोगलालिताः ।
सावज्ञं पारिजातस्य मञ्जर्य्यो यस्य सैनिकैः ॥

अत्र हयग्रीवेण स्वर्गो विजित इति प्रस्तुतमेव गम्यं कारणरूपं वैचित्र्यविशेषप्रतिपत्तये सैन्यस्य पारिजातमञ्जरीसावज्ञस्पर्शनरूपकार्य्यद्वारेणाभिहितम् । न चेदं का-

---

पक्षे स्तनयुगान्मुक्तं आभरणं यासाम् । कण्टको रोमाञ्चः क्षोद्रा-ग्रच्छावयवश्च प्रागितरकोपात् पूर्वकाल इव । विश्वस्ता अयमस्माकं नापकर्त्तेति विश्वासाश्रयाः पक्षे विधवा "विश्वस्ता विधवा समे" इत्य-मरः" । अत्र स्त्रीणां पीड़ाजनकत्वेनापाततो निन्दा पर्य्यवसाने तु शत्रुनाशकत्वेन स्तुतिः प्रतीयते । व्याजस्तुतिरिति अयमर्थस्तुतिः । धर्म्मराजस्य साहाय्याचरणेनापततः स्तुतिः पर्य्यवसाने तु पथिकाप-कारेण निन्दा प्रतीयते ।

(फ) पर्य्यायोक्तमलङ्कारमाह । पर्य्यायोक्तमिति । भङ्ग्या उक्ति वैचित्र्य विशेषेण । अभिधीयते अभिधेयवत्स्फुटं प्रतीयते । एवञ्च पर्य्यायेण भङ्ग्या व्यङ्गस्य स्फुटप्रतिपादनं पर्य्यायोक्तम् । केशा इति केशानां सम्भोगाय भूषणाय लालिताः सयत्नं पालिताः इन्द्रस्याति-पराभवेन भयस्य हयग्रीवोद्याने पारिजातमञ्जरीणामनुभूतत्वादादरस्य चाभावस्य सावज्ञमित्यनेन प्रतीयते । इत्यञ्च हयग्रीवेण स्वर्गः सुतरां

र्थात् कारणप्रतीतिरूपाप्रस्तुतप्रशंसा। तत्र कार्यस्याप्रस्तुतत्वात्। इह तु वर्णनीयस्य प्रभावातिशयबोधकत्वेन कार्य्यमपि कारणवत् प्रस्तुतम्। एवञ्च।

"अनेन पर्य्यासयताश्रुविन्दून्
मुक्ताफलस्थूलतमान् स्तनेषु।
प्रत्यर्पिताः शत्रुविलासिनीना-
माक्षेपसूत्रेण विनैव हाराः"॥

अत्र वर्णनीयस्य राज्ञो गम्यभूतशत्रुमारणरूपकारणवत् कार्य्यभूतं तथाविधशत्रुस्त्रीक्रन्दनजलमपि प्रभावातिशयबोधकत्वेन वर्णनार्हमिति पर्य्यायोक्तमेव।

"राजन्! राजसुता न पाठयति मां देव्योऽपि तूष्णीं स्थिताः
कुब्जे! भोजय मां कुमारसचिवैर्नाद्यापि किं भुज्यते।
इत्थं राजशुकस्तवारिभवने मुक्तोऽध्वगैः पञ्जरा-
च्चित्रस्थानवलोक्य शून्यवड़भावेकैकमाभाषते"॥

अत्र प्रस्थानोद्यतं भवन्तं श्रुत्वा सहसैवारयः पलायिता इति कारणं प्रस्तुतम्। "कार्यमपि वर्णनार्हत्वेन

---

र्जित इति व्यङ्ग्यं सुव्यक्तमेव। वैचित्र्यविशेषस्य अप्रस्तुतप्रशंसाजन्यवैचित्र्याद्विलक्षणवैचित्र्यस्य प्रतिपत्त्यै सिद्ध्यै। कार्य्यद्वारेण कार्य्याभिधानमुखेन अभिहितं स्फुटं प्रतिपादितम्। अनेनेति पर्य्यासयता पातयता। आक्षेपसूत्रेण मन्थनगुणेन। वर्णनार्हं वर्णनार्हत्वेन प्रस्तुतम्। पर्य्यायोक्तमेवेत्येवकारेणाप्रस्तुतप्रशंसाव्यवच्छेदः। काव्यप्रकाशे कार्य्यात् कारणरूपाप्रस्तुतप्रशंसाया दत्तमुदाहरणम् पर्य्यायोक्तविषयत्वेन सम्भावयति राजन्निति। अत्र जयोद्यतं राजानं प्रति तद्वैरस्योक्तिरियम्। तवारेर्भवने शास्तुनि अध्वगैः पञ्जरान्मुक्तो राजशुकः शून्यवड़भौ

प्रस्तुतमिति" केचित् । अन्ये तु "राजशुकवृत्तान्तेन कोऽपि प्रस्तुतस्य प्रभावो बोध्यते इत्यप्रस्तुतप्रशंसैवेति" आहुः । (फ)

**सामान्यं वा विशेषेण विशेषस्तेन वा यदि ।**
**कार्य्यञ्च कारणेनेदं कार्य्येण च समर्थ्यते ॥**
**साधर्म्म्येणेतरेणार्थान्तरन्यासोऽष्टधा ततः ।**

क्रमेणोदाहरणम् ।

"बृहत्सहायः कार्य्यान्तं क्षोदीयानपि गच्छति ।
सम्भूयाम्भोधिमभ्येति महानद्या नगापगा" ॥

---

राजादिहीनगृहे चित्रस्थाने राजादीन् अवलोक्य एकैकमेव भाषते । चित्रस्थान् तानवलोक्य किमाभाषत इत्यत आह राजन्निति । देव्योऽपि राजपत्न्योऽपि तूष्णीं स्थिताः न पाठयन्ति । कुब्जा तद्भोजने नियुक्ता काचित् कुमारैरेव सचिवैरन्नभोजनसहचरैरद्यापि इदानीमपि । कार्य्यमपीति युक्ताभावरूपं कार्य्यम् ।

(ब) अर्थान्तरन्यासालङ्कारमाह । सामान्यमिति व्यापकधर्मावच्छिन्नमित्यर्थः । विशेषेण व्याप्यधर्मावच्छिन्नगोचरेण । साधर्म्येण साधर्म्यप्रकारकज्ञानेन वैधर्म्यज्ञानेन वा यदि समर्थ्यते उपपाद्यते संशयायोग्यत्वादिरूपानुपपत्तिनिराकरणेन दृढप्रतिपत्तिविषयः क्रियत इति यावत् तदार्थान्तरन्यास इत्यर्थः । एवमग्रेऽपि । तेन साम्यान्येन । सामान्यविशेषयोर्विधीयमानधर्म एव विशेषसामान्ययोः साधर्म्यम् । तस्य च कचित्ताद्रूप्येण कचिद्व्याप्यधर्मेण कचिद्व्यापकधर्मेण ग्रह एव समर्थकः । वैधर्म्यं निरुक्तसाधर्म्यविरुद्धधर्मः । कारणस्य साधर्म्यं प्रकृतकार्य्यसाधनत्वं वैधर्म्यं स्वविरुद्धस्य स्वकार्य्यविरुद्धसाधनत्वम् । इदं कारणम् । कार्य्यस्य साधर्म्यं प्रकृतकारणजन्यत्वम् । वैधर्म्यं स्वविरुद्धस्य स्वकारणविरुद्धजन्यत्वम् । सामान्यस्य विशेषसाधर्म्येण समर्थनमाह बृहत्सहाय इति । कार्य्यान्तं कार्य्यातिशयं कष्टकार्य्यमि-

अत्र द्वितीयार्द्धगतेन विशेषेणार्थेन प्रथमार्द्धगतः सामान्योऽर्थः सोपपत्तिकः क्रियते। (ज)

"यावदर्थपदां वाचमेवमाधाय माधवः।
विरराम महीयांसः प्रकृत्या मितभाषिणः"॥

"पृथ्वि! स्थिरा भव भुजङ्गम! धारयैनां
त्वं कूर्म्मराज! तदिदं द्वितयं दधीथाः।
दिक्कुञ्जराः कुरुत तत्त्रितये दिधीर्षा-
मार्य्यः करोति हरकार्मुकमाततज्यम्"॥

---

त्यर्थः। क्षोदीयानपि अतिक्षुद्रोऽपि गच्छति प्राप्नोति साधयतीति यावत्। सम्भूय मिलित्वा नगापगा गिरिनदी। नद्या नगसम्बन्धदर्शनेन जलबाहुल्याभावः प्रतीयते तेनातिक्षुद्रत्वम्। द्वितीयार्द्धगतेन द्वितीयवाक्यार्थरूपेण विशेषरूपेण नगापगया। अर्थेन महानदीमिलनप्रयुक्तसमुद्रप्राप्तिरूपमहाकार्य्यसाधनत्वप्रतिपत्तिविषयेण सोपपत्तिको विधीयमानसंशयनिरासेन निश्चयविषयः। एकविशेषस्य यदृष्टस्तत्र बाधकाभावेन तुल्यन्यायतया तत्सधर्म्माणामन्येषामपि तत्सम्भवतीति-विशेषदर्शिनां सामान्यविधीयमानस्य संशयो निवर्त्तत इति सुतरां दृढप्रतिपत्तिरिति भावः। अत्र सामान्यसमर्थनमुखेनाक्षत्क्षुद्रतरस्यापि शिशुपालस्य कालयवनादिदृष्टत्सहायसम्पत्त्या अक्षत्पराभवरूपदृष्टकार्यसाधनत्वं समर्थितमित्यवधेयम्।

(ज) विशेषस्य सामान्यसाधर्म्येण समर्थनमाह यावदर्थ्यपदामिति यावन्त्यर्थानि प्रकृतोपयुक्तार्थादनपेतानि पदानि यस्यां तां नत्वनुपयुक्तार्थपदैर्बहुलाम्। एतेन वाक्यस्याल्पत्वं सूचितम्। आदाय कथयित्वा महीयांसो महत्तराः प्रकृत्या स्वभावेन मितभाषिणः अल्पवचसः। अत्र व्यञ्जनया विधीयमानमपि माधवस्याल्पभाषणं प्रतिपाद्यबाहुल्ये सत्यप्यनुपपन्नं महत्तरस्य स्वभावत एवाल्पभाषणमिति सामान्यगोच-

अत्र कारणभूतं हरकार्मुकाततज्योकरणं पृथ्वीस्थैर्य्यादेः कार्य्यस्य समर्थकम् । (भ)

"सहसा विदधीत न क्रियामविवेकः परमापदां पदम् ॥

इत्यादौ सम्पद्वरणं कार्य्यं सहसा विधानाभावस्य विमृश्यकारित्वरूपस्य कारणस्य समर्थकम् । एतानि साधर्म्म्ये उदाहरणानि । वैधर्म्म्ये यथा ।

---

रसाधर्म्यज्ञानेन समर्थ्यते । सामान्यधर्म्मो विशेषेष्वप्रतिहतप्रसर इति विशेषदर्शनेनानुपपत्तिनिरास इति भावः । कारणसाधर्म्म्येण कार्य्यसमर्थनमाह पृथ्वीति । श्रीरामेण हरधनुर्ज्यायोगोद्यमे कृते पृथ्व्यादीनामस्थैर्य्यादिकं सम्भावयतो लक्ष्मणस्योक्तिरियम् । भुजङ्गमोऽनन्त एनां पृथ्वीं स्थितयमनन्तं पृथ्वीञ्च तत्स्थितये कूर्म्मानन्तपृथ्वीषु दिधीर्षां धारणेच्छां देवः श्रीरामः आततज्यं आरूढ़गुणम् । आततज्यीकरणं गुणयोगानुकूलव्यापारः पृथ्व्यादीनां स्थैर्य्यादेः सिद्धत्वेन तन्नियोगानुपपत्त्या स्थैर्य्यादिविशेषो लक्षणीयः । तस्य च ज्यायोगसम्भावनायामनुष्ठितत्वेन कार्य्यत्वमक्षतमेव । तच्च ज्यायोगसम्भावनायाः कारणत्वग्रहेणैव समर्थ्यते । स्थैर्य्यादीनां नियुज्यमानत्वेन कार्य्यत्वं प्रतीयते तच्च कारणमन्तरेण नोपपद्यत इत्यनुपपत्तिरवधेया ।

(भ) कार्य्यसाधर्म्म्येण कारणसमर्थनमाह सहसेति । अत्र विधीयमानस्य सहसा विधानाभावस्य किञ्चिदिष्टं प्रतिसाधनत्वमवगम्यते । तच्च कचिदिष्टे साध्यत्वग्रहमन्तरेण नोपपद्यते इति कार्य्यस्य समर्थकत्वं सम्पद्वरणं कार्य्यमिति कार्य्यं कार्य्यत्वप्रतीतिविषयः । कार्य्यत्वप्रतीतिरत्र "उद्योगिनं पुरुषसिंहमुपैति लक्ष्मीरितिवत्" । विमृश्यकारित्व एव सहसाविधानाभावः पर्य्यवस्यतीति नानयोर्भेदः । विशेषवैधर्म्म्येण सामान्यसमर्थनं यथा । गुणानामेव दौरात्म्याद्धुर्य्यो धुरि नियुज्यते । असंजातकिणस्कन्धः सुखं स्वपिति गौर्गतिः । दुःखा-

"इत्थमाराध्यमानोऽपि क्लिश्नाति भुवनत्रयम् ।
शाम्येत् प्रत्यपकारेण नोपकारेण दुर्ज्जनः" ॥

अत्र सामान्यं विशेषस्य समर्थकम् । "सहसा विदधीतेति"

अत्र सहसा विधानाभावस्यापत्प्रदत्वं विरुद्धं कार्य्यं समर्थकम् । एवमन्यत् । (म)

---

वहकर्मप्रयोजकत्वाद्गुणानां निन्दा । धुर्य्यो धुर्वहनयोग्यः । किणो वहनचिह्नविशेषः । गतिरलसयुक्तः । अत्र गुणवन्त एव धुर्य्या भारवहने नियुज्यन्ते इत्यन्ययोगव्यवच्छेदप्रतीतिरन्यत्रायोगग्रहणेनैव उपपद्यते इति धुर्वहनयोग्यतया धुर्य्यविशेषे गतिगवे धूर्वहनायोगरूपवैधर्म्यरूपज्ञानं समर्थकम् । किणहीनस्कन्धत्वेन सुखस्वपनेन च भारवहनायोगः प्रतीयते । सामान्यवैधर्म्येण विशेषसमर्थनमाह इत्यमिति । ब्रह्माणं प्रति बृहस्पतेस्तारकदौरात्म्यनिवेदनमिदम् । क्लिश्नाति विबाधते शाम्येदपकारान्निवर्त्तेत । समर्थकमिति अनुकूलाचरणेनोपशमाभावोऽयोग्यता या अनुपपन्न एव । दुर्जनसामान्यस्वभावेन प्रत्युपकारमात्रोपशाम्यत्वेन वैधर्म्येण समर्थ्यते इति भावः । कारणवैधर्म्येण कार्य्यसमर्थनं यथा । "वह्निरेव हि चिराद्दनाश्रये विलसत्येष तुषारदीधितिः । अजस्रमदमत्तसन्ततं ननु सन्तापयिनः प्रसूयते" । चन्द्रस्य सन्तापजनकत्वानुभवेन सम्मदजनकत्वे बाधं प्रति सन्दधतीं विरहिणीम् प्रति सख्या उक्तिरियम् । अनाश्रयेऽवचनस्थे । अत्र सूर्य्यस्य सन्तापजनकत्वप्रदर्शनेन तद्विरुद्धस्य चन्द्रस्य सन्तापविरुद्धसम्मदजनकत्वमुपपन्नम् । कार्य्यवैधर्म्येण कारणसमर्थनमाह सहसेति विरुद्धं विरुद्धजन्यम् । समर्थकमिति सम्पद्विरुद्धे कार्य्ये विपदि विवेकविरुद्धविवेकाभावजन्यत्वज्ञानेन सम्पदि विवेकजन्यत्वं दृढं प्रत्याय्यते । यज्जन्यं यद्विरुद्धं तत्तत्कारणविरुद्धजन्यमेवेति नियमादिति भावः । अत्र घटत्वादौ व्यभिचारवारणाय जन्यमिति ।

**हेतोर्वाक्यपदार्थत्वे काव्यलिङ्गं निगद्यते ।**

तत्र वाक्यार्थता यथा ।

"यत्त्वन्नेत्रसमानकान्तिसलिले मग्नं तदिन्दीवरं
मेघैरन्तरितः प्रिये ! तव मुखच्छायानुकारी शशी ।
येऽपि त्वद्गमनानुकारिगतयस्ते राजहंसा गता-
स्तत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते" ॥

अत्र चतुर्थपादे पादत्रयवाक्यानि हेतवः । पदार्थता यथा मम ।

"त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम् ।
न धत्ते शिरसा गङ्गां भूरिभारभिया हरः" ॥

अत्र द्वितीयार्द्धे प्रथमार्द्धमेकपदं हेतुः । अनेकपदं यथा मम ।

---

(य) काव्यलिङ्गालङ्कारमाह । हेतोरिति । वाक्यपदार्थत्वे वाक्यपदान्यतरप्रतिपाद्यते वाक्यार्थस्य पदार्थस्य वा हेतुत्वे व्यङ्ग्ये इति पर्यवसितोऽर्थः । क्रियान्वयसमाप्तौ वाक्यार्थत्वम् । अन्यथापदार्थत्वम् । अयमेव हेत्वलङ्कार उच्यते । यत्त्वन्नेत्रेति वर्षाजनितोत्कण्ठस्य प्रोषितस्योक्तिरियम् । मुखच्छायानुकारी मुखकान्तिसदृशः । गता मानसमिति शेषः । सादृश्यविनोदमात्रं सादृश्यमात्रेण विनोदः । मात्रपदेन सङ्गमव्यवच्छेदः । दैवेन दुर्दैवेन । चतुर्थपादे चतुर्थपादप्रतिपाद्ये सादृश्यमात्रविनोदाभावे । पादत्रयवाक्यानि पादत्रयरूपवाक्यार्थाः । त्वद्वाजीति अत्र कविप्रौढोक्तिसिद्धं तादृशपङ्किलत्वं सम्भाव्यमानभूरिभारभयकारणकहरगङ्गात्यागे हेतुः । वास्तवहेतूदाहरणन्तु । "वदनाम्बुरुहालोकनिन्दितेन्दुप्रभाभराम् । तामवेक्ष्य मनोजस्य को युवा न वशंवदः" । अत्र पूर्वार्द्धस्य एकपदस्यार्थः परा-

"पश्यन्त्यसंख्यपथगां त्वद्दानजलवाहिनीम्।
देव! त्रिपथगात्मानं गोपयत्युग्रमूर्द्धनि"॥ (य)

इह केचित् वाक्यार्थगतेन काव्यलिङ्गेनैव गतार्थतया कार्य्यकारणभावेऽर्थान्तरन्यासं नाद्रियन्ते तदयुक्तम्। तथा ह्यत्र हेतुस्त्रिधा भवति ज्ञापको निष्पादकः समर्थकश्चेति। तत्र ज्ञापकोऽनुमानस्य विषयः। निष्पादकः काव्यलिङ्गस्य। समर्थकोऽर्थान्तरन्यासस्येति। पृथगेव का कार्य्यकारणभावेऽर्थान्तरन्यासः काव्यलिङ्गात्। तथा हि "यत्त्वन्नेत्रेत्यादौ" चतुर्थपादवाक्यम्। अन्यथा साकाङ्क्षतयाऽसमञ्जसमेव स्यादिति पादत्रयगतवाक्यं निष्पादकत्वेनापेक्ष्यते। "सहसा विदधीतेत्यादौ" तु।

परापकारनिरतैर्दुर्जनैः सह सङ्गतिः।
वदामि भवतस्तत्त्वं न विधेया कदाचन"॥

इत्यादिवदुपदेशमात्रेणापि निराकाङ्क्षतया स्वतोऽपि गतार्थं सहसा विधानाभावं सम्प्रहरणं सोपपत्तिकमेव

---

द्यर्थे हेतुः। पश्यन्त्यसंख्यपथगामिति अत्र पूर्वार्द्धे क्रियान्वयासमाप्तौ वाक्यत्वमनापन्नमनेकपदघटितं तदर्थस्य हेतुता। अत्रापि कविप्रौढोक्तिसिद्धो हेतुः। सम्भाव्यमानमात्मगोपनं कार्य्यम्। वास्तवहेतूदाहरणन्तु। अपाङ्गान्तनटन्नेत्र "वीक्ष्यमाणमनागपि। अनङ्गसचिवाः कान्ता हरन्ति जगतां मनः"।

(र) कार्य्यकारणभावेऽर्थान्तरन्यासमनङ्गीकुर्वतः काव्यप्रकाशकारादेर्मतं दूषयति इह केचिदिति। पदार्थगतेन काव्यलिङ्गेनार्थान्तरन्यासासम्भवादाह वाक्यार्थगतेनेति। अन्यथा हेत्वनुक्तौ साकाङ्क्षतया कारणजिज्ञासया। असमञ्जसं हृदयप्रतिपत्तिजननाक्षमं पाद-

करोतीति पृथगेव कार्य्यकारणभावेऽर्थान्तरन्यासः काव्य-लिङ्गात्।

"न धत्ते शिरसा गङ्गां भूरिभारभिया हरः।
त्वद्वाजिराजिनिर्धूतधूलिभिः पङ्किला हि सा"॥

इत्यत्र हिशब्दोपादानेन पङ्किलात्वादितिवद्धेतुत्वस्य स्फुटतया नायमलङ्कारः। वैचित्र्यस्यैवालङ्कारत्वात्। (२)

**अनुमानन्तु विच्छित्त्या ज्ञानं साध्यस्य साधनात्।**

यथा।

"जानीमहेऽस्या हृदि सारसाक्ष्या
विराजतेऽन्तः प्रियवक्त्रचन्द्रः।
उत्कान्तिजालैः प्रसृतैस्तदङ्ग-
ष्वापाण्डुता कुड्मलताक्षिपद्मे"॥

---

त्रयगतवाक्यं पादत्रयस्वरूपवाक्यं सम्पादकत्वेन निष्पादकप्रतिपाद-कत्वेन सतोऽपि हेतूक्तिं विनापि गतार्थं निःसंशयप्रतिपादितस्वार्थम् तथाच हेत्वाकाङ्क्षया यद्वाक्यं यद्वाक्यमपेक्षते तदर्थस्य तदर्थो निष्पा-दकः स एव काव्यलिङ्गस्य विषयः। यत्र हेतूपदेशादिना हेतुनिरपेक्षं वाक्यं तत्र हेतुवाक्यस्यार्थः समर्थक एव स चार्थान्तरन्यासस्य विषयः। एवंविधं भेदमनङ्गीकृत्य समर्थकहेतोरपि काव्यलिङ्गविषयत्वस्वीकारे-ऽर्थान्तरन्यासमात्रोच्छेदप्रसङ्ग इति भावः।

(२) अनुमानालङ्कारमाह। अनुमानन्त्विति विच्छित्त्या अलङ्कारा-न्तरादिकृतवैचित्र्येण परिपुष्टवैचित्र्यमितिशेषः। साध्यस्य व्यापकस्य साधनात् साधनगोचरव्याप्यत्वज्ञानात्। अनुमितिं प्रति साधनस्य हेतुत्वाङ्गीकारेऽतीतानागतलिङ्गकानुमितिर्न स्यात्। जानीमहे इति विरहवर्णनमिदं जानीमहे अनुमिनुमः। विरहजन्यपाण्डुत्वाक्षिकुड्म-

अत्र रूपकवशाद्विच्छित्तिः यथा वा ।

"यत्र पतत्यबलानां दृष्टिर्निशिताः पतन्ति तत्र शराः ।
तच्चापरोपितशरो धावत्यासां पुरः स्मरो मन्ये" ॥

अत्र कविप्रौढ़ोक्तिवशाद्विच्छित्तिः । उत्प्रेक्षायामनिश्चिततया प्रतीतिरिह तु निश्चिततयेत्युभयोर्भेदः । ( ल )

**अभेदेनाभिधाहेतुर्हेतोर्हेतुमता सह ।**

यथा मम । "तारुण्यस्य विलासः" इत्यत्र वशीकरणहेतुर्नायिकावशीकरणत्वेनोक्तः । विलासहासयोस्त्वध्यवसायमूलोऽयमलङ्कारः ।

**अनुकूलं प्रातिकूल्यमनुकूलानुबन्धि चेत् ।**

---

त्तयोश्च ; प्रियवक्त्रचन्द्रकिरणजन्यत्वमुत्प्रेक्ष्य हेतुः क्रियते । अत्र रूपकोत्प्रेक्षाभ्यां परिपुष्टवैचित्र्यमनुमानमलङ्कारः । कविप्रौढ़ोक्तिजन्यविच्छित्तिपरिपुष्टवैचित्र्यमनुमानमुदाहरति यथा वेति । तत्रस्मात् आसामबलानां मन्ये अनुमिनोमि । अत्राबलादृष्टिपातसहचरितशरपातोऽबलापुरोवर्त्तिचापरोपितशरजन्योऽबलादृष्टिपातसहचरितशरपातत्वादित्यनुमानम् । तत्रेतरस्य बाधात् स्मरस्य सिद्धिः । वस्तुतस्त्वलङ्कारादिसहकारं विनापि यत्र वैचित्र्यमनुभूयते तत्राप्ययमलङ्कारो यथा । "विकसन्ति कदम्बानि स्फुटन्ति कुटजद्रुमाः" । अत्र वर्षाकालानुमानम् ।

(व) अभिधाहेत्वलङ्कारमाह । अभेदेनेति हेतोर्हेतुमता कार्येण सहाभेदेनाभेदारोपेण अभिधाहेतुरित्यर्थः । अत्राभेदे तृतीया । कारणे कार्यस्याभेदारोप एवाभिधाहेतुरित्यर्थः । तारुण्यस्येति । अत्र प्रकरणान्नायिकाया लाभः । हासः प्रकाशः । नन्वत्र लक्षणया वशीकरणकारणप्रतीतिरेव न त्वभेदप्रतीतिरित्यत आह विलासहासयोस्त्विति ।

यथा ।

"कुपितासि यदा तन्वि ! निधाय करजक्षतम् ।
बधान भुजपाशाभ्यां कण्ठमस्य दृढं तदा" ॥

अस्य च विच्छित्तिविशेषस्य सर्वालङ्कारविलक्षणत्वेन स्फुरणात् पृथगलङ्कारत्वमेव न्याय्यम् । (व)

**वस्तुनो वक्तुमिष्टस्य विशेषप्रतिपत्तये ।**
**निषेधाभास आक्षेपो वक्ष्यमाणोक्तगो द्विधा ॥**

अत्र वक्ष्यमाणविषये क्वचित् सर्वस्यापि सामान्यतः सूचितस्य निषेधः क्वचिदंशोक्तावंशान्तरे निषेध इति द्वौ भेदौ, उक्तविषये च क्वचिद्वस्तुस्वरूपस्य निषेधः क्वचिद्वस्तुकथनस्येति द्वावित्याक्षेपस्य चत्वारो भेदाः । क्रमेण यथा ।

---

ध्यवसायः आहार्याभेदप्रतीतिः । तथा च नायिकायां विलासहासयोः कार्यकारणभावरूपसम्बन्धाभावेन कारणलक्षणाया असम्भवादाहार्याभेदप्रतीतिरवश्यमङ्गीकरणीया तत्साहचर्यात् प्रकृतेऽप्याहार्यप्रतीतिरेव न तु लाक्षणिकी प्रतीतिरिति भावः । अनुकूलालङ्कारमाह । अनुकूलमिति । अनुकूलानुबन्धि आनुकूल्यकरम् । कुपितेति नायिकां प्रति सख्यावचनमिदम् । अत्र करजक्षतभुजबन्धनयोः प्रातिकूल्यं नायकानुकूल्यपरम् ।

(व) आक्षेपालङ्कारमाह । वस्तुन इति । विशेषप्रतिपत्तये विवक्षितवस्तुनो वक्तुर्वा वैलक्षण्यसूचनाय । विवक्षितस्य वक्ष्यमाणोक्तत्वरूपद्वैविध्येनाक्षेपस्यापि द्वैविध्यमाह वक्ष्यमाणोक्तगा इति वक्ष्यमाणविषय उक्तविषयश्चेत्यर्थः । सर्वस्यापि समुदितस्यापि । वक्ष्यमाणविषये विवक्षितकथनाभावस्यैव वैलक्षण्यव्यञ्जकत्वमिति । तत्र प्रकारान्तरासम्भवात् द्वितीयप्रकारस्यैव वस्तु तत्कथननिषेधत्वेन द्वैविध्यमाह उक्तविषये

"मरणशरणगतविधुरायां भणामि सख्याः कृते किमपि।
चणमिह विश्राम्य सखे! निर्दयहृदयस्य किं न वदाम्यथ वा" ॥

अत्र सख्या विरहस्य सामान्यतः सूचितस्य वच्यमाणविशेषे निषेधः।

"तव विरहे हरिणाचो निरीक्ष्य नवमालिकां विदलिताम्
हन्त नितान्तमिदानीमाः किं हतजल्पितैरथ वा" ॥

अत्र मरिष्यतीत्यंशो नोक्तः। (अ)

"बालअ णाहं दूती तुअ पिओसि त्ति ण मह वावारो।
सा मरइ तुज्झ अअसो एअं धम्मक्खरं भणिम" ॥

अत्र दूतीत्यस्य वस्तुनो निषेधः।

"विरहे तव तन्वङ्गी कथं चपयतु चपाम्।
दारुणव्यवसायस्य पुरस्ते भनितेन किम्" ॥

---

सेति मरणशरणगतेति। कृते निमित्तम्। विरहस्य कान्तविच्छेदस्य। सामान्यतो विरहत्वेन सूचितस्य मरणशरणगतेत्यनेन निर्दयहृदयेत्यनेन च व्यञ्जितस्य विशेषे मरणयोग्यत्वेनातिमहति निषेध इति विवचितस्य वचननिषेधेनैव निषेध इति भावः। इदानीं त्वयि गतेऽपि सावश्यं मरिष्यतीति त्वयि तन्निवेदनमनर्थकमिति विवचितवस्तुनो विरहस्य मरणाव्यभिचारित्वरूपवैलचण्यं विशेषकथननिषेधेनैव व्यज्यते। विरहविशेषस्य प्रकरणादिना वाच्यवत् स्फुटप्रतीयमानतया तत्कथननिषेधस्याकिञ्चित्करत्वे नाभासत्वम्। तवेति विदलितां विकसिताम्। अत्र जल्पनस्य निन्दया सूचितस्य मरिष्यतीत्यंशस्य सुहृदनिष्टत्वेनाशक्यवक्तव्यत्वं वस्तुवैलचण्यं प्रतीयते।

(अ) बालअ इति। बालक नाहं दूती तस्याः प्रियोऽसीति न मम व्यापारः। सा म्रियते तवायश एवं धर्माचरं भणामि इति सम्।

अत्र कथनस्यैव निषेधः । प्रथमोदाहरणे सख्या अवश्य-भावि मरणमिति विशेषः प्रतीयते । द्वितीयेऽशक्यवक्तव्य-त्वादि । तृतीये दूतीत्वे यथार्थवादित्वम् । चतुर्थे दुःखस्यातिशयः । न चायं विहितनिषेधः । अत्र निषेधाभा-सः स्यात् । ( घ )

---

दूतीत्वेन कथितात्मनः सख्या वचनमिदम् । धर्माचरं यथार्थवचनम् । अत्र स्वस्मिन् । सतोऽपि दूतीत्वस्य निषेधेन दूत्यन्तरवन्नाहं मिथ्याव-दामीति स्ववैलक्षण्यं व्यज्यते । निषेधस्यारोप्यमाणत्वादाभासत्वम् । विरह इति वर्षारम्भे प्रवसन्तं नायकं प्रति सख्या वचनमिदम् । दारुण व्यवसायस्य * दुरुच्छेदतत्समीपप्रापणनिश्चयस्य । अत्र पूर्वार्द्धे तत्समीपं त्वं याहीति वक्तुमिष्टं वस्तु तस्य व्यञ्जकनिषेधेनैवार्थतो निषेधः सिध्य-तीति न लक्षणगमनानुपपत्तिरित्यभिप्रायेणाह कथनोक्तस्यैवेति पुर्वार्द्ध-स्यैवेत्यर्थः । अवश्यम्भाविमरणं मरणाव्यभिचारित्वम् विरहविशेषस्य वस्तुनो वैलक्षण्यम् । अशक्येति अशक्यं वक्तव्यं वचनं यस्य तत्त्वम् । आदिना अतिप्रसिद्धत्वपरिग्रहः । दूतीत्वे यथार्थवादित्वं दूतीत्वे सत्यपि यथार्थवादित्वं दुःखस्य दूतीदुःखस्य । न चाक्षेपालङ्कारघटकनिषेधो वास्तवनिषेध एव न तु निषेधाभास इति वाच्यम् । आक्षेपालङ्कारे निषेधाभासस्यैव वैचित्र्याधायकत्वादित्यभिप्रायेणाह न चेति । अयमा-क्षेपालङ्कारघटकनिषेधः ।

---

* दुरन्तचेष्टस्य वर्षासु प्रियविच्छेदहेतुत्वात् व्यवसायस्य निन्दाक-थनस्योक्तस्यैवेति उक्तस्यैव सखी कान्तविरहकालयापनकारणजिज्ञासा-रूपवस्तुनः कथनस्य निषेध इत्यर्थः । अत्र तादृशजिज्ञासा दुःखातिशयं जनयतीति तन्निवेदनं न कार्यमिति सख्यन्तरापेक्षया स्ववैलक्षण्यं सूचितम् ।

**अनिष्टस्य तथार्थस्य विध्याभासः परोमतः ।**

तथेति पूर्ववद्विशेषप्रतिपत्तये । यथा

"गच्छ गच्छसि चेत् कान्त ! पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान्" ॥

अत्रानिष्टत्वाद्गमनस्य विधिः प्रस्खलद्रूपो निषेधे पर्य्यवस्यति । विशेषश्च गमनस्यात्यन्तपरिहार्य्यत्वरूपः प्रतीयते ।

**विभावना विना हेतुं कार्य्योत्पत्तिर्यदुच्यते ।**
**उक्तानुक्तनिमित्तत्वाद्द्विधा सा परिकीर्त्तिता ॥**

विना कारणमुपनिबध्यमानोऽपि कार्य्योदयः किञ्चिदन्यत् कारणमपेक्ष्यैव भवितुं युक्तः । तच्च कारणान्तरं क्वचिदुक्तं क्वचिदनुक्तमिति द्विधा ! यथा ।

"अनायासकृशं मध्यमशङ्कतरले दृशौ ।
अभूषणमनोहारि वपुर्वयसि सुभ्रुवः" ॥

अत्र वयोरूपनिमित्तमुक्तम् । अत्रैव "वपुर्भाति मृगीदृशः" इति पाठेऽनुक्तम् । (स)

---

(स) प्रकारान्तरेणाक्षेपालङ्कारमाह । अनिष्टस्येति । परो निरुक्तरूपादन्य आक्षेप इत्यनुषज्यते । प्रस्खलद्रूपोऽत्यन्तमसम्भवन् । विभावनालङ्कारमाह । विभावनेति । हेतुं प्रसिद्धकारणम् । किञ्चिदप्रसिद्धं वयसि यौवने । "वयः पक्षिणि बाल्यादौ वयोयौवनसामके इति कोषः" ।

**सति हेतौ फलाभावो विशेषोक्तिस्तथा द्विधा।**

तथेत्युक्तानुक्तनिमित्तत्वात्। तत्रोक्तनिमित्ता यथा।

"धनिनोऽपि निरुन्मादा युवानोऽपि न चञ्चलाः।
प्रभवो प्यप्रमत्तास्ते महामहिमशालिनः"॥

अत्र महामहिमशालित्वं निमित्तमुक्तम्। अत्रैव चतुर्थपादे "कियन्तः सन्ति भूतले" इति पाठेत्वनुक्तम्। अचिन्त्यनिमित्तत्वं चानुक्तनिमित्तत्वस्यैव भेद इति पृथङ्नोक्तम्। यथा।

"स एकस्त्रीणि जयति जगन्ति कुसुमायुधः।
हरतापि तनुं यस्य शम्भुना न हृतं बलम्"॥

अत्र तनुहरणेऽपि बलाहरणे निमित्तमचिन्त्यम्। इह च कार्याभावः कार्यविरुद्धसद्भावमुखेनापि निबध्यते। विभावनायामपि कारणाभावः कारणविरुद्धसद्भावमुखेनापि एवञ्च "यः कौमारहरः स एव हि वरः" इत्यादेरुत्कण्ठाकारणविरुद्धस्य निबन्धनाद्विभावना। "यः कौमारहर" इत्यादेः कारणस्य च कार्यविरुद्धाया उत्कण्ठाया निबन्धनाद्विशेषोक्तिः। एवञ्चात्र विभावनाविशेषोक्त्योः सङ्करः। शुद्धोदाहरणन्तु मृग्यम्। (ह)

---

(ह) विशेषोक्त्यलङ्कारमाह। सतीति। फलाभावः फलाभावकथनम्। अत्र निमित्तं फलाभावप्रयोजकं उत्कण्ठायाः कारणम्। नायकाद्यभावस्तद्विरुद्धो नायकादिः कार्यमुत्कण्ठाभावः। कार्यत्रकारणविरुद्धसद्भावमुखेन कार्यत्राभावकारणाभावोक्तौ विशेषोक्तिविभावनयोः शुद्धोदाहरणे क्रमेण यथा। "धनिनोऽपि स्थिरस्वान्ता यौवने धर्मतत्पराः।

जातिश्चतुर्भिर्जात्याद्यैर्गुणो गुणादिभिस्त्रिभिः ।
क्रियाक्रियाद्रव्याभ्यां यद् द्रव्यं द्रव्येण वा मिथः ॥
विरुद्धमिव भासेत विरोधोऽसौ दशाकृतिः ।

क्रमेण यथा ।

"तव विरहे मलयमरुद्दवानलः शशिरुचोऽपि सोष्माणः ।
हृदयमलिरुतमपि भिन्ते नलिनीदलमपि निदाघरविरस्याः ॥
सन्ततमुसलासङ्गाद्‌बहुतरगृहकर्म्मघटनया नृपते ! ।
द्विजपत्नीनां कठिनाः सति भवति कराः सरजसुकुमाराः ॥
अजस्य गृह्णतो जन्म निरीहस्य हतद्विषः ।
स्वपतो जागरूकस्य याथार्थ्यं वेद कस्तव ॥
वल्लभोत्सङ्गसङ्गेन विना हरिणचक्षुषः ।
राकाविभावरीजानिर्विषज्वालाकुलोऽभवत् ॥
नयनयुगासेचनकं मानसवृत्त्यापि दुष्प्रापम् ।
रूपमिदं मदिराक्ष्या मदयति हृदयं दुनोति च मे" ॥

---

अनात्मश्लाघिनः शूरा भूपाला रघुवंशजाः" । अत्र स्थिरत्वान्तत्वमुन्माद-विरुद्धं धर्म्मोपार्जनकारणं वार्द्धकं तद्विरुद्धं यौवनम् ।

(च) विरोधालङ्कारमाह । जातिरिति । जात्याद्यैरित्याद्यपदेन गुणक्रियाद्रव्याणां ग्रहणम् । गुणक्रियाद्रव्याणां जात्या सह विरोधस्तु गुणादिभिः सह जातिविरोध एवेति पृथङ्नोक्तः । विरुद्धमिवेति क्वचिदारोपेण क्वचित् कविप्रौढोक्त्या क्वचित् कालभेदेन क्वचिदीश्वरादि-महिमातिशयेन समावेशं लभमानैर्जात्यादिभिः सह जात्यादेर्यदापाततो विरोधभानं स विरोधालङ्कार इति भावः । चतुर्भिः पादैर्जात्यादीनां चतुर्णां विरोधमाह तवेति । गुणेन सह गुणविरोधमाह सन्ततेति

"त्वद्वाजिराजीत्यादि", 'वल्लभोत्सङ्गेत्यादि" श्लोके चतुर्थपादे "मध्यन्दिनदिनाधिप" इति पाठे द्रव्ययोर्विरोधः । अत्र "तव विरह" इत्यादौ पवनादीनां बहुव्यक्तिवाचकत्वाज्जातिशब्दानां दावानलोणाहृदयभेदनसूर्य्यैर्जातिगुणक्रियाद्रव्यरूपैरन्योन्यं विरोधो मुखत आभासते । (च)

---

सुषमं मान्यकगडनोपकरणं भवति त्वयि । भवता द्विजेभ्यस्तथा वित्तानि दत्तानि यथा तेषां दासीभिरेव कर्मकरणात् तत्पत्नीनां कराः सुकुमाराः जाता इति भावः । अत्र काठिन्यकोमलत्वयोर्गुणयोरापाततो विरोधभानं समाधानन्तु कालभेदेन । गुणस्य क्रियया विरोधमाह अजस्रेति । स्रजस्य मेध्यासनः संयोगरूपतया गुणत्वम् । गुणस्य द्रव्येण सह विरोधमाह वल्लभेति । राकाविभावरीजानि पूर्णचन्द्रः । अत्र पूर्णचन्द्रेण द्रव्येन सह दाहजनकत्वस्य गुणस्य तादात्म्येनापाततो विरोधभानं विरहहेतुकत्वात्तु समाधानम् । क्रियायाः क्रियया सह विरोधमाह नयनेति । व्याख्यातमिदं प्राक् । अत्र प्रहर्षजननक्रियया सह खेदजननक्रियाया आपाततो विरोधभानं विरहहेतुकत्वात्तु समाधानम् । क्रियाया द्रव्येण सह विरोधमाह त्वद्वाजीति । "त्वद्वाजिराजिनिर्धूतधूलीपटलपङ्किलाम् । न धत्ते शिरसा गङ्गां भूरिभारभिया हरः" । अत्र हरपदेन गङ्गाधरत्वानुपस्थितेरापाततो विरोधो न भासते अत उत्तरार्द्धमेवं पठनीयम् । गङ्गां गङ्गाधरो धत्ते नातिभारेण मूर्द्धनि इति । एवमप्यहरोऽपीति गङ्गाधरोऽपीत्यर्थः । अत्र हरेण द्रव्येण सह गङ्गाधरणाभावक्रियायास्तादात्म्येनापाततो विरोधभानम् । द्रव्यस्य द्रव्येन सह विरोधमाह वल्लभेति । अत्र चन्द्रसूर्य्ययोर्द्रव्ययोस्तादात्म्येन विरोधभानम् । जातिशब्दानामिति प्रतिपाद्यतया जातीनां पवनत्वादीनामिति शेषः । यद्वा पवनादीनामिति धर्मपरो निर्देशः । पवनत्वादीनामिति तदर्थः । जातिः शब्दो येषाम् । दावानलेति दावानलत्वेत्यर्थः । मुखतः प्रथमतः ।

विरहहेतुकत्वात् समाधानम्। अत्र "अजस्येति" आदावजत्वादिगुणस्य ग्रहणादिक्रियया विरोधः। भगवतः प्रभावस्यातिशयित्वात्तु समाधानम्। "त्वद्वाजीत्यादौ" "हरोऽपि शिरसा गङ्गां न धत्ते" इति विरोधः। "त्वद्वाजो" त्यादिकविप्रौढ़ोक्त्या तु समाधानम्। स्पष्टमन्यत् विभावनायां कारणाभावेनोपनिबध्यमानत्वात् कार्य्यमेव बाध्यत्वेस प्रतीयते। विशेषोक्तौ च कार्य्याभावेन कारणमेव। इह त्वन्योन्यं द्वयोरपि बाध्यत्वमिति भेदः।

**कार्य्यंकारणयोर्भिन्नदेशतायामसङ्गतिः। (क)**

यथा।

"सा बाला वयमप्रगल्भमनसः सा स्त्री वयं कातराः
सा पीनोन्नतिमत्पयोधरयुगं धत्ते सखेदा वयम्।

---

(क) विरहहेतुकत्वादिति मलयमरुदादेर्विरहिणां सन्ताधजनकत्वेन दावानलत्वाद्यारोपात् समावेश इति भावः। नन्वजत्वं जन्माभाव एव कथमस्य गुणत्वमिति चेत्। जातिक्रियाभिन्नानां विशेषणानामपि गुणत्वस्वीकारात्। विशेषोक्तौ चेति। कार्य्याभावेनोपनिबध्यमानत्वात् कारणमेव बाध्यत्वेन प्रतीयते इत्यन्वयः। इह त्विति विरोधालङ्कारे त्वित्यर्थः। ननु मलयमरुद्दवानल इत्यादौ रूपकमेवेति चेन्न। सहानवस्थाननियमरूपविरोधस्य पुरः स्फुर्त्तिकतया वैचित्र्याधायकत्वात्। असङ्गत्यलङ्कारमाह। कार्य्यकारणयोरिति। भिन्नदेशतायां वैयधिकरण्ये।

(ख) सा बालेति सखायं प्रति नायिकामप्राप्य दुःखभाज उक्तिरियम्। अप्रगल्भमनसः कार्य्याकार्य्यविचारणाक्षमचेतसः। तस्या बालात्वेन मदुपभोगरूपकार्य्यविचारणाक्षमत्वं युक्तम् मम तु

साक्रान्ता जघनस्थलेन गुरुणा गन्तुं न शक्ता वयं
दोषैरन्यजनाश्रितैरपटवो जाताः स्म इत्यद्भुतम्" ॥ *

अस्याश्चापवादत्वादेकदेशस्थयोर्विरोधे विरोधालङ्कारः । (ख)

---

तत्प्राप्त्युपायरूपकार्य्यविधारणाक्षमत्वमित्याश्चर्य्यत्वम् । कातराः सभय- चेतसः स्त्रीणां स्वाभाविकं भयं मम तु स्मरभयमिति भावः । स्त्री वयम् । अत्र बालत्वादीनां कारणानां नायिकावृत्तित्वं अप्रगल्भमनस्त्वादीनां कार्य्याणां नायकवृत्तित्वमिति वैयधिकरण्यम् । केचित्तु कार्य्यकारणभावयोर्धर्मयोरत्यन्तं भिन्नदेशतया युगपदुत्पन्नत्वेन ख्याति- रसङ्गतिः । एकधर्मिण्यवच्छेदकभेदेन भिन्नदेशतावारणायात्यन्तमिति । तेन दष्टो भुजङ्गेन पदेऽच्चि घूर्णनेत्यत्र नातिव्याप्तिः । दंशनघूर्णनयो- रेकस्मिन् शरीरे सङ्गतिसत्त्वात् । कालभेदेन तदुभयख्यातिवारणाय युगपदिति । तेन क्रिया शरीरेऽत्र परत्र भोग इत्यत्र नातिव्याप्ति- रित्याहुस्तन्न । दन्तक्षतं कपोले वध्वा वेदना सपत्नीनामित्यत्र स्वोक्तो- दाहरणे बोधकाभावेन कार्य्यकारणयोर्युगपदुत्पन्नत्वख्यातिविरहात् । सा स्त्री वयं कातरा इत्यत्र स्त्रीत्वस्य कारणस्योत्पन्नत्वाभावादेव कार्य्यो- त्पत्तियुगपदुत्पन्नत्वख्यातिविरहात् । न च स्त्रीत्वस्य उत्पन्नत्वमारोप्यमिति वाच्यम् । तस्य वैचित्र्यानावहत्वेन तदनङ्गीकारस्यान्याय्यत्वात् । दष्टो भुजङ्गेनेत्यादौ युगपदुत्पन्नत्वख्यातिविरहादेवातिप्रसङ्गभङ्गेन तद्वा- रणार्थमुपात्तस्यात्यन्तपदस्यानर्थकत्वाच्च । अस्मन्मते तु कार्य्यकारण- योर्वैयधिकरण्यस्यैव यत्र विच्छित्तिविशेषजनकत्वं तत्रैव तस्यालङ्कारत्व- स्वीकारः । दष्टो भुजङ्गेनेत्यादौ कार्य्यकारणयोरवच्छेदकभेदसत्त्वेऽप्य- धिकरणस्यैकत्वेन वैयधिकरण्याभावात् क्रिया शरीरेऽत्रेत्यादौ वैयधि- करण्यस्य सत्त्वेऽपि तस्य विच्छित्तिविशेषानाधायकत्वादेव नातिप्रसङ्गः । ननु कार्य्यकारणयोः सहानवस्थानलक्षणो विरोधोऽत्रास्ति तस्यैवा- लङ्कारत्वमास्तां किमधिककल्पनयेत्यत आह अस्याश्चेति । कार्य्य-

**गुणौ क्रिये वा यत् स्यातां विरुद्धे हेतुकार्य्ययोः ।**
**यद्वाऽऽरब्धस्य वैफल्यमनर्थस्य च सम्भवः ॥**
**विरूपयोः सङ्घटना या च तद्विषमं मतम् ।**

क्रमेण यथा ।

"सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोकाभरणं प्रसूते" ॥

अत्र कारणरूपासिलतायाः "कारणगुणा हि कार्य्यगुणमारभन्ते" इति स्थितेर्विरुद्धा शुक्लयशस उत्पत्तिः ।

"आनन्दममन्दमिमं कुवलयदललोचने ! ददासि त्वम् ।
विरहस्त्वयैव जनितस्तापयतितरां शरीरं मे" ॥

अत्रानन्दजनकस्त्रीरूपकारणात्तापजनकविरहोत्पत्तिः ।

"अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया ।
धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः" ॥

---

कारणवैयधिकरण्यरूपाया असङ्गतेर्विलक्षणवैचित्र्याधायकत्वेन विशेषत्वात् । सामानाधिकरण्ययोर्विरोधे विरोधालङ्कारस्य विषय इत्यर्थः ।

(ग) विषमालङ्कारमाह । गुणाविति । कार्य्यकारणयोर्गुणौ विरुद्धौ क्रिये विरुद्धे यत् स्यातां तद्विषममित्यग्रेणान्वयः । वैफल्यमभिमतफलानवाप्तिः । अनर्थस्य अनिष्टफलस्य विरूपयोरेकत्र वस्तुन्यत्यन्तासम्भवतोः । सङ्घटनं मेलनम् । कार्य्यकारणयोर्गुणविरोधमाह सद्य इति । कारणगुणा इति । यद्यप्यवयविरूपकार्य्यगुणक्रिययोरेकावयवरूपकारणगुणक्रियाजन्यत्वनियमस्तथापि तत्र तथा दर्शनात् अन्यत्रापि तथात्वं कविसृष्टौ कल्प्यते इति नानुपपत्तिरिति भावः । कार्य्यकारणयोः क्रियाविरोधमाह आनन्दमिति । नायिकां प्रति नायकस्योक्ति-

अत्र केवलं काङ्क्षितधनलाभो नाभूत् प्रत्युत चारवारिभिर्व्वदनपूरणम् । (ग)

"क्व वनं तरुवल्कभूषणं नृपलक्ष्मीः क्व महेन्द्रवन्दिता ।
नियतं प्रतिकूलवर्त्तिनो वत धातुश्चरितं सुदुःसहम्" ॥

अत्र वनराजश्रियोर्विरूपयोः सङ्घटना । इदं मम ।

यथा वा ।

"विपुलेन सागरशयस्य कुक्षिणा
भुवनानि यस्य पपिरे युगक्षये ।
मदविभ्रमासकलया पपे पुनः
स पुरस्त्रियैकतमयैकया दृशा" ॥

---

रियम् अत्र कारणस्य नायिकायाः क्रिया आनन्ददानं नायिकाकार्य्यस्य विरहस्य क्रिया शरीरतापनं तद्विरुद्धम् । यद्यपि आनन्दतापौ गुणौ तथाप्यत्र तयोर्द्धात्वर्थघटकत्वेन क्रियात्वेनैव व्यवहारः । तृतीयं प्रकारमाह अयमिति । अत्र समुद्रसेवाया धनप्राप्तिरूपफलस्यानवाप्तिः । क्षारवारिभिर्वदनपूरणस्यानिष्टस्य प्राप्तिः । सेव्यस्यानभीष्टसम्पादकत्वातिशयं स्वस्य दुरदृष्टातिशयं वा व्यञ्जयति ।

(घ) चतुर्थं प्रकारमाह क्व वनमिति अत्र कस्मिन् वस्तुनि श्रीरामेऽत्यन्तमसम्भवतोर्वनवासराजश्रीलाभयोर्मेलनं वस्तुतस्तु तदानीं श्रीरामस्य राजश्रीलाभ एव नास्ति इति न विरूपयोः सङ्घटनं किन्तु दशरथस्य प्रयत्नस्य रामस्य राजत्वलाभरूपफलानवाप्तिः । प्रत्युतानिष्टस्य रामवनवासस्य सम्भव इति तृतीयप्रकार एवेदं पर्य्यवस्यति । एवञ्च "शरीरादपि मृद्वङ्गी केयमायतलोचना । अयं कुचकुकूलाग्निकर्कशो मदनानलः" । इत्युदाहरणमस्य वेदितव्यम् । अत्राङ्गमार्दवमदनानलसहनयोरेकत्र नायिकायां मेलकं । विपुले नेत्याद्युक्ता

**समं स्यादानुरूप्येण श्लाघा योग्यस्य वस्तुनः ।**

यथा ।

"शशिनमुपगतेयं कौमुदी मेघमुक्तं
जलनिधिमनुरूपं जह्नुकन्याऽवतीर्णा ।
इति समगुणयोगप्रीतयस्तत्र पौराः
श्रवणकटु नृपाणामेकवाक्यं विवव्रुः" ॥ (घ)

---

इत्यादावपि विषमत्वं यथायोगमनुगन्तव्यमिति काव्यप्रकाशोक्तं चतुर्थप्रकार एव सङ्गमयति यथावेति विपुलेनेति । सागरशयस्य श्रीकृष्णस्य । सदविस्मितेन असकलया कटाक्षरूपया पपे पीतः कटाक्षेण सर्वाङ्गीनं दृष्ट इत्यर्थः । यत्र यदेकदेशेन कुक्षिणा जगत्पीयते स पुनश्चक्षुरेकदेशेन स्त्रिया पीयत इति विरूपयोर्मेलनम् । चतुर्थः प्रकारः कर्तृद्वयप्रयोग एव सम्भवतीति वदन्तः केचिदेतदवयवावयविनोः कार्य्यकारणयोः क्रियाविरोधोदाहरणमेतद्वदन्ति । तथा कुक्षिरवयवः कारणं तत्कर्तृका भुवनपानक्रिया कुक्षिकार्य्यस्यावयविनः सागरशयस्य कर्मतासम्बन्धेन पानक्रियया विरुध्यते भुवनपातृकुक्षिमतः कटाक्षपेयत्वस्य विरुद्धतया भानादिति तन्न * प्रमाणान्तरवेद्यस्य हेतुहेतुमद्भावस्यात्रबोधाभावेनाप्रत्ययात् । धारणदर्शनरूपयोः पानयोः स्वतो विरोधाभावात् उपदर्शितविरोधस्य क्रियागतत्वाभावेन प्रकृतानुपयोगित्वाच्च । समालङ्कारमाह । समं स्यादिति आनुरूप्येण योग्यकर्मणा श्लाघा प्रशंसा । शशिनमितीन्दुमती कौमुदी अनुरूपमज

---

* कृष्णशरीरस्य जन्यत्वाङ्गीकारेऽपि जगत्पातृकुक्षिस्तदजनकत्वात् योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययमित्युपक्रम्याभिहितेन लेलिह्यसे ग्रसमानः समन्ताल्लोकान् समग्रान् वदनैर्ज्वलद्भिरित्यनेन जगत्पातृकुक्षिमदीश्वरदेहस्य नित्यत्वाभिधानात् ।

**विचित्रं तद्विरुद्धस्य कृतिरिष्टफलाय चेत् ॥**

यथा ।

"प्रणमत्युन्नतिहेतोर्जीवनहेतोर्विमुञ्चति प्राणान् ॥
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः" ॥

**आश्रयाश्रयिणोरेकस्याधिक्येऽधिकमुच्यते ।**

आश्रयाधिक्ये यथा ।

"किमधिकमस्य ब्रूमो महिमानं वारिधेर्हरिर्यत्र ।
अज्ञात एव शेते कुक्षौ निक्षिप्य भुवनानि" ॥

आश्रिताधिक्ये यथा ।

"युगान्तकालप्रतिसंहृतात्मनो
जगन्ति यस्यां सविकाशमासत ।

---

शयिनमुपगतेत्यर्थः । एवमन्येऽपि । समगुणयोर्योगेन प्रीतिर्येषां ते तथा । नृपाणामिन्दुमतीलिप्सया समागतानामजेतर राजानाम् । यिवक्षुः कथयामासुः ।

(ङ) विचित्रालङ्कारमाह । विचित्रमिति तद्विरुद्धस्य इष्टविरुद्धस्य प्रणमति अपकर्षो भवति । उन्नतिरुत्कर्षः । जीवितं प्राणरक्षा । दुःखीयति दुःखमिच्छति । अधिकालङ्कारमाह । आश्रयेति । एकस्याश्रयस्याश्रयिणो वा आधिक्येन महत्त्वातिशये प्रतिपाद्ये इति शेषः । अज्ञात एवेति एकदेश एव शयनात् समुद्रस्थैः सर्वैः सत्त्वैर्न ज्ञायत इत्यर्थः । अत्र कुक्षौ निक्षिप्येत्यनेन हरेर्महत्त्वमवगम्यते समुद्रैकदेशे तच्छयनेनाश्रयस्य समुद्रस्यातिशयमहत्त्वं व्यज्यते । युगान्तेति । नारदागमे श्रीकृष्णस्य हर्षातिशयवर्णनमिदम् । युगान्तकाले प्रलयसमये प्रतिसं-

तनौ ममुस्तत्र न कैटभद्विष-
स्तपोधनाभ्यागमसम्भृता मुदः" ॥ (ङ)

अन्योन्यमुभयोरेकक्रियायाः करणं मिथः।

यथा।

"त्वया सा शोभते तन्वी तया त्वमपि शोभसे।
रजन्या शोभते चन्द्रश्चन्द्रेणापि निशीथिनी" ॥

यदाधेयमनाधारमेकञ्चानेकगोचरम्।
किञ्चित् प्रकुर्वतः कार्य्यमशक्यस्येतरस्य वा ॥
कार्यस्य करणं दैवाद्विशेषस्त्रिविधस्ततः।

---

कृताः स्वोदरं प्रवेशिता आत्मानः समस्तप्राणिनो येन तस्य कैटभद्विषः श्रीकृष्णस्य यस्यां तनौ जगन्ति सविकाशमयन्त्रणं यथा स्यात्तथा आसत तस्यां तनौ तपोधनस्य नारदस्याभ्यागमसम्भवा मुदो न ममुर्नावकाशं प्राप्ताः। अत्र जगन्तीत्यादिना श्रीकृष्णतनोराश्रयस्याधिक्यमुक्तम्। तत्रावकाशालाभादाश्रितानां मुदामतिमहत्त्वम् व्यज्यते।

(ङ) अन्योन्यालङ्कारमाह। अन्योन्यमिति। अत्र चेदित्यनुषज्यते। उभयोरेकजातीययोः क्रिययोर्मिथः। परस्परं चेत्कारणं तदा अन्योन्यनामालङ्कारो भवतीत्यर्थः। त्वया सेति। अत्र परस्परयोरुभयोः परस्परं कारणम्। क्रियापदं गुणस्याप्युपलक्षणम्। तेन "निशया रुचिरश्चन्द्रश्चन्द्रेण रुचिरा निशा" इत्यत्राप्ययमलङ्कारः। "दुदोह गां स यज्ञाय शस्याय मघवा दिवम्" इत्यादिव्याहृतये उभयोरिति। अत्र स्वं स्वं दोहनं प्रत्येव स्वं स्वं कारणं न तु परस्परस्य दोहनं प्रति परस्परं कारणम्। अत्र कारणयोः क्रिययोश्च

क्रमेण यथा ।

दिवसमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमपि कवयो न ते वन्द्याः ॥
कानने सरिदुद्देशे गिरीणामपि कन्दरे ।
पश्यन्त्यन्तकसङ्काशं त्वामेकं रिपवः पुरः ॥
गृहिणी सचिवः सखी मिथः प्रियशिष्या ललिते कलाविधौ ।
करुणाविमुखेन मृत्युना हरता त्वां वद किं न मे हृतम्" ॥

इति रघौ । (च)

---

शब्देकत्र वैचित्र्यपरिपोषकमेव न तु नियामकम् । तेन "नलेन भायाः शशिना निशेव त्वया स भायान्निशय शशीवेत्यादौ" शब्दभेदेऽप्ययमलङ्कारः । विशेषालङ्कारमाह । यदाधेयमिति । यच्छब्दो यदर्थः । इतरस्य शक्यस्य कार्यस्य अप्रक्रान्तस्य कारणमुत्पत्तिर्दैवात् प्रतिसन्धानं विना । दिवसपीति अनल्पो गुणानां माधुर्यादीनां गुणो यासां ताः । अत्र निर्वाहत्वेन प्रसिद्धाधारान् कवीन् विनापि काव्यरूपाणां गिरां स्थितिः । कानन इति । अत्र आधनातिशयेनैकेनैव स्वभावेन काननादावनेकत्र युष्मत्पदार्थस्य युगपत् स्थितिः । पर्यायालङ्कारलक्षणे क्रमादित्यस्योपादानादत्र परिशेषाद् युगपदित्यस्य लाभः । गृहिणीति । इन्दुमत्या मरणे तत्पत्युरजस्यायं विलापः । गृहिणी इतेत्यन्वयः । एवमन्यत्रापि । त्वमेव गृहिण्यादि सर्वमिति भावः । इष्टोपदेशकत्वात् सचिवः मिथो रहसि समीहितसाधकत्वात् सखी । ललिते कलाविधौ सुरते । नन्विन्दुमतीहरणमेव सचिवादिहरणं तस्यैकमेव कार्यम् कथमत्र कार्यान्तरोत्पत्तिरिति चेत् । सचिवादिहरणे तात्पर्यात् ।

**व्याघातःस तु केनापि वस्तु येन यथाकृतम्**
**तेनैव चेदुपायेन कुरुतेऽन्यस्तदन्यथा ॥**

यथा । "दृशा दग्धं मनसिजमित्यादि" ।

**सौकर्येण च कार्यस्य विरुद्धं क्रियते यदि ।**

व्याघात इत्येव ।

"इहैव त्वं तिष्ठ द्रुतमहमहोभिः कतिपयैः
समागन्ता कान्ते! मृदुरसि न चायासहसना ।
मृदुत्वं मे हेतुः सुभग! भवता गन्तुमधिकं
न मृद्वी सोढा यद्विरहकृतमायासमसमम्" ॥

अत्र नायकेन नायिकाया मृदुत्वं सहगमनाभावहेतुत्वेनोक्तम् । नायिकाया च प्रत्युत सहगमने ततोऽपि सौकर्येण हेतुतयोपन्यस्तम् । (क)

---

(क) व्याघातालङ्कारमाह व्याघात इति । येनोपायेन यथा यत् प्रकारं कृतं तदन्यथा तद्विरुद्धप्रकारमित्यर्थः । दृशा दग्धमिति हरस्य दृशेत्यर्थः दृशैवेति । कटाक्षरूपया दृशेत्यर्थः । इत्थं क्रियया जयमुक्त्वा रूपेणापि जयमाह विरूपाक्षस्येति । विरूपमक्षुन्दरं त्रित्वाल्लोचनानां वामं सुन्दरमतो जय इत्यर्थः । अत्र दृगुपायेन हरेण साधितस्य दाहस्य दृगुपायेनैव वामलोचनादिभिरन्यथाकरणम् । प्रकारान्तरेणापि व्याघातमाह सौकर्येणेति । क्रियते कथ्यते केनापि येनोपायेन यत्कार्यमुच्यते तदन्येन तेनैवोपायेन सौकर्येण तद्विरुद्धं कार्यं यद्युच्यते तदा व्याघात इति तात्पर्यार्थः । इहैवेति त्वमिहैव तिष्ठ न तु मया सह गच्छ अधिकं मृदुत्वमित्यन्वयः । अयमसहनत्वम् ।

**परं परं प्रति यदा पूर्वपूर्वस्य हेतुता ।**
**तदा कारणमाला स्यात् ॥**

यथा । ।

"श्रुतं कृतधियां सङ्गाज्जायते विनयः श्रुतात् ।
लोकानुरागो विनयान्न किं लोकानुरागतः" ॥

**तन्मालादीपकं पुनः ।**
**धर्मिणामेकधर्मेण सम्बन्धो यद्यथोत्तरम् ॥**

यथा ।

"त्वयि सङ्गरसम्प्राप्ते धनुषाऽऽसादिताः शराः ।
शरैररिशिरस्तेन भूस्तया त्वं त्वया यशः" ॥

अत्रासादनक्रिया धर्म्मः ।

**पूर्वं पूर्वं प्रति विशेषणत्वेन परं परम् ।**
**स्थाप्यतेऽपोह्यते वा चेत् स्यात्तदेकावली द्विधा ॥**

क्रमेणोदाहरणम् ।

"सरो विकसिताम्भोजमम्भोजं भृङ्गसङ्गतम् ।
भृङ्गा यत्र ससङ्गीताः सङ्गीतं सस्मरोदयम्" ॥ (ज)

---

(ज) कारणमालालङ्कारमाह । परंपरमिति । पूर्वपूर्वस्य कार्य्यस्य । श्रुतमिति अध्ययनमित्यर्थः । कृतधियां पण्डितानाम् । मालादीपकालङ्कारमाह । तन्मालादीपकमिति । त्वयीति तेन अरिशिरसा । तया भुवा । एकावल्यलङ्कारमाह । परं परमिति । यद्विशेष्यम् अपोह्यते निषिध्यते । अत्र सरदि । सराम्भोजभृङ्गसङ्गीतानि उत्तरोत्तरम विशेष्याणि पूर्वपूर्वेषु सरोऽम्भोजभृङ्गेषु विशेषणत्वेनोपन्यस्तानि ।

न तज्जलं यन्न सुचारुपङ्कजं
न पङ्कजं तद्यदलीनषट्पदम्।
न षट्पदोऽसौ न जुगुञ्ज यः कलं
न गुञ्जितं तन्न जहार यन्मनः" ॥

क्वचिद्विशेष्यमपि यथोत्तरं विशेषणतया स्थापितमपोहितञ्च दृश्यते। यथा।

"वाप्यो भवन्ति विमलाःस्फुटन्ति कमलानि वापीषु।
कमलेषु पतन्त्यलयः करोति सङ्गीतमलिषु पदम्"।

एवमपोहनेऽपि। (क)

उत्तरोत्तरमुत्कर्षो वस्तुनः सार उच्यते।

यथा।

"राज्ये सारं वसुधावसुधायामपि पुरं पुरे सौधम्।
सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम्" ॥ (ख)

---

(क) अपोहने त्वाह न तज्जलमिति। अत्र पङ्कजषट्पदगुञ्जितान्युत्तरोत्तरविशेष्याणि पूर्वपूर्वेषु जलपङ्कजषट्पदेषु विशेषणत्वेनापोहितानि। प्रकारान्तरेणाधिकात्वस्यालङ्कारमाह क्वचिदिति। एवमपोहनेऽपीति। "पुण्यक्षेत्रं न सर्वत्र पुण्यक्षेत्रे न नास्तिकाः। नास्तिकेषु न धर्मोऽस्ति न धर्मे दुःखहेतुता"। अत्र पूर्वपूर्वेषु विशेष्याः पुण्यक्षेत्रनास्तिकधर्माः। परपरेषु नास्तिकधर्मदुःखहेतुतास्तु विशेषणत्वेनापोहिता।

(ख) सारालङ्कारमाह। उत्तरोत्तरमिति वस्तुनो विशेषस्य उत्तरोत्तरमुत्कर्षः सार उच्यते इत्यर्थः। केचित्तु श्लोकस्थापनमुत्तरोत्तरोत्कर्षेणायमलङ्कारो भवति तथात्व एव वैचित्र्यविशेषप्रतीतेरित्याहुस्तन्न। "लोकत्रजि द्यौर्दिवि चादितेया अप्यादितेयेषु महान् महेन्द्रः। किन्तु

# यथासङ्ख्यमनुद्देश उद्दिष्टानां क्रमेण यत्।

मर्थीयति सोऽपि रागाज्जागर्त्ति कचा किमतः परा ते" इत्यादौ स्रोका-र्द्ध समाप्तिपर्य्यन्तमुत्कर्षसत्त्वेनास्यालङ्कारस्य सम्भवात्। राज्यं रा-ज्याङ्गं तत्र वसुधासारं तत्र पुरं तत्र सौधमट्टालिकागृहं सारं सौधव-र्त्तिनि तल्पं शय्यासारं शय्यावर्त्तिनि अनङ्गसर्वस्वं वराङ्गना सारेत्यर्थः। सर्वत्र निर्द्धारणे सप्तमी। एतदनुरोधेनैव राज्यादिपदानां मुख्यार्थपरि-त्यागः। तदुपादाने तु सामान्यविशेषभावाभावात् निर्द्धारणे सप्तमी न स्यात्। न हि भवति घटेषु पटः सुन्दर इति अत्र क्लीबाक्लीबयोः क्लीबः सचैकवद्वेति एकशेषेण क्लीबत्वमुपपन्नम्। यद्वा राजेन्द्र वसुधा सारं वस्त्वित्यर्थः। अथवा राजेन्द्र वसुधा सारं धनं तद्वदुपादेयमित्यर्थः। तथाच मेदिनी।"सारो बले स्थिरांशे च यन्मे पुंसि धने जले। न्यायेत्र क्लीबं त्रिषु वर इति"। केचित्तु राजेन्द्र राजत्वविषये यानि वस्तूनि तेषु वसुधासारम्। वसुधायामित्यादावधिकरणे सप्तमी। वसुधायां यानि वस्तूनि सन्ति तेषु पुरं सारम्। एवमग्रेऽपि। सर्वत्र तेष्विति निर्द्धारणे सप्तमी। राजत्वस्याधिकरणत्वासम्भवाद्विषयत्वविवक्षा। राजत्व-वसुधादीनां सामान्यविशेषाभावाभावेन निर्द्धारणासम्भवात्। यानि इत्यादेरध्याहारः सारस्य रूपस्य विशेषणत्वाभावात् न क्लीबत्वादि इत्याहुः। तन्न। धर्मे वेदा इति वत् राजेन्द्र वसुधेत्यत्र वसुधायाः प्रतिपादकत्वाभावेन राजत्वस्य प्रतिपाद्यत्वरूपविषयत्वासम्भवात्। यानीत्यध्याहारेण न्यूनपदत्वदोषप्रसङ्गात् सारस्य विशेषणत्वं विनोत्-कर्षप्रतीतेः सामानाधिकरण्येन विशेषणविशेष्ययोरूप्यरूपकभावास-म्भवाच्च। न हि भवति चन्द्रः सुन्दरमिति। यदि सारपदस्य धनप-रत्वं विवक्षते तदा रूप्यरूपकभावः सम्भवति। उत्कर्षप्रतीतिस्तु व्यञ्जनयैवेति ध्येयम्।

(ट) यथासंख्यालङ्कारमाह। उद्दिष्टानामिति। अनूद्देशः पश्चा-दुद्देशः। बहुत्वमत्राविवक्षितम्। तेन "ददर्श कृष्णं रामञ्च व्रजे

यथा ।

"उन्मीलन्ति नखैर्लुनीहि वहति क्षौमाञ्चलेनावृणु
क्रीड़ाकाननमाविशन्ति वलयक्वाणैः समुत्त्रासय ।
इत्थं वञ्जुलदक्षिणानिलकुहूकण्ठेषु साङ्केतिक-
व्याहाराः सुभग ! त्वदीयविरहे तस्याः सखीनां मिथः" ॥

**क्वचिदेकमनेकस्मिन्ननेकं चैकगं क्रमात् ।**
**भवति क्रियते वा चेत्तदा पर्य्याय इष्यते ॥**

क्रमेण यथा ।

"स्थिताः क्षणं पक्ष्मसु ताड़िताधराः
पयोधरोत्सेधनिपातचूर्णिताः ।
वलीषु तस्याः स्खलिताः प्रपेदिरे
क्रमेण नाभिं प्रथमोदविन्दवः ॥ (ट)

---

गोदोहनं गतौ । पीतनीलाम्बरधरौ शरदम्बुरुहेक्षणौ" । इत्या-
दावपि अयमलंकारः । उन्मीलन्तीति प्रोषितं प्रति तद्गृहा-
गतस्य कस्य चिदुक्तिरियम् । उन्मीलन्ति स्फुटन्ति । वञ्जुला इति
कर्त्तृपदं संकेतगम्यम् । लुनीहि वञ्जुलमुकुलानिति कर्मपदं संकेत-
गम्यम् । वहति दक्षिणानिल इति संकेतगम्यम् । आवृणुत इति
संकेत्यम् । आविशन्ति कुहूकण्ठा इति संकेत्यम् । समुत्त्रासय तानिति
संकेत्यम् । वञ्जुलादीनां नामग्रहणे नायिकाया विरहपीड़ातिशयो-
भवतीति तत्सखीनामयं सांकेतिको व्याहारः । संकेतस्थान योग्यकर्त्राद्य-
ध्याहारः । पर्य्यायालंकारमाह । क्वचिदेकमिति भवति स्वयं भवति ।
क्रियते परेण क्रियते । स्थिताः क्षणमिति तस्याः पार्वत्याः । तत्र
प्रथमोदबिन्दुरूपमेकं वस्तु पक्ष्मादावनेकत्र क्रमेण स्वयं भवति ।

विचरन्ति विलासिन्यो यत्र श्रोणिभरालसाः ।
वृककाकशिवास्तत्र धावन्त्यरिपुरे तव ॥
विसृष्टरागादधरान्निवर्त्तित-
स्तनाङ्गरागादरुणाच्च कन्दुकात् ।
कुशाङ्कुरादानपरिक्षताङ्गुलिः
कृतोऽक्षसूत्रप्रणयो तया करः ॥
ययोरारोपितस्तारो हारस्तेऽरिवधूजनैः ।
निधीयन्ते तयोः स्थूलाः स्तनयोरश्रुबिन्दवः" ॥

एषु च क्वचिदाधारः संहतरूपोऽसंहतरूपश्च क्वचिदाधेयमपि । यथा "स्थिताः क्षणमित्यत्र" उदबिन्दवः पक्ष्मादावसंहतरूप आधारे क्रमेणाभवन् । "विचरन्ति" इत्यत्राधेयभूता वृकादयः संहतरूपारिपुरे क्रमेणाभवन् । एवमन्यत् । अत्र चैकस्यानेकत्र क्रमेणैव वृत्तेर्विशेषालङ्काराद्भेदः । विनिमयाभावात् परिवृत्तेः । (ठ)

---

(ठ) अनेकस्यैकत्र भवनमुदाहरति विचरन्तीति । अत्रैकस्मिन्नरिपुरे विलासिनीनां वृकादीनाञ्चानेकानां क्रमेण भवनम् । एकस्यानेकत्र करस्योदाहरति विसृष्टरागादिति । अत्रैकस्तपसः पूर्वं रागदानार्थमधरे क्रीड़ार्थं कन्दुके कृतस्तपःकाले तु कुशांकुरेऽक्षसूत्रे च कृत इत्ययं क्रमः । अनेकस्यैकत्र कारणमाह ययोरिति । तारः शुद्धमुक्ता घटितः । अत्रैकस्मिन् स्तने पतिसत्त्वे हारस्य तदसत्त्वेऽश्रुबिन्दूनां करणम् । क्वचिदाधेयमपीति संहतरूपमसंहतरूपञ्चेत्यर्थः । ननु द्विविधोऽत्र पर्य्यायः परिवृत्त्यभिन्न एव पूर्वत्र त्यक्तग्रहणरूपत्वेन परत्रैकवस्तुत्यागानन्तरापरवस्तुग्रहणरूपत्वेन परिवृत्तिसम्भवादत आह विनिमयाभावादिति । एकवस्तुत्यागोपाधिका परवस्तूपादानरूपस्य विनिमयस्याभावादित्यर्थः ।

परिवृत्तिर्विनिमयः समन्यूनाधिकैर्भवेत् ।

क्रमेणोदाहरणम् ।

"दत्त्वा कटाक्षमेणाक्षी जग्राह हृदयं मम ।
मया तु हृदयं दत्त्वा गृहीतो मदनज्वरः" ॥

अत्र प्रथमेऽर्द्धे समेन द्वितीयेऽर्द्धे न्यूनेन ।

"तस्य च प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यतेऽधुना ।
येन जर्ज्जरकलेवरव्ययात् क्रीतमिन्दुकिरणोज्ज्वलं यशः" ॥

अत्राधिक्येन ।

प्रश्नादप्रश्नतो वापि कथिताद्वस्तुनो भवेत् ।
तादृगन्यव्यपोहश्चेच्छाब्द आर्थोऽथवा तदा ॥
परिसङ्ख्या

---

परिवृत्तेर्भेद इत्यन्वयः । तथाच पूर्वत्र वस्तुभेदाभावादपरत्रापरवस्तूपादानं प्रत्यन्यवस्तुत्यागस्य नियमाभावात् पर्य्यायद्वये परिवृत्त्यभेदसम्भावना नास्तीति भावः ।

(ङ)परिवृत्त्यलंकारमाह । परिवृत्तिरिति । समेनेति द्वयोरेवोपादेयत्वात् समत्वम् । ज्वरस्य भयहेतुत्वात् न्यूनत्वम् । परिसंख्यालंकारमाह । प्रश्नादिति कथितात् उपादेयत्वेन निर्णीयोक्तात् तादृगिति कथितसदृशेत्यर्थः । व्यपोहो निषेधः । अत्र वाच्यव्यपोह्यां प्रश्नपरिसंख्यामाह किमिति भूषणमत्युत्कर्षप्रयोजकम् । दृढं स्थिरतरम् । रत्नस्य भङ्गापहरणादिसत्त्वान्न तथात्वम् । आर्य्यैर्मन्वादिभिश्चरितं किं कार्य्यं सुकृतं पुण्यजनकं तपस्यादि न दोषः पापजनकः परदारगमनादि । किमप्रतिहतं चक्षुः उत्कृष्टज्ञानसाधनं धिषणा मनो न नेत्रम् । तस्यावरकप्रतिहन्यमानत्वात् जानातीति प्रत्युत्तरपरित्तष्टस्य प्रश्नकर्त्तुः प्रत्युत्तरयितृप्रशंसेयम् । यद्वा स्वस्यैवोत्तरत्वमभिप्रेत्य प्रश्ना-

क्रमेणोदाहरणम् ।

"किंभूषणं सुदृढमत्र यशो न रत्नं
किं कार्य्यमार्य्यचरितं सुकृतं न दोषः ।
किञ्चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति कस्तदपरः सदसद्विवेकम्" ॥

अत्र व्यवच्छेद्यं रत्नादि शाब्दम् ॥

"किमाराध्यं सदा पुण्यं कश्च सेव्यः सदागमः ।
को ध्येयो भगवान् विष्णुः किं काम्यं परमं पदम्" ॥

अत्र व्यवच्छेद्यं पापाद्यार्थम् । अनयोः प्रश्नपूर्वकत्वम् ।
अप्रश्नपूर्वकत्वे यथा । (ढ)

"भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे ।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम्" ॥

"बलमार्त्तभयोपशान्तये विदुषां सम्मतये बहु श्रुतम् ।
वसु तस्य न केवलं विभोर्गुणवत्तापि परप्रयोजनम्" ॥

---

न्तरमाह जानातीति सदसद्विवेकं को जानातीति प्रश्नः । तदभिप्रायबोधेन स्पष्टस्योत्तरमिदम् । त्वदपर इति तन्तु न जानासीति अर्थव्यपोहोऽत्र बोध्यः । केचित्तु तदपर इति पाठं कल्पयित्वा धिषणातोऽपर इति व्याचक्षते । तन्न । धिषणाप्रशंसायां जानातीत्यनन्वयापत्तेः । प्रतीयमानव्यपोह्यां प्रश्नपरिसंख्यामाह किमाराध्यमिति कार्य्यमित्यर्थः । पुण्यं कार्य्यं न पापं नरकसाधनत्वात् । सत्समागमः सेव्यो नासत्समागमः पापसाधनत्वात् । विष्णुर्ध्येयो न धनं भयप्रमादादि साधनत्वात् । परमं पदं पारमार्थिकं सुखं काम्यं न वैषयिकं सुखमनित्यत्वात् ।

(ढ) वाच्यव्यपोह्यामप्रश्नपरिसंख्यामाह भक्तिरिति । व्यसनमनुशीलनं युवतिरूपकामास्त्रे । प्रतीयमानव्यपोह्याम प्रश्न परिसंख्या

श्लेषमूलत्वे चास्य वैचित्र्यविशेषः। यथा।

"यस्मिंश्च राजनि जितजगति पालयति महीं चित्रकर्म्मसु वर्णसङ्कराश्चापेषु गुणच्छेदा इत्यादि"।

**उत्तरं प्रश्नस्योत्तरादुन्नयो यदि।**
**यच्चासकृदसम्भाव्यं सत्यपि प्रश्न उत्तरम्॥**

यथा मम।

"वीक्षितुं न क्षमा श्वश्रूः स्वामी दूरतरं गतः।
अहमेकाकिनी बाला तवेह वसतिः कुतः"॥

अनेन पथिकस्य वसतियाचनं प्रतीयते।

"का विसमा देव्वगई किं लद्धव्वं जणो गुणग्गाही
किं सोक्खं सुकलत्तं किं दुग्गेज्झं खलो लोओ"॥

अत्रान्यव्यपोहे तात्पर्य्याभावात् परिसंख्यातो भेदः।
न चेदमनुमानम्। साध्यसाधनयोर्द्वयोर्निर्देश एव तस्याङ्गी

---

काह बलमिति। आर्त्त भयोपशान्तये न परपीड़नाय। सम्मतये सम्यग्ज्ञानाय न विवादाय। श्रुतमध्ययनम्। तस्य दशरथस्य चित्रकर्म्मसु न मनुष्येषु। वर्णानां शुक्लादि द्रव्याणाम् विप्रादीनाञ्च। सङ्करो मेलकः। चापेषु न जनेषु गुणस्य मौर्व्याश्छेदो द्वैधीभवनमथ च गुणस्य विद्यादेश्छेदो विरहः। उत्तरालंकारमाह। उत्तरमिति। उन्नयः प्रणीयमानत्वम्। असकृदिति प्रश्ने उत्तरे चान्वेति। असम्भाव्यं लोकप्रसिद्धगम्यम् लोकविलक्षणमित्यर्थः। का विषमेति का विषमा दैवगतिः किं लब्धव्यं जनोगुणग्राही। किं सौख्यं सुकलत्रं किं दुर्ग्राह्यं खलो लोक इति सं। सौख्यं सुखसाधनम्। अत्र प्रतीयमानाव्यपोह्याया: प्रश्नपरिसंख्याया: प्रसक्तिं वारयति अत्रेति। ननुवीक्षितुं न क्षमेत्यादावुत्तरात् प्रश्नानुमानमित्यनुमानमित्यनुमानालंकार एवायमित्यत आह न चेदमिति।

कारात् । न च काव्यलिङ्गम् । उत्तरस्य प्रश्नं प्रत्यजनकत्वात् । (ढ)

**दण्डापूपिकयान्यार्थागमोऽर्थापत्तिरिष्यते ।**

"मूषिकेन दण्डो भक्षित" इत्यनेन तत्सहचरितमपूपभक्षणमर्थादायतं भवतीति नियतसमानन्यायादर्थान्तरमापततीत्येष न्यायो दण्डापूपिका । अत्र च क्वचित् प्राकरणिकादर्थादप्राकरणिकस्यार्थस्यापतनं क्वचिदप्राकरणिकार्थात् प्राकरणिकार्थस्येति द्वौ भेदौ । क्रमेणोदाहरणम् ।

"हारोऽयं हरिणाक्षीणां लुठति स्तनमण्डले ।
मुक्तानामप्यवस्थेयं के वयं स्मरकिङ्कराः ॥

---

ननूत्तरेण प्रश्नं कल्पयञ्चेत्तर्हि हेतुतया उत्तरवाक्ये व्यङ्ग्यत्वेन काव्यलिङ्गालंकार एव स्यादत आह न चेति ।

(ण) अर्थापत्त्यलंकारमाह । दण्डापूपिकयेति दण्डापूपन्यायेनेत्यर्थः । अन्यार्थागमो भिन्नार्थप्रतीतिः । दण्डापूपन्यायमाह मूषिकेणेति । इति शब्द्हेतौ । अनेन मूषिकेण तत्सहचरितं दण्डभक्षणसहचरितं अर्थादौचित्यात् आयातमवगतं भवतीत्यनन्तरं वदन्यत्रापीति पूरणीयम् । नियतेति नियतस्य तद्वत्त्वेन निश्चितस्य समानन्यायात् तुल्यसामर्थ्यात् अर्थान्न तु शब्दात् । आपतति प्रतीतिविषयो भवति मूषिकस्य हि दण्डभक्षणं दुष्करं तन्निष्पत्तौ तत्सहचरितापूपभक्षणमतिसुकरत्वात् यथासम्भाव्यते तथात्रापि सहचरितैकसिद्धेरपरसिद्धिरौचित्यात्सम्भाव्यते इति भावः । हारोऽयमिति । मुक्तानां हारघटकरत्नविशेषाणां निवृत्तसंसारदुःखानाञ्च । मुक्तानान्तावत् योषिदालिङ्गनं दुर्घटं तन्निष्पत्ता-

विललाप सवाष्पगद्गदं सहजामप्यपहाय धीरताम्।
अतितप्तमयोऽपि मार्दवं भजते कैव कथा शरीरिणाम्॥

अत्र च समानन्यायस्य श्लेषमूलत्वे वैचित्र्यविशेषो यथोदाहृते "हारोऽयमित्यादौ"। न चेदमनुमानम्। समानन्यायस्य सम्बन्धरूपत्वाभावात्। (ण)

**विकल्पस्तुल्यबलयोर्विरोधश्चातुरी यतः।**

यथा "नमयन्तां शिरांसि धनूंषि वा कर्णपूरीक्रियन्तामाज्ञा मौर्व्यो वा"। अत्र शिरसां धनुषाञ्च नमनयोः सन्धिविग्रहोपलक्षणत्वात् सन्धिविग्रहयोश्चैकदा कर्त्तव्यतासम्भवाद्विरोधः। स चैकपक्षाश्रयणपर्य्यवसानः। तुल्यबलत्वात्र धनुःशिरोनमनयोरपि स्पर्द्धया सम्भाव्यमानत्वात्। चातुर्य्यं चात्रौपम्यगर्भत्वेन। एवं "कर्णपूरीक्रियन्तामिति"। अत्रापि। एवम्।

---

वस्तुतानामस्माकं सुतरां तत् स्यादिति पुंस्त्वमत्र समानो धर्मः। सुकृतानां वर्णनीयत्वेन प्राकरणिकत्वम्। विललापेति। सोऽजः। द्रव्यत्वमत्र समानधर्मः। अयसो वर्णनीयत्वाभावात् अप्राकरणिकत्वम्। सम्बन्धरूपत्वाभावादिति व्याप्तिरूपत्वाभावादित्यर्थः व्याप्तिश्च ज्ञाप्यज्ञापकयोरव्यभिचरितसमानाधिकरण्यरूपः। प्रकृते तु एकस्य साधर्म्यग्रहेण औचित्यात् तत्समानस्य तादृशधर्मान्तरग्रहो भवति इति ज्ञाप्यज्ञापकयोर्व्याप्त्यसम्भवादिति भावः।

(ण) विकल्पालङ्कारमाह। विकल्प इति तुल्यबलत्वं तत्तदुदाहरणे यथायथं बोध्यम्। अर्थतोऽलङ्कारान्तरादेः। चारुता वैचित्र्यं यदि स्यादित्यर्थः। विरोधश्चातुरी यत इति पाठस्तु न सम्यक् अर्थासङ्गतेः। चातुरीयत इति पाठे तु यतोविरोधात् चातुरी वैचित्र्यं सविकल्प

"युष्माकं कुरुतां भवार्त्तिशमनं नेत्रे तनुर्वा हरेः" ।

अत्र श्लेषावष्टम्भेन चारुत्वम् ।

"दीयतामर्ज्जितं वित्तं देवाय ब्राह्मणाय वा" ॥

इत्यत्र चातुर्य्याभावान्नायमलङ्कारः । (त)

---

इत्यर्थः । नमयन्त्विति बलवद्युयुत्सोरुक्तिरियम् । अस्य इति कर्त्तृपदमत्रोह्यं । कर्णपूरीक्रियन्तां कर्णभूषणसदृशी क्रियन्तां कर्णसङ्गतीक्रियन्तामिति यावत् । अरिभिरिति कर्त्तृपदमत्रोह्यम् । नम्वसमर्थस्य शिरो नमनं समर्थस्य धनुर्नमनमिति कथं तुल्यबलत्वमत आह अत्र शिरसामिति सन्धिविग्रहयोर्वैरोच्छेदाय राजाद्यनुष्ठेयत्वात् तुल्यबलत्वम् । विरोधमुपपादयति सन्धिविग्रहयोरिति । ननु सर्वत्रोदाहरणे तादृशविरोधो न सम्भवतीत्यत आह स चेति विरोधश्चेत्यर्थः । तुल्यबलयोरेकतरस्यैव प्रकृतेऽन्वय एकपक्षाश्रयणं यस्य स इत्यर्थः । तथा च तुल्यबलयोरेकस्मिन् प्रकृतेऽनन्वयविरोध इति परमतात्पर्य्यम् । इदानीं धनुःशिरोनमनयोर्यथा कथञ्चित् तुल्यबलत्वमुपपाद्य उपलक्षणं विनैव लक्षणं सङ्गमयति तुल्यबलत्वमिति वक्तुः स्वर्ज्जीजन्यसम्भावनाविषयत्वादित्यर्थः । चातुर्य्यमिति वैचित्र्यमित्यर्थः । औपम्यगर्भत्वेनेति शिरोनमनस्योत्कटत्वेन धनुर्नमनस्योपमानत्वेन पर्य्यवसानमिति भावः । युष्माकमिति अत्र तनुनेत्रयोर्भवार्त्तिशमनसाधनक्षमत्वेन तुल्यबलत्वम् । तयोरेकतरस्यैव भवार्त्तिशमनरूपे प्रकृतकार्य्ये हेतुत्वेनान्वयो न तु समुच्चयवदुभयोरिति विरोधः । श्लेषावष्टम्भेन श्लेषानुकूल्येन । "पतत्यविरतं वारि नृत्यन्ति शिखिनो मुदा । अद्य कान्तः कृतान्तो वा दुःखस्यान्तं करिष्यति" अत्र विप्रलम्भशृङ्गारावष्टम्भेन चारुत्वम् । एवमन्यत्रापि यथायथं चारुत्वमवगन्तव्यम् । चारुतार्थत इति यदुक्तं तस्य व्यावृत्तिमाह दीयतामिति अत्र देवब्राह्मणयोरुत्तमपात्रत्वेन तुल्यबलत्वम् । प्रकृते दाने एकतरस्यैव सम्बन्धो न तूभयोरित्यस्ति विरोधः ।

समुच्चयोऽयमेकस्मिन् सति कार्य्यस्य साधके ।
खले कपोतिकान्यायात्तत्करः स्यात् परोऽपि चेत्॥
गुणौ क्रिये वा युगपत् स्यातां यद्वा गुणक्रिये ।

यथा मम ।

"हंहो धीर समीर! हन्त जननं ते चन्द्रलक्ष्माभृतो
दाक्षिण्यं जगदुत्तरं परिचयो गोदावरीवारिभिः ।
प्रत्यङ्गं दहसीह मे त्वमपि चेदुद्दामदावाग्निव-
न्मत्तोऽयं मलिनात्मको वनचरः किं वक्ष्यते कोकिलः" ॥

अत्र दाहे एकस्मिंश्चन्दनक्ष्माभृज्जन्मरूपे कारणे सत्यपि दाक्षिण्यादीनां हेत्वन्तराणामुपादानम् । अत्र सर्व्वेषामपि हेतूनां शोभनत्वात् सद्योगः । अत्रैव चतुर्थपादे मत्तादीनामशोभनानां योगादसद्योगः । सदसद्योगो यथा । (य)

"शशी दिवसधूसरो गलितयौवना कामिनी
सरो विगतवारिजं मुखमनक्षरं स्वाकृतेः ।

---

(य) समुच्चयालङ्कारमाह । समुच्चयोऽयमिति । खले कपोतिकान्यायस्य "वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत् पतन्ति ।" यथा भक्षणार्थं कपोतानां खले युगपत् पतनं तथैककार्य्यानुष्ठानार्थं युगपदनेकस्योपस्थानम् । प्रकारान्तरेण समुच्चयालङ्कारमाह गुणाविति । गुणश्च क्रियाभिन्नधर्म्ममात्रम् । क्रिया धात्वर्थरूपा । हंहो इति । विरहिण उक्तिरियम् । दाक्षिण्यम् दक्षिणदिग्भवत्वम् अथच सारल्यम् । किं वक्ष्यते कोकिल इति कोकिलः सुतरां दाहजनको भवतीति भावः । अयमर्थापत्त्यलङ्कारसङ्कीर्णः । सतामुपादेयानां कारणानां केवलानां योगःसद्योगः । तेषामेवानुपादेयानां योगोऽसद्योगः । उभयमिश्रणे सदसद्योगः ।

प्रभुर्धनपरायणः सततदुर्गतः सज्जनो
नृपाङ्गनगतः खलो मनसि सप्त शल्यानि मे" ॥

इह केचिदाहुः "शशिप्रभृतीनां शोभनत्वं खलस्याशोभनत्वमपि सदसद्योग इति"। अन्ये तु "शशिप्रभृतीनां स्वतः शोभनत्वं धूसरादीनां त्वशोभनत्वमिति" सदसद्योगः, अत्र हि शशिप्रभृतिषु धूसरादेरत्यन्तमनुचितत्वमिति विच्छित्तिविशेषस्यैव चमत्कारविधायित्वम्, "मनसि सप्त शल्यानीति" सप्तानामपि शल्यत्वेनोपसंहारश्च, "नृपाङ्गनगतः खल" इति प्रत्युत क्रमभेदाद्दुष्टत्वमावहति, सर्वत्र विशेष्यस्यैव शोभनत्वेन प्रक्रमादिति। इह च खले कपोतवत् सर्वेषां कारणानां साहित्येनावतारः। समाध्यलङ्कारे-

---

(८) शशीति मे मनसि सप्तैव शल्यानि दुःखदायकत्वात्। किं किमित्याह शशीति। स्त्रीकृतः शोभनशरीरस्य अक्षरं वचनहीनम्। धनपरायणो धनलालसत्वेन सदसद्विवेकहीनः। शशिप्रभृतीनामिति सज्जनपर्य्यन्तानाम्। धूसरत्वादीनामिति सततदुर्गतत्वपर्य्यन्तानां ग्रहणम्। खलस्य तु स्वतोऽशोभनत्वं नृपाङ्गनगतत्वस्य शोभनत्वमिति वैपरीत्येन सदसद्योगः। मनोदुःखम् प्रति धूसरत्वादिविशिष्टाश्चन्द्रादयः कारणानि कारणीभूतानां विशेष्याणां विशेषणानाञ्च यथासम्भवं सतामसताञ्च योग एव सदसद्योग इति भावः। अन्येषां मतमुपपादयति तत्र हीति विच्छित्तिविशेषस्यैवेत्येवकारेण मनसीत्यादेर्व्यावृत्तिः। नन्वेतन्निरर्थकमत आह मनसीति। तथाच वाक्यसमापकत्वेनैव तत्सार्थकमिति भावः। प्रथममतं दूषयति नृपाङ्गनगत इति। विशेष्यस्यैवेत्येवकारेणविशिष्टव्यवच्छेदः। तथाचात्र विशेष्यविशेषणयोर्योग एव वैचित्र्यावहो न तु विशिष्टानां योगः। क्रमभेदरूप-

त्वेककार्य्यम्प्रति साधके समग्रेऽप्यन्यस्य काकतालीयन्याये-नापतनमिति भेदः। (द)

"अरुणे च तरुणि! नयने तव मलिनञ्च प्रियस्य मुखम्।
मुखमानतञ्च सखि! ते ज्वलितश्चास्यान्तरे स्मरज्वलनः॥

अत्राद्येऽर्द्धे गुणयोर्यौगपद्यं द्वितीये क्रिययोः। उभयोर्यौगपद्ये यथा।

"कलुषञ्च तवाहितेष्वकस्मात् सितपङ्केरुहसोदरश्रि चक्षुः।
पतितञ्च महीपतीन्द्र! तेषां वपुषि प्रस्फुटमापदां कटाक्षैः"॥

"धुनोति चासिं तनुते च कीर्त्तिम्"।

इत्यादावेकाधिकरणेऽप्येष दृश्यते। न चात्र दीपकम्। एते हि गुणक्रियायौगपद्ये समुच्चयप्रकारानियमेन कार्य्यकारणकालनियमविपर्य्ययरूपातिशयोक्तिमूलाः। दीपकस्य चातिशयोक्तिमूलत्वाभावः। (ध)

---

दोषावहत्वादिति भावः। समाध्यलङ्कारादस्य भेदमाह इहेति साङ्गत्येन मिलितत्वेनावतारः। समाधाने समग्रे सर्व्वत्र पर्य्याप्ते काकतालीयन्यायेन अप्रतिसंहतत्वेनापतनमुपस्थापनम्। यत्र कार्य्यविशेषं मिलितान्येव कारणानि जनयन्ति स समुच्चयस्य विषयः। यत्र त्वेकस्मिन् कारणे फलसाधनायानुष्ठीयमाने दैवादुत्पन्नेन कारणान्तरेण तत्-फलस्य सुकरत्वं स समाधिरिति भावः।

(ध) गुणयौगपद्ये समुच्चयमाह अरुणेचेति। नायिकां प्रति सख्या उक्तिरियम्। नयने इत्यत्र द्वति शेषः। कलुषमिति रोषकषायितमित्यर्थः। सितपङ्केरुहस्य सोदरासदृशी श्रीः शोभा यस्य तत्। अस्य वैयधिकरण्य एव प्रयोगप्राचुर्य्यं विच्छित्तिविशेषजनकत्वञ्च। क्वचित् सामानाधिकरण्येऽपि प्रयोगमाह धुनोति चेति। कार्य्यका-

**समाधिः सुकरे कार्य्ये दैवाद्वस्त्वन्तरागमात् ।**

यथा ।

"मानमस्या निराकर्त्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्ज्जितम् ॥
प्रत्यनीकमशक्तेन प्रतीकारे रिपोर्यदि ।
तदीयस्य तिरस्कारस्तस्यैवोत्कर्षसाधकः" ॥

तस्यैवेति रिपोरेव । यथा मम ।

"मध्येन तनुमध्या मे मध्यं जितवतीत्ययम् ।
इभकुम्भौ भिनत्त्यस्याः कुचकुम्भनिभौ हरिः" ॥

**प्रसिद्धस्योपमानस्योपमेयत्वप्रकल्पनम् ।**
**निष्फलत्वाभिधानं वा प्रतीपमिति कथ्यते ॥**

क्रमेण यथा ।

"यत्त्वन्नेत्रसमानकान्तिसलिले मग्नं तदिन्दीवरमित्यादि"

---

:

रणयोः कालनियमः पौर्वापर्य्यं तस्य विपर्य्ययो यौगपद्यमारोपितं झटिति फलोत्पादनप्रतिपत्त्यर्थम् ।

(न) समाध्यलङ्कारमाह । समाधिरिति । दैवादकस्मात् वस्त्वन्तरागमात् कारणान्तरसमाधानात् कार्य्यं सुकरे सति समाधिरित्यर्थः । एतेन प्रक्रान्तकारणेन कार्य्यस्य दुष्करत्वं प्रतीयते । मानमिति । सखायं प्रति कस्यचिदुक्तिरियम् । दिष्ट्या भाग्येन उदीर्णमुत्पन्नम् । प्रत्यनीकालङ्कारमाह । प्रत्यनीकमिति । प्रतीकारे निग्रहे तदीयस्य रिपुसम्बन्धिनः । हरिः सिंहः । प्रतीपालङ्कारमाह । प्रसिद्धस्येति निष्फलत्वाभिधानमिति उपमानस्येत्यन्वयः । अभिधानं ज्ञापनं उपमाने पमेयभाववैपरीत्यमत्र ेति प्रतीपमुच्यते । द्वितीयपक्षे निष्फलत्वा-

"तद्वक्त्रं यदि मुद्रिता शशिकथा हा हेम सा चेद्द्युति-
स्तच्चक्षुर्यदि हारितं कुवलयैस्तच्चेत् स्मितं का सुधा।
धिक्कन्दर्पधनुर्भ्रुवौ यदि च ते किम्वा बहु ब्रूमहे
यत् सत्यं पुनरुक्तवस्तुविमुखः सर्गक्रमो वेधसः"॥

अत्र वक्त्रादिभिरेव चन्द्रादीनां शोभातिवहनात्तेषां निष्फलत्वम्।

**उक्त्वा चात्यन्तमुत्कर्षमत्युत्कृष्टस्य वस्तुनः।**
**कल्पितेऽप्युपमानत्वे प्रतीपं केचिदूचिरे॥ (न)**

यथा।

"अहमेव गुरुः सुदारुणाना-
मिति हालाहल! तात! मास्म दृप्यः।
ननु सन्ति भवादृशानि भूयो
भुवनेऽस्मिन् वचनानि दुर्ज्जनानाम्"॥

---

भिधानेनोपमेयस्य प्रकर्षप्रतीतेरुपमानप्रातिकूल्यमिति प्रतीपमुच्यते। आद्ये उपमानस्योपमेयत्वकल्पनेन द्वितीये वैफल्याभिधानेनापकर्षः प्रतीयते। तद्वक्त्रमिति शशिनः कथा सौन्दर्य्यप्रशंसा। हाशब्देन हेम्नः शोच्यत्वम् तेन च तस्य वैफल्यं प्रतीयते। विफलार्थो वा हा शब्दः। हारितं विफलीभूतम्। यद्वा हा खेदे रितं गतं नष्टमिति यावत्। यत् सत्यमिति वेधसः सर्गक्रमः पुनरुक्तवस्तुहीन इति यद्गीयते तत्सत्यमेवेत्यर्थः। एतेन केशपाशादिसत्त्वे चामरादीनां वैफल्यं प्रतीयते। वैफल्यमुपपादयति वक्त्रादिभिरेवेति। प्रकारान्तरेण प्रतीपालङ्कारमाह। उक्त्वेति। येन धर्मेण उत्कर्षं उच्यते तेनैव धर्मेणाप्रसिद्धमप्युपमानत्वं कल्प्यत इति भावः। अपिकारात् पूर्वोक्तप्रकारयोः समुच्चयः।

(प) अहमेवेति। हे हलाहल हे तात अहमेव सुदारुणानां

अत्र प्रथमपादे उत्कर्षातिशय उक्तः । तदनुक्तौ तु नायमलङ्कारः । यथा । "ब्रह्मेव ब्राह्मणो वदतीत्यादि" ।

**मीलितं वस्तुनो गुप्तिः केनचित्तुल्यलक्षणा**

अत्र समानलक्षणं वस्तु क्वचित् सहजं क्वचिदागन्तुकम् क्रमेण यथा ।

"लक्ष्मीवक्षोजकस्तूरीलक्ष्म वक्षःस्थले हरेः ।
ग्रस्तं नालक्षि भारत्या भासा नीलोत्पलाभया" ॥

तत्र भगवतः श्यामा कान्तिः सहजा ।

"सदैव शोणोपलकुण्डलस्य यस्यां मयूखैररुणीकृतानि ।
कोपोपरक्तान्यपि कामिनीनां मुखानि शङ्कां विदधुर्न यूनाम्"

अत्र माणिक्यकुण्डलस्यारुणिमा मुखे आगन्तुकः ।

**सामान्यं प्रकृतस्यान्यतादात्म्यं सदृशैर्गुणैः ।**

यथा ।

मल्लिकाचितधम्मिल्लाश्चारुचन्दनचर्चिताः ।
अविभाव्याः सुखं यान्ति चन्द्रिकास्वभिसारिकाः" ॥

---

गुरुरिति दर्पवान्माभूः । कथमित्यत आह नन्विति । ननु भोः अस्मिन् भुवने दुर्जनानां वचनानि भूयो यथास्यात्तथा सन्ति । अत्र दारुणत्वातिशयः सामान्यगुणस्तद्योगादुपमानत्वमभूत् पूर्वमपि दारुणत्वांशे दर्पनिषेधात् अनुभूतमेव विवक्षितम् । ब्रह्मेवेति अत्रोत्कर्षो गम्य एव न तु वाच्यः । मीलितालङ्कारमाह । मीलितमिति । गुप्तिस्तिरोधानम् । तुल्यलक्षणा समानधर्मेण । सदैवेति । पुरी वर्णनमिदम् । शोणोपलो रक्तमणिः पद्मरागादिः तद्युक्तकुण्डलस्य मयूखैः सदैवारुणीकृतानि शङ्कां सुरतक्रोधशङ्काम् । सामान्यालङ्कारमाह । सामान्य-

मीलिते उत्कृष्टगुणेन निकृष्टगुणस्य तिरोधानम्।
इह तूभयोरस्तुल्यगुणतया भेदाग्रहः। (प)

**तद्गुणः स्वगुणत्यागादत्युत्कृष्टगुणग्रहः॥**

यथा।

"जगाद वदनच्छद्मपद्मपर्यन्तपातिनः।
नयन्मधुलिहः श्वैत्यमुदग्रदशनांशुभिः"॥

मीलिते प्रकृतस्य वस्तुनो वस्त्वन्तरेणाच्छादनम्। इह तु वस्त्वन्तरगुणेनाक्रान्तता प्रतीयते इति।

**तद्रूपाननुहारस्तु हेतौ सत्यप्यतद्गुणः।**

यथा।

"हन्त सान्द्रेण रागेण भृतेऽपि हृदये मम।
गुणगौरनिषण्णोऽपि कथं नाम न रज्यसि॥

---

मिति। प्रकृतस्य प्रस्तुतस्य अन्यत्तादात्म्यम् इतरभिन्नत्वेनापरिचेयत्वम्। मल्लिकेति। "धम्मिल्लाः संयताः कचा" इत्यमरः। अत्राभिसारिकावर्णनीयत्वेन प्रस्तुतास्चन्द्रिकाभिन्नत्वेनापरिचिताः।

(फ) तद्गुणालङ्कारमाह तद्गुण इति। अत्युत्कृष्टगुणस्य अर्थात् सन्निकृष्टस्य वस्तुनोऽतिनिवीड़गुणस्य ग्रहः स्फूर्त्तिः अत्युत्कृष्टेति गुणविशेषणं स्वगुणतिरोधाने वीजम्। जगादेति अत्र प्रक्रान्तो वलदेवः कर्त्ता। नन्वत्रोत्कृष्टगुणेन निकृष्टगुणतिरोधानमस्तीति मीलितादस्य को भेद इत्यत आह मीलित इति। इह तु तद्गुणे तु। सन्निकृष्टगुणेन स्वगुणस्यैव तिरोधानं न तु वस्तुनः। मीलिते तु वस्तुनोऽपीति विशेषः मीलिते स्वजातीयोत्कृष्टगुणेनापकृष्टगुणतिरोधानमत्र तु विजातीयोत्कृष्टगुणेनापकृष्टगुणतिरोधानम्। स्वगुणत्यागादित्य-

यथा वा ।

गाङ्गमम्बु सितमम्बु यामुनं कज्जलाभमुभयत्र मज्जतः ।
राजहंस तव सैव शुभ्रता चीयते न च न चापचीयते" ॥

पूर्वत्रातिरक्तहृदयसम्पर्कात् प्राग्वदपि गुणगौरशब्द-वाच्यस्य नायकस्य रक्तत्वं न निष्पन्नम् । (फ)

उत्तरत्राप्रस्तुतप्रशंसायां विद्यमानायामपि गङ्गायमुनापेक्षया प्रकृतस्य हंसस्य गङ्गायमुनयोः सम्पर्केऽपि न तद्रूपता । अत्र च गुणाग्रहणरूपाविच्छित्तिविशेषाश्रयाद्विशेषोक्तेर्भेदः । वर्णान्तरोत्पत्त्यभावाच्च विषमात् ।

**संलक्षितस्तु सूक्ष्मोऽर्थ आकारेणेङ्गितेन वा ।**
**कयापि सूच्यते भङ्ग्या यत्र सूक्ष्मं तदुच्यते ॥**

---

नेन लभ्यत इत्यपि भेदो बोध्यः । अनेन सामान्यालङ्कारादप्यस्य भेदः तत्र सदृशैर्गुणैरित्युपादानात् । अतद्गुणालङ्कारमाह । तद्रूपेति तद्रूपस्य उत्कृष्टगुणवस्तुनो गुणस्य अननुहारोऽपकृष्टगुणेन वस्तुना अग्रहणमित्यर्थः । हेताविति उत्कृष्टगुणवस्तुसन्निधानमत्र हेतुरव-धेयः । रागेणानुरागेण भृते पूर्णे गुणगौरवशः शुक्ल । शुक्लगुणस्य रक्तगुणयोगेन रक्तत्वं सुतरां जायते । अत्र सेषादनुरागरञ्जितेऽरे-कलाभ्यासात् एतदुपपद्यते । अत्र प्राकरणिकेन नायकेन प्राकरणिकस्य नायिकाहृदयस्य गुणाग्रहणम् । प्राकरणिकेनाप्राकरणिकगुणाग्रहणे-ऽप्ययमलङ्कार इत्याह राजहंसेति चीयते गङ्गाजलसम्पर्केन उपचीयते अपचीयते यमुनाजलसम्पर्केणोपचीयते प्राग्वदपि भवितुं योग्यमपि ।

(ब) ननूत्तरत्राप्रस्तुतप्रशंसया स्वसम्बन्धिगुणाग्राही जन एव प्रकृतो न तु राजहंस इति प्रकृतस्याप्रकृतगुणाग्रहणोदाहरणं कथमेतत् सङ्गच्छताम् अत आह उत्तरत्रेति । प्रस्तुतस्य प्रति-

सूक्ष्मः स्थूलमतिभिरसंलक्ष्यः। अत्राकारेण यथा।

"वक्त्रस्यन्दिस्वेदविन्दुप्रबन्धै-
र्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गलेखां लिलेख" ॥

अत्र कयाचित् कुङ्कुमभेदेन संलक्षितं कस्याश्चित् पुरुषायितं पाणौ पुरुषचिह्नखड्गलेखालिखनेन सूचितम्। इङ्गितेन

---

पाद्यत्वेन प्राकरणिकस्य गङ्गायमुनाम्बुपेक्षया प्रतिपाद्यत्वेन राजहंसस्यापेक्षिकं प्रकृतत्वमिति भावः। नन्वत्र कारणसत्त्वे कार्य्यानुत्पत्तिरस्तीति विशेषोक्त्यलङ्कार एवायमित्यत आह अत चेति विच्छित्तिविशेषाश्रयात् वैचित्र्यविशेषसम्बन्धात्। कारणसत्त्वे कार्य्यानुत्पत्तिरूपवैचित्र्यादुक्तवैचित्र्यं विलक्षणम्। तत्प्रयोजकत्वादलङ्कारस्य वैलक्षण्यमिति भावः। ननु नायिकाहृदयादिरूपकारणगुणस्य विरुद्धस्तत्सम्भृतनायकादिरूपकार्य्यगुण इति विषमालङ्कार एवायं सम्बन्धस्य कार्य्यत्वात् सम्भृतस्यापि कार्य्यत्वमुपचर्य्यते इत्यभिप्रायेणाह वर्णान्तरेति। कार्य्यस्य कारणगुणविरुद्धगुणोत्पत्तावेव विषमस्य विषयः। प्रकृते तु तदभावान्न तद्द्वितीय इति भावः। विषमादिति भेद इत्यन्वयः। सूक्ष्मालङ्कारमाह। संलक्षित इति। आकारो धर्मः। इङ्गितं क्रियाभङ्गी विदग्धचेष्टा मतेः स्थूलत्वं गहनार्थापारिस्फुरणम्। वक्त्रस्यन्दीति कापि वयस्या तन्व्या नायिकायाः कण्ठे वक्त्रात्स्यन्दिभिः स्वेदविन्दुसन्तानैर्भिन्नं रेखारूपकृतविभागं कुङ्कुमं दृष्ट्वा तस्याः पुंस्त्वं सुरते पुरुषायितं व्यञ्जयन्ती ज्ञापयन्ती स्मित्वा तस्या एव पाणौ खड्गलेखां लिलेख। पुरुषायिताया एव वक्त्रगलितस्वेदानां गण्डे गलनं सम्भवति न तूत्तानसुप्ताया अतः सूक्ष्ममपि पुरुषायितं लक्षितं पुरुषधर्मस्य खड्गलेखायाः सस्मितलिखनेन प्रकाशितम्। खड्गलेखा च

यथा

"सङ्केतकालमनसं विटं ज्ञात्वा विदग्धया ।
हसन्नेत्रार्पिताकूतं लीलापद्मं निमीलितम्" ॥

अत्र विटस्य भ्रूक्षेपादिना लक्षितः सङ्केतकालाभिप्रायो रजनीकालभाविना पद्मनिमीलनेन प्रकाशितः । (ब)

**व्याजोक्तिर्गोपनं व्याजादुद्भिन्नस्यापि वस्तुनः ।**

यथा ।

"शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोल्लस-
द्रोमाञ्चातिविसंष्ठुलाखिलविधिव्यासङ्गभङ्गाकुलः ।
आः शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवतादः शिवः" ॥

---

खड्गाद्यतिचिह्नविशेषः पुंसां हस्ते तिष्ठति । कुङ्कुमभेदोऽलाकार एतदेवाह अत्र कयाचिदिति । सङ्केतेति सङ्केतकालजिज्ञासुमित्यर्थः । विटं धूर्तं उपनायकं ज्ञात्वा भ्रूविक्षेपादितदिङ्गितादिना ज्ञात्वेति बोध्यम् । हसता हर्षसूचकचेष्टावता नेत्रेणार्पितं ज्ञापितमाकूतमभिप्रायो यस्य यत्र वा तद्यथा स्यात्तथा निमीलितमित्यर्थः । सङ्केतकालाभिप्रायः सङ्केतकालजिज्ञासा ।

(भ) व्याजोक्त्यलङ्कारमाह । व्याजोक्तिरिति । व्याजात्कारणान्तरोद्भावनच्छलात् उद्भिन्नस्य कार्य्यादिना व्यक्तीभूतस्य । शैलेन्द्रेति शैलेन्द्रेण हिमालयेन प्रतिपाद्यमानाया दीयमानाया गिरिजायाः पार्वत्या हस्तस्योपगूढेन सम्पर्केण उल्लसन् यो रोमाञ्चादिः पुलककम्पादिस्तेन विसंष्ठुलोऽयथाभूतो योऽखिलविधिव्यासङ्गः समस्तवैदिकक्रियासम्बन्धस्तस्य भङ्गेनाकुलो व्याकुलः । शैलस्य हिमालयस्यान्तःपुरवर्त्तिनो ये मातृकामण्डला मण्डलीभूता मातरस्तेषां गणैः । अत्र रो-

नेयं प्रथमापह्नुतिः अपह्नवकारिणो विषयस्यानभिधानात् ।

द्वितीयापह्नुतिर्भेदश्च तत्प्रस्तावे दर्शितः ।

**स्वभावोक्तिर्दुरूहार्थस्वक्रियारूपवर्णनम् ।**

दुरूहयोः कविमात्रवेद्ययोरर्थस्य डिम्भादेः स्वयोस्तदेकाश्रययोश्चेष्टारूपयोः । यथा मम ।

---

भाष्यादिना कार्त्स्न्येनोद्भिन्नः स्वकीयोद्भावविशेषः शैत्यरूपकारणान्तरोद्भावनेन शिवेन गोपितः । ननु प्रकृतगोपनेनाप्रकृतोद्भावनमपह्नुतिरुक्ता तदनयोः को भेद इत्यत आह नेयमिति । प्रथमा प्रकृतनिषेधपूर्वकाप्रकृतस्थापनरूपा । विषयस्य अप्रकृतारोपविषयस्य । अत्र तु गोपनाकारिभिन्ने न काव्यादिना विषयो व्यज्यत एव न त्वभिधीयत इति भावः । द्वितीयापह्नुतेः "गोपनीयं कमप्यर्थं द्योतयित्वा कथञ्चन । यदि श्लेषेणान्यथा वान्ययेत् साप्यपह्नुति"रित्युक्तलक्षणायास्तत् प्रस्तावे दर्शित इति अत्र गोपनकर्तागोपनीयं प्रथममभिधीयते अत्र तु न तथेति भेदः । स्वभावोक्त्यलङ्कारमाह । स्वभावोक्तिरिति व्याचष्टे दुरूहयोरिति । डिम्भादेरित्यादिपदेनाकृत्रिमक्रियारूपवन्मात्रं पशुपक्ष्यादिग्रहः "मात्रं कार्त्स्न्येऽवधारणे" इत्यमरः । स्वपदं स्वकीयपरतायां व्याचष्टे स्वयोरिति तस्याप्यवधारणपरतामाह तदेकाश्रययोरिति डिम्भादिमात्रगतयोरित्यर्थः । कारिकास्थे क्रियारूपपदे व्याचष्टे चेष्टास्वरूपयोरिति स्वरूपं वर्णसंस्थानादि । तत्र डिम्भस्य क्रियावर्णनं यथा । "करारविन्देन पदारविन्दं मुखारविन्दे विनिवेशयन्तम् । वटस्य पत्रस्य पुटे शयानं बालं मुकुन्दं मनसा स्मरामि" । आदिपदग्राह्यस्य तरक्षोः क्रियावर्णनमाह लाङ्गूलेनेति चिरितत्वमिति काकाक्षिन्यायेन पूर्वापरयोरन्वेति । आत्मनि स्वदेहे अवलीय कीनीभूत्वा अतिवामनीभूयेति यावत् । प्रतिवनं यावद्वनं तरक्ष्वंशविशेषः । ईदृक्क्रिया

"लाङ्गूलेनाभिहत्य क्षितितलमसकृद्दारयन्नग्रपद्भ्या-
मात्मन्येवावलीय द्रुतमथ गगनं प्रोत्पतन् विक्रमेण ।
स्फूर्जद्धुङ्कारघोषः प्रतिदिशमखिलान् द्रावयन्नेष जन्तून्
कोपाविष्टः प्रविष्टः प्रतिवनमरुणोच्छूनचक्षुस्तरक्षुः" ॥ (भ)

**अद्भुतस्य पदार्थस्य भूतस्याथ भविष्यतः ।**
**यत्प्रत्यक्षायमाणत्वं तद्भाविकमुदाहृतम् ॥**

यथा ।

"मुनिर्जयति योगीन्द्रो महात्मा कुम्भसम्भवः ।
येनैकचुलुके दृष्टौ दिव्यौ तौ मत्स्यकच्छपौ" ॥

यथा वा ।

"आसीदञ्जनमत्रेति पश्यामि तव लोचने ।
भाविभूषणसम्भारां साक्षात् कुर्वे तवाकृतिम्" ॥

---

अकृत्रिमा रुष्टतरक्षोरेव । वर्णवर्णनं दण्ड्याचार्य्येणोदाहृतम् । यथा "तुण्डैराताम्रकुटिलैः पक्षैर्हरितकोमलैः । त्रिवर्णराजिभिः कण्ठैरेते मञ्जुगिरः शुकाः" । संस्थानवर्णनं यथा "पश्चात् पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव । शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रानास्तामेतद्व्रजति स पशुर्दूरमोह्येति यामः" । अत्र विपुलपुच्छखुरचतुष्टयदीर्घग्रीवा अश्वस्यैव संस्थानानि ।

(भ) भाविकालङ्कारमाह । अद्भुतस्येति । प्रत्यक्षायमाणत्वं वर्णनाविशेषवशेन प्रत्यक्षवद्भासमानत्वं भावोवक्तुरभिप्रायः स च वर्णनीयगोचरवर्ति स्वरूपस्तद्योगाद्भाविकं तद्योगस्य व्यञ्जकत्वेन । अद्भुतस्य प्रत्यक्षायमाणत्वे भाविकमाह मुनिरिति । दिव्यौ विष्णोरवतारौ तौ प्रसिद्धौ । अत्र चुलुकीकृतसमुद्रे दृश्यमानदिव्यमत्स्यकच्छप-

न चायं प्रसादाख्यो गुणः। भूतभाविनोः प्रत्यक्षाय-माणत्वे तस्याहेतुत्वात्। न चाद्भुतो रसः। विस्मयं प्रत्यस्य हेतुत्वात्। न चातिशयोक्तिरलङ्कारः। अध्यवसा-याभावात्। न च भ्रान्तिमान्। भूतभाविनोर्भूतभावि-तयैव प्रकाशनात्। न च स्वभावोक्तिः। तस्य लौकिक-वस्तुगतसूक्ष्मधर्म्मस्वभावस्यैव यथावद्वर्णनं स्वरूपम्, अस्य तु वस्तुनः प्रत्यक्षायमाणत्वरूपो विच्छित्तिविशेषोऽस्तीति।

---

रूपमद्भुतं वस्तु वर्णनाविशेषवशेन मुनिः सन्निकृष्टश्रोतॄणां प्रत्यक्षवद्भासते। भूतभाविनोः प्रत्यक्षायमाणत्वे भाविकमाह आसीदिति। अत्रानयोः अत्र पूर्वार्द्धे भूतस्य परार्द्धे भाविनः प्रत्यक्षायमाणत्वं नयन-शोभाविशेषवशेनाञ्जनं सौन्दर्य्यातिशयवशेनैतस्य भविनः मत्सुरादराति-शयेन भूषणसम्भारमनुमाय सख्या तथाभिहितं यथा भूतभाविनावप्यञ्जन-भूषणसम्भारौ सन्निकृष्टश्रोतॄणां प्रत्यक्षवद्भासेते। केचित्तु यौवनोद्-भेदादञ्जनं विनापि चक्षुषि तच्छोभा भूषणाभावेऽपि वपुषि तच्छोभास्ते इति व्याचक्षते। तन्न। तादृशार्थस्य व्यञ्जकाभावेनाप्रतीतेः। भूतभावि नोरञ्जनभूषणयोः प्रत्यक्षायमाणत्वे तत्कृतचारुत्व एव तात्पर्य्यात्। ननु सन्निकृष्टपदार्थस्य वर्णनातः प्रत्यक्षायमाणत्वं तदा भवति यदि प्रस-न्नार्थाः शब्दाः प्रयुज्यन्ते। एवं सति प्रसादाख्यो गुण एवायमित्यभि-प्रायेणाशङ्कते न चायं प्रसादाख्यो गुण इति। भूतभाविनोरित्यद्भुतस्या-प्युपलक्षणम्। तस्य प्रसादगुणस्य। अद्भुतस्य प्रत्यक्षायमाणत्वपक्षे शङ्कते न चाद्भुतो रस इति विस्मयं चमत्कारं चमत्कारायोगे रस-रूपत्वासम्भवादिति भावः। नन्वत्र वर्णनीयगतः कोऽप्यतिशयः प्रती-यते इत्यतिशयोक्तिरेवायमित्याशङ्कते न चातिशयोक्तिरिति। अध्यव-सायाभावात् अभेदारोपाभावात्। ननु भूतभाविपदार्थाभाववति तत् त्कारकप्रतीतिरस्त्वस्तीति भ्रान्तिमानेवायमित्याशङ्कते न च भ्रान्ति-

यदि पुनर्वस्तुनः क्वचित् स्वभावोक्तावप्यस्या विच्छित्तेः सम्भ-वस्तदोभयोः सङ्करः । (म)

"अनातपत्रोऽप्ययमत्र लक्ष्यते
सितातपत्रैरिव सर्वतो वृतः ।
अचामरोऽप्येष सदैव वीज्यते
विलासबालव्यजनेन कोऽप्ययम्" ॥

अत्र प्रत्यक्षायमाणस्यैव वर्णनान्नायमलङ्कारः । वर्णनावशेन प्रत्यक्षायमाणत्वस्यास्य स्वरूपत्वात् । यत् पुनः प्रत्यक्षायमाणस्यापि वर्णने प्रत्यक्षायमाणत्वं तत्रायमलङ्कारो भवितुं युक्तः । यथोदाहृते "आसीदञ्जनमित्यादौ" ।

**लोकातिशयसम्पत्तिवर्णनोदात्तमुच्यते ।**
**यद्वापि प्रस्तुतस्याङ्गं महताञ्चरितं भवेत् ॥**

---

भानीति भूतभाविनोर्वर्त्तमानत्वेन भानेऽपि भ्रमः सम्भवतीति तद्वारणाय भूतभावितयैवेत्युक्तं प्रकाशनात् तद्वति विषयीकरणात् । तस्य स्वभावोक्तरलङ्कारस्य । सूक्ष्मेति कविप्रमात्रवेद्य इत्यर्थः । यथावद्वस्तुवर्णनं सम्भवानतिक्रमेण वर्णनम् । अस्य भाविकालङ्कारस्य तु विच्छित्तिविशेषोऽस्तीतिशब्दो हेतौ ।

(म) अनातपत्रोऽपीति । अत्र सदनुमानवशेन वक्तुः प्रत्यक्षायमाणयोः सितातपत्रचामरयोर्वर्णनं सम्भवानतिक्रमेण वर्णनं न तु वर्णनाविशेषवशेन श्रोतॄणां तयोः प्रत्यक्षायमाणत्वमिति । नास्ति भाविकावसर इति भावः । अस्य भाविकालङ्कारस्य । नन्वेवमासीदञ्जनमित्यादावपि सदनुमानवशेन प्रत्यक्षायमाणत्ववर्णनमिति नास्य विषय इत्यत आह यत् पुनरिति यत् यदा धर्मिसन्निकर्षादिरूपहेत्वभावदशायामित्यर्थः । वर्णने

क्रमेणोदाहरणम् ।

"अधःकृताम्भोधरमण्डलानां यस्यां शशाङ्कोपलकुट्टिमानाम् ।
ज्योत्स्नानिपातात् क्षरतां पयोभिः केलीवनं वृद्धिमुरीकरोति ॥
नाभिप्रभिन्नाम्बुरुहासनेन संस्तूयमानः प्रथमेन धात्रा ।
अमुं युगान्तोचितयोगनिद्रः संहृत्य लोकान् पुरुषोऽधिशेते" ॥ (य)

**रसभावौ तदाभासौ भावस्य प्रशमस्तथा ।**
**गुणीभूतत्वमायान्ति यदालङ्कृतयस्तदा ॥**
**रसवत्प्रेय ऊर्जस्वि समाहितमिति क्रमात् ।**

तदाभासौ रसाभासो भावाभासश्च । तत्र रसयोगाद्र-सवदलङ्कारो यथा । "अयं स रसनोत्कर्षीत्यादि" । अत्र

---

इति वर्णने वाग्वैचित्र्यविशेषे सतीत्यर्थः । तत्रायमिति तत्राप्ययमि-त्यर्थः । न चानातपत्रोऽपीत्यादावप्युक्तरीत्या भाविकप्रसक्तिरिति वाच्यं श्रोतॄणां धर्मिसन्निकर्षाभावेन प्रत्यक्षायमाणत्वाभावात् तस्यापि प्रकृतोपयोगित्वेन विवक्षणीयत्वात् । उदात्तालङ्कारमाह । लोकेति । लोकानतिशेतेऽतिक्रामति या सम्पत्तिर्धनसमृद्धिस्तस्या वर्णनं व्यञ्जनया ज्ञापनम् । अन्यविधमुदात्तालङ्कारमाह । यद्वेति महतां प्रस्तुत-सम्बन्धिमहताम् । चरितं महत्त्वप्रतिपादकसाधर्म्यम् । प्रस्तुत-महत्त्वव्यञ्जकप्रस्तुतमहत्त्वसम्बन्धिचरितमुदात्तमित्यर्थः । अधः कृतेति । यस्यां नगर्यां उरीकरोति स्वीकरोति प्राप्नोतीति यावत् । अत्र पौराणां समृद्धत्वातिशयो व्यङ्ग्यः । नाभीति नाभेः प्रभिन्नमुत्पन्नमम्बु-रुहमासनं यस्य तेन । अमुं समुद्रम् । अत्र प्रस्तुतसमुद्रस्य महत्त्व-व्यञ्जकं सर्वलोकसंहारकस्य हरेश्चरितम् ।

(र) रसवदाद्यलङ्कारचतुष्टयमाह । रसभावाविति । गुणीभूतत्वं रसान्तरादीनामुत्कर्षाधायकत्वेनाङ्गत्वम् । रसस्येतराङ्गत्वे रसवत् ।

शृङ्गारः करुणस्याङ्गम् । एवमन्यत्रापि । प्रकृष्टप्रियत्वात् प्रेयः । यथा मम ।

"आमीलितालसविवर्त्तिततारकाक्षीं
मत्कण्ठबन्धनदरश्लथबाहुवल्लीम् ।
प्रस्वेदवारिकणिकाचितगण्डबिम्बां
संस्मृत्य तामनिशमेति न शान्तिमन्तः" ॥

अत्र सम्भोगशृङ्गारः स्मरणाख्यभावस्याङ्गम् । स च विप्रलम्भस्य । ऊर्ज्जो बलम् । अनौचित्यप्रवृत्तौ तदत्रास्तीत्यूर्ज्जस्वि । यथा ।

"वनेऽखिलकलासक्ताः परिहृत्य निजस्त्रियः ।
त्वद्वैरिवनितावृन्दे पुलिन्दाः कुर्वते रतिम्" ॥

अत्र शृङ्गाराभासो राजविषयरतिभावस्याङ्गम् । एवं भावाभासोऽपि । समाहितं परीहारः । यथा ।

"अविरलकरवालकम्पनैर्भ्रुकुटीतर्जनगर्जनैर्मुहुः ।
ददृशे तव वैरिणां मदः स गतः क्वापि तवेक्षणेक्षणात्" ॥

---

भावस्येतराङ्गत्वे प्रेयः । आभासयोरितराङ्गत्वे ऊर्जस्वि । भावप्रशमस्येतराङ्गत्वे समाहितमित्यर्थः । न भावहीनोऽस्ति रस इत्युक्तदिशा रसव्यभिचारिभावयोः अव्यभिचारेणालङ्कार्य्यालङ्कारभावासम्भवात् तयोरङ्गाङ्गिभावेनैतदलङ्कारप्रसङ्ग इति ध्येयम् । एवमन्यत्रापीति वीरादेः शृङ्गाराद्यङ्गत्वेऽप्युदाहरणानि ऊह्यानीत्यर्थः । करुणस्य भावाद्यङ्गत्वे उदाहरणं गुणीभूतव्यङ्ग्यप्रकरणे मानोन्नतां प्रणयिनीमित्यादि स्वयमेवोक्तम् । आमीलितेति अलसेन रसावेशजनितालस्येन विवर्त्तितं स्थिरीकृतं तारकं यस्य तादृशमक्षि यस्यास्तां मत्कण्ठबन्धने दरश्लथा ईषत् शिथिला बाहुवल्लिर्यस्यास्तां पुलिन्दाः किरातविशेषाः । अत्र

अत्र मदाख्यभावस्य प्रथमो राजविषयरतिभावस्याङ्गम् । (र)

**भावस्य चोदये सन्धौ मिश्रत्वे च तदाख्यकाः ।**

तदाख्यका भावोदयभावसन्धिभावशवलनामानोऽलङ्काराः । क्रमेणोदाहरणम् ।

"मधुपानप्रवृत्तास्ते सुहृद्भिः सह वैरिणः ।
श्रुत्वा कुतोऽपि त्वन्नाम लेभिरे विषमां दशाम्" ॥

अत्र त्रासादयो राजविषयरतिभावस्याङ्गम् ।

"जन्मान्तरीणरमणस्याङ्गसङ्गमुत्सुका ।
सलज्जा चान्तिके सख्याः पातु नः पार्वती सदा" ॥

अत्रौत्सुक्यलज्जयोश्च "सन्धिर्दैवताविषयरतिभावस्याङ्गम्

"पश्येत् कश्चिच्चल चपल रे ! का त्वराहं कुमारी
हस्तालम्बं वितर हह हा व्युत्क्रमः क्वासि यासि ।
इत्थं पृथ्वीपरिवृढ ! भवद्विद्विषोऽरण्यवृत्तेः
कन्या कञ्चित्फलकिसलयान्याददानाभिधत्ते" ॥

---

परोढ़ाविषयत्वात् शृङ्गाराभासः । एवं भावाभासेऽपीति । भावाभासस्याङ्गत्वेऽपीत्यर्थः । एतदुदाहरणं यथा । "वन्दीकृत्य नृपद्विषां मृगदृशस्तां पश्यतां प्रेयसां श्लिष्यन्ति प्रणमन्ति नान्ति परितस्तुम्बन्ति ते सैनिकाः । अस्माकं सुकृतैर्दृशोर्निपतितस्यौचित्यवारां निधे विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे" । अत्र राजविषयरतिभावस्योत्तराद्धं द्योत्यो भावः । शत्रुविषयत्वादाभासरूपोऽङ्गम् । अनिशमिति तवेक्षणे त्वत्कर्मसंदर्शने चेतीत्यर्थः ।

(ब) भावोदयादीनामलङ्कारत्रयमाह । भावस्य चेति । चकारात् गुणीभूतत्वमायाति चेत्यनुवर्त्तते । अत्र आयातीति सप्तम्यन्तरूपत्वान्तव्यम् ।

अत्र शङ्कासूयाधृतिस्मृतिश्रमदैन्यविबोधौत्सुक्यानां प्रबलता राजविषयरतिभावस्याङ्गम्। (ल)

इह केचिदाहुः "वाच्यवाचकरूपालङ्करणमुखेन रसाद्युपकारका एवालङ्काराः। रसादयस्तु वाच्यवाचकाभ्यामुपकार्य्या एवेति न तेषामलङ्कारता भवितुं युक्तेति" अन्येतु "रसाद्युपकारमात्रेणेहालङ्कृतिव्यपदेशो भाक्तश्चिरन्तनप्रसिद्ध्याङ्गीकार्य्य एवेति" अपरे च "रसाद्युपकारमात्रेणालङ्कारत्वं मुख्यता रूपकादौ वाच्याद्युपधानम् अजागलस्तनन्यायेनेति"। अभियुक्तास्तु स्वव्यञ्जकवाच्यवाचकाद्युपकृतैरङ्गभूतैरसादिभिरङ्गिनो रसादेर्वाच्यवाचकोपस्कारद्वारेणोपकुर्वद्भिरलङ्कृतिव्यपदेशो लभ्यते। समासोक्तौ तु नायकादिव्यवहारमात्रस्यैवालङ्कृतिता न त्वास्वादस्य, तस्याङ्गतारीतिविरहादिति" मन्यन्ते अत एव ध्वनिकारेणोक्तम्।

---

योग्यत्वात्। पश्येदिति। चल इतोऽपसर श्रमभरेण किञ्चिन्निद्रायिता झटिति चेतनां प्राप्याह व्युत्क्रमः इति वैपरीत्यमित्यर्थः।

(व) इदानीं रसवदादीनां अलङ्कारत्वमस्वीकुर्वतां केषाञ्चिन्मतमाह इहकेचिदिति वाच्यवाचकरूपालङ्करणमुखेन शब्दार्थस्वरूपशोभाजननद्वारेण इह रसवदादौ अलङ्कृतिव्यपदेशोऽलङ्कारपदप्रयोगः। भाक्तो गौणः चिरन्तनप्रसिद्ध्या प्राचीनमतेन। वाच्याद्युपधानं वाच्यवाचकालङ्करणम्। अजागलस्तनन्यायेनेति अजागलस्थस्तनो यथा दुग्धानुपयोगी तथा प्रकृतानुपयोगीत्यर्थः। स्वव्यञ्जकेति स्वमङ्गभूतं रसादि तद्व्यञ्जकाभ्यामेव वाच्यवाचकाभ्यामुपकृतैर्न तु प्रधानीभूतरसादिव्यञ्जकाभ्याम्। प्रत्युत स्वव्यञ्जकशब्दार्थघटितत्वेन तयोरुपकारका एवाङ्गरसादयो न तूपकार्य्याः। एतेन रसादयस्तु वाच्यवाचका-

"प्रधानेऽन्यत्र वाक्यार्थे यत्राङ्गन्तु रसादयः।

काव्ये तस्मिन्नलङ्कारो रसादिरिति मे मतिरिति"॥

यदि च रसाद्युपकारमात्रेणालङ्कृतित्वं तदा वाचकादिष्वपि तथा प्रसज्येत। एवञ्च यच्च कैश्चिदुक्तं "रसादीनामङ्गित्वे रसवदाद्यलङ्कारः, अङ्गत्वे तु द्वितीयोदात्तालङ्कारः तदपि परास्तम्। (ब)

**यद्येत एवालङ्काराः परस्परविमिश्रिताः॥**

**तदा पृथगलङ्कारौ संसृष्टिः सङ्करस्तथा॥**

यथा लौकिकालङ्काराणामपि परस्परमिश्रणे पृथक् चारुत्वेन पृथगलङ्कारत्वं तथोक्तरूपाणां काव्यालङ्काराणामपि परस्परमिश्रत्वे संसृष्टिसङ्कराख्यौ पृथगलङ्कारौ।

---

ध्यामुपकार्या एवेति यद्दूषणमुक्तं तन्निरस्तम्। नन्वत्र गुणप्रधानभावेनालङ्कारालङ्कार्यभाव उपपद्यतां समासोक्तौ तु व्यवहारसमारोपजन्यास्वादस्यालङ्कारत्वस्वीकारेऽलङ्कार्याभावात् कथं स उपपद्यते इत्यत आह समासोक्तौ त्विति व्यवहारमात्रस्य प्रस्तुते वस्तुन्यप्रस्तुतसाधर्म्यारोपमात्रस्य न तु तज्जन्यास्वादस्य। उक्तरीतिविरहात्। वाच्यवाचकालङ्कारद्वारेण रसाद्युपकारकत्वस्याभावात्। प्रधाने इति अन्यत्तु रसादौ वाक्यार्थे वा। रसाद्युपकारकत्वमात्रेणालङ्कारत्वं दुष्यत इति। प्रागुक्तमपरेषां मतं दूषयति यदीति। एवञ्चेति उक्तरीतिविरहादित्यर्थः।

(ब) प्रत्येकमलङ्कारानुक्त्वा तेषां मेलके संसृष्टिसङ्करालङ्कारावाह यद्येत इति। एते उक्ता यमकोपमादयः। परस्परविमिश्रिताः एकस्मिन् पद्ये गद्ये वा स्थिताः। तयोः सामान्यलक्षणमुक्त्वा विशेषलक्षणमाह मिथ इति। परस्परव्यपेक्षाविरहे

तत्र।

## मिथोऽनपेक्षयैतेषां स्थितिः संसृष्टिरुच्यते ।

एतेषां शब्दार्थालङ्काराणाम् । यथा ।

"देवः पायादपायान्नः स्मेरेन्दीवरलोचनः ।

संसारध्वान्तविध्वंसहंसः कंसनिषूदनः" ॥

अत्र "पायादपायादिति" यमकम् । "संसारेति" आदौ चानुप्रास इति शब्दालङ्कारयोः संसृष्टिः । द्वितीये पादे उपमा द्वितीयार्द्धे च रूपकमित्यर्थालङ्कारयोः संसृष्टिः । उभयोः स्थितत्वाच्छब्दाऽर्थालङ्कारसंसृष्टिः । (ग्र)

---

एतेष्यर्थः । स्थितिरेकस्मिन् पद्ये गद्ये वा शब्दालङ्काराणामर्थालङ्काराणामुभयेषाञ्च परस्परानपेक्षया स्थित्या त्रिविधा संसृष्टिः । आद्या यथा । "चारुचन्द्रमसं भीरु बिम्बं पश्येदमम्बरे । मन्मनो मन्मथाक्रान्तं निर्दयं हन्तुमुद्यतम्" । अत्र प्रथमार्द्धे उपमा द्वितीयार्द्धेऽनुप्रासस्तृतीयपादे यमकम् । द्वितीया यथा । "विपङ्कपङ्कजायतां देवः फुल्लेन्दीवरलोचनः । भवान्धकारसंक्षोभरविः कौशनिषूदनः" । अत्र प्रथमार्द्धे उपमा द्वितीयार्द्धे रूपकम् । उभयसंसृष्टिर्द्विविधा शुद्धा संसृष्टिमिश्रा च । आद्या यथा "त्वयि वीर परं विराजते दलयन्नीकिलकिञ्चितं किल । तरुणोत्तन एव दीप्यते मणिहारावलिरामणीयकम्" । अत्र यमकानुप्रासाभ्यां शब्दालङ्काराभ्यां सह प्रति वस्तूपमाया अर्थालङ्कारस्य संसृष्टिः । एकस्मिन्नेव पद्ये चतुर्विधां संसृष्टिमुदाहरति देव इति । हंसः सूर्यः । एवमिति शब्दालङ्कारयोरर्थालङ्कारयोश्च स्वजातीयत्वेनान्तरङ्गतया संसृष्टीभूय वैचित्र्यविशेषं जनयित्वा संसृष्टित्वेनाप्यतिरिक्तवैचित्र्यजनकत्वमिति भावः ।

**अङ्गाङ्गित्वेऽलङ्कृतीनां तद्वदेकाश्रयस्थिता ॥**
**सन्दिग्धत्वे च भवति सङ्करस्त्रिविधः पुनः ।**

अङ्गाङ्गिभावो यथा ।

"आकृष्टवेगविगलद्भुजगेन्द्रभोग-
निर्म्मोकपट्टपरिवेष्टनयाम्बुराशेः ।
मन्थव्यथाव्युपशमार्थमिवाशु यस्य
मन्दाकिनी चिरमवेष्टत पादमूले" ॥ (ष)

अत्र निर्म्मोकपट्टापह्नवेन मन्दाकिन्या आरोप इत्यप, ह्नुतिः । सा च मन्दाकिन्या वस्तुवृत्तेन यत्पादमूलवेष्टनं तच्चरणमूलवेष्टनमिति श्लेषमुत्थापयतीति तस्याङ्गम् । श्लेषश्च पादमूलवेष्टनमेव । चरणमूलवेष्टनमित्यतिशयोक्तेरङ्गम् अतिशयोक्तिश्च । "मन्थव्यथाव्युपशमार्थमिव" इत्युत्प्रेक्षाया अङ्गम् । उत्प्रेक्षा चाम्बुराशिमन्दाकिन्योर्नायकनायिकाव्यवहारं गमयतीति समासोक्तेरङ्गम् । यथा वा

---

(ष) अङ्गाङ्गित्वे इति गुणप्रधानभावे इत्यर्थः । एकाश्रयस्थितौ एकस्मिन् पादे पदे वा स्थितौ । आकृष्टेति । समुद्रमन्थनसमये देवादीनामाकर्षणवेगेन विगलन् यो भुजगेन्द्रभोगस्य वासुकिदेहस्य निर्म्मोकपट्टस्त्यक्तचर्मपट्टः तद्वेष्टनया तद्वेष्टनच्छलेनेत्यर्थः । पादमूले एकदेशे पक्षे चरणसमीपे अचेष्टत अहरत् पक्षे सम्वाहनक्रियावती अतिष्ठत् ।

(स) अङ्गाङ्गिभावमुपपादयति अत्रेति । सा च अपह्नुतिश्च । वस्तुवृत्तेन वस्तुगत्या नायकनायिकेति पाठे नायकेन सहिता

"अनुरागवती सन्ध्या दिवसस्तत्पुरःसरः ।
अहो दैवगतिश्चित्रा तथापि न समागमः" ॥

अत्र समासोक्तिर्व्विशेषोक्तेरङ्गम् । सन्देहसङ्करो यथा । (ह)

"इदमाभाति गगने भिन्दानं सन्ततं तमः ।
अमन्दनयनानन्दकरं मण्डलमैन्दवम्" ॥

अत्र किं मुखस्य चन्द्रतयाध्यवसानादतिशयोक्तिः, उत इदमिति मुखं निर्दिश्य चन्द्रत्वारोपाद्रूपकम्, अथ वा इदमिति मुखस्य चन्द्रमण्डलस्य च द्वयोरपि प्रकृतयोरेकधर्म्माभिसम्बन्धात्तुल्ययोगिता, आहोस्विच्चन्द्रस्याप्रकृतत्वाद्दीपकं, किं वा विशेषणसाम्यादप्रस्तुतस्य मुखस्य गम्यत्वात् समासोक्तिः, यद्वाऽप्रस्तुतचन्द्रवर्णनया प्रस्तुतस्य मुखस्यावगतिरित्यप्रस्तुतप्रशंसा, यद्वा मन्मथोद्दीपनः कालः स्वकार्य्यभूतचन्द्रवर्णनामुखेन वर्णित इति पर्य्यायोक्तिरिति बहूनामलङ्काराणां सन्देहात् सन्देहसङ्करः, यथा वा मुखचन्द्रं पश्यामीत्यत्र किं मुखं चन्द्र इवेत्युपमा उत चन्द्र एवेति रूपकमिति सन्देहः, साधकबाधकयोर्द्वयोरेकतरस्य सद्भा-

---

नायिका नायकनायिका द्वन्द्वविषये एकशेषप्राप्तेः । अनुरागेति अनुरागो लौहित्यं सुरताभिलासश्च ।

(ह) सन्देहसङ्करातिरिक्तस्थले एकाश्रयस्थितेर्विषयो भविष्यतीति चरमोक्तमपि सन्देहसङ्करं प्रथमं दर्शयति इदमिति । सन्ततं सम्यग्व्याप्तं पक्षे सन्ततं तमः स्मरकृताज्ञानं भिन्दानं इदमाभातिवदनमिति पाठो न रमणीयः । विषयस्य निगरणाभाववदतिशयोक्तेरसम्भवापत्तेः इदमिति मुखं निर्दिश्येति निर्वचनासङ्गतिप्रसङ्गाच्च वदनमित्यत्र गगनमिति पाठोऽपि न सुन्दरः व्यावर्त्तकत्वात् तस्मादिदमम्बर[illegible]मिति पाठो रुचिरः ।

वेन पुनर्न सन्देहः। यथा "मुखचन्द्रं चुम्बति" इत्यत्र चुम्बनं मुखस्यानुकूलमित्युपमायाः साधकम्। चन्द्रस्य तु प्रतिकूलमिति रूपकस्य बाधकं "मुखचन्द्रः प्रकाशते" इत्यत्र प्रकाशाख्यो धर्मो रूपकस्य साधको मुखे उपचरितत्वेन सम्भवतीति नोपमाबाधकः।

राजनारायणं लक्ष्मीस्त्वामालिङ्गति निर्भरम्।

अत्र योषित आलिङ्गनं नायकस्य सदृशेनोचितमिति लक्ष्म्यालिङ्गनस्य राजन्यसम्भवादुपमाबाधकं नारायणे सम्भवाद्रूपकम्।

"एवं वदनाम्बुजमेणाक्ष्या भाति चञ्चललोचनम्"।

अत्र वदने लोचनस्य सम्भवादुपमायाः साधकता, अम्बुजे चासम्भाद्रूपकस्य बाधकता। एवं "सुन्दरं वदनाम्बुजम्" इत्यादौ साधारणधर्मप्रयोगे, उपमितं "व्याघ्रादिभिः सामान्याप्रयोगे" इति वचनादुपमासमासो न सम्भवतीति उपमाया बाधकः। एवञ्चात्र मयूरव्यंसकादित्वाद्रूपकसमास एव। एकाश्रयानुप्रवेशो यथा मम। (छ)

कटाक्षेणापीषत् क्षणमपि निरीक्षेत यदि सा<br>
तदानन्दः सान्द्रः स्फुरति पिहिताशेषविषयः।<br>
सरोमाञ्चोदञ्चत्कुचकलशनिर्भिन्नवसनः<br>
परीरम्भारम्भः क इव भविताम्भोरुहदृशः॥

अत्र 'कटाक्षेणापीषत्क्षणमपि' इत्यत्र छेकानुप्रासस्य

(छ) कटाक्षेणापीति सान्द्रादिविशेषणद्वयेनानन्दस्य ब्रह्मानन्दसदृशत्वं प्रतीयते। सरोमाञ्चादुदञ्चत् उच्चात् कुचकलशाभ्यां निर्भिन्नं विगलितं वसनं

,निरीक्षेत' इत्यत्र चकारमादाय वृत्त्यनुप्रासस्य चैकाश्रयेऽनुप्रवेशः । एवं चात्रैवानुप्रासार्थापत्त्यलङ्कारयोः । यथा वा । 'संसारध्वान्तविध्वंस इति' अत्र रूपकानुप्रासयोः । यथा वा । "कुरवका रवकारणतां ययुरिति" अत्र रवका रवका इत्येकं वकारवकार इत्येकमिति यमकयोः । (च)

यथा वा ।

अहिणअपओदरसीएसु पहिअ सामाइएसु दिअसेसु ।
मोहइ पसारिअगीआणं णच्चिअं मोरबिन्दाणम् ।

अत्र "पहिअसामाइएसु" इत्येकाश्रये पथिक श्यामायितेत्युपमा । पथिकसामाजिकेष्विति रूपकं प्रविष्टम् ॥(क)

---

यत्र सः । क इवेति निरुपम इत्यर्थः । कटाक्षेणापीषत्क्षणमपीति वर्णद्वयघटितस्य चकारस्य क्रमस्वरूपाभ्यां सकृत्साम्यात् छेकानुप्रासः । पश्चान्निरीक्षेतेति चकारमादाय क्रमस्वरूपाभ्यामसकृत् साम्यसम्भवात् वृत्त्यनुप्रासः । एवं चतुर्थपादेऽपि मकारभकारघटितवर्णपिण्डस्य छेकवृत्त्यनुप्रासौ वेदितव्यौ ।

(क) एकपदे सङ्करमाह अहिण अ इति अभिनव पयोदरसितेषु पथिकश्यामायितेषु दिवसेषु । भवति प्रसारितग्रीवाणां नृत्यं मयूर वृन्दानामिति सम् । महति उत्सवायते । पथिकानां प्रियाविरहदुःखेन श्यामत्वं दिवसानां मेघेनेत्युपमा । पक्षे पथिका एव सामाजिकास्तेषु नाट्यदर्शनेन सामाजिकानामुत्सवो भवतीति रूपणम् । पथिकानां मयूरनृत्यं सुखदं न भवतीति महतीत्युक्तम् । वस्तुतस्तु मुखचन्द्रं पश्यामीत्यादौ यथा समासद्वयसम्भवात् सन्देहस्तथेहापि पहि अ समा इ एष्विति प्राकृतयोर्निशब्दद्वयसम्भवात् सन्देह एवेत्यवधेयम् । एवञ्च एकपदवृत्तिसङ्करस्योदाहरणं संसारध्वान्तविध्वंसहंस इत्याद्यवगन्तव्यम् । यथा वा "मनोविद्धं सरोजाक्षी स्मरभक्त्या सुनिर्भरम् ।

श्रीचन्द्रशेखरमहाकविचन्द्रसूनु-
श्रीविश्वनाथकविराजकृतं प्रबन्धम्।
साहित्यदर्पणममुं सुधियो विलोक्य
साहित्यतत्त्वमखिलं सुखमेव वित्त॥

यावत् प्रसन्नेन्दुनिभानना श्रीर्नारायणस्याङ्कमलङ्करोति
तावन्मनः सम्मदयन् कवीनामेष प्रबन्धः प्रथितोऽस्तु लोके॥

इतिसाहित्यदर्पणे दशमः परिच्छेदः समाप्तः॥

समाप्तश्चेदं साहित्यदर्पणम्॥

ओं तत्सत्॥

---

साचेद्विसृजते गाढ़ं श्वास्यप्रमालम्बते लघु"। इत्याद्युदाहरणमुन्नेय-मिति। इति श्रीरामचरणतर्कवागीशभट्टाचार्य्यविरचितायां साहित्य-दर्पणविवृतौ दशमः प्रकाशः।

अक्षिपक्षरसचन्द्रसम्मिते हायने शकवसुन्धरापतेः।
श्रीलरामचरणाग्रजन्मना दर्पणस्य विवृतिः प्रकाशिता॥

दोषं कञ्चन वीक्ष्य सूक्ष्ममतयो हिताः शपन्त्यत्र चेत्
तन्मां न व्यथयेत् गुरोरपि गिरो निर्दूषणा दुर्वचाः।
छात्राणां मतिमादधाति यदसौ गूढ़ार्थसन्दीपना-
दानन्दं वितनोति यद्गुणवतां तेनाखप्रमोघश्रमः॥

सम्पूर्णम्।

---